[redacted] OTHECA INDIC[redacted];

A

[redacted] TION OF ORIENTAL WORKS

[redacted] UNDER THE SUPERINTENDENCE OF THE

[redacted] TIC SOCIETY OF BENGAL.

NEW SERIES

Nos. [redacted]4, 235, 244, 251, 270, 280, 285, 286, and 293.



---

# Sama Veda Sañhitá.

WITH THE COMMENTARY OF

SA'YAṆA A'CHA'RYA.




EDITED BY

SATYAVRATA SA'MAS'RAMI'.

EDITOR OF THE HINDU COMMENTATOR,

---

VOL. I.

---



CALCUTTA.

PRINTED AT THE GANES'A PRESS.

1874.

# सामवेदसंहिता

तत्र

॥ छन्दआर्च्चिकः ॥

तत्रापि आग्नेयैन्द्रेति पर्व्वद्वयात्मकः

अध्यायचतुष्कः प्रथमोभागः

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहितः

— ∴ —

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया



अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकितो यथावसरं शोधितश्च।


कलिकाता

गणेशयन्त्रे मुद्रितः

शाकाः १८१५ ।

उद्गातुस्तत्त्वजिज्ञासोरपि तेन कृतार्थता (१) ॥ ५ ॥
यज्ञो ब्रह्म च वेदेषु द्वावर्थौ काण्डयोर्द्वयोः (२) ।
अध्वर्युमुख्यैर्ऋत्विग्भिश्चतुर्भिर्यज्ञ-सम्पदः ॥ ६ ॥
निर्मिमीते क्रिया-सङ्घैरध्वर्युर्यज्ञियं वपुः ।
तद्‌दलंकुर्वते होता ब्रह्मोद्गातेत्यमी त्रयः ॥ ७ ॥
शस्त्र-याज्यानुवाक्याभिर्होतालङ्कुरुतेऽध्वरम् ।
आज्य-पृष्ठादिभिः स्तोत्रैरुद्गातालङ्करोत्यमुम् ॥ ८ ॥
त्रयाणामपराधन्तु ब्रह्मा परिहरेत् सदा ।
ऋचोऽन्त्वदिति मन्त्रेऽसावर्थः सर्वोऽभिधीयते ॥ ९ ॥
यज्ञं यजुर्भिरध्वर्युर्निर्मिमीते ततो यजुः ।
व्याख्यातं प्रथमं, पश्चादृचां व्याख्यानमीरितम् ॥ १० ॥
साम्नामृगाश्रितत्वेन साम-व्याख्या ऽथ वर्ण्यते ।
अनुतिष्ठासु-जिज्ञासा-वशाद् व्याख्या-क्रमो ह्ययम् ॥ ११ ॥
जाते देहे भवत्यस्य कटकादि-विभूषणम् ।
आश्रितम् मणिमुक्तादि कटकादौ यथा तथा ॥ १२ ॥
यजुर्जाते यज्ञ-देहे स्यादृग्भिस्तद्विभूषणम् ।
सामाख्यामणिमुक्ताद्याऋचु तासु समाश्रिताः ॥ १३ ॥

(१) उद्गातृ-नामकः ऋत्विग्विशेषः; तस्य सामवेदार्थ-ज्ञानमत्यावश्यकम्, यतो बाहुल्येन तस्यैव सामवेदीय कार्य-कलापाधिकारित्वात्, तथाच लाट्यायन-सूत्रम् 'उद्गाता सामवेदेन (४ प्र १० ख)'-इति। 'मन्त्रान् कर्माणि चोद्गातैव कुर्यादिति' (१ प्र १ ख)-इतिच ।

(२) तत्र अधिकांशः कर्मकाण्डः, किञ्चिदंशः रूपनिषदात्मकः ज्ञानकाण्डः; प्राभाकरादि मते ज्ञानकाण्डो नास्त्येव ।

नन्वध्वर्यु-होतृद्गातृ-ब्रह्म-कर्त्तव्य-प्रतिपादको यो मन्त्रस्तस्यार्थो योजनीय इतिचेत्, योज्यते— "ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः"-इत्येष मन्त्रः(१)। तस्यायमर्थः—त्व-शब्दः सर्वनामसु पठितः एक-शब्द-पर्यायः, एकोहोतृ-नामकः ऋत्विक् तत्र तत्र विप्रकीर्णत्वेनाधीतानामृचां यज्ञानुष्ठान-काले सङ्घीभाव मापाद्य पुष्टिं कुर्वन्नास्ते; एक उद्गातृ-नामकः शक्कर्युपलक्षित-च्छन्दोविशेषयुक्तास्वृक्षु गायत्रादि-नामकं साम गायति; एको ब्रह्म-नामको होत्रादीनां वेद-त्रय-विषये यस्मिन्कस्मिंश्चिदपराधे जाते तत्प्रतीकाररूपां विद्यां वदति(२)। अतएव छन्दोगा आमनन्ति "यज्ञस्य हैषभिषग् यद् ब्रह्मा यज्ञायैव तद् भेषजं कृत्वा हरति"-इति*, "यदि यज्ञऋक्त आर्त्तिर्भवति भूरिति ब्रह्मा गार्हपत्ये जुहुयात्"-इत्यादिश्च; एकस्त्वध्वर्युर्यज्ञस्य मात्राभियत्तां विमिमीते विशेषेण परिच्छिनत्ति इति।

* यज्ञस्य विरिष्टं सन्दधाति भिषजकृताह वा एष यज्ञो यत्रैवं विद् ब्रह्मा भवति (४प्र०१७ख०)"-इति कौथुम-शाखी-यच्छान्दोग्य पाठः।

† "यद्यृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयात् (४प्र०१७-ख०)"—इति कौ०शा० छा० पाठः।

अत्र ब्रह्मेति "ब्रह्मा यजमानं सर्वांश्चर्त्विजोऽभि रक्षति"-इति प्रकरणोपसंहरण-वचनाल्लभ्यते

(१) ऋग्वेदस्य दशम मण्डलाष्टमाष्टक-द्वितीयाध्यायोपान्तिमाष्टक।

(२) विस्तरतो व्याख्यानं निरुक्त प्रथमाध्याय-द्वितीय पाद द्वादशखण्डे तत्रापि च द्रष्टव्यम्।

नमु वेदार्थ-प्रकाशकेऽस्मिन् ग्रन्थे वेदानां व्याख्येयत्वे सति तत्परित्यज्य यजुरादिकं व्याख्येयत्वेनोपन्यसितुमयुक्तम्-इतिचेत्— नायंदोषः, मन्त्र-विशेष-वाचकैर्यजुरादि-शब्दैस्तत्तन्मन्त्रोपेतान वेदानामुपलक्षितत्वात् ॥

ननु मन्त्र-वेदयोः को विशेषः ? इति चेत्, उच्यते—मन्त्र-ब्राह्मण-समष्टिर्वेदः । तथाचापस्तम्बः स्मरति " मन्त्र-ब्राह्मणयो र्वेद-नामधेयम् "-इति (१) । वेदैकदेशयोर्मन्त्र-ब्राह्मणयोः पृथक् स्वरूपं जैमिनिर्न्यायेन निर्णीतवान्, (२) तत्र मन्त्र-स्वरूप-निर्णयं द्वितीयाध्यायस्य प्रथमपादे सप्तमाधिकरणे न्याय-विस्तर-कार (३) इत्थमुदाजहार—"अहेबुध्निय मन्त्रं मे-इति मन्त्रस्य लक्षणम् ।

(१) उपनिषद्भागस्त्वनयोरन्तर्गतः, तथाच काचिदुपनिषत् मन्त्रात्मिका ईशेत्येवमादिः काचिद् ब्राह्मणात्मिका केनेत्यादिः। मीमांसक मत-विशेषे तु "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् (१।२।१)" इति जैमिनि सूत्रात् क्रियापरातिरिक्तानामुपनिषदिति प्रसिद्धानां वेदत्वमेव नास्ति। तत एव 'अपरा ऋग्वेदो यजुर्वेदः सामवेद' इत्यादि कथन-पूर्वकम् 'अथ परा यया तदक्षरमधिगम्यते' इति मुण्डकोपनिषद् (१-१-५) वाक्यम्, 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति मनु-वाक्ये सरहस्य पदम्, "दृष्टवदानुश्रविकः" इति सांख्य-प्रणेतृ-स्थितिश्च सङ्गच्छते। तदेतत् स्पष्टमेवाभ्यधायि प्राभाकरैः 'प्रवृत्ति-निवृत्ति विधि-तच्छेष व्यतिरेकेण केवल वस्तु-वादी वेदभागो नास्ति'। एतन्मते मन्त्रभागानामपि अग्निमीळे इत्यादीनां क्रियापर एवार्थो ग्राह्यः, अर्थान्तरः काल्पनिकः, केनेत्यादौ तु ब्राह्मण-ग्रन्थ सान्निध्याद् ब्राह्मणत्व भ्रमः, तथा ईशस्य वेदवेत्तृभिः शिष्य नुवर्दष्टु, तत्प्रणीतत्वात्, ब्राह्मण ग्रन्थ वाक्य सादृश्याभावात्तु मन्त्रादित्याञ्च तथा भ्रमः, यथा गेयारण्य-गानवदूहोह्य-गानयोरप्यपौरुषेयत्व भ्रमः।

(२) तथाच द्वितीयाध्याय प्रथम पादे द्वात्रिंशत्त्रयस्त्रिंशत्तमे सूत्रे 'तच्चोदकेषु मन्त्राख्या' इति 'शेषे ब्राह्मण-शब्दः' इति च। तत्र तेषां मन्त्राणां चोदकेषु अध्यापकेषु मन्त्र इति आख्या प्रसिद्धा, तत मन्त्र लक्षणं ज्ञातमित्याद्य सूत्रार्थः शेष-सूत्रन्तु स्फुटम्।

(३) अयं न्याय विस्तर-कारः, अयचतुरा निर्दिष्टो लेख शेलो।

नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात्॥ याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम्। तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते॥ आधाने इदमाम्नायते—'अहिर्बुध्निय मन्त्रं मे गोपाय' इति; तत्र मन्त्रस्य लक्षणं नास्ति, अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात्—'विहितार्थाभिधायको मन्त्रः' इत्युक्ते 'वसन्ताय कपिञ्जलानालभते' इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः, मननहेतुर्मन्त्रः इत्युक्ते ब्राह्मणेऽतिव्याप्तिः, एवम् 'असि पदान्तो मन्त्रः' 'उत्तमपुरुषान्तो मन्त्रः' इत्यादिलक्षणानां परस्परमव्याप्तिः; इति चेत्—मैवम्, याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् * तच्च समाख्यानमनुष्ठानस्मारकादीनाम् मन्त्रत्वं गमयति उरुप्रथस्वेत्यादयोऽनुष्ठानस्मारकाः [१] अग्निमीळे पुरोहितमित्यादयः स्तुतिरूपाः [२] इषे त्वेत्यादयस्त्वन्ताः [३] अग्न आयाहि वीतये इत्यादय आमन्त्रणोपेताः [४] अग्नीदग्नीन् विहरेत्यादयः प्रैषरूपाः [५] अधः स्विदासीदुपरि स्विदासीदित्यादयो विचाररूपाः [६] अम्बेऽम्बिकेऽम्बालिके न मा नयति कश्चनेत्यादयः परिदेवनरूपाः [७] पृच्छामि त्वा परमन्तं पृथिव्या इत्यादयः प्रश्नरूपाः [८] वेदिमाहुः परमन्तं पृथिव्या इत्यादय उत्तररूपाः [९] एवमन्यदप्युदाहार्यम्। ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति, यस्य लक्षणत्वमुच्येत; लक्षणस्याप्यशक्यत्वं पूर्वाचार्यैर्दर्शितः—'ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वतः †। लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः'—इति; तस्मादभि-

* निर्दोषत्वात् इति गौडस्वामि पुस्तक पाठः।

† पृथग्दृशः इति गौ० पुस्तक पाठः।

युक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम्" १॥ ब्राह्मण-खरूपमपि तत्रैवाष्टमाधिकरणे इत्थं निर्णीतम्—१"नास्त्येतद् ब्राह्मणेष्वत्र लक्षणं विद्यतेऽथवा। नास्तीयन्तो वेदभागाइति क्लृप्तेरभावतः॥ मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः। अन्यद् ब्राह्मणमित्येतद् भवेद् ब्राह्मण-लक्षणम्॥ चातुर्मास्येष्विदमाम्नायते—'एतद् ब्राह्मणान्येव पञ्च हवींषि'-इति, तत्र ब्राह्मणस्य लक्षणं नास्ति, कुतः? वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्ती शोधयितुमशक्यत्वात्; पूर्वोक्तोमन्त्रभागएकः, भागान्तराणि च कानिचित् पूर्वैरुदाहृत्य सङ्गृहीतानि 'हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परकृतिः * पुराकल्पो व्यवधारण-कल्पना'-इति— तेन ह्यन्नं क्रियतइति हेतुः [१] एतद्दध्नोदधित्वमिति निर्वचनम् [२] अमेध्या वै माषा इति निन्दा [३] वायुर्वै क्षेपिष्ठेति प्रशंसा [४] तद्व्यचिकित्सन् जुहवानी माहौषामिति संशयः [५] यजमानेन सम्मितौदुम्बरी भवतीति विधिः [६] माषानेव मह्यं पचते-इति परकृतिः [७] पुरा ब्राह्मणा अभैषुरिति पुराकल्पः [८] यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति विशेषावधारणकल्पना [९] एवमन्यदप्युदाहार्य्यम्। न च 'हेत्वादीनामन्यतमद्ब्राह्मणम्'—इति लक्षणम्, मन्त्रेष्वपि हेत्वादि-सद्भावात् †। तथाहि— इन्द्रवो वामुशन्ति होति हेतुः—उदानिषुर्महीरिति तस्मादुदकमुच्यतइति

* परक्रिया-इति रामशास्त्रि-पुस्तक-पाठः।

† सम्भवादिति गौ० पुस्तक-पाठः।

निर्वचनम्—मोघमन्नं विन्दते अप्रचेताइति निन्दा—अग्निर्मूर्द्धा-दिवः ककुदिति। प्रशंसा—अधःस्विदासीदुपरिस्विदासीदिति संशयः—कपिञ्जलानालभतइति विधिः—सहस्रमयुताददददिति परकृतिः—यज्ञेन यज्ञमयजन्त देवाइति पुराकल्पः। 'इतिकरण बहुलं ब्राह्मणम्'-इति चेत् न, इत्यददा इत्ययजथा ※ इत्यपच-इति ब्राह्मणो गायेदित्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः। 'इत्याहेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमिति चेत्—न, राजा चिद्यं भगं भक्षीत्याह'—'यो वा रक्षाः शुचिरस्मीत्याह' इत्यनयोर्मन्त्रयोरतिव्याप्तेः। 'आख्यायिकारूपं ब्राह्मणम्'—इति चेत्—न, यमयमी-संवाद-सूक्तादावतिव्याप्तेः। तस्मान्नास्ति ब्राह्मण-लक्षणम्-इति प्राप्ते, ब्रूमः—मन्त्रब्राह्मणरूपौ द्वावेव वेदभागावित्यङ्गीकारात् मन्त्र-लक्षणस्य पूर्वमभिहितत्वात् 'अवशिष्टो वेदभागो ब्राह्मणम्'-इत्येतल्लक्षणं भवतीति"[१]॥

मन्त्रविशेषाणामृग्यजुःसामरूपाणां लक्षणानि तस्मिन्नेवाधिविनिधिकरणे (१) जैमिनिः सूत्रयामास—"तेषामृग् यत्रार्थवशेन पादव्यवस्था" [३१] "गीतिषु सामाख्या" [३४] "शेषे यजुःशब्दः" [३३]-इति(२)। तदेतन्न्यायविस्तरे स्पष्टीकृतम्—

※ इत्यपचथा-इति सामश्रमि-पुस्तकेऽधिकः पाठः।

(१) दशमैकादशद्वादशेष्विति बोध्यम्।

(२) अत्रेदं चिन्त्यम्—अथर्व लक्षणं कथं न कृतमिति, दृश्यते ह्येवमनेकत्राथर्वणामाम्नानम्। यथात्र षड्विंश ब्राह्मण चतुर्थ प्रपाठकीय प्रथमखण्डे—"ऋग्वेदः पृथिव्या वेदात्, यजुर्वेदोऽन्तरिक्षात् सामवेदो दिवः[?]" इति, मन्त्र ब्राह्मण-षष्ठ-प्रपाठकीय-सप्तदशखण्डे, "अग्नेऋचो वायोर्यजूंषि सामान्यादित्यात्" इति, मनौ प्रथमेऽध्याये अग्नि-वायु-रविभ्यस्तु त्रयं

२-४-५"नर्क्-साम-यजुषां लक्ष्म सांकर्यादिति शङ्किते। पादश्च गीतिः प्रश्लिष्ट-पाठइत्यस्त्यसङ्करः ॥ इदमाम्नायते—अहेबुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूंषि" (१)-इति; त्रीन् वेदान् विदन्तीति त्रिविदः, त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदास्ते च यं मन्त्रभागमृगादि-रूपेण त्रिविधमाहुः, तं गोपायेति योजना। तत्र त्रिविधानामृक्-साम-यजुषां व्यवस्थितं लक्षणं नास्ति, कुतः? साङ्कर्य्यस्य दुष्परिहरत्वात्; 'अध्यापक-प्रसिद्धेष्वृग्वेदादिषु पठितो मन्त्रः'-इति हि लक्षणं * वक्तव्यम्, तच्च सङ्कीर्णम्—"देवोवः सवितोत्पुनात्वच्छिद्रेण वसोः सूर्यस्य रश्मिभिः"-इत्ययं मन्त्रो यजुर्वेदे सम्प्रतिपन्नो यजुषां मध्ये पठितः, नच तस्य यजुष्ट्वमस्ति, तद्‌ब्राह्मणे सावित्राचे त्वक्तेन व्यवहृतत्वात्; एतत् साम गायन्नास्ते-इति प्रतिज्ञाय किञ्चित् साम यजुर्वेदेऽङ्गीकृतम्; "अच्छितमसि" (२) "अच्युतमसि" प्राणसंशितमसि"-इति त्रीणि यजूंषि सामवेदे समाम्नातानि, (३) तथा गीयमानस्य स

* तल्लक्षणमिति गौ० शा० पुस्तकयोः पाठः।

ब्रह्म सनातनम्' इतीह यज्ञ सिद्ध्यर्थं ऋग्-यजुः-साम-लक्षणम्" इति; अमरोऽपि "इतिवेदास्त्रयस्त्रयी" इति। अथवा नायं चिन्ता-विषयः-एभ्यस्त्रिभ्य वेदेभ्य आङ्गिरसेनाथर्वणा पुरा संगृहीतः प्रथितश्चतुर्थोवेद इति, अतएवोपपन्नं तस्य त्रयीसामानुरूपमभिधानमथर्वेति "अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा" इति तैत्तिरीयादि-श्रुताङ्गिरमिति विशेषणञ्च।

(१) कृष्णयजुर्वेदस्य ब्राह्मणभागीय-प्रथमाष्टक-द्वितीयाध्यायस्य षड्विंशतितमं [illegible]

(२) [illegible]यजुःसंहितायाः प्रथमाष्टक-षष्ठाध्याय पञ्चमानुवाकारम्भे।

(३) [illegible]नीमाति छान्दोग्य ब्राह्मणस्य तृतीय प्रपाठके सप्तदशखण्डे द्रष्टव्यानि।

आश्रयभूता ऋचः सामवेदे समाम्नायन्ते; तस्मान्नास्ति लक्षणमिति चेत्—न, पादादीनामसंकीर्ण-लक्षणत्वात्; 'पादबन्धेनार्थेन चोपेताः वृत्तबद्धाः मन्त्राः ऋचः' 'गीतिरूपाः मन्त्राः सामानि' 'वृत्त-गीति-वर्जितत्वेन प्रश्लिष्टपठिताः मन्त्राः यजूंषि'-इत्युक्ते न क्वापि सङ्करः''-२-४-५-इति(१) ॥

यदुक्तं गीतिषु सामाख्येति तदेव विशदीकर्त्तुं सप्तमाध्यायस्य द्वितीयपादे रथन्तरशब्दो निरूपितः—६''अतिदेश्यं विनिश्चेतुं कवतीषु रथन्तरम्। गायतीत्यत्र गानयुक्ता शब्दार्थो गानमेव वा ॥ इति चिन्ता गानयुक्ता त्वभिलत्यृक् प्रसिद्धितः। लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत् (१अ०) ॥ इदमाम्नायते 'कवतीषु रथन्तरं गायति'-इति, 'कया नश्चित्र आभुवदित्याद्यास्तिस्र ऋचः कवत्यः (२), तासु वामदेव्यं सामाध्ययनतः प्राप्तम् (३)तद्बाधितुं रथन्तरं साम तास्वतिदिश्यते, तत्रातिदेशस्य स्वरूपं निश्चेतुं रथन्तर-शब्दार्थश्चिन्त्यते। गानविशेषयुक्ताभित्वा शूरनोनुमइतीयमृग् (४) रथन्तरमित्युच्यते, कुतः? अध्येतृ-प्रसिद्धि

(१) इत्यत्र गद्य-पद्य गीति-रचना त्रय भेदात् त्रैविध्यम्।

(२) तथाहि 'कयानश्चित्र आभुवदिति कवत्यः' इति ताण्ड्यब्राह्मण-पञ्चदश प्रपाठक-दशम खण्डारम्भः। अत्र 'तृचसूक्तानामादि ग्रहणेन त्रिग्रहणादृश' इति (?।३) लाट्यायन-स्मरणात् तृच लाभः। स च उत्तरार्चिकस्य प्रथमप्रपाठकीय द्वादश सूक्तरूपः; तत्र कयानश्चित्रेति प्रथमा ऋक्, कस्त्वा सत्योमदानामिति द्वितीया, अभीषुणः सखीनामिति तृतीया।

(३) ऊह-गान-ग्रन्थे तथैव पाठात्। तत्र तत्र प्रथमप्रपाठके प्रथमार्द्धीय पञ्चमं साम।

(४) सा च छन्दआर्चिकस्य तृतीयाध्याय-प्रथम दशत्यां प्रथमा।

…त:(१) रथन्तरं गीयतामिति केनचिदुक्ता: अध्येतार: स्वर-स्तोभ-विशेष युक्ता * मभित्वेत्यृचं पठन्ति, न तु स्वरस्तोभमात्रम्; अस्माद् [illegible] विशिष्टायाऋचोरथन्तर-शब्दार्थत्वमिति, प्राप्ते, ब्रूम:— स्वरादि-विशेषानुपूर्वीमात्रस्वरूपमृगक्षर-व्यतिरिक्तं यद् गानं तदेव रथन्तरशब्दार्थ:, कुत:? लाघवात्, किञ्च कवतीष्वृक्षु गानमतिदेष्टुं योग्यं नत्वृचस्तद्योग्यतास्ति, कयानोऽभित्वेत्यनयोर्ऋचोर्युगपदाधाराधेयभावेन पठितुमशक्यत्वात्; तस्माद् गानविशेषएव रथन्तरशब्दार्थ:(२)"६-इति ॥

पुनरपि नवमाध्यायस्य द्वितीयपादे प्रथमाधिकरणस्य प्रथमवर्णके सामशब्दस्य गान-मात्र-वाचित्वं स्मारितम्—

७"सामोक्ति-बृहदाद्युक्ती गीताया मृचि केवले । गाने वा एवेति स्मार्यते सप्तमोदितम् ॥ सामान्यवाची सामशब्दो वि… वाचिनो बृहद्रथन्तरादि-शब्दाश्च गानमात्रे वर्त्तन्ते, न तु ग… विशिष्टायामृचि-इत्ययं नियम: सप्तमस्य द्वितीयपादे सिद्ध:, सं… वक्ष्यमाण-विचारोपयोगितया स्मार्यते"७-इति ॥

साम-शब्द-वाच्यस्य गानस्य स्वरूपमृगक्षरेषु क्रुष्टादिभि: सप्तभि: स्वरै: अक्षरविकारादिभिश्च निष्पाद्यते । क्रुष्ट: प्रथमो द्वितीय

* स्वर-स्तोभ-युक्तेत्येव पाठ: रा० सा० पुस्तकयो: ।

(१) अरण्य-ग्रन्थे तथैव पाठात् । तत्र तत्र द्वितीयप्रपाठकीयैकविंशतितम साम ।

(२) कवतीषु रथन्तरम्, ऊह्य गाने संवत्सर-पर्वस्यान्त्यमं साम ; विदितश्चैत प्रायणीयेऽह्नि मध्यन्दिने ।

द्वितीय स्तुर्थः पञ्चमः षष्ठ श्चेत्येते सप्त-स्वराः(१), ते चावान्तर भेदैर्बहुधा भिन्नाः। स्वरस्य साम-निष्पादकत्वं छान्दोग्योपनिषदः प्रथमे प्रपाठके(८ख०) प्रश्नोत्तराभ्यामामनन्ति—"स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच— हन्त! त्वा पृच्छानीति पृच्छेति होवाच— का साम्नो गति रिति, स्वरइति हो वाच"-इति। काण्वा उद्गीथविद्यायां स्वरस्य साम-सम्बन्धि-सर्वस्व-स्थानीयत्वं शोभन-वर्ण-स्थानीयत्वं चामनन्ति(२)—"तस्य हैतस्य साम्नो यः स्वं वेद, भवति हास्य स्वं, तस्य स्वर एव स्वम्,-इति, "तस्य हैतस्य साम्नो यः सुवर्णं वेद, भवति हास्य सुवर्णं, तस्य वै स्वर एवसुवर्णम्"-इति च।

अक्षर-विकारादीनान्तु साम-निष्पादकत्वं नवमाध्यायस्य द्वितीयपादे एव 'अर्थैकत्वाद् विकल्पः स्यात्' (२७ सू०)-इत्येतस्य सप्तमाधिकरणगतस्य सूत्रस्य व्याख्यानावसरे शबरस्वामिना स्पष्ट-मुक्तम्—"सामवेदे सहस्रं गीत्युपायाः, आह क इमे गीत्युपाया नाम? उच्यते— गीतिर्नाम क्रिया ह्याभ्यन्तर-प्रयत्न-जन्या, स्वर-

(१) "यद् योऽसौ क्रुष्टतमइव साम्नः स्वर स्तं देवा उपजीवन्ति, योऽवरेषां प्रथमस्तं मनुष्याः, योद्वितीयस्तं गन्धर्वाप्सरसो, यस्तृतीयस्तं पशवो, यश्चतुर्थस्तं पितरश्चाण्डेष शेरते, यः पञ्चमस्तमसुर-रक्षांसि, योऽन्त्यस्तमोषधयो वनस्पतयो यच्चान्यज्जगत्" इति सामविधान-ब्राह्मण-प्रथमप्रपाठकाद्यखण्डे। नारद शिक्षादावेतद्-विशेषो द्रष्टव्यः।

(२) कौथुमाश्चाप्येवमेव, तथाहि 'सामविधान'-ब्राह्मणस्य प्रथमप्रपाठकाद्यखण्डे "ह वै साम्नः स्वं यः सुवर्णं वेद, स्वं च ह, वै साम्नः सुवर्णं च भवति, स्वरो वाव साम्नः तदेव सुवर्णम्"-इति।

विशेषाणामभिव्यञ्जिका, साम-शब्दाभिलप्या, सा नियत-प्रमाणम-ऋचि गीयते (१), तत्सम्पादनार्थोऽयमृगक्षर-विकारोविश्लेषो विकर्षणमभ्यासोविरामःस्तोभइत्येवमादयः सर्वे सामवेदे (२) ...यन्ते"-इति। तद्विषये विचारो न्यायविस्तरेऽभिहितः— "समुच्चया विकल्प्या वा विभिन्ना गीति-हेतवः। आद्यः प्रयोगग्रहणादैकत्वाद् विकल्पनम्॥ छान्दोग्ये तवल्का-

(१) तथाहि श्रूयते—'एतस्य साम्न ऋगेवास्थीनि, स्वरोमांसानि, स्तोभा लोमानि'-इति 'सामविधान'-ब्राह्मणाद्यप्रपाठकाद्यखण्डे।

(२२) गेयारण्योहोह्याभिधेयेषु चतुर्षु गानग्रन्थेषु, माहानाम्न्यादि-सामसु च। तद्यथा।

"अग्न आ याहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषि"। (सा० छ० १प्र० १ ख० १ऋ०)

अत्र गानानि त्रीणि, तत्राद्यं गेयगानस्य प्रथमं साम। तदेव पश्यतु तावत्—

"ओग्नायि। आयाही३ वोयितोया२यि। तो
या२यि। गृणानोह। व्यदातो या२यि। तोया२यि।
नायिहो तासा२३। त्सा२यि। वा २३४औ होवा।
२३षी। १"

अत्र आयाहरादयोविकृताः, 'वीतये'-इति वीजकात् 'वोयि'-इत्याद्यस्मात् -'इत्यादिविश्लिष्टः, 'या२यि'-इत्याद्यशो विकर्षणः, 'तो या२यि'-इत्येतस्तोभयत भ्यासः, 'हव्यदातये'-इति वीजके 'ह'। कदा तो या-२यि'-इत्यंश हकारानन्तरं गारः, 'ति'-इति मूलकः 'त्सा२यि'-इत्यंशः स्तोभः, अधिकत्वे सति ऋग्विलक्षण तोभः-इति तल्लक्षणत्वात्। स्तोभादयइत्यादिपदात् लोपागमादयो ग्राह्याः, -'बर्हिषि'-इत्यंशस्य रेफाश्रवणं, मध्ये 'औहोवा'-इत्यागमश्च। एवं यथा-लितो विकारादिः सर्वत्र ध्येयः।

. रादि *-शाखा-भेदेषु विलक्षणागीति-हेतवोऽक्षर-विकारादय आम्नायन्ते, ते सर्वे कर्मानुष्ठाने समुच्चेतव्याः; कुतः? प्रयोगवचने सर्वेषां परिगृहीतत्वात्— मैवम्, एकैक-शाखोक्तैरेवाक्षर-विकारादिभिरध्ययन-कालएव गीति-स्वरूप-निष्पत्तेस्तन्निष्पत्ति-लक्षणस्य प्रयोजनस्यैकत्वात्, प्रयोग-वचन-परिगृहीताअपि व्रीहि-यव-वद् वृहद्रथन्तरवच्च विकल्प्यन्ते"-इति॥ गीतिहेतुषु स्तोभस्यात्यन्तमप्रसिद्धत्वात्तल्लक्षणं तस्मिन्नेवपादे एकादशाधिकरणे चिन्तितम्— ""स्तोभस्य लक्षणं नास्ति किं वास्ति न विवर्णता। आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत्॥ न तावद् विवर्णत्वं लक्षणम्, वर्ण-विकारस्य विपरीत-वर्णत्वेन स्तोभत्व-प्रसङ्गात्; अग्नआयाहो (छ.प्र१.द१.१) त्यस्यामृचि अकारस्य स्थाने ओकारं कृत्वा गायन्ति "ओग्नायि" इति(गे०प्र१.सा१)। अधिको वर्णः स्तोभ इत्युक्ते सति, अध्यासेऽतिव्याप्तिः; पिबासोममिन्द्रमन्दतुत्वे त्येतस्यामृचि (१) दतुत्वेत्यक्षर-त्रयं गानकाले त्रिरभ्यस्तम् (२)। अतोविकाराभ्यासयोरतिव्याप्तेर्नास्तिलक्षणम् इति चेत्— मैवम्, "अधिकत्वे सत्यृग्विलक्षण वर्णः स्तोभः"(३)

* तलवकारादि-इति गी० मा० पाठः।

(१) छन्दोनामार्च्चिकस्य चतुर्थप्रपाठकाद्य-पञ्चम-खण्डाष्टम्यामिति यावत्।

(२) गेयगानस्य दशमप्रपाठकैकत्रिंशत्तमे सामनि द्रष्टव्यम्।

(३) तदेतल्लक्षणं वर्णस्तोभमात्रस्याभिप्रेतम्, तेन आस्तम्भादि नवविध वाक्यस्तोभ, हाउकारादि पञ्चदश पदस्तोभेषु चाव्याप्तिः। तदुक्तम् "आस्तम्भः स्तुतिः संख्यान प्रलय-परिदेवन-प्रैषमन्वेषणं सैव सृष्टिराख्यानमेव च"-इति वाक्यस्तोभ-भेदाः। तत्र "आग

इति विशिष्टस्य तल्लक्षणत्वात्; लोकेऽपि सभायां विप्रलम्भकेनोच्यमानं प्रकृतार्थानन्वितं काल-क्षेप-मात्र-हेतुं शब्दराशिं स्तोभ इत्याचक्षते, तस्मादस्ति लक्षणम्"९-इति॥ अक्षर-विकार-स्तोभादिवत् वर्ण-लोपोऽपि क्वचिद् गीति-हेतुर्भवति, तल्लोप-विषयश्च विचारो नवमाध्याये प्रथमपादस्याष्टादशाधिकरणेऽभिहितः— १०"इरा गिरा विकल्पः स्यादुतैरैवा विशेषतः। आद्यैमैवं बाध-पूर्वमिरायाविहितत्वतः॥ ज्योतिष्टोमे श्रूयते "यज्ञायज्ञीयेन स्तुवीत"-इति (१)। 'यज्ञायज्ञा'-इत्यनेन शब्देन युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयम् (२), तस्यामृचि गिरा शब्दः पठ्यते 'यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे'-इति (३)। तत्र सामगा योनिगान(४)

---

ज्ज्योतिरमृता अभूम"-इति, "नमोऽन्नाय नमोऽन्नपतये"--इत्यादिः, "ये देवा देवाः दिविषदः, अन्तरिक्षसदः, पृथिवीषदः"—इत्यादिः, 'एतत् संख्यानं त्रिशामइन्द्रः"—इति, "यदिन्द्राहं यथात्वम्"-इति, "समविणं दद"—इति, "विश्वेषां देवानां समिदजस्रं ज्योतिराततनम्"—इति, "प्रजाभूतमजीजने"--इति, "द्यौरक्षान् भूमिराततनत् समुद्रं समचुकुपत"—इति --इत्येवमादयः क्रमेणोदाहार्याः। पद-स्तोभ-विवरणन्तु मन्त्र-ब्राह्मण-तृतीय-प्रपाठक-त्रयोदश-खण्डे; तदुदाहरणानि तु स्तोभग्रन्थेऽन्वेषणमन्तरापि प्राप्तव्यानि बहूनि। इमे नव वाक्यस्तोभाः पञ्चदश पदस्तोभाश्च गानग्रन्थेषु श्रुताः सामसु, तत्राप्यरण्ये बहु।

(१) ताण्ड्यब्राह्मणाष्टमप्रपाठकीयषष्ठखण्डे श्रुतमेतत्।

(२) एतच्च गेयगान-प्रथम-प्रपाठकीय-द्वाविंशतितमं साम।

(३) छन्दोनामार्चिक-ग्रन्थे प्रथम-प्रपाठक-प्रथमखण्डे प्रथमा।

(४) साम्नां योनिभूताः ऋचः छन्दसि आर्चिके पठ्यन्ते, तासां गानानि सामापरपर्यायाणि यत्र विद्यन्ते, तद्योनिगानमित्याचक्षते, वेदसाम,-वेयगानं, गेयगानमित्यपि

मधीयानाः सहैव गकारेण गायन्ति 'गायिरा गिरा'-इति; ब्राह्मणे (१) तु गकार-लोप-पूर्वकमाकार-यकारादिकं गानं विधीयते 'ऐरं कृत्वोद्गेयम्'-इति, गिरा-शब्दे गकार-लोपा दिराशब्दो भवति, इरायाः सम्बन्धि गानम् ऐरम्, तादृशं कृत्वा प्रयोग-काले तद्गानं कर्त्तव्यमित्यर्थः; तत्र योनिगान-ब्राह्मणयोः समान-बलत्वेन विशेषाभावात् विकल्पेन प्रयोक्तव्यम्-इति प्राप्ते, ब्रूमः—'न गिरागिरेति ब्रूयाद्, यद् गिरा गिरेति ब्रूयाद् आत्मानमेव तदुद्गाता गिरेत्' (२) इति गकार-सहित-गाने बाधकमुक्त्वा गकार-रहितमिरा पदं गेयत्वेन विधीयते, तत्पदादेरिकारस्य गानार्थमाकारोयकारइकार श्चेति त्रीन् वर्णान् प्रयुङ्क्ते, तत 'आयिरा'-इत्येव गातव्यम्" (३)१० इति॥ तत्रैवोपरितनाधिकारे कश्चिद् विशेषश्चिन्तितः—११" इरा-पदं न गेयं स्याद् गेयं वा गीत्यनुक्तितः। न गेयं गीयमानस्य स्थाने पातात् प्रगीयते॥ ब्राह्मणेन विहितइराशब्दो न गातव्यः, कुतः? ऐरमिति शब्देन गीतेरनुक्तत्वात्; पाणिनीयेन

---

तस्यापरमपरं नामधेयम्। तत्र वेदमातृत्वाभिधानमधिकरणमालायामेवावलोक्यते। वेयगानमित्येतदभिधानं तु गेयमित्यस्यैवापभ्रंशोऽनुमीयते। बहुषु गेय गान पुस्तके गेयगानमित्येव लिखितं दृश्यते, क्वचित् वेयमित्यपि। इदानीन्तन वैदिकास्तु 'वे' इत्येव व्यवहरन्ति।

(१) ताण्ड्ये अष्टम-प्रपाठकीय-षष्ठ-खण्डे।

(२) तत्रैव खण्डे।

(३) गानमेतदभिजिति 'अग्निष्टोमस्याम, ऊह्यगानस्य द्वितीय-प्रपाठकीय पञ्चदशम्।

'विमुक्तादिभ्योऽण्[५,२,६१]'-इति सूत्रेणेरा-शब्दादण्-प्रत्ययोमत्व-र्थीयो विहितः, तथासतीरापदोपेतं कृत्स्नमेतावानेवार्थो भवति; यदि प्रगोतेरा-पद-सम्बन्धः तद्धितेन विवक्ष्येत, तदानीमाकारो यकारईकारोरेफआकारश्चैतैः पञ्चभिवर्णैर्निष्पन्नमायीरा-रूपं गीय-मानेरा-शब्द-प्रातिपादिकं भवति, तादृशात् प्रातिपदिकात् पाणिनोयेन 'वृद्धाच्छः[४,२,११४]'-इति सूत्रेण प्रत्ययान्तरे सति, आयिरोयं कृत्वेति ब्राह्मणपाठो भवेत्; तस्मान्न गेयम्-इति प्राप्ते, ब्रूमः— गीयमानस्य गिरा-पदस्य स्थाने इरा पदं विधीयते-इति पदमात्रस्य बाधः, गानन्तु न बाध्यते: किञ्च विमुक्तादि [५,२,६१]-सूत्रेणाण्-प्रत्ययेऽपि, पूर्वस्मात् 'मतौ छः सूक्त-साम्नोः[५,२,५९]'-इति सूत्रात् सामानुवृत्तेरैरं सामेत्यर्थो भवति, सामत्वं च गोति-साध्यम्, यदा तु 'तस्य विकारः [४,३,१३४]'-इत्यस्मिन्नर्थे अण् प्रत्ययः, तदानीमिरायाविकार इति विग्रहे यथोक्तं गानं लभ्यते ; तस्माद् गातव्यम्"[११]-इति॥

बहुभिः प्रकारैर्गानात्मकं यत् साम-स्वरूपं निरूपितम् तस्यैव देवता-स्तुति हेतुत्वं नवमाध्यायस्य द्वितोय-पादेऽष्टमाधि-करणस्य प्रथम-वर्णके निर्णीतम्— [१२]"ऋक्सामाभ्यां विकल्पेन स्तुतिः सामैव वाग्मिमः। पुरेव मैवमृङ्निन्दा-साम-प्राशस्त्य-दर्शनात्॥ क्वचित् कर्म-विशेषे श्रूयते—'ऋचा स्तुवते, साम्ना स्तुवते'-इति। तत्र, पूर्वन्यायेन विकल्पः-इति चेत्—मैवम्, ऋङ्-निन्दा-साम-प्रशंसयोर्वाक्यशेषेऽवगमात्, 'यदृचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते ,तदसुरानान्ववायन्, यएवं विद्वान् साम्ना स्तुवोत-इत्यृचं निन्दित्वा साम प्रशस्य लिङ्प्रत्ययेन साम

विहितम्, तस्मात् साम्नैव स्तोतव्यम्"१२-इति (१)॥ तस्य च साम्नः ऋचं प्रति संस्कारकत्वं तस्मिन्नेव पादे द्वितीयाधिकरणे निर्णीतम्—१३"सामर्चं प्रति मुख्यं स्याद् गुणो वा बाह्य-पाठतः। मुख्यमभ्यसितुं पाठो गुणो गीताक्षरैः स्तुतेः॥ रथन्तरं गायतीत्यादौ यद्गानं विहितम् तदेव साम-शब्दार्थइति प्रतिपादितं स्मारितञ्च, तदेतद् गान मृचं प्रति प्रधान-कर्म स्यात्, कुतः? याग-प्रयोगाद् बहिरध्ययन-कालेऽपि पठ्यमानत्वात्, गुणकर्मत्वे तु व्रीहि-प्रोक्षणादिवद् याग-मध्ये एव गानमनुष्ठीयेत, ततो बहिर्गानस्य विश्वजिदादिवत् फलं कल्पनीयम् (२) मध्यकालीन-गानं तु प्रयाजादिवदारादुपकारकम् (३); तस्मान्मुख्यमेतन्न तु गुण-कर्म-इति प्राप्ते, ब्रूमः— न तावद् बहिः पाठः प्रधानकर्मत्वं कल्पयितुं शक्नोति 'भूमिरथिक-शुष्केष्टि-न्यायेन

(१) प्रायणीयातिरात्रानन्तरमनुष्ठेये तु ऋक्-साम्नोरुभयोरेवास्ति विधानम्, परं तत्रापि ऋचो निन्दा गम्यते, तथाहि ताण्ड्य चतुर्थ-तृतीये "साम्नैतायन्ति, ऋचा पुनरायन्ति" इति, साम्ना प्रयुज्यमाने इतः अस्माल्लोकात् यन्ति स्वर्गम्, ऋचा तु स्वर्गं गच्छन्तोऽपि यजमानाः पुनरागच्छन्ति इति तदर्थः।

(२) यत्र फलविशेषो न श्रूयते न दृश्यते वा, तत्र स्वर्गः फलं कल्प्यते, 'स स्वर्गः सर्वान् प्रत्यविशिष्टः' इति मीमांसा सिद्धान्तात्। अतः "विश्वजिता यजेत" इत्यत्र स्वर्गः फलं युक्त्या निरणायि; तद्वदत्रापि। तदुक्तम्— "विनापि विधिना दृष्टलाभान्न हि तदर्थता। कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत्"।

(३) तथाचावधेयम्— यागस्य कर्मरूपत्वात् कर्मणश्च क्षयित्वात् कालान्तरभाविस्वर्गादि-फल-साधनत्वं नोपपद्यते, अतः याग-क्रिया-सहभाविनी काचिच्छक्तिरपूर्वमिति मीमांसकैः स्वीक्रियते, सा च यथा अङ्गार-जन्यमौष्ण्यं शान्तेष्वङ्गारेषु अप्यनुवर्त्तते, तथैव नष्टेऽपि यागे कर्त्तुरात्मानमाश्रयते। तच्च फलापूर्वम्, समुदायापूर्वम्, उत्पत्त्यपूर्वम्, अङ्गापूर्वमिति नानाविधम्, तत्र सन्निपत्यारादिति भेदात् अङ्गापूर्वं द्विविधम्,

प्रयोग-पाटवाय गानाध्ययनोपपत्तेः (भूमिरथिको भूमौ रथमालिख्याभ्यासं करोति, यथा वा छात्रः शुष्केष्या प्रयोग-पाटवं सम्पादयति, तद्वत्)। नापि गुणकर्मत्वे प्रयोजनाभावात् प्रधानकर्मत्वमिति वाच्यम्, गानेन संस्कृतैर्ऋगक्षरैः स्तुतिसम्भवात्; 'आज्यैः स्तुवते'-'पृष्ठैः स्तुवते'-इति स्तुति-विधानात्, तस्मादृगक्षराणां स्वरविशिष्टत्वाकाराभिव्यक्तिर्दृष्टं प्रयोजनमित्यदृष्टस्याकल्पनीयत्वाद् गानं संस्कारकर्म"[१३]-इति॥

यथोक्तमृगक्षराणां संस्कारकं गीत्यात्मकं यत् साम तदेतदेकैकं छन्दोगा एकैकस्यामृचि 'वेदसाम'-नामके ग्रन्थेऽधीयन्ते, ऊहनामके तु ग्रन्थे एकैकं साम तृचेऽधीयते सोऽयमूहग्रन्थः तस्मिन्नेव पादे प्रथमाधिकरणस्य द्वितीयवर्णके विचारितः—[१४]"ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवाग्रिमः। वेदसाम-समानत्वाद् विधि-सार्थत्वतोऽन्तिमः॥ यस्मिन् ग्रन्थे सामगास्तृचे तृचे सामैकैकं गायन्ति सोऽयमूहग्रन्थोनित्यो न तु पुरुषेण निर्मितः, कुतः? अनध्यायवर्जनेन कर्त्तुरस्मरणेनाध्यापकानां वेदत्व-प्रसिद्धया च वेदसाम-नामक-योनि-ग्रन्थ-सदृशत्वात्; इति चेत्— मैवम्, अपौरुषेयत्वे विधिवैयर्थ्य-प्रसङ्गात्— 'यद्योन्यां तदुत्तरयोर्गायति'-इति विधीयते।

---

यानि द्रव्य-देवता-संस्कार-द्वारेण यागस्वरूपस्यातिशयाधानेन तदुत्पत्त्यपूर्व-निष्पत्तौ व्याप्रियन्ते तद्द्वारेण फलापूर्वं, तानि सन्निपत्योपकारकाणि, अवघातादीनि, यानि तु उत्पत्त्यपूर्वेभ्यः फलापूर्व-निष्पत्तौ साक्षादेव व्याप्रियन्ते, तानि आरादुपकारकाणि, प्रयाजादीनि-इति। एतत् समस्तं जैमिनीय-द्वितीयाध्याय-द्वितीयाधिकरणादौ स्फुटम्॥

अयमर्थः— अपौरुषेयत्वेन सम्प्रतिपन्ने वेदसाम-नामके ग्रन्थे 'कया नश्चित्र आ भुवत्-'(१)इत्येतस्यां योन्यामेकस्यामृचि यद् वामदेव्य-नामकं (२) सामोपदिष्टं तदेवोत्तरयोरृचोः 'कस्त्वा-सत्योमदानाम्' 'अभी षु णः सखीनाम्' (३)-इत्यनयोः द्वितीय-तृतीययोर्गातव्यम्-इत्ययं विधिरूहग्रन्थस्य वेदत्वे व्यर्थः स्यात्, 'वेदसाम'-वदध्ययनादेव तत्सिद्धेः। उपरितनऋग्द्वये सामोहस्य पौरुषेयत्वेऽपि साम-स्वरूपस्य तदाधारभूतानां तिसृणामृचां च वेदत्वादनध्यायाः वर्जनीयाः, कर्त्तुरस्मरणं जीर्णकूपारामादिष्विव चिरकाल-व्यवधानादुपपन्नम्, अ-स्मरण-मूलैवाध्यापकानां वेदत्व-प्रसिद्धिः (४)— यथावह्वृचामध्यापकामहाव्रत-प्रयोग-प्रतिपादक माश्वलायन-निर्मितं कल्प-सूत्रमारण्येऽधीयमानाः पञ्चममारण्यक

(१) छन्दोनामार्च्चिकस्य २प्र० ६ख० ५ऋक्। उत्तरार्च्चिकस्य च १प्र० १२सू० १ऋक्।

(२)—गेयगानस्य पञ्चम-प्रपाठके कयान-इत्यस्यामृचि त्रीणि सामान्याम्नातानि; तत्र तृतीयं वामदेव्यम् महावामदेव्यं चोच्यते, आर्षेयब्राह्मणे तथैवाम्नानात; तथाहि तदीय-प्रथम-प्रपाठकोनविंशखण्डे — "वाचः सामनी द्वे वामदेव्यं महावामदेव्यं वा" -इति।

(३) उत्तरार्च्चिकस्य १प्र० १२सू० २,३ ऋचौ। अनयोर्गानमूहग्रन्थस्य प्रथम-प्रपाठके पञ्चमं साम।

(४)—अवास्योत्तरमनुसन्धेयम्— यदेतत् प्रथमाध्याय प्रथमपादाष्टमाधिकरणम् "समाख्याध्यापकत्वेन वाक्यत्वन्तु पराहतम्। तत्कर्त्रनुपलम्भेन स्यात् ततोऽपौरुषेयता" इति—"अध्ययन-सम्प्रदाय-प्रवर्त्तकत्वे न समाख्योपपद्यते, कालिदासादि-ग्रन्थेषु तदध्ययना-द्यवसाने कर्त्तार उपलभ्यन्ते, तथा वेदस्यापि पौरुषेयत्वं तत्कर्त्तोपलभ्येत, नचोपल-भ्यते, अतोवाक्यत्व-हेतुः प्रतिकूल-तर्क पराहतः, तस्मादपौरुषेयोवेदः"-इति तद् व्याख्यानम्— वेदोपौरुषेयः कर्त्रनुपलम्भात् आत्मवत् इत्यनुमानम्— ऊहग्रन्थस्यापौरु-षेयत्व-साधकैतन्यायेन जल-मध्यस्थ-मसी-चोदवत् कथं न विक्लिन्नम्? -इति।

मिति वेदत्वेन व्यवहरन्ति, तद्वत्; न च तस्यापि वेदत्वमस्त्विति वाच्यम्, प्रथमारण्यकेन पुनरुक्तत्वात्, अर्थवाद-राहित्येन ब्राह्मण-सादृश्याभावाच्च; तस्मात् पञ्चमारण्यकवदूहः (१) पौरुषेयः; पौरुषेयस्य च न्याय-मूलत्वात् यत्र वक्ष्यमाण-न्याय-विरोध-स्तदप्रमाणम्"[१४]-इति ॥

तत्रैव केचिद् विशेषा-स्तृतीय-चतुर्थ-पञ्चम-षष्ठाधिकरणैर्बहु-वर्णकोपेतैर्विचारिताः; तत्र, तृतीयाधिकरणम्— [१५] "अंशैः सामर्चु कृत्स्नं वा प्रत्यृचं तिसृभिः श्रुतेः। अंशैर्मैवं स्तुतेरंशै-रसिद्धेः प्रत्यृचं भवेत्॥ 'एकं साम तृचे (२) क्रियते स्तोत्रियम्' इति, श्रूयते, तत्र त्रेधा विभक्तेषु सामांशेषु एकैकोंऽशः एकैक-स्यामृचि गातव्यः, कुतः? एकस्य साम्नः तिसृभिर्ऋग्भिर्निष्पा-दनस्य श्रवणात्; इति प्राप्ते, ब्रूमः— स्तोत्रियमिति स्तुतिनि-ष्पादकत्वं कृत्स्नस्य साम्नोविधीयते, न तु सामांशानाम्; स्तुति-र्नाम गुण-कथन-परमेकं वाक्यम्, तच्च वाक्यमेकस्यामृचि सम्पू-र्णम्, ततः कृत्स्नेन साम्ना तद् वाक्यं संस्कार्यमिति प्रत्यृचं सामा-भ्यसनीयम् (३), तथासति द्वितीय-तृतीययोर्ऋचोस्तस्यैव साम्न आवर्त्तमानतया सामान्तरत्वाभावाद् ऋक्-त्रय-निष्पाद्यत्वमविरु-

(१)—ऊह्यगानेऽप्ययं न्यायः, अविशेषात्, अत्र तन्नामास्मरण-हेतुस्तु आचार्य्य एव वेत्ति स्वयम्।

(२)—तृचमिति "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि"-इति पा०-वचनात् सिद्धम्।

(३)—सामशब्देनात्र स्वरस्तोभादय एव ग्राह्याः, तदाधाराणां तिसृणामृचां परस्पर-पार्थक्यात्। ऊहगानस्य ऊह्यगानस्य च सर्वाण्येव सामानि एतदुदाहरणानि।

ष्टम्; तस्मात् प्रत्यृचं कृत्स्नं साम समापनीयम्"१५-इति (१) ॥ चतुर्थाधिकरणम्—१६"तिसृष्वृचूदितं साम विषमासु समासु वा। यथेच्छानियमादन्त्यः शर-लेशापनुत्तये ॥ विषम-च्छन्दस्कासु सम-च्छन्दस्कासु वा तिसृष्वृत्तु स्वेच्छया साम गातव्यम्, इत्थमेवेतिनियामकस्य कस्यचिदभावात्; इति चेत्—मैवम्, शर-लेश-प्रसङ्गस्य नियामकत्वात्। शरोहिंसा, लेशोऽल्पत्वम्, 'शॄ'-हिंसायाम् 'लिश'-अल्पीभावेइत्येतद्धातु-द्वय-दर्शनात्—यद्यधिक-च्छन्दस्कायां योनौ

(१)—एतदधिकरणमत्राभिप्रायं हृदयङ्गमयितुं लेखनी न शक्यते, अतस्तथाविधं सामैकं यथावत् प्रदर्श्यते। अनुत्तरार्चिककस्थे उच्चेति, सनेति, एनेति च तिसृणामृचां समुदायः प्रथम-प्रपाठक-प्रथमार्द्धाष्टम-सूक्तात्मकस्तृचः, तत्र आमहीयवं नामकं साम गीयते तच्च ऊहगानस्यादिमम्, तदेतत्—

५ र २ र ४ ५ २ १ २ १
"उच्चाता३इजातमन्धसाः। दिवाइसाऽ१ङ्ग२। मिया
२ १ २१ २
२३ददा३। उग्रꣳ शर्मा। महा२३ इ अवाउ। वा३
५ २ र ४ ४५ २ १ २
(इति प्रथमांशः) ॥ सन आ ३ इ न्द्रायययज्यवाइ। वरुणा-
१ २ १ २ २ र १
ऽ१या२। मरु२३द्भियाः। वरिवो वा इत्। परा२३इ-
२ ५रर र ४
सवाउ। वा३ (इतिद्वितीयांशः) ॥ एनावा२३ श्वा नि
२ १ २ १ २ २
अर्यआ। द्युम्ना नाऽ२इमा२। नुपा२३णाम्। सिपा
२ १ २
सन्ताः। वना२३ मेहाउ। वा३ (इति तृतीयांशः)
२र १ १ १ १ १
स्तौषे २ म्ह ३ ४ ५. (इति सप्तम-शेष-सूचकोनिधनांशः)

अत्र आधाराणां भेदेऽपि स्वर-स्तोभादीनामभेदः स्फुटम्॥

उत्पन्नं साम, न्यून-च्छन्दस्कायोर्गीयेत, तदा साम-भागेनैव तत्पूर्त्ते-रवशिष्ट-सामभागाश्रयाभावाद्धिंस्येत ; यदि योनिरप्यधिकच्छन्द-स्कायोर्गीयेत, तदा साम्नोऽल्पत्वादवशिष्टऋग्भागः साम-रहितः स्यात् ; तस्मात् समान-च्छन्दस्कास्वेव गातव्यम्"[१६]-इति (१)। पञ्चमाधिकरणे प्रथम-वर्णकम्— [१७]"छन्दस्यथो-रुत्तरास्थयोर्वा गीतेरिहाहनम्। अविशेषाद् विकल्पः स्यादन्त्यः संज्ञा-बलित्वतः। सामगानाभ्यक्पाठाय द्वौ ग्रन्थौ विद्येते, 'छन्दः' 'उत्तरा' चेति (२)। तत्र, छन्दो नामके ग्रन्थे नानाविधानां साम्नां योनिभूता एवर्चः* पठिताः ; उत्तरा-ग्रन्थे तृचात्मकानि (३) सूक्तानि पठितानि (४) ; एकस्मिंस्तृचे छन्दोगता योन्यृक् प्रथमा, इतरे द्वे उत्तरे।

---

* नानैवर्चः-इति गौ० पु० पाठः।

---

(१)—आधारभूतेषु तिसृष्वृक्षु यद्येका गायत्रीच्छन्दस्का, द्वितीया बृहतीच्छन्दस्का, तृतीया जगतीच्छन्दस्का बृहतीच्छन्दस्कैव वा स्यात्, तर्हि सर्वत्रैकरूप-गाने व्याघातः समुपद्येत, अतः एकच्छन्दस्का एव तिस्रः आधारत्वेन ग्राह्याः-इत्याशयः अधीयन्ते च प्रायस्तथैव उत्तरार्च्चिक-ग्रन्थे समस्तास्तृचाः।

(२)—आरण्यकस्तु छन्दोग्रन्थ-मध्ये एवान्तर्भूतः। योहि माधवः सामवेदस्य विवरण-कारः पूर्वतनः, तस्य नये वैदिक-व्यवहारे च आरण्यकस्तृतीयः। एषां त्रयाणामेव साधा-रणमभिधानमार्च्चिकइति।

(३)—यद्यपि टचमिति रूपं न लौकिकं लोकेषु तृचमित्येव व्यवहर्त्तुं युक्तम्, परं सूक्ते तस्य योगरूढितया तदभिप्रायेण तथाव्यवहारेऽपि न दोषः, संज्ञा-शब्दत्वेन सुप्र-ख्यात्।

(४)—तत्र तृचानि सूक्तानीति प्रायोवादः, क्वचित् क्वचित् सूक्ते द्वे, चतस्रः, पञ्च, षट्, सप्त, अष्टौ, नव दश, एकादश, द्वादश च। तथाहि प्रथम प्रपाठक-द्वितीयार्द्धस्य त्रयोदशादि-सूक्तत्रये द्वे द्वे एव, चतुर्थ-प्रपाठक-द्वितीयार्द्धस्य प्रथमसूक्ते द्वादश च।

एवं स्थिते सति रथन्तरमुत्तरयो र्गायति, यद्योन्यां तदुत्तरयो र्गायतीत्यत्र द्विविधे उत्तरे सम्भाविते, रथन्तरस्य— छन्दोग्रन्थे ऽभित्वाशूरेतीयमृग् योनित्वेन पठिता, तस्याउपरि त्वामिद्धिहवा-मह इत्यादयः बृहदादि-साम्नां योनयः पठिताः [३प्र०१ख०१ऋ०], उत्तरा-ग्रन्थे अभित्वाशूरेति सूक्ते (१) तस्यास्तृचजर्ष्व नत्वावाँ अन्यइत्येषा [१,११,२] साम्नः (२) कस्याप्ययोनिभूता पठिता ; तत्र छन्दोग्रन्थापेक्षया सामान्तरयोर्योनी द्वे रथन्तरस्य स्व-योन्युत्तरे भवतः, उत्तरा-ग्रन्थापेक्षया तृच-गते द्वितीय-तृतीये स्वयोन्युत्तरे भवतः, तत्र विशेष-नियामकाभावात् ययोः कयोश्चि-दुत्तरयोर्गानमिति चेत्— मैवम्, उत्तरेति संज्ञा सहसा बुद्धिस्था भवति प्रतियोगि-निरपेक्षत्वात्, पूर्व-पठितां योनिमृचमपेक्ष्य यदु-त्तरात्वं तद्विलम्बेन प्रतीयमानत्वाद् दुर्बलम्, ईदृशमेवोत्तरात्वं छन्दसि पठितयोः स्व-योन्युत्तर-भाविन्योः सामान्तर-योन्योर्द्वयो-र्ऋचोः, तृच-गतयोस्तु द्वितीय-तृतीययोरुत्तरात्वं संज्ञया वर्त्तते, अतस्तयोरेव गानम् ; एवं सति पूर्वाधिकरणे निर्णीतं समाख्ये व गानमनुगृहीतं भवति ; किञ्च (३) तृचात्मकेषु सूक्तेषु या प्रथमा

(१)—प्रथम-प्रपाठकैकादशतमम् ।

(२)—कस्यापि साम्न-इत्यन्वयः ; न ह्येतस्य गानं गेयग्रन्थे कचिदुपलभ्यते, नास्ति च तस्य छन्दोग्रन्थे पाठः-इत्याशयः ।

(३)—किञ्चेत्यादीतीत्यन्तेन गानग्रन्थयोर्द्वयोस्तदाधारभूतयोश्च द्वयोर्ग्रन्थयोर्नाम-हेतुं निर्दिशति ; तत्रेदमपि वक्तव्यम्— संहिताग्रन्थयोः ऋङ्मयत्वात् छन्दोमयत्वाच्च आर्चिकइति छन्दइति च साधारणं नाम, तथापि एकस्य उत्तरेति-विशेषाख्या अप-रस्य तदभावइति ।

योनिभूता तन्नाम्ना छन्दोग्रन्थस्य 'योनि-ग्रन्थः'-इति अध्यापकानां समाख्या, इतरस्यतु तृच-सङ्घ-रूपस्य ग्रन्थस्योपरितनयोर्ऋचो र्नामधेयेन 'उत्तरा'-इति समाख्या ; स एव ग्रन्थः कर्माङ्गसमर्पकं प्रकरणं, पञ्चदश-सप्तदशादि-स्तोमानां तृचेष्वेवोत्पत्तेः ; तस्मादुत्तरा-ग्रन्थस्थयोस्तृचगतयोर्द्वितीय-तृतीययोरयमूहः"१७-इति ॥ द्वितीयवर्णकम्— १८."त्रैशोकेऽतिजगत्यौ द्वे आनेये गीतयेऽथवा । बृहत्या वादिमः साम्यान्नोत्तरात्वश्रुतेर्बलात् ॥ द्वादशाहे चतुर्थेऽहनि त्रैशोक-नामकं साम [ऊ२प्र२अ१२] विहितम् (१), तच्च विश्वाः पृतना [५प्र० १ ४सू० १ ऋ०] इत्येतस्यामतिजगत्यामुत्पन्नम्, तस्मिंश्च तृचे तस्यायोनेरुत्तरे द्वे बृहत्यौ 'नेमिं न यन्तीत्यादिके [५प्र० १ ४सू० २,३ ऋ०] आम्नाते, तत्र बृहत्यावुपेक्ष्य तयोः स्थाने द्वे उत्पत्तिसिद्धे अतिजगत्यौ आनीय तासु तिसृषु गेयम् ; तथा सति समासु गानं पूर्वत्र निर्णीतमनुगृह्येत, 'अतिजगतीषु स्तुवन्ति'-इति(२) श्रूयमाणम् अतिजगती-बहुत्वम् अन्यथा नोपपद्येतेति चेत्— मैवम्, उत्तरयोर्गायतीत्युक्तास्य संज्ञा-रूपस्योत्तरा-शब्दस्याधीयमानयोर्बृहत्योर्मुख्यत्वात्, श्रुतिश्च बहुत्वलिङ्गात् 'समासु गानम्'-इति न्यायाच्च बलीयसी; यदेतदतिजगतीबहुत्वं तद्बृहत्योः स्तोकारेऽप्युपपद्यते, एकविंश-स्तोमस्यात्र विहि-

(१)—"त्रैशोकं ब्रह्म-साम भवति"-इति ताण्ड्ये द्वादशे दशम खण्डे । 'त्रिशोकेन दृष्टं साम त्रैशोकं, तद्-ब्रह्म-साम ब्रह्मणः स्तोत्रं पृष्ठत्वेन कार्यम्' इति तद्भाष्यम् ।

(२)—ताण्ड्य-द्वादशे दशम-खण्डे । "अतिजगतीषु द्विपञ्चाशदक्षरासु जगतीमतीत्य वर्त्तमानासु ऋक्षु 'विश्वाः पृतना' इत्यादिषु स्तुवन्ति"-इति तद्भाष्यम् ।

तत्वेन तत्-सिद्धये प्रथमायाः अतिजगत्याः समस्तत्वआवर्त्तनीयत्वात्; तस्मात् त्वैशोकं साम बृहत्योरूहनीयम्”[१८]-इति। षष्ठाधिकरणे प्रथम-वर्णकम्— [१९] “रथन्तरे ककुब् ग्राह्या यष्या वाद्योऽर्थवत्वतः। पुनःपदा-प्रसिद्धादेः* रन्त्योर्थोऽन्यत्र वोच्यताम्॥ इदमाम्नायते (१) ‘न वै बृहद्रथन्तरमेकच्छन्दः यत्तयोः पूर्वा बृहती ककुभावुत्तरे’-इति, अयमर्थः— बृहद्रथन्तरं तदेतत् सामद्वयमितर-सामवदेकच्छन्दस्कं न भवति, यस्मात् कारणात् तयोर्बृहद्रथन्तर-साम्नोराश्रय-भूतास्वृत्तु पूर्वा बृहती (२) च्छन्दस्का [३प्र०१२सू०१ऋ०] उत्तरे तु द्वे ऋचौ[३प्र०१२सू० १ऋ०] ककुब् (३) छन्दस्के, इतरेषां वामदेव्यादि-साम्नामाश्रये तृचे अवस्थिताः तिस्र ऋचः एकच्छन्दस्काः उत्तरा-ग्रन्थे आम्नाताः (४) संशर-विलेश-परिहाराय ‘समासु गायेत्’-इति न्यायेन निर्णीताएव (५)

* पुनः पदात् प्रसिद्धादेः-इति गौ० पु० पाठः।

(१)—ताण्ड्यस्य सप्तम-प्रपाठकीय-सप्तम-खण्डे, परं तत्र किञ्चित् पाठ-भेदः।

(२)—षट्त्रिंशदक्षरा, एकाक्षर-न्यूनातिरिक्तौ वैदिक छन्दःसु न दोषमावहति, तथाच ताण्ड्य-पञ्चदश-द्वादशे—“न ह्येकस्मादक्षराद् विराधयन्ति”-इति।

(३)—अष्टादशाक्षरा, आर्षादिभेदात् न्यूनातिरिक्ताक्षरा च।

(४)—प्रथमप्रपाठके द्वादशसूक्तादयः।

(५)—जैमिनीय-नवमाध्याय-द्वितीयपाद-चतुर्थाधिकरणे।

इह तु वाचनिकं (१) विषमच्छन्दस्कासु गानमिति तत्र * रथन्तरस्याश्रयतया त्वचोनोत्तरा-ग्रन्थे समाम्नातः, किन्तर्हि? प्रगाथस्तदाश्रयत्वेनाम्नातः (२) ; स च द्वाभ्यामृग्भ्यां निष्पन्नत्वात् द्व्यृचो भवति, तयोश्च द्वयोर्ऋचोः 'अभित्वाशूरे'त्येषा [१ प्र० १ १ सू० १ ऋ] प्रथमा, सा च बृहती ; 'न त्वा वाꣳअन्योदिव्य'इत्येषा [१ प्र० १ १ सू० २ ऋ०] द्वितीया, सा च पंक्ति(३) च्छन्दस्का ; तथाच सति तां पंक्तिच्छन्दस्कामपनीय तस्याः स्थाने दाशतयी-गते (४) द्वे उत्पत्ति-ककुभौ (५) ऋचौ गृहीतव्ये, कुतः? अर्थवत्वात्,(६) उदाहृतेन 'ककुभावुत्तरे' इति वाक्येन रथन्तर-साम्नः आश्रयत्वेन ककुभोर्विनियुज्यमानयोः ककुबुत्पत्तिरर्थवती भवति, अन्यथा वैयर्थ्यं स्यात्, किञ्च आम्नाताया एकस्याः पंक्तेः स्वीकारे सति ऋचोर्द्वयोरेव लाभात् एकं साम

---

* तत्र-इति सा० रा० पुस्तकयोर्नास्ति ।

---

(१)—'पूर्वा बृहती ककुभावुत्तरे'-इति प्रदर्शित-ताण्ड्यादिश्रुत-वचनेन निष्पन्नमिति यावत् ।

(२)—प्रग्रथनं प्रगाथः, अनुपदमेवैतत्तात्पर्यं स्फुटी भविष्यति"।

(३)—चत्वारिंशदक्षरा, विराडादिभेदात् न्यूनातिरिक्ता च ।

(४)—दशाक्षरचरणका दाशतयी पंक्तिः, तत्र गता कर्त्तव्यत्वेन उपस्थिता, ते। दशतयीति पाठो निरुक्त-सम्मतः, स च तत्र सप्तम-पञ्चमान्त्ये द्रष्टव्यः ।

(५)—अत्र एकां पंक्तिं विभज्य द्वे ककुभौ उत्पाद्ये, अत इमे उत्पत्ति-ककुभावित्युच्यते । एवमग्रेऽपि उत्पत्ति-बृहतीत्यादौ ।

(६)—अन्यथा प्रदर्शिता श्रुतिरनर्थिका स्यात्

तृचे क्रियते स्तोत्रियम्'-इति वचनं विरुध्येत, तस्माद्रथन्तर-साम्नि द्वे ककुभावुत्तरे गृहीतव्ये (१); अयमेव न्यायो बृहत्साम्न्यपि योजनीयः-इति प्राप्ते, ब्रूमः— आम्नातयोर्बृहती-पंक्त्योरेव ककुब् ग्रथनीया, तथाहि- 'अभित्वाशूरे'त्येषा बृहती प्रथमा स्तोत्रिया, तस्यामविकृतायामेव रथन्तरं गातव्यम्, ततस्तस्यामृचि चतुर्थं पादं पुनरुपादायोत्तरस्याः पंक्तेः पूर्वार्द्धेन सह योजनीयम्, सेय मष्टाविंशत्यक्षरा त्रिपदा द्वितीया स्तोत्रिया, सा चैका ककुप् सम्पद्यते; तस्यां ककुभि चरमं पादं पंक्तेरुत्तरार्द्धेन सह प्रग्रथ्य तृतीया स्तोत्रिया कर्त्तव्या, सा च द्वितीया ककुप् सम्पद्यते; प्रग्रथन-प्रकारेण द्वयोर्ऋचोराम्नातयोः तृच-निष्पत्तेर्नास्त्युक्तो-वचन-विरोधः। अस्मिंश्च ग्रथने 'पुनःपदा'-इति श्रौतोक्तिर्लिङ्गम्, तथाच श्रूयते— 'एषा वै प्रतिष्ठिता बृहती या पुनःपदा तद् यत् पदं पुनरारभते तस्माद् वत्सोमातरमभिहिंकरोति' - इति, अयमर्थः— या बृहती पुनःपदा भवति, सैषा प्रतिष्ठिता स्थिरा भवति; पदं चतुर्थः पादः, सोऽप्यृ-गन्तर-सम्पादनाय पुनःपठ्यते, ततः सा बृहती पुनःपदा, सेयमृङ्माता, तस्याः पादोवत्सः; तथासति यस्मादत्र चतुर्थं पादम् उद्गाता पुनरारभते तस्माद्

(१)—एवञ्चैवं भवति—"अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः"-इति प्रथमा ऋक बृहतीछन्दस्का, "नत्वा वाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यं त्वा हवामहे"-इति द्वितीया ऋक् पंक्तिच्छन्दस्का, अनयोरेव ऋचोर्द्विभागः कर्त्तव्यः, तथाच ककुप्-छन्दस्के द्वे ऋचे सम्पद्येते, तत्राद्या द्वितीया, अपरा तृतीया।

वत्सोमातरमभिवोच्य हिमिति शब्दं करोतीति। न केवलं लिङ्ग-मात्रेण प्रग्रथनं, किन्तु छन्दोगानां प्रसिद्धयापि; ते ह्येवं स्मरन्ति 'काकुभः प्रगाथः'-इति। किञ्च प्रगाथ-शब्दार्थ-पर्यालोचनेनापि ग्रथनं गम्यते— प्रकर्षेण ग्रथनं यत्र स प्रगाथः, प्रकर्षो नाम आम्नातादृक्पाठादाधिक्यम्, तच्च पूर्वोक्त-रीत्या पादाभ्यास-पुरःसरमृगन्तर-सम्पादनेनोपजायते। तस्मान्नोत्पत्ति-ककुभौ ग्रहीतव्ये, किन्तर्हि? प्रग्रथनेन द्वे उत्तरे ककुभौ सम्पाद्य तासु तिसृषु रथन्तरं गातव्यम् (१), तथा बृहदपि (२), एवं सति पंक्तिः

---

(१)—तथाच पश्यतु तावत्, ऊह्यगानस्यादिमं साम।

"आभित्वाशूरनोनुमोवा। आ दुग्धाइव धेनव ईशान
मस्य जगतः। सुवा२३र्हशाम्। आयिशा नमा२३यि-
न्द्रा३। सूस्थु२३४षा। औवा२६। हा उवा (इति प्रथमांशः)।
ईशो वा। नामिन्द्र सुस्थुषो न त्वा वा२ अन्योदिवियः।
नपा२३र्थिवाः। नजातोना२३जा३। नायिव्या२३४ता।
औवा२६। हाउवा (इति द्वितीयांशः)। नजोवा। तोनज-
निष्यते अश्वायन्तो मघवन्नि। द्रवा२३जिना। गव्यन्त-
स्त्वा२३हा३। वामा२३४हा। औवा२६। हाउवा।
(इति तृतीयांशः)॥

(२) ऊह्यगानस्य प्रथमप्रपाठके पञ्चमं साम।

पाठः सार्थोभवति; नचैवं ककुबुत्पत्ति-वैयर्थ्यमिति शङ्कनीयम्, वाच-स्तोमे तदुपयोगात्; तस्मान्न कापि प्रग्रथने अनुपपत्तिः" १८-इति॥ द्वितीयं वर्णकम्—"यौधाजये रौरवे च बृहत्योरागमोऽथवा। ग्रथनं पूर्ववत् पक्षौ षष्टि-लिङ्गमिहोच्यते॥ इदमाम्नायते-'रौरव-यौधाजये बार्हते तृचे भवतः' इति (१) अयमर्थः—रौरव-नामकं किञ्चित् साम (२), तथा, यौधाजय-नामकम परम् (३); तयोः साम्नोर्बृहतीच्छन्दस्कस्तृचआश्रयइति; उत्तराग्रन्थे (४) तु तस्य साम-द्वयस्याश्रयएकः प्रगाथः आम्नातः (५), तस्मिंश्च प्रगाथे 'पुनानः सोमेत्यसावृक् प्रथमा, सा च बृहती; 'दुहानऊधर्दिव्यमिति द्वितीया, सा तु विष्टारपंक्तिः; तामेतं विष्टारपंक्तिमपनीय तस्याः स्थाने उत्पत्ति-बृहत्यौ द्वे ऋचौ आनेतव्ये (६) इति पूर्वपक्षः। बृहती-विष्टारपंक्त्योः प्रग्रथन-विशेषेण द्वे बृहत्यावुत्तरे सम्पादनीये इति राद्धान्तः। तत्रोभयत्र युक्तिः पूर्वन्यायेन द्रष्टव्या। लिङ्गंत्वेवमाम्नायते-'षष्टि-

---

(१)—स्पष्टमेतत् ताण्ड्ये सप्तमप्रपाठकीय तृतीयखण्डे, परं शाखाभेदात् पाठ-भेदः।

(२)—ऊहगानस्य प्रथमप्रपाठकीय-द्वितीयं साम।

(३)—ऊहगानस्य प्रथमप्रपाठकीय-तृतीयं साम।

(४)—द्वयोः साम्नएकएवं तृचः आधारः, स्वरस्तोमादि-भेदात् नाम-भेदः, एतद्धि ताण्ड्य-सप्तम-तृतीय-विधानात् प्रमाणम्, ऊह प्रथमे द्वितीय तृतीय-साम-दर्शनाच्च स्फुटम्।

(५)—प्रथम-प्रपाठके अष्टम सूक्तादनन्तरम्।

(६)—एकर्चएव द्व्यृचत्वं न बुद्धौ ग्रहीतव्यइत्यर्थः, तथाच त्र्यृचः सम्पद्येत, साम-स्वरभ्यासोऽपि सुकरः।

त्रिष्टुभोमाध्यन्दिनं सवनम्'-इति, अयमर्थः — रौरव-यौधाजय-नामके सामनी माध्यन्दिने सवने गीयेते, तस्मिंश्च सवने त्रिष्टुप्-छन्दस्काऋचः षष्टिर्भवन्तीति, सेयं षष्टि-संख्या प्रग्रथन-पक्षे उपपद्यते। तथाहि माध्यन्दिने सवने पवमान एकः (१), पृष्ठस्तोत्राणि चत्वारि (२)। पवमाने त्रीणि सूक्तानि (३)-'उच्चातिजातमित्येकं सूक्तम्, तत्र गायत्र्यस्तिस्रऋचः (४); पुनानःसोमेति द्वितीयं सूक्तम्, तच्च प्रगाथरूपम्, तत्र पूर्वा (५) बृहती, उत्तरा (६) विष्टारपंक्तिः; 'प्रतुद्रवपरि-कोशमिति तृतीयं सूक्तम्, तत्र त्रिष्टुभस्तिस्रः (७)। पृष्ठ-स्तोत्रेषु 'अभित्वाशूरेति प्रगाथरूपं प्रथमं सूक्तम् तत्र पूर्वा (८) बृहती, उत्तरा (९) विष्टारपङ्क्तिः; 'कयानश्चित्रइति द्वितीयं, तत्र तिस्रः गायत्र्यः (१०); 'तंवोदस्ममृतीषहमिति तृतीयं प्रगाथरूपं, तत्र बृहती-पंक्त्यौ (११); 'तरोभिर्वो

(१)—स्तोमविशेषः, तत्स्वरूपादिकमनुपदं वक्ष्यति।

(२)—तानि च सूक्तरूपाणि, ताण्ड्य-प्रथम-प्रपाठके दशम-परस्तात् विहितानि।

(३)—उत्तरार्चिक-प्रथम-प्रपाठकस्याष्टम-नवम-दशम-रूपाणि।

(४)—"उच्चातेजा" १, "मनइन्द्रा"२, "एनाविश्वा"३-इति त्रि-प्रतीकाः।

(५)—"पुनानः सोमधारयेत्यादिः।

(६)—"दुहान ऊधर्दिव्यमित्यादिः।

(७) "प्रतुद्रव" १, "स्वायुधःपवते"२, "वृषविप्रः"३।

(८) "अभि त्वा शूर नोनुमः-इत्याद्या।

(९) "न त्वा वां अन्यो दिव्यः"-इत्याद्या।

(१०) "कयानश्चित्रआ"१, "कस्त्वासत्योमदानाम्"२, "अभीषुणः" ३।

(११) "तंवोदस्ममृती"-इति बृहती, "द्युचं सुदा" इति पंक्तिः॥

विद्द्वसुमिति प्रगाथरूयं चतुर्थं, तत्रापि बृहती-पंक्त्यौ (१)। एवमन्यस्मिन् सवने सप्त सूक्तानि (२)। तेषु (३) नव सामानि गेयानि; प्रथमे सूक्ते गायत्रमामहीयवं चेति द्वे सामनी (४), द्वितीये रौरवं यौधाजयं च, तृतीये औशनम्, चतुर्थे रथन्तरम्, पञ्चमे वामदेव्यम्, षष्ठे नौधसम्, सप्तमे कालेयम्(५)। तत्र, प्रथम-सूक्तस्य साम-द्वय-निष्पत्तये द्विरावृत्तावाश्रयभूता ऋचः षड्गायत्रो-भवन्ति, पञ्चम-सूक्त-गता वामदेव्य-सामाश्रय-भूताः तिस्रः ऋचः सप्तदश-स्तोम-सिद्धार्थमावर्त्त्यमानाः सप्तदश गायत्र्यः-इत्येवं मिलित्वा त्रयोविंशतिर्गायत्र्यः, षष्टे सूक्ते बृहती-पङ्क्त्यौ प्रग्रथनेन बार्हतस्तृचो भवति, तथा सप्तमेऽपि, तत्रोभयत्र सप्तदश-स्तोमे सति चतुस्त्रिंशद् बृहत्योभवन्ति;

---

(१)—"तरोभिर्वो"-इति बृहती, "नयं दुभ्रा"-इति पङ्क्तिः।

(२)—यथात्र मध्यन्दिनसवने इमानि सप्त सूक्तानि, तथैव प्रातःसवनादावपि-अन्यान्य-सूक्तानि, ताण्ड्यादि-शासनादवगन्तव्यानि।

(३)—प्रदर्शितेषु सप्तसु सूक्तेषु।

(४)—अस्यैव तृचस्यैतत्साम अस्मिन्नेव तृचे एतत्साम गातव्यमित्यादिकम् स्वरूपत एव ताण्ड्यादौ स्थितम्, तथाहि—"उच्चातेजातमन्धसइत्युदृत्योगायत्रोभवन्ति" (१५.९) इत्यादिकं प्रत्येकस्य विधायकम्।

(५)—आमहीयवादि-कालेयान्तान्यष्टौ सामानि ऊहगानारम्भे एव एकादिक्रमेण श्रुतानि; गायत्रं तु न क्वापि गान-ग्रन्थे सम्प्रति समुपलभ्यते, परम् "उच्चातेजातमन्धसोम"-इत्यादिकं गुरु-मुखादनुश्रुतमस्त्यस्माकम्, ततस्तत् आरण्डादिकमिव गानग्रन्थातिरिक्तमिति ज्ञायते। अपिच ऊहग्रन्थे क्वचिदेकं क्वचिद्द्वे इत्येवं 'उच्चा ते-सूक्त-सूलकानि द्वाविंशति-सामानि दृश्यन्ते, परं तेषु गायत्र-लक्षणाभावः, गायत्रादि-लक्षणन्तु ताण्ड्यब्राह्मणादवगन्तव्यम्। तथाहि, तत्र षष्ठ-तृतीयखण्डे-"अष्टाचरा गायत्री नवमो हिङ्कारः"-इत्येवमादिः।

द्वितीय-सूक्तेऽपि प्रग्रथनेन बार्हतं तृचं सम्पाद्य साम-द्वयार्थं मावृत्तौ षड् बृहत्योभवन्ति; चतुर्थ-सूक्ते रथन्तर-सामार्थं पूर्व-वर्णकोक्त-रीत्या प्रग्रथने सति ककुभावुत्तरे भवतः; प्रथमा तु स्वतःसिद्ध-बृहती, तत्र सप्तदशस्तोमे सति पञ्च बृहत्यो द्वादश ककुभश्च सम्पद्यन्ते; (तस्य च स्तोमस्य विधायकं ब्राह्मणमेवमाम्नायते (१)— 'पञ्चभ्योहिङ्करोति स तिसृभिः स एकया स एकया, पञ्चभ्योहिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्योहिङ्करोति स एकया सतिसृभिः सतिसृभिः इति (२), अयमर्थः— एका स्वतःसिद्धा बृहती, प्रग्रथिते द्वे ककुभावित्येवंविधस्तृचस्त्रिभिः पर्य्यायैरावर्त्तनीयः, प्रथमे पर्याये— त्रिर्बृहती गातव्या, सकृत् सकृत् ककुभौ; द्वितीये पर्याये —सकृद् बृहती, त्रिवारमनन्तरा ककुप् सकृदन्त्या; तृतीये पर्याये —सकृद् बृहती, त्रिस्त्रिः ककुभाविति; हिङ्करोति हिङ्कारोपलक्षितं गानं कुर्य्यादित्यर्थः।) तदेवं तृतीय-सूक्त-व्यतिरिक्तेषु षट्सु सूक्तेषु त्रयोविंशतिर्गायत्र्यः पञ्चचत्वारिंशद् बृहत्यो द्वादश ककुभः सम्पन्नाः; तत्र ककुप् अष्टाविंशत्यक्षरा, तस्यां षोड़शाक्षरे गायत्री-पाद-द्वये योजिते चतुश्चत्वारिंशदक्षरा त्रिष्टुप्

---

(१)—ताण्ड्यब्राह्मणस्य द्वितीय-प्रपाठक-सप्तम-खण्डे।

(२)—सप्तदशस्तोमस्य सप्तविष्टुतयो भवन्ति, द्विधा दशसप्ता, द्विधा मध्यस्थिता, उद्यती, भन्ना, सर्वविलक्षणा चेति; तत्रैषा आद्या, अन्त्योत्तरपर्याये सप्तेति दश च सप्त-चेति अस्यामिति विग्रहौ, दशसप्तेत्यभिधाना। स्पष्टमेतत् समस्तं तत्रैव सप्तसु खण्डेषु॥

(८९)—सर्वमेतत् स्फुटं विधीयते ताण्ड्ये, दृश्यते चोत्तरार्चिके गीयते चोहगाने।

सम्पद्यते ; अनया दिशा द्वादशानां ककुभां त्रिष्टुप्त्व-सम्पादनाय चतुर्विंशतिर्गायत्री-पादायोजनीयाः ; तथासत्यष्टौ गायत्रीगताः, पञ्चदश गायत्र्योऽवशिष्यन्ते ; तासां पञ्चचत्वारिंशत् पादाः, तांश्च तावतीषु बृहतीषु संयोज्य त्रिष्टुभः सम्पादनीयाः, तत एताः पञ्चचत्वारिंशत्, ककुप्सु निष्पन्नाः द्वादश। तृतीये सूक्ते स्वतःसिद्धास्तिस्रः-इत्येवं प्रग्रथन-पक्षे षष्टि-स्त्रिष्टुभउत्तरा-ग्रन्थे समाम्नाताएव लभ्यन्ते। उत्पत्ति-बृहत्यानयने तु प्रकरणाम्ना-तानां तावतीनामलाभात् प्रकृत-हानाप्रकृत-कल्पने प्रसज्येया-ताम्। तस्मात् त्रिष्टुभः षष्टिरित्येतद्बृहती-प्रग्रथनस्य लिङ्गम्। प्रग्रथन-प्रकारस्त्वभिधीयते— 'पुनानःसोमेत्यस्याबृहत्याश्चतुर्थ-पादं पुनरुपादाय हिरण्यस्य 'दुहानऊधर्दिव्यमित्यस्याविष्टारपङ्क्तेः पूर्वार्द्धेन संयोजयेत्, सा बृहती भवति ; एतदीयं चतुर्थं पादं हिरण्य-स्योत्तरार्द्धेनं योजयेत्, सापि बृहती भवति ; तस्माद् यौधाजय-रौरवयोः बृहत्यौ उत्तरे प्रग्रथनीये। एवं नौधस-कालेययोरपि द्रष्टव्यम्"२० इति(१)॥ तृतीयवर्णकम्—२१"श्यावाश्वांधीगवेऽनुष्टुवा नेये ग्रथ्यतेऽथवा। पुरेव लिङ्गं जगती चतुर्विंशति-कीर्त्तनम्। इदमाम्नायते— 'पञ्चछन्दाआवापः आर्भवः पवमानः सप्तसामा, गायत्र-संहिते गायत्रे तृचे भवतः, श्यावाश्वांधीगवे आनुष्टुभे तृचे भवतः, उष्णिहि सफम्; ककुभि पौष्कलम्, कावमन्त्यं जगतीषु'-इति। अयमर्थः— अस्ति तृतीय-सवने पवमानः आर्भव-संज्ञकः, तस्मिन् पञ्च सूक्तानि, सप्त सामानि ; 'स्वादिष्ठया मदिष्ठा'-इत्येकं सूक्तम्

(१) [illegible] (८९)— एतच्चिह्नोपेतैतत्-पर्व-पृष्ठायां समाप्ताङ्किता. सैवात्र विवेच्या।

(उ,१प्र,१५), तस्मिन् गायत्र्यस्तिस्रऋचः(१) तासु 'गायत्रं'(२) 'संहितं' (उ,१प्र,८) चेति द्वे सामनी(३); 'पुरोजिती वो अन्धसः'-इति सूक्तान्तरम् (उ,१प्र,१८), तत्रैकानुष्टुबुत्तरे द्वे गायत्र्यौ (४), तासु 'श्यावाश्वम्'(ऊ,१प्र,११) 'आन्धीगवं' (ऊ,१प्र,११) चेति द्वे सामनी; 'इन्द्रमच्छ सुता'-इत्यपरं सूक्तम् (ऊ,१प्र,१८), तस्मिन्नुष्णिहस्तिस्रः (५) तासु 'सफं' साम; 'पवस्व मधुमत्तम'-इति प्रगाथः (उ,१प्र,१६), तस्मिन् पूर्वा ककुप्, उत्तरा पंक्तिः (६), तत्र 'पौष्कलं' (ऊ,१प्र,९) साम; 'अभिप्रियाणि पवते च नोहित'-इत्यन्त्यं सूक्तम् (उ,१प्र,१९), तत्र तिस्रोजगत्यः (७) तासु 'कावं' (ऊ,१प्र,१३) साम। एतेषां पञ्चानां मध्ये 'पुरोजितोवः'-'पवस्व'-इत्यनयोः सूक्तयोः यद्यपि द्वे द्वे छन्दसी, तथापि समासु गानं निष्पादयितुं प्रग्रथने कृते सति एकमेव छन्दः सम्पद्यते, ततोगायत्र्यानुष्टुबुष्णिक्ककुज्जगतीभिः पञ्चछन्दा आर्भव-पवमानोऽस्मिन् सवने आवपनीयइति; तत्र 'पुरोजितीवः'-इत्यस्मिन् सूक्ते श्यावाश्वमान्धीगवं च समस्तु गातुमुत्तरे गायत्र्यावाम्नाते परित्यज्य द्वे उत्पत्त्यनुष्टुभा नेतव्ये—इति पूर्वं पक्षः। चतुर्थं पादं पुनरुपादाय द्वे अनुष्टुभौ प्रग्रथनीये—इति राद्धान्तः। तत्रोभयत्र पूर्व-वर्णक-द्वय-न्यायेन युक्तिर्द्रष्टव्या। लिङ्गं त्वेवमाम्ना-

(१)—"स्वादिष्ठया" १, "रक्षोहा" २, "वरिवोधातमो" ३।

(२)—ताण्ड्य-ब्राह्मणस्याष्टम-प्रपाठके चतुर्थखण्डे विहितं साधारकं साडम्बरम्।

(३)—अत्र प्रमाणम् ताण्ड्य-पञ्चदशस्यैकादशतमम्, एवं पुरोजितीत्यादौ श्यावाश्वादेश।

(४)—"पुरोजिती" १, "योधारया" २, "तन्दुराध" ३।

(५)—"इन्द्रमच्छ" १, "[illegible] भरा" २ "अस्य दिन्द्रो" ३।

(६)—"पवस्व" १, "यस्य ते" २, "ससुप्रकेतो" ३।

(७)—"अभिप्रियाणि" १, "आछयस्य" २, "ऋतस्य" ३।

यते—'चतुर्विंशतिर्जगत्यस्तृतीयसवनएका च ककुबिति' सेयं सङ्ख्या प्रग्रथन-पक्षे उपपद्यते। तथाहि—गायत्र-संहितयोः साम्नो राश्रये गायत्रे तृचे द्विरभ्यस्ते सति षट् गायत्र्यः भवन्ति, चतुर्विंशत्यक्षरा गायत्री, अष्टाचत्वारिंशदक्षरा जगती (१), ततः षड्भिः गायत्रीभिः तिस्रोजगत्यः भवन्ति, श्यावाश्वान्धीगवयो राश्रयभूताः प्रग्रथिता, द्विरभ्यस्ताः षडनुष्टुभोभवन्ति, ताभिश्च-तस्रोजगत्योभवन्ति, मिलित्वा सप्त जगत्यः सम्पन्नाः। सफस्य पौष्कलस्य च सामान्तरवत्तृचे गानं न कर्त्तव्यम्, किन्त्वेकैकस्या मृचि। तत् कुतोऽवगम्यते? उष्णिहि ककुभीति सप्तम्येकवचनान्ताभ्यां विशेष-विधानात् (२)। अष्टाविंशत्यक्षरयोरुष्णिक्-ककुभोरेका जगती गायत्री-पादश्च सम्पद्यते, ककुभि मध्यमः पादो द्वादशाक्षरः, उष्णिहि च परः पादः—इति तयोर्भेदः। कावस्याश्रयभूताः स्वतःसिद्धा तिस्रोजगत्यः—इति मिलित्वा पवमानेऽस्मिन्नेकादश जगत्योभवन्ति, गायत्री-पादश्चातिरिच्यते। आर्भवपवमानवत्तृतीयसवने यज्ञायज्ञीय-स्तोत्रमेकमस्ति (३), तस्य चाश्रयः 'यज्ञायज्ञावोअग्नये'-इत्यसौ प्रगाथः (उ,१प्र,२०), तत्र पूर्वा बृहती उत्तरा विष्टारपंक्तिः, तयोः प्रग्रथनेन ककुभावुत्तरे

(१)—इह मानं ताण्ड्य-षोडशस्यैकादशे— "जगत्योयद्द्वादशाक्षराणि पदानि"—इत्यादि; एवं सर्वत्र छन्दःसु।

(२)—ताण्ड्येऽष्टम-प्रपाठके 'उष्णिक्-ककुभावेतौ भवतः'—इत्यादि-पञ्चखण्डे तत् स्पष्टम्।

(३)—ताण्ड्य-सप्तमस्य सप्तमखण्डारम्भे एवास्ति लिखितम्।

कर्त्तव्ये (१)। तत्रैकविंशस्तोमः तस्य विधायिका विष्टुतिरेवमाम्नायते— 'सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स एकया, सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः'-इति (२)। अयमर्थः— प्रथमायाः बृहत्यास्त्रिषु पर्यायेषु त्रिवारमेकवारं पुनस्त्रिवारमिति सप्त बृहत्यः, मध्यमायाः ककुभः प्रथमद्वितीययोः पर्याययोस्त्रिस्त्रिः पाठः, अन्त्ये सकृत्, उत्तमायाः ककुभः आदौ सकृत्, द्वितीय-तृतीययोस्त्रिस्त्रिः, एवं चतुर्द्दश ककुभः। तासु ककुप्सु द्वादशाक्षराः मध्यम-पादाश्चतुर्द्दश, तेषु सप्त पादाः सप्तसु बृहतीषु योजनीयाः, ततः सप्त जगत्योभवन्ति, अवशिष्टाः अष्टाक्षराः ककुभामाद्यपादाअन्त्यपादाश्च, मिलित्वाष्टाविंशतिः, तेषु षड्भिः पादैः एका जगतीत्यनेन क्रमेण चतुर्विंशतिपादैश्चतस्रो जगत्योभवन्ति; ये तु द्वादशाक्षराः सप्तपादाः पूर्वमवशिष्टाः तेषु पवमान-शेषोऽष्टाक्षरः पादोयोजनीयः, ककुभांशेष्वष्टाक्षरेषु चतुर्षु पादेषु चत्वार्य्यक्षराणि योजनीयानि, ते द्वे जगत्यौ भवतः; तदेवं यज्ञायज्ञीय-स्तोत्रे त्रयोदश जगत्यः पूर्वोक्ताः पवमान-गता एकादशेति चतुर्विंशतिर्जगत्यः, चतुरक्षर-वर्जिता श्चत्वारोष्टाक्षर-पादाः मिलित्वा ककुबेका भवति। अनेन लिङ्गेन श्यावाश्वमान्धीगवं च प्रग्रथित-तृचे गातव्यम्, न तु तत्रो-

(१)—एवमेव छन्दसैतद् गीतं दृश्यते ऊह-प्रथमस्य चतुर्दशं साम।

(२)—एकविंशस्तोमस्य सैरसप्तिनी, उद्यती, प्रतिष्टुतिः, स्पर्य्यांचेति चतस्रोविष्टुतयः सन्ति, तत्राद्यायाः विधायकं वचनमिदम्। सर्वमेतत् ताण्ड्यस्य द्वितीय-प्रपाठकीय-चतुर्दश-खण्डादि-खण्ड-चतुष्टये स्फुटम्।

त्यत्यनुष्टुबानयनमिति स्थितम् इति"२१ (१)॥ चतुर्थवर्णकम्—
२२"चतुःशते प्रग्रथनमृचः पादस्य वाग्निमः। तृचे मुख्यत्वतो
नैवमृगन्यत्वस्य वर्णनात्॥ गवामयने 'ब्रह्म' साम विहितम्—
'अभिवर्त्तोब्रह्मसाम भवति'-इति(२), तत्प्रकृत्य श्रूयते(३) 'चतुः-
शतमैन्द्राबार्हताः प्रगाथाः'-इति (४), चतुरुत्तर-शत-सङ्ख्याकाः
इन्द्र-देवताकाः बृहतीच्छन्दस्काः ऋग्द्वयात्मकाः, तेष्वेक-प्रगाथ-
गते द्वे ऋचौ द्वितीय-प्रगाथ-गतामेकामृचं च प्रग्रथ्य तृचे 'अभि-
वर्त्त'-नामकं साम गातव्यम्, तथा सत्याम्नातानामविकृतानामेव
तिसृणामृचां लाभात् तृचस्य मुख्यत्वं भवति, पूर्वोक्त-रीत्या पाद-
प्रग्रथने तु विकृतत्वादमुख्यस्तृचः स्यात् इति प्राप्ते, ब्रूमः—
अन्याः * अन्याः ऋचोभवन्ति तदेव सामेत्यृचामन्यत्वमत्र

* 'अन्याः'-इत्येकएव गो० पुस्तके।

(१)—स्फुटमेतत् ताण्ड्याष्टम-पञ्चमे "पुरोजिती वो अन्धस इति पञ्चे त्याद्युपक्रमके, 'तामु ग्रावाणमित्यादौ, 'अथैतदाम्भौगवमित्यादौ च।

(२)—प्रायणीयेऽहनि माध्यन्दिन-सवने ब्राह्मणाच्छंसिनः पृष्ठ स्तोत्र निवर्त्तकमेतत् 'तंवोदस्ममृतीषहमिति योनौ'-ताण्ड्य-चतुर्थस्य तृतीये विहितम्, तच्च ऊहगानस्य षष्ठ-प्रपाठक-द्वितीयार्द्धीयं चतुर्दशतमं साम।

(३)—तत्रैव चतुर्थखण्डे तद्भाष्ये च तदेतत् स्फुटं व्याख्यातम्।

(४)—एषपाठस्तु लाट्यायन सूत्रस्य दशम प्रपाठक-तृतीय खण्डे दृश्यते, ताण्ड्य-पाठस्तु "पञ्चसु मासु बार्हतीः प्रगाथा शस्यन्ते"-इति, तद्भाष्ये तु चतुःशतत्वाद्युक्तमुद्दतर्केति लक्ष्यते।

वर्ण्यते (१) तच्च पाद-प्रग्रथने सम्भवति, ऋक्-प्रग्रथने तु येयमृक् पूर्वस्य तृचस्यान्त्या सैवोत्तरस्य तृचस्याद्येत्यन्यत्वमृचः न स्यात्; तस्मात् पादस्य प्रग्रथनम्-इति"[११] ॥

तत्रैव नवम-दशमयोरधिकरणयोः अपर-विशेषौ चिन्तितौ। नवमाधिकरणम्— [१२]"आइ*-भावोयोनि-वशादुत्तरा-वशतोऽथवा। गीत्यर्थत्वादादिमोऽन्त्योवर्णाभिव्यञ्जकत्वतः॥ 'यद्-योन्यां तदुत्तरयोर्गायति'-इति श्रूयते, तत्र 'कयानश्चित्र आभुवत्'-इत्यसावृग्योनिः (२), तस्यामृचि 'कया'-इत्यक्षरद्वयमाद्यो भागः, 'नश्चित्र आभुवदित्यक्षरषट्कं द्वितीयोभागः, तस्मिन् भागे द्वितीयाक्षरे चकारस्योपरितनमिकारं विलोप्य तस्य स्थाने आई-भावमाम्नाय गीतिर्निष्पादिता; 'कस्त्वासत्योमदाना मित्यनन्तर्भा-

---

*अधिकरणमाला-पुस्तके प्रायः सर्वत्र 'आयी'-इत्येवं यकार-मध्यपाठः।

मूले गानग्रन्थे क्वचित् तथा पाठदर्शनं तद्बीजम्; परं "आकारः पूर्वभागः ईकार-उत्तरभागः"-इत्यादि-विरोधादुपेक्ष्यः सइति मन्यते; गानग्रन्थेषु बहुषु 'आई'-इत्येव-मोकारान्तः पाठः परिलक्ष्यते, अध्ययन-सम्प्रदायाच्च तथैव, यत्र क्वचिद् गाने यकार-मध्योऽस्ति लिखितः, तच्छ्रुतलिखनानुयायि-गड्डलिका-प्रवाह-मूलकमिति सम्भाव्यते।

---

(१)—तथाहि, ताण्ड्य-चतुर्थ-तृतीये—"समानं साम भवत्यन्योन्यः प्रगाथः"-इति, उक्तो ब्रचःसु समानमेकमेवाभीवर्त्ताख्यं ब्रह्म-साम भवति, प्रगाथः प्रग्रथनीयस्तदाश्रय-स्तृचस्त्वन्योन्यः प्रत्यहं विलक्षणो भवति"-इति च तद्-भाष्यम्।

(२)—छन्दोग्रन्थस्य द्वितीय-प्रपाठक-षष्ठ-खण्डे पञ्चमी। इयमेव पुनः उत्तरा-ग्रन्थस्य प्रथम-प्रपाठक-द्वादश-सूक्ते प्रथमा।

विन्युत्तरा (१), तस्यां योनि-न्यायेन चतुर्थाक्षरे तकारस्यो-परितनं यकारमोकारं च लोपयित्वा तयोः स्थाने आई-भावः कार्यः; 'अभीषुणः' असावपरोत्तरा (२), तस्यामपि चतुर्थाक्षरे णकारस्योपरितनं सकारं लोपयित्वा तस्य स्थाने आइ-भावः कर्त्तव्यः (३); अन्यथा गीति-नाश-प्रसङ्गात्—इति प्राप्ते, ब्रूमः—नात्र योनौ वर्णान्तरस्यागमः, किन्तर्हि? विद्यमान एव चकारस्योपरितनः इकारः साम-प्रसिद्धया प्रक्रियया वृद्धः सन्नैकारो भवति, तस्य सन्ध्यक्षरत्वात्, 'आकारः पूर्वोभागः, ईकारः उत्तरभागः' (४), तावुभौ विश्लेषेण गीयमानौ आई-भावं प्रतिपद्येते; तथाच सामगा आहुः 'वृद्धं तालव्यमाई भवति'-इति (५) तथा सत्युत्तरयोश्चतुर्थाक्षरे नास्ति तालव्य

(१)—उत्तरा-ग्रन्थस्य १प्र० ११स्रू० २ ऋक् ।

(२)—उत्तरा-ग्रन्थस्य १प्र० ११सू० ३ ऋक् ।

(३) तथाच—"का५या । नश्चा३इत्रा ३ आभुवात्"—इत्यादि प्रथमायारूपम्, एतन्मात्रमिष्टमेव । "का५स्त्वा । सत्या३इमा३द्वानाम्"-इत्यादि द्वितीयाया रूपम्,—"आ५भी षुणा३इसा३खीनाम्" इत्यादि तृतीयाया रूपं च निपन्नम् भवेत्, परं तन्नैवेष्टम्, ऊह-प्रथमस्य पञ्चम-साम-विरोधात् ।

(४)—स्पष्टमेतत् व्याकरणस्य पातञ्जल-व्याख्याने महाभाष्ये ।

(५)—पुष्पसूत्रादौ । यदेदं तत्त्वम्-पूर्वापरयोर्द्वयोरेव पद्ययोः प्रथमायाः स्वरूपे सत्यप्यविरोधे लोप इहयोः प्रकरण-गत विरोधः ।

इकारः इत्याईभावः न कर्त्तव्यः (१) 'अभीषुणः सखीना मविता जरितॄणाम्'-इत्येतस्यामुत्तरायां द्वादशाक्षर-गतस्य रेफ-स्योपरितनः इकारः पूर्ववदाई-भवति (२) तथा सोऽयमाई-भावः उक्त-रीत्या वर्णाभिव्यञ्जकत्वादुत्तरा-गत-वर्ण-वशेन कर्त्तव्यः, गीत्य-र्थत्वाभावेन योनि-क्रमे तेन विनापि गीतिर्विनश्यति-इति"[२३] ॥ दशमाधिकरणम्—[२४]"स्तोभानीतप्रदिश्यन्ते नागीतित्वेन वर्ण-वत् । स्वरादिवत् प्रदिश्यन्ते गीति-कालोपयोगतः वामदेव्य-साम्नः योनौ द्वयोरर्ड्ढयोर्मध्ये औकार-द्वयेन हो-शब्देन हायि-शब्देन च निष्पन्नः स्तोभः एवमाम्नातः 'औऽ२हो हायि' *(३)

* अधिकरणलायाम् 'औहोहायि'-इति पाठः ।

परं तन्न सम्यक्, औकारद्वयेनेति पूर्वोक्तेः ; गान-ग्रन्थेषु च एक औकारः प्रथम-स्वरकः, अपरो द्वितीय-स्वरकः स्पष्टम् ।

(१) एवञ्च— "का॒ऽ५पृत्वा । सत्यो३मा३दानाम्"——

[accent marks: ३ र ४ २ ४ ५]

इत्यादिकमूह-प्रथमे चतुर्थानन्तरं श्रुतमविरुद्धम् ।

(२) "आऽ५भी । सुणा३ःसा३खीनाम् । आ । विता-जरायि तॄ । णाम्" इत्यादिकं रूपं, गीयते चैवमेवोह-गायकैः सामगैः (१,५) ।

[accent marks: ३ र ४ २ ४ ५ १ २र १ २र १]

(३) तथाहि गेय-गानस्य पञ्चम-प्रपाठकस्य पञ्चत्रिंशत्तितमं साम वामदेव्यम्, "कया नश्चित्र आभुवदुती सदावृधः सखा । कया शचिष्ठया वृता"-इति तस्य योनिभूता ऋक्, अस्याः पूर्वार्द्धं कयेत्यादि, परार्द्धं कयाशचिष्ठयेत्यादि, अनयोरन्तरे स्तोभोऽयं श्रूयते ; स च वामदेव्य-गान-श्रवणेनोपलभ्यः, गेय-पञ्चमं च द्रष्टव्यः ।

इति; सोऽयं स्तोभः नोत्तरयोः (१) अतिदिश्यते, कुतः? अगीतित्वात्; 'यद्योन्यां तदुत्तरयोर्गायति'-इति गीति-मात्रमतिदिश्यते; तत्र प्रथमायाऋचः वर्णाः यथा नातिदिश्यन्ते तथा स्तोभाअपि-इति प्राप्ते, ब्रूमः— स्वरोवर्ण-विश्लेषोविरामः इत्येते गीत्युपयोगित्वात् यथातिदिश्यन्ते तथा स्तोभाअपि गीति-काल-परिच्छेदकत्वादतिदिश्यन्ते"[२४]-इति (२) ॥

अष्टमाधिकरण-द्वितीय-वर्णके क्वचिदुत्पन्ना गानाभाव-शङ्का निवारिता — [२५]"गानस्य नियमोनोत विद्यते वक्ष्यपस्थितौ। नाम्नानद्दयतोस्त्येव प्रकृतत्वाच्छ्रुतेरपि॥ क्वचित् कर्मविशेषे श्रूयते 'अयं सहस्रमानवइत्येतया हवनीयमुपतिष्ठते'-इति (३) अस्मादृग् संहिता-ग्रन्थे (४) समाम्नाता, प्रगीता गानग्रन्थे (५), ततो वक्ष्यपस्थाने तस्यामृचि गानं न नियतं किन्तु विकल्पितम्-इति प्राप्ते, ब्रूमः— अस्त्येव नियमो गाने, कुतः? सामवेदे गानस्यैव प्रकृतत्वात्, ऋचां संहिता-पाठोऽत्र गानायैव नह्याधारमन्तरेण गातुं शक्यते। अथोच्येत— 'अयंमहस्रेत्यक्-प्रतीक-पूर्वकेण वाक्येनोप-

(१) कस्त्वं त्वभोपुणःमखीत्यनयोर्ऋचोः।

(२) तथाच —"कस्त्वामत्योमदानां मंहिष्ठोमत्सदन्धमः' इत्यर्द्धर्चं मूलकस्य, "अभी षुणः सखिनामविता जरितृणाम्"—इत्यर्द्धर्चं मूलकस्य च गानस्योपरिष्टात् "दृढा-चिदा रुजे वसु"-इत्यर्द्धर्चं-मूलकस्य "शतम्भवास्यूतये"-इत्यर्द्धर्चं मूलकस्य च गानस्य पुरस्तात् "औऽहो हाइ"-इत्येवं श्रूयतएव ऊहगान-प्रथमस्य पञ्चमे सामनि॥

(३)—तथाह्यपाठस्त्वेवम्—'अयं सहस्रमानवइत्यतिच्छन्दसा हवनीयमुपतिष्ठन्ते'-इति, 'अयं सहस्रमानवइति अतिच्छन्दसा अतिच्छन्दसि ऋचि गीतेन गौरीतिनिधन-वता उद्गातारः वय आहवनीय उपतिष्ठन्ते'-इति तद्भाष्यम् (४प्र,६ख)।

(४)—छन्दोनामके पञ्चम-द्वितीय-तृतीये-प्रथमानन्तरम्।

(५)—गेयनामके द्वादश-प्रथम मप्तविंशत्यनन्तरम्।

स्थान-विधानाद् वाक्यस्य प्रकरणात् प्रबलत्वाद्दचैवोपस्थानम्-इति, तन्न, प्रकृत-प्रगीत-मन्त्र-वाचिन्या एतयेति सर्वनाम-श्रुतेः प्रबलतरत्वात्। तस्मात् प्रगीतयोरुपस्थानम्"[२५]-इति (१) ॥

पञ्चदशाधिकरणादिषु त्रिषु धर्म-साङ्कर्यं चिन्तितम्। पञ्चदशाधिकरम्— [२६]"बृहद्रथन्तरैर्धर्मैः सङ्कीर्णो वा व्यवस्थिति। पृष्ठैक्यात् सङ्करो धर्मे निर्देशादेर्व्यवस्थितिः। ज्योतिष्टोमे विकल्पनं पृष्ठस्तोत्रे * विहितम् 'बृहत् पृष्ठं भवति, रथन्तरं पृष्ठं भवति' इति। तत्रोभयत्र धर्माः श्रुताः— 'बृहति प्रस्तूयमाने मनसा समुद्रं ध्यायेत् (२), रथन्तरे प्रस्तूयमाने सम्मीलयेत्'-इत्यादयः (३), ते उभयत्र सङ्कीर्येरन्, पृष्ठ-सिद्धि-लक्षणस्य (४) कार्यस्यैकत्वात्— इति चेत्— न, निर्देश-भेदात्, साङ्कर्ये त्ववैलक्षण्येन बृहदिति रथन्तरमिति च द्वौ निर्देशौ नोपपद्येयाताम्; किञ्चोभय-धर्म-साहित्यं विरुद्धम्—उच्चैर्गेयं बलवद्गेयमिति बृहद्धर्मः (५) —नोच्चैर्गेयं न बलवद्गेयमिति रथ-

* 'विकल्पितं पृष्ठस्तोत्रम्'-इति गौ० सा० पुस्तकयोः पाठः।

(१) सुस्पष्टञ्चैतदाह सूत्रकारः—'अयं महोहाउ'-इति विरुद्धाता गाथेम्निधनमितरावनूपेयातामिति। अत्र 'अयं महोहाउ-इति गेयगानस्य द्वादश-प्रपाठकीयाष्टाविंशतितम साम्नः प्रतीकम्।

(२)—तथाच, ताण्ड्य-सप्तम-सप्तमे—"यद्रथन्तरं प्रस्तौति समुद्रमन्तर्ध्यायोद्गायेद्" -इत्यादि।

(३)—तत्रैव रथन्तरधर्मादि व्यवस्थानन्तरम् "रथन्तरमुद्गातुश्चक्षुः प्रमथितोः प्रस्तूयमाने सम्मीलेत्"-इत्यादि च।

(४)—औदुम्बरी-स्पर्शन-रूपस्य।

(५)—"बलवद्गेयं वज्रमेव प्रहृत्य प्रत्युद्गटकाति"-इत्यादि (ता० ७,७)।

न्तर-धर्मः (१); तस्मादुभयोर्धर्मा-व्यवतिष्ठन्ते"[२६] इति ॥ षोड़शाधिकरणम्— [२७]"तयोर्धर्माः समुच्चेया न वा कण्वरथन्तरे। द्वि-स्थानत्वाद् भाष्यश्राद्योविरोधाद् वार्त्तिकेऽन्तिमः। वैश्य-स्तोमे 'कण्वरथन्तरं पृष्ठं भवति'-इति (२) श्रूयते, तत्र कण्वरथन्तराख्य-साम्नः (३) पृष्ठ-स्तोत्र-साधनयोः प्राकृतयोः वृहद्रथन्तरयोरुभयोः स्थाने पतितत्वादुभय-संबन्धि-धर्माः समुच्चेतव्याः ; ये तु विरुद्धाः धर्माः उच्चैर्गेयं नोच्चैर्गेयमित्यादयः ते विकल्प्यन्ताम् ; समुद्र-ध्यान-निमीलनादीनां विरोधाभावात्, प्रकृताविव निर्देश-भेदस्याप्यभावाच्च समुच्चयः इति भाष्यकारस्य (४) मतम् ; विकल्पितयोरिव द्वयोः स्थाने पतितत्वाद् विरुद्ध धर्म-स्वारस्याच्च विकल्पएव युक्तो न तु समुच्चयः इति वार्त्तिक-कारस्य (५) मतम् ; तत्रोभयत्र तत्तन्मत-विपरीतः पूर्वपक्षः उन्नेयः"[२७] ॥ सप्तदशाधिकरणम्—[२८] "द्वि-सामके द्वयोर्धर्मसाङ्कर्यं वा व्यवस्थितिः। पृष्ठैक्यात् सङ्करोमैवं धर्माणां सामगत्वतः। 'गोसव उभे कुर्यात्'-इत्यादिना गोसवादौ वृहद्रथन्तर-साम-द्वय-साध्यं पृष्ठस्तोत्रं विहितम्। तत्र पृष्ठस्तोत्रस्यैकत्वेन धर्म-व्यवस्थायाः (६) असम्भवात् वृहत्युभयधर्माः कर्त्तव्याः, रथन्तरेऽप्युभय-

(१)—"क्षिप्रं गेयं स्वर्गस्य लोकस्य समष्ट्यै"-इत्यादि (ता ७,७,)।

(२)—ताण्ड्याष्टादश-प्रपाठकीय-चतुर्थ-खण्डे।

(३)—ऊहगानस्य चतुर्थ-प्रथम-तृतीयानन्तर-श्रुतस्य।

(४)—(जैमिनि-सूत्रस्य विशेषेण व्याख्यातुः) शबर-स्वामिनः।

(५)—(जैमिनि-सूत्र-न्यूनता-पूरयितुः) भट्टकुमारिलस्य।

(६)—उच्चैस्त्व-नीचैस्त्वादेः।

धर्माः, इत्येवं साङ्कर्यमिति चेत्— मैवम्, नह्येते पृष्ठ-स्तोत्र-प्रयुक्ताः धर्माः किन्तु साम-प्रयुक्ताः, ततः साम्नोर्भेदात् धर्माः व्यवतिष्ठन्ते"-इति व्यवस्थित-धर्मोपेताभ्यां बृहद्रथन्तर-नामकाभ्यां सामभ्यां (१) निष्पन्न-स्तोत्रस्य पृष्ठमिति वैदिकं नामधेयम्; यथा त्रिवृच्छब्दस्यार्थौ वेद-प्रसिद्धो गृहीतः तद्वत्"[२८]॥ स च त्रिवृच्छब्दः प्रथमाध्यायस्य तृतीयपादे पञ्चमाधिकरणस्यान्तिमे वर्णके विचारितः—[२९]"लौकिकोवाक्यगोवार्थस्त्रिवृदादेः समत्वतः। उभौ विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः॥ "त्रिवृद्बहिष्पवमानम्" (२)-इति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोकसिद्धोऽर्थः वाक्यशेषादृक्-त्रयात्मकेषु सूक्तेष्ववस्थितानां बहिष्पवमानात्मक-स्तोत्र-निष्पादन-चमाणाम् 'उपास्मै गायतानरः' (उ १प्र० १२,३सू०)-इत्यादीनामृचां नवकमर्थः (३); तत्र धर्म-निर्णये वेदस्य प्रबलत्वेपि पद-पदार्थ निर्णये लोक-वेदयोः समान-बलवत्त्वात् उभावर्थौ विकल्पेन गृहीतव्यौ, इतिचेत्— मैवम्, लौकिकार्थ-स्वीकार-पक्षे विधि-वाक्ये त्रैगुण्यमर्थः, अर्थवाद-वाक्ये स्तोत्रियाणामृचां नवकम्, इत्येवं विध्यर्थवादयोर्वैयधिकरण्यादेकवाक्यत्वं न स्यात्; अतः एकवाक्यत्वाय स्तोत्रियाणां नवकमेव विधिवाक्ये नियतोऽर्थः"[२९]॥ पृष्ठ-शब्दस्य नामधेयत्वं प्रथमाध्याये चतुर्थ-पादस्य तृतीयाधिकरणे-चित्रा शब्दवन्निर्णी-

---

(१)—ते च सामनी ऊह्य गानस्य चुद्र-पर्व-गत-पञ्चदश-षोडशात्मके, तत्र चाद्यं "रथन्तरमुत्तरं" अपरं 'बृहद्रथन्तरम्'।

(२)—ताण्ड्य-द्वितीय-प्रपाठकस्य चतुर्दश-खण्डे।

(३)—वाक्यशेषश्चायं 'नवैता एकविंशस्योत्तमा भवन्ति'-इति (ता-२,१५)।

तम्—[१०]"यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत्। चित्र-स्त्रीत्व-गुणौ रूढेरग्नीषोमीयके पशौ। द्वयोर्विधौ वाक्य-भेदो वैशिष्ट्ये गौरवं ततः। स्यान्नाम पृष्टाज्य-बर्हिष्यवमानेषु तत् तथा। 'चित्रया यजेत पशुकाम इत्याम्नायते, तत्र चित्राशब्दोनोद्भिच्छब्दवद्यौगिकः (१) किन्तु रूढ्या चित्रत्वं स्त्रीत्वं चाभिधत्ते, ततो न पूर्वन्यायेन नामत्वम्, तथा सति अग्नीषोमीयं पशुमालभेतेति-विहित-पशु-यागमत्र यजेतेत्यनेन पदेनानूद्य तस्मिन् पशौ चित्रत्व-स्त्रीत्व-गुणौ विधीयेते, इति प्राप्ते, ब्रूमः— चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ, तयोर्विधाने वाक्यं भिद्येत, तथाचोक्तम्—'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयेरन् * बहवोऽप्येक-यत्नतः'-इति। अथ वाक्य-भेद-परिहाराय गुण-द्वय-विशिष्टं पशु-द्रव्य-रूपं कारकं विधीयेत, तदा गौरवं स्यात्; तस्माच्चित्रा-शब्दः पूर्ववत् यजि-सामानाधिकरण्येन याग-नामधेयं भवति, चित्रत्वं च तस्य विलक्षण-द्रव्य-द्वारेणोपपद्यते—'दधि मधु घृतमापोधाना

* 'विधीयन्ते' इति गौ॰ मा॰ पुस्तकयोः पाठः।

(१)—उद्भिच्छब्दस्य यौगिकत्वं नैव मत्वर्थ-लक्षणा-भयाद् याग-नामधेयत्वम्, तथाहि—"उद्भिदा यजेत पशुकामः"-इति वाक्येन फलं प्रति विधानं तं प्रति च गुण विधानं न युज्यते, वाक्यभेदापत्तेः; तत उद्भिदित्यस्य उद्भिद्वतेत्यर्थः कल्पनीयः गत्यन्तर-सत्वे स चासहनीयः, तस्मात् उद्भिन्नामकेन यागेन पशुं भावयेत् इत्येव, तस्यार्थः साधुरित्ययं विचारो जैमिनि-ग्रन्थस्य न्यायमालायाञ्च प्रथमाध्याय-चतुर्थ-पादे लौगाक्षि-प्रभृति-मीमांसा प्रबन्धेषु स्फुटः।

स्तण्डुलास्तत्संसृष्टं प्राजापत्यम्’-इति दध्यादीनि विचित्राणि प्रदेय-द्रव्याणि षडाम्नातानि’ (१) तदेत चित्रा नामकस्य यागस्योत्पत्ति-वाक्यम्, याग-स्वरूप-भूतयोः दध्यादि-द्रव्य-प्रजापति-देवतयोः अत्रोपदिश्यमानत्वात्; उत्पन्नस्य तस्य यागस्य ‘चित्रया यजेत पशुकामः’-इत्येतत् फलवाक्यम्। एवं सति प्रकृतार्थोलभ्येत, अग्नीषोमीय-पश्वनुवादेन गुणविधाने प्रकृत-हानाप्रकृत-प्रक्रिये प्रसज्येयाताम्, लिङ्-प्रत्ययस्य चानुवादकत्वाङ्गीकारात्सुख्योवि-ध्यर्थोबाध्येत। तस्माच्चित्रा-पदं नामधेयम् (२) ॥ यथा चित्रा-शब्दे नामधेयत्वं तथा बहिष्पवमान-शब्दे आज्य-शब्दे पृष्ठ-शब्दे च तत्-कर्म-नामधेयत्वं योजनीयम्— एवं हि श्रूयते (३) ‘त्रिवृद्-बहिष्पवमानम्, पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि; इति। अस्य वाक्य-त्रयस्यार्थोविवियते—सामगानामुत्तरा-ग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि, तत्र ‘उपास्मै गायता नरः’-इत्याद्यं सूक्तम्, ‘दविद्युतत्या ऋचा’-इति द्वितीयम्, ‘पवमानस्यते कव’-इति तृतीयम्, ज्योतिष्टोमस्य प्रातःसवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम् (४) तदिदं सूक्त-त्रय-गान-साध्यं स्तोत्रं बहिष्पव

(१)—ताण्ड्य, षड्विंशे च ब्राह्मणे— लाट्यायने च कल्पसूत्रे।

(२)—चित्रा-शब्दस्य श्रुति-लिङ्गादनेक-द्रव्य-परकत्वेन-उद्भिदेति वाक्य-साम्यम्, यागस्य.फलसम्बन्धे गुणसम्बन्धे च वाक्यं भिद्येत, तद्-भयान्नामधेयता चेति सारम्।

(३)—ताण्ड्य-विंशतितमे।

(४)—तथाहि—ताण्ड्य-षष्ठस्य नवम-दशम-खण्डयोः “उपास्मै गायतानर इति”-इत्यादिना चक्स्वरूपं प्रदर्श्य, सप्तम-प्रथमे “इमे वै लोका गायत्रं त्राष्टद् गेयम्”-इत्यादिना तत्र सामादिकं व्यवस्थापितम्।

मानमित्युच्यते (१) तत्रावस्थितानामृचां पवमानार्थत्वाद्बहिः-सम्बन्धाच्च, न खल्विदं स्तोत्रम् इतर स्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः (२) स्तम्भ-शाखायाः सन्निधौ प्रयुज्यते किन्तु सदसोबहिःप्रसर्पद्भिः प्रयुज्यते, (३) तस्य च बहिष्पवमानस्य त्रिवृन्नामकः स्तोमोभवति, तस्यच स्तोमस्य विधायकं ब्राह्मण-वाक्यमेवमाम्नायते (४) 'तिसृभ्यो हिं करोति स प्रथमया तिसृभ्यो हिं करोति स मध्यमया, तिसृभ्यो हिं करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिरिति'। अयमर्थः— सूक्त-त्रय-पठितानां * नवानामृचां गानं त्रिभिः पर्यायैः कर्त्तव्यम् तत्र प्रथम पर्य्याये त्रिषु सूक्तेषु आद्यास्तिस्रऋचः, द्वितीये पर्य्याये मध्यमाः, तृतीये पर्य्याये चोत्तमाः; तिसृभ्यइति तृतीयार्थे पञ्चमी, हिं करोति गायतीत्यर्थः। स यं यथोक्त-प्रकारोपेता गीतिस्त्रिवृत्-स्तोमस्य विष्टुतिः ( स्तुति-प्रकार-विशेषः), अस्याः† विष्टुतेरुद्यती नामेति, एवं परिवर्त्तिनी—कुलायिनीति द्वे विष्टुती।

* 'सूक्त-त्रय-गतानाम्'-इति पाठः गौ० पुस्तके।

† 'तस्याः'-इति पाठः गौ० पुस्तके।

(१)—तदेतद् गानं न क्वचिद् गानग्रन्थेऽद्य दृश्यते, उद्गातृ-प्रयोगाख्य-याज्ञिक-ग्रन्थे तु परिदृश्यते नियोग-मुखेन।

(२) औदुम्बरी लक्षणादिकन्तु समाम्नातन्ताण्ड्य पञ्चम-पञ्चमे, षड्विंश ब्राह्मणस्य चतुर्थ-प्रपाठकस्य तृतीय खण्डे "प्रजापतिर्देवेभ्य औदुम्बरीमृक्छ्याति" इत्यादिना पल्लवितम्।

(३) तथाहि ताण्ड्य षष्ठस्य सप्तम-खण्डे — "बहिष्पवमानं सर्पन्ति" इत्यादि, 'ये अध्वर्य्युमुख्याः बहिष्पवमानार्थं सदः-मण्डपात् बाह्यात् प्रतिसर्पन्ति'-इत्यादि तद्भाष्यम्। लाट्यायन-नवम नवमे सूत्रे चैतत्- "बहिर्बहिष्पमानैः स्तुवीरन्" इति।

(४)—ताण्ड्य-द्वितीय-प्रपाठकारम्भ-खण्ड-त्रये।

तयोः परिवर्त्तिन्येवमाम्नायते(१)— 'तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः, परिवर्त्तिनी त्रिवृतो विष्टुतिः'-इति । पराचीभिः अनुक्रमेणाम्नाताभिरित्यर्थः । कुलायिन्येवमाम्नायते (२)— 'तिसृभ्यो हिं करोति स पराचीभिः; तिसृभ्यो हिं करोति या मध्यमा सा प्रथमा, या उत्तमा सा मध्यमा, या प्रथमा सोत्तमा; तिसृभ्यो हिं करोति योत्तमा सा प्रथमा, या प्रथमा सा मध्यमा, या मध्यमा सोत्तमा, कुलायिनी त्रिवृतो विष्टुतिः'-इति । अत्र प्रथम-सूक्ते पाठ-क्रम एव, द्वितीये मध्यमोत्तम-प्रथमाः, तृतीये तूत्तम-प्रथम-मध्यमाः-इत्येवं व्यत्ययेन मन्त्राः गातव्याः । तदिदं विष्टुति-त्रयं विकल्पितं । त्रिवृच्छब्दस्येदृगं स्तोम-स्वरूपमर्थः, न तु त्रैगुण्यमिति पूर्वपादे निर्णीतम् ॥ उत्तरा-ग्रन्थे बहिष्पवमान-सूक्तेभ्यः त्रिभ्यऊर्द्ध्वं चत्वारि सूक्तान्याम्नातानि(३)— 'अग्न आयाहिवीतये' (उ,१प्र,४सू)-इत्याद्यं सूक्तम् — 'आनोमित्रावरुणा' (उ,१प्र५,सू)-इति द्वितीयम्— 'आयाहि सुषुमाहित' (उ,१प्र६,सू)-इति तृतीयम्— 'इन्द्राग्नी आगतं

---

(१) -परिवर्त्तिनी आवर्त्तिनीत्यर्थः, यथा प्रथमे पर्य्याये अनावृत्ताभिर्गानं तथोत्तरयोरपि, आवृत्ति-मात्र-पर्यवसायित्वात् ; ताण्ड्य-द्वितीय-द्वितीये स्पष्टम् ।

(२)--कुलायो नीडं, पक्षिणां निवास-स्थानं, तद्यथा व्यस्त-तृणादि-निर्मितम्, एवं व्यत्यास-युक्तास्तृचः कुलायाः, तैस्तद्वती कुलायिनी । अस्याः विष्टुतेः परिवर्त्तिनी प्रथमः पर्यायः ; द्वितीये पर्याये पराचीभिः प्रयुक्तस्य तृचस्य या मध्यमा सा प्राक् प्रयुज्य प्रथमा कार्या ; या प्रथमा सोत्तमा कार्या ; तृतीयस्तु पर्यायो निगद-सिद्ध एव यथावत् कार्यः । स्पष्टं चैतत् समस्तं ताण्ड्य-द्वितीयस्य तृतीयखण्डे स-भाष्ये ।

(३) -एषां विवरणं पूर्वोक्तमेवात्र स्मर्त्तव्यम् ।

सुतम्' (उ,१प्र,३सू)-इति चतुर्थम्— तान्येतानि प्रातः-सवने गायत्र-साम्ना गीयमानानि चत्वार्य्याज्य-स्तोत्राणीत्युच्यन्ते। तन्निर्वचनं श्रूयते— 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्'-इति (१)। तेष्वाज्य-स्तोत्रेषु पञ्चदश-नामकः स्तोमोभवति, तस्य स्तोमस्य विष्टुतिरेवमाम्नायते— 'पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः'-इति (२) एकं सूक्तं त्रिरावर्त्तनीयं, तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः— द्वितीयावृत्तौ मध्यमायाः— तृतीयावृत्तावुत्तमायाः— सोऽयं पञ्चदश-स्तोमः (३)। उक्तेभ्यश्चतुर्भ्यः सूक्तेभ्यः ऊर्द्ध्वमुत्तराग्रन्थे त्रीणि माध्यन्दिन-पवमान-सूक्तान्याम्नाय तत ऊर्द्ध्वं चत्वारि सूक्तान्याम्नातानि, तेषु 'अभित्वाशूरनोनुमः (उ,१प्र,११सू)' इत्याद्यम्-'कया नश्चित्र आ भुवत् (उ,१प्र,१२सू),' -इति द्वितीयम्—'तं वो दस्ममृतीषहम् (उ,१प्र,१३)'-इति तृतीयम्— 'तरोभिर्वोविदद्वसुम् (उ१,प्र,१४)'-इति चतुर्थम्— एतानि क्रमेण 'रथन्तर'-(ऊ०१प्र-१सा) 'वामदेव्य'-(ऊ०१प्र ५सा) 'नौधस'-(ऊ०१प्र६सा) 'कालेय'(ऊ०१प्र७सा) सामभिर्माध्यन्दिन-सवने गीयमानानि पृष्ठ-स्तोत्राणीत्युच्यन्ते। स्पर्शनात् स्पृष्ठानीत्येवं निरुक्तिर्द्रष्टव्या। तेषु स्तोत्रेषु सप्तदशस्तोमोभवति; तस्य

(१)—'यदाजिमीयुस्तदाज्यानामाज्यत्वम्'-इति ताण्ड्यपाठः (ता ७.२)।

(२)—ताण्ड्य-ब्राह्मणस्य चतुर्थादि खण्ड त्रयेषु तिस्रोविष्टुतयः श्रूयन्ते, तासु इयमाद्या, अत्र एकैकस्मिन् पर्याये पञ्चर्चो भवन्तीति पञ्चपञ्चिनीत्याख्यायते।

(३)—पञ्चदश स्तोमस्य विष्टुति त्रयात्मकत्वात् त्रि प्रकारः, तत्रायमाद्य प्रकारः॥

स्तोमस्य विष्टुतिरेवमाम्नायते— 'पञ्चभ्यो हिं करोति स तिसृभिः स एकया सएकया, पञ्चभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः'-इति, अत्र प्रथमावृत्तौ प्रथमायाः ऋचः त्रिरभ्यासः —द्वितीयावृत्तौ मध्यमायाः— तृतीयावृत्तौ मध्यमोत्तमयोः— सोऽयं सप्तदश स्तोमः(१) ॥ अत्र त्रिष्वपि वाक्येषु त्रिवृत्-पञ्चदश-सप्तदश-शब्दाः गुण-विधायकत्वेन सम्मताः, यदि बहिष्पवमानाज्य-पृष्ठ-शब्दाअपि गुण-विधायकाः स्युः, तदा प्रत्युदाहरणम्, गुण-द्वय-विधानाद् वाक्य-भेदः स्यात्। तस्माद् बहिष्पवमानादि-शब्दाः स्तोत्र-नामधेयानि, तैर्नामभिः कर्माण्यनूद्य त्रिवृदादि-गुणाः विधीयन्ते"[१०]-इति ॥

उक्तस्य पृष्ठादि-स्तोत्रस्य प्रधान-कर्मत्वं द्वितीयाध्यायस्य प्रथम-पादे पञ्चमाधिकरणे निर्णीतम्—[११]"प्रउगं शंसतीत्यादौ गुणतोत प्रधानता। दृष्टादेव स्मृतिस्तेन गुणता स्तोत्र-शस्त्रयोः। स्मृत्यर्थत्वे स्तौति-शंस्योर्द्धात्वोः श्रौतार्थ-बाधनम्। तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम्। ज्योतिष्टोमे श्रूयते—'प्रउगं शंसति', 'निष्केवल्यं शंसति', 'आज्यैः स्तुवते', 'पृष्ठैः स्तुवते'-इति। (प्रउग-निष्केवल्य-शब्दौ शस्त्र-विशेष-नामनी, आज्य-पृष्ठ-शब्दौ तु व्याख्यातौ)। अप्रगीत-मन्त्र-साध्या स्तुतिः शस्त्रं, प्रगीत-मन्त्र-साध्या स्तुतिः स्तोत्रम्। तयोः स्तुत-शस्त्रयोर्गुणकर्मत्वं युक्तं; कुतः ? तुष-विमोकवद्दृष्टार्थ-लाभात् (२) पठ्यमानेषु मन्त्रेषु अनुस्मरणेन देवता संस्क्रियते-इति प्राप्ते, ब्रूमः— तेषु अनुस्मरणेन

(१)—अत्र यद् वक्तव्यं तत् पूर्वमेवाभिहितम् ॥

(२)—"लभ्यमाने फले दृष्टे नादृष्ट-फल कल्पना"-इति सिद्धान्तात् ॥

स्तोतव्यायाः देवतायाः स्तावकैर्गुणैः संबन्ध-कोर्त्तनं स्तौति-शंसति-धात्वोर्वाच्योऽर्थः, यदि मन्त्र-वाक्यानि गुण-सम्बन्धाभिधान-पराणि, तदा धात्वोः मुख्यार्थ-लाभात् श्रुतिरनुगृहीता भविष्यति ; यदा तु गुण-द्वारेणानुस्मरणीय-देवता-स्वरूप-प्रकाशन-पराणि मन्त्र-वाक्यानि स्युः, तदा धात्वोः मुख्यार्थो न स्यात्, लोके हि 'देवदत्त-श्चतुर्वेदाभिज्ञः'-इत्युक्ते स्तुतिः प्रतीयते, तस्य वाक्यस्य गुण-द्वारेण देवदत्त-स्वरूपोपलक्षण-परत्वेन गुण-सम्बन्ध-परत्वात् ; यदा तु देव-दत्त-स्वरूप-परता 'यश्चतुर्वेदो तमानय'-इत्यादौ, तत्र न स्तुति-प्रतीतिः, तस्य चतुर्वेद-सम्बन्ध-द्वारेण देवदत्त-स्वरूप-परत्वेन गुण-सम्बन्ध-परत्वाभावात् ; ततश्चाज्यैर्देवं प्रकाशयेत्, पृष्ठैर्देवं प्रकाश-येत्-इत्येवं विध्यर्थ-पर्य्यवसानाद् धात्वोर्मुख्यार्थोबाध्येत ; ततोधातु-श्रुतिमबाधितुं स्तोत्र-शस्त्रयोः प्रधान-कर्मत्वमभ्युपेतव्यम्। तत्र दृष्टं प्रयोजनं नास्तीतिचेत्—ततोऽपूर्वमस्तु[२१]-इति (१)॥

तत्रैव द्वितीय-पादे द्वादशाधिकरणे साम-विशेष-प्रयुक्तं कर्मा-न्तरत्वमभिहितम्— [२२]"उक्ताग्निष्टुतमेतस्यवारवन्तीय-साम हि। रेवतीष्वृचु कृत्वेति श्रुतं पशु-फलाशये। रेवत्यादिर्गुणः कर्म पृथग्वा पूर्ववद् गुणः। रेवती-वारवन्तीय-सम्बन्धाख्यः पशु-प्रदः। साम्नोऽत्र फल-कर्मभ्यां सम्बन्धे वाक्य-भिन्नता। तेनोक्त-गुण-संयुक्तमन्यत् कर्मोच्यते फले॥ 'त्रिवृदग्निष्टोमस्तस्य वायव्यासु (ऋचु एकविंशाग्निष्टोम-साम कृत्वा) ब्रह्मवर्चस-कामो

(१)—विश्वजिदादिवदित्याशयः।

यजेत'(१)-इत्यस्य सन्निधौ श्रूयते(२)—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा पशु-कामोह्येतेन यजेत'-इति। अस्यायमर्थः— अग्निष्टोमस्य विकृति-रूपः कश्चिदेकाहोऽग्निष्टुन्नामकः, स च पृष्ठ-स्तोत्रे त्रिवृत्-स्तोम-युक्ततया त्रिवृदित्युच्यते, अग्निष्टोमोक्थादीनां सप्तानां सोम-संस्थानां(३) मध्येऽग्निष्टोम-संस्था-रूपत्वादग्निष्टोमइत्यप्युच्यते। प्रकृतौ तृतीयसवने आर्भव-पवमानस्योपरि 'यज्ञायज्ञीयं' साम गीयते, तेन च साम्ना अग्निष्टोम-यागस्य समाप्यमानत्वादग्निष्टोम सामेत्युच्यते, तच्च प्रकृतौ 'यज्ञायज्ञावोअग्नये'-इत्याद्यास्वाग्नेयीषृक्षु (उ,१प्र,२०सू,१-२-३ऋ)गीयते; अस्मिंस्त्वग्निष्टुति ब्रह्मवर्चस-कामिन वायव्यास्वृक्षु तत् साम गातव्यम्, तच्च प्रकृताविवैकविंश-स्तोम-युक्तम्; पशुकामस्य तु 'रेवतीर्नः सधमादे'-इत्यादिषु रेवतीष्वृक्षु (उ,प्र४,सू ११,२-३ऋ) 'वारवन्तीयं' साम गायेदिति, तत्र रेवतीनामृचां वारवन्तीय-नामकेन साम्ना यः सम्बन्धः सोऽयं पशु-फलायाग्निष्टुति विधीयते, एतस्यैवेति प्रकृत-परामर्शकेनैतच्छब्देनान्य-व्यावर्त्तकेनैवकारेण-चाग्निष्टुतः समर्प्यमाणत्वात्; यथा पूर्वाधिकरणे इन्द्रिय-फलाय प्रकृतेऽग्निहोत्रे दधि-गुणोविहितः(४) तद्वत्, इति

(१) ताण्ड्यस्य सप्तदश-सप्तमे श्रुतमेतत्. परम् ऋत्वा।द-कृत्वेत्यन्न पाठोऽवाधिको लक्ष्यते, ततस्तस्या एव श्रुतेरभिप्रेतोर्थोऽयं न तु साक्षाच्छ्रुतिरिति गम्यते॥

(२) ताण्ड्य-सप्तदशाष्टमे।

(३)—तथाहि-"अथ सोमसंस्था. अग्निष्टोमो(१)ऽत्यग्निष्टोमो(२) उक्थः(३) षोडशी(४) तिरात्रो(५) वाजपेयो(६) प्तोर्यामः(७)"-इति लाट्यायन सूत्रम् (५प्र०४ख०)। अत्र उक्थस्यादित्वाभावेऽपि ताण्ड्ये तस्य पूर्वं विहितत्वात् उक्थादीनामिति कथनं नासङ्गतम्।

(४) "दध्नेन्द्रियकामस्य जुहुयात्"-इति वाक्यार्थेन. एवदेव विषयीकृत्य एकादशाधिकरणं रचितमस्ति।

प्राप्ते, ब्रूमः— विषमोदृष्टान्तः, दध्नोहोम-जनकत्वं न शास्त्रेण बोधनीयं तस्य लोकतोऽवगन्तुं शक्यत्वात्। फल सम्बन्धः एक एव शास्त्र-बोध्यः इति न तत्र वाक्यभेदः, इह तु रेवत्युगाधारक वारवन्तीय-साम्नोऽग्निष्टुत्-कर्म-साधनत्वं फल-साधनत्वं चेत्युभयस्य शास्त्रैक-बोध्यत्वाद् दुर्वारोवाक्य-भेदः; तेन पशु फलकं यथोक्त-गुण-विशिष्ट-कर्मान्तरमत्र विधीयते। एतच्छब्दः एव-कारश्च विधीयमान-कर्मान्तर-विषयतया योजनीयौ"२२-इति (१)।

उत्तरस्मिंस्त्वधिकरणे निधन-विशेषाः काम्याः विचारिताः —२३"वृष्टान्न-स्वर्ग-कामानां सौभरं स्तोत्रमीरितं। निधनार्थपि हीषुर्ग्-इति वृष्ट्यादि-कामिनां। फलान्तरं किं वृष्ट्यादि हीषा-दीनामुतोदिते। सौभरे फल-संभिन्ने निधनं विनियम्यते। फलान्तरं चतुर्थ्योक्तं वृष्टि-कामाय हीषिति। सौभरस्य फलं वृष्टिर्हीषित्युक्त्या विवर्द्धते। नोक्तं वृष्टान्न-कामानामन्यत्वं प्रत्यभिज्ञया। नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते॥ 'यो वृष्टिकामो योऽन्नाद्यकामो यःस्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरम् *-इति (२) समाम्नायः † पुनः

* 'सौभरे'-इति पाठोबहु-पुस्तके।
परं सः सर्वोऽप्यसाधुरेव, ताण्ड्ये तथा दर्शनात्।

† 'समाम्नाय'-इति ल्यबन्तपदं दृश्यते, प्रायः सर्वत्र इह।
परं तन्न सम्यक्, ताण्ड्य ब्राह्मण पाठ विरोधात्। तथाहि तत्र स्तुवीतेत्यनन्तरं सर्वे इत्यस्यादौ हीषित्यादिकं पठितम, न तु स्तुवीतेत्यनन्तरं सर्वे इत्यादिकं पठित्वा हीषित्यादिकमस्ति। ताण्ड्यभाष्ये च न्यायविस्तर-ग्रन्थोऽप्यमुद्रितः तत्रचैवमेव प्रथमान्तः पाठः।

(१)—एतस्यैवेत्यादि पूर्वदर्शित-वाक्ये।
(२)— ताण्ड्याष्टमाष्टमे।

समाम्नातं 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्य-कामाय, ऊ-इति स्वर्गकामाय'-इति । 'सौभरं' नाम साम-विशेषं (१), निधनं नाम पञ्चभिः सप्तभि र्वा (२) भागैरुपेतस्य साम्नोऽन्तिमो भागः (३), तस्मिन्निधने हीषादयो विशेषाः सौभर-साम-साध्यास्तोत्र-फलेभ्योवृष्ट्यादिभ्योऽन्यानि वृष्ट्यादि-फलानि जनयितुं विधीयन्ते ; कुतः ? हीषादि-विधि-वाक्ये वृष्टि-कामायेत्यादिना चतुर्थी-श्रवणात् ; सा च तादर्थ्ये (४) त्रयाणां हीषादीनां वृष्ट्यादि-काम-पुरुष-शेषत्वं गमयति, तच्छेषत्वं च पुरुषाभिलषित-फल-साधनत्वे सत्युपपद्यते (५) ; ततः सौभरस्य हीषिति निधन-विशेषस्य च फलभूते द्वे वृष्टी भवतः, तदुभय-

(१)—तच्च ऊह-गानस्य प्रथमप्रपाठकीय-षोडशतमम् ।

(२)—साम्न आद्योभागः प्रस्तोत्रा गेयः प्रस्तावः, द्वितीयो भागः उद्गात्रा गेयः उद्गीथः तृतीयो भागः प्रतिहर्त्त्रा गेयः प्रतिहारः, चतुर्थो भागः पुनरुद्गात्रा गेयः उपद्रवः, पञ्चमः सर्वै र्युगपद् गेयः निधनाख्यः-इति सर्व-वादि-सम्मतम् । केषाञ्चिन्नये—गानारम्भ काले सर्वै र्ऋत्विग्भिः "ऊम्"-इत्येवमुच्चार्यो हिङ्कारः, तमारभ्य निधनगानान्तं यजमान-कर्त्तृकम् "ओऽम्"इत्येवं प्रणवश्च-इत्येतद् द्वावपि सामाङ्गत्वेन गण्यः ततः पञ्च-भक्तिकं सप्त-भक्तिकं वा सामेत्युच्यते, मन्त्र-ब्राह्मणस्य चतुर्थप्रपाठके साम्नः पञ्चभक्तिकत्वं सप्त-भक्तिकत्वञ्च श्रूयते, यज्ञतत्त्वदीपिकायामुद्गातृप्रयोगे चास्योदाहरणं बहु ।

(३)—तदुक्तम् "प्रस्तावस्तत उद्गीथः प्रतिहारोपद्रवौ तथा । निधनं पञ्चमेत्याऊ-र्हिङ्कारः प्रणवएव च"-इति विवरण-कृता माधवेन ।

(४)—"तादर्थ्ये चतुर्थी वाच्या"-इति कात्यायन-स्मरणात् ।

(५)—वादरि-नामाचार्य्यमते क्रियायाः शेषत्वं नास्ति, द्रव्य-गुण-संस्कारेष्वेव शेषत्व-मिति नियमात् । जैमिनि-नये तु पारार्थ्यमेव शेषत्वमिति यस्यास्त्येवास्ति तदिति नियमाभावात् क्रियेत्यादेरपि शेषत्वे न बाधः ; तथा च, तृतीयाध्यायस्य प्रथमपादे शेषाधिकारे चतुर्थ-पञ्चम-षष्ठ-सूत्राणि—"कर्माण्यपि जैमिनिः फलार्थत्वात् । फलञ्च पुरुषार्थत्वात् । पुरुषश्च कर्मार्थत्वात्"-इति ।

मेलनान्महती हृष्टिः। इति प्राप्ते, ब्रूमः— सौभर-विधौ यो वृष्ट्यादि-कामः सएव हौषादि-विधौ प्रत्यभिज्ञायते, ततः सौभरस्य फलभूता ये वृष्ट्यादयः तएव हौषादि-शास्त्रे ष्वनूद्यन्ते इति न फलान्तरम्। अथोच्येत नूतन-फलान्तराभावात् हौषादीनां च नानाशाखाध्ययनादेव सौभरे प्राप्तत्वादनर्थकोऽयं विधिः-इति — तन्न, फल-त्रय-कामानां त्रयाणामनियमेनैव हौषादिषु मध्ये यस्य कस्यचिन्निधनस्य प्राप्तौ विधेर्नियमार्थत्वात्, तादर्थ्यन्तु फलान्तराभावेऽपि सौभर-वाक्योक्त-वृष्ट्यादि-फल-साधने सौभरे हौषादीनां नियम्यमानत्वादुपपद्यते ; तस्मादयं निधन-विशेष-नियमः न विधिः"[२३]-इति॥

तृतीयाध्यायस्य तृतीय-पादे प्रथम-द्वितीयाधिकरणयोः साम-गाने उच्चत्व-नीचत्व-धर्मौ विचारितौ। तत्र प्रथमाधिकरणम् —[२४]"कर्त्तव्यमुच्चैः सामर्ग्भ्यामुपांशु यजुषेत्यमी। मन्त्राणां वाथ वेदानां धर्मामन्त्र-गतायतः। विध्युद्देशे मन्त्र-वाचि-शब्दाः प्रोक्ताः ऋगादयः। ऋग्वेदोऽग्नेः समुत्पन्नइत्युपक्रम-वेद-गीः। असंजात-विरोधीतस्तद्वशादुपसंहृतेः। नयने सति वाक्येन धर्माणां वेद-गामिता॥ ज्योतिष्टोमे श्रूयते— "उच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना इति। तत्र विधि वाक्ये मन्त्र वाचिनामृगादि-शब्दानां प्रयोगान्मन्त्र धर्माः उच्चैस्त्वादयः, तथासति. यजुर्वेदोत्पन्नाः. अध्वर्युणा प्रयुज्यमानाः अप्यृचः उच्चैरेव पठितव्याः; इति चेत्— मैवम्, असंजात विरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेनोपसंहारस्य नेतव्यत्वात्। उपक्रमे हि वेद-शब्दः श्रुतः— 'त्रयोवेदा असृज्यन्त', अग्नेर्ऋग्वेदः,

वायोर्यजुर्वेदः, आदित्यात् सामवेदः'-इति (१) अतः उपक्रम-गत-वेदानुसारेण विध्युद्देश-गतानामप्यृगादि-शब्दानां वेद-परत्वे सत्यृचोऽपि यजुर्वेदोत्पन्नाः उपांशु पठनीयाः। नन्वुपक्रमोऽर्थवादत्वाद् दुर्बलः, उपसंहारो विध्युद्देशत्वात् प्रबलः, इति चेत्—बाढम्! लब्धात्मनोहि विध्युद्देशस्य प्राबल्यम्, इह तु (२) प्रथमतोबुद्ध्युत्पादकः उपक्रमः, तदानीमलब्धात्मकत्वान्न तस्य बाधकत्वं, पश्चात्तु वाक्यैकत्वाय तदविरोधेनैवात्मानं लभते; तदेव मुपक्रमोपसंहारैकवाक्यता-बलेन निर्णयाद् वाक्य-विनियोगोऽयम्"२४-इति ॥ द्वितीयाधिकरणम्—२५"यजुर्वेदमाधानं तदंगं साम तत्र किम्। उच्चैरुपांशु वा गानमुच्चैः शीघ्र-प्रवृत्तितः। उत्पत्तेर्विनियोगोऽत्र प्रबलोनुस्मृतिर्यतः। मुख्यस्याङ्गेन कर्त्तव्या तस्माद् गानमुपांशुता। आधानस्यात्र मुख्यत्वं गानस्य गुणताथवा। विनियोगस्य मुख्यत्वमुत्पत्तेर्गुणतास्त्विह ॥ आधाने वामदेव्यादि सामान्यङ्गत्वेन विहितानि, तत्र यद्यप्येतानि यजुर्वेद-गतस्याधानस्याङ्गानि तथापि सामवेदे तेषामुत्पन्नत्वादुत्पत्तेश्च शीघ्रं बुद्धि-हेतुत्वात् सामवेद-धर्मेण गेयानीतिचेत्—न, विनियोगस्य प्रबलत्वात्। स च यजुर्वेदे श्रुतः—'यएवं विद्वान् वामदेव्यं गायति,-इति। गुणेन हि मुख्यस्यानुसरणं न्याय्यम्। कोगुणः? किं मुख्यम्? इति चेत् अथाङ्गित्वादाधानं मुख्यम् साम-गानमंगत्वेन गुणः; तथा सति धर्मः शिरः-इत्यादयः

(१)—षड्विंश ब्राह्मणस्य चतुर्थ-प्रथमेऽपीदं श्रूयते, परं तत् नत्वेवमक्षरशः; तथा छान्दोग्यस्य चतुर्थ प्रपाठकीय-सप्तदश-खण्डे, तत्रापि पाठे भेदः।

(२)—पूर्वोक्तमसञ्जात-विरोधित्वं नेति अत्र स्फुटी भविष्यति।

आधानाङ्गभूताः मन्त्राः यथोपांशु पठन्ति, तथा सामान्यप्याधानानुसारेणोपांशु गेयानि; अथवा विनियोगोऽनुष्ठापक-विधित्वान्मुख्यः, उत्पत्तिविधिस्तथाविधत्वाद् गुणः। तस्मादत्र विनियोग-वेदानुसारेणोपांशु गेयानि"[२५]-इति॥

पञ्चमाध्यायस्य तृतीयपादे चतुर्थ-पञ्चमाधिकरणयोः स्तोम-विचारः। तत्र चतुर्थाधिकरणम्—[२६]"स्तोमवृद्धौ किमागन्तो मध्येऽन्ते वास्तु मध्यतः। द्वादशाहवदन्यत्र मध्यानन्तेन मध्यमः। इदमाम्नायते—'एकविंशेनातिरात्रेण प्रजा-कामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम्'-(१) इति। तत्र प्रकृतौ बहिष्पवमान-स्तोत्रे त्रयस्तृचा भवन्ति—"उपास्मै गायतेत्यादिः (उ० १प्र० १सू० १।२।२ ऋ) एकः—"दविद्युतत्यारुचेत्यादिः (उ० १प्र० २सू० १।२।३ ऋ) द्वितीयः—"पवमानस्य ते कवइत्यादिः-(उ० १प्र० ३सू० १।२।३ ऋ) तृतीयः; तेषु त्रिषु तृचेषूर्द्धं गानेन त्रिवृत्स्तोमो भवति (२) नत्वत्र पञ्चदश-सप्तदश-स्तोमादीनामिवावृत्तगानमस्ति, स च बहिष्पवमानाविकृतावतिरात्रे चोदकेन प्राप्तः (३), तत्र त्रिवृत्-स्तोमं बाधितुमेकविंशादि-स्तोमाः विहिताः, बहिष्पवमाने आवृत्तगानाभावात त्रिषु तृचेष्ववस्थिताभिर्नवभिरृग्भिरेकविंश-स्तोम-पूरणाभावात् तत्-पूरणाय चत्वारस्तृचाआगमयितव्याः, त्रिणव-स्तोम-पूरणाय षट् तृचा,

(१)—एकविंशस्य स्वरूपभेदादिकञ्च ताण्ड्ये द्वितीय प्रपाठके चतुर्दशादिषु चतुर्षु खण्डेषु, त्रिणवस्य तु तृतीय प्रपाठकस्याद्य-खण्ड द्वये, त्रयस्त्रिंशस्य च तत्परस्तात् खण्ड-चतुष्टये श्रुतम्।

(२)—ताण्ड्य-द्वितीय प्रपाठकाद्य-खण्डत्रये तत्-स्वरूपादिकं श्रुतम्।

(३)—'प्रकृतिवद् विकृतिः कर्त्तव्या'-इति वचनेनेति यावत्। अतिरात्रश्च विकृति यागः।

त्रयस्त्रिंश-स्तोम-पूरणायाष्टौ तृचाः; ऋचागमनं (१) चोपरिष्टाद् वक्ष्यते (२)। तेषां चागन्तूनां मन्त्राणां प्राकृत-बहिष्पवमान-मध्ये निवेशः कार्य्यः द्वादशाहे तद्दर्शनात्। इति प्राप्ते, ब्रूमः—द्वादशाहे हि वचनमेवमाम्नायते— 'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचाभवन्ति, तत्र उत्तमपर्य्यासः'-इति (३) अयमर्थः—प्राकृतानां बहिष्पवमान-गतानां त्रयाणां तृचानां स्तोत्रियोऽनुरूपः पर्य्यासश्चेति त्रीणि नामानि, तत्र चोदकागतयोरनुरूप-पर्य्यासयोस्तृचयोर्मध्ये वृषण्व-च्छब्दयुक्तास्तृचाः कर्त्तव्या इति, नचैवमतिरात्रे मध्ये निवेशनाय वचनमस्ति। तस्मात् क्रम-क्रममबाधितुमागन्तूनामन्ते निवेशः"[३६]॥ पञ्चमाधिकरणम्

—[३७]"आर्भवे साम्नआगन्तोरन्ते मध्येऽथवाग्रिमः। पूर्ववत् त्रीणि यज्ञस्येत्युक्त्या मध्ये निवेशनम्। पूर्वोदाहृतेऽतिरात्रे माध्यन्दिनार्भव-पवमानयोश्चोदक-प्राप्तौ पञ्चदश-सप्तदश-स्तोमौ (४) बाधितुमेकविंशादि-विवृद्ध-स्तोमो वचनादनुष्ठीयते, तत्र बहिष्पवमानवदृगागमनं न भवति किन्तु सामागमेन स्तोम-पूरणमिति दशमे (५) वक्ष्यते, तस्य चागन्तोः साम्नः पूर्वोक्तानामृचामिवान्ते निवेशनात् पठितानां तृचानां मध्ये तत्साम-चरमे तृचे

(१)—काश्चः आगमयितव्याः-इति।

(२)—अग्रिमाधिकरणे, 'ब्रूमः-त्रीणि ह वै'-इत्यादिना।

(३)—ताण्ड्यकादश-षष्ठे द्रष्टव्यम्।

(४)—तथाहि - "एष सन्ततो यज्ञो द्वौ द्वौ हि स्तोमौ सवने वहतः त्रिवृत्-पञ्चदशौ प्रातः सवनम्, पञ्चदश-सप्तदशौ माध्यन्दिनं सवनम्, सप्तदशैकविंशौ तृतीयं सवनम्"-इति ताण्ड्य-षोडशस्याद्यखण्डः।

(५)—अधिकरमालायाः।

गातव्यम्। इति प्राप्ते, ब्रूमः—'त्रीणि ह वै यज्ञस्योदराणि गायत्री, बृहती, अनुष्टुप् चात्रह्येवावपन्त्यतएवोद्वपन्ति' इति हि विशेषआम्नायते (१)। अयमर्थः स्तोमस्य विवृद्धये साम्न आवापः (२) क्रियते, ह्रासाय चोद्वापः(३), ताबुभावावापो द्वापौ गायत्र्यादिष्वेव नान्यत्रे ति। 'उच्चा ते जातमन्धसः'-इत्येष माध्यन्दिन-पवमानस्याद्यस्तृचः (उ.१प्र.८सू १।२।३ ऋ), 'स्वादिष्ठया'-इत्येषः (उ.१प्र१४सू१।२।३ऋ) आर्भव-पवमानस्य, तावुभौ गायत्रीच्छन्दस्कौ तयोरावापः, न तु त्रिष्टुप् जगती छन्दस्कयोरन्ययोस्तृचयोः सामावपनीयम्[१०]"-इति॥ ॥ तत्रैव पञ्चदशाधिकरणे स्तोम विचारः [१८]"एकस्तोमेऽन्यशब्दः स्याद् बहुस्तोमेऽपि वाग्रिमः। त्रिवृदन्येत्यर्थवादात्रान्यमात्रस्य सम्भवात्॥ अत्र पूर्वोदाहृतोऽन्येनेत्ययमन्य-शब्दः (४) एक-स्तोमके क्रतौ वर्त्तते, कुतः। अर्थवादेन तदवगमात्। 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, यः पञ्चदशः स तं, यः सप्तदशः स तं, यएकविंशः स तम्'-इत्यर्थवादः (५)। अस्यायमर्थः त्रिवृदादयश्चत्वारः स्तोमाः (६) अग्निष्टोमे वर्त्तन्ते, तेषु

(१)—ताण्ड्यस्सप्तम तृतीये द्वयत्यम।

(२)—आवापः आक्षेपः।

(३) उद्वापः उत्क्षेपः।

(४)—अत्र पूर्वोदाहृत इत्यनेन मीमांसाग्रन्थस्य पञ्चमाध्याय तृतीयपाद-चतुर्दशाधिकरणं बोध्यः। अन्य-शब्द-घटितं तद्विवाक्यम ताण्ड्य-षोडश-प्रथमे, तथाहि "एष वाव प्रथमो यज्ञानां य एतेनानिष्ट्वाथान्येन यजते गर्त्तपत्यमेव तज्जायते" इति।

(५)—ता०१६प्र०१ख०।

(६)—त्रिवृत्१—पञ्चदशः२—सप्तदशः३—एकविंशः४।

त्रिवृत् स्तोमोविकृतिरूपं यं यज्ञमाप्नोति स त्रिवृत्-स्तोमः तं यज्ञं दीपयति प्रकाशयति सर्वतोव्याप्नोतीति । स्तोमान्तरस्याप्रवेशाय त्रिवृतएव सर्वस्मिन् यज्ञ-स्वरूपे व्याप्तावयमेक-स्तोमकः क्रतुर्भवति । एवं पञ्चदशादि-स्तोमव्याप्तिर्योजनीया । तथा सत्यर्थवादादेक-स्तोमकानामेव बुद्धिस्थत्वात् तएवान्यशब्देनोच्यन्ते । एकस्तोमकाश्च षट् रात्रादिष्वाम्नाताः त्रिवृदग्निष्टोमोभवति पञ्चदशउक्थ्यो भवतीत्यादयः । तस्मात् तद्विषयोऽन्य-शब्दः । इति प्राप्ते, ब्रूमः—स तं दीपयतीत्यत्र प्रकाशकत्वमात्रमुच्यते, तच्च व्याप्तिमन्तरेण सम्बन्धमात्रादप्युपपद्यते, तस्मात् अग्निष्टोम-प्रतियोगितया बहु-स्तोमैक-स्तोम-साधारणत्वेन श्रूयमाणस्यान्य-शब्दस्य सङ्कोच-हेत्वभावात् सर्व-विषयोऽयमन्य शब्दः"[२८]-इति ॥

सप्तमाध्यायस्य तृतीयपादे तृतीयाधिकरणे सर्वपृष्ठातिदेशश्चिन्तितः— [२९]"विश्वजित् सर्वपृष्ठः * किमनुवादोरथन्तरम् । बृहता वा समुच्चेयं यद्वा षाडहिकानि षट् । अतिदेश्यानि तत्राद्योमाहेन्द्रादि-चतुष्टये । पृष्ठ-शब्दाच्चोदकेन सर्वेषामिह सम्भवात् । समुच्चयो वा विषये सर्वत्वं बह्वपेक्षया । न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम् ॥ 'विश्वजित् सर्वपृष्ठोभवति'-

* 'पृष्टः'-इति टकारोपधःपाठ० गौ० सा० पुस्तकयोः ।

इहैव स्पर्शनात्-इति प्रदर्शित-विग्रहादपि स एवोपलभ्यते, परं न तथापाठस्ताण्ड्यब्राह्मण-पुस्तकेषु क्वचिदपि, कन किञ्च तथापाठे जैमिनीयाधिकरणमालायाः षष्ठ षष्ठपञ्चमे लिखिता 'पृष्ठशब्देन पृष्ठदेशे प्राप्ते'-इत्युक्तिर्विरुध्येत ।

इति श्रूयते (१)। तत्र सर्व-पृष्ठ-शब्दोऽनुवादः, कुतः? प्राप्तत्वात्। तथाहि— ज्योतिष्टोमे माध्यन्दिन-पवमानानन्तर-भावीनि माहेन्द्रादीनि चत्वारि स्तोत्राणि सन्ति—"अभि त्वा शूर-नोनुमः"(१प्र,११सू)"कया नश्चित्र आ भुवत्" (१प्र,१२सू) 'तं वो दस्ममृतीषहम्'(१प्र,१३सू)—'तरोभिर्वोविदद्वसुम्' (१प्र,१४सू) इत्येतेषु चतुर्षु सूक्तेषु तानि स्तोत्राणि सप्तदश-स्तोमतामापाद्य गीयन्ते। एकस्मिन् सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्त-विधानेन सप्तदशधाभ्यासः सप्तदश-स्तोमः, तादृशेषु स्तोत्रेषु पृष्ठ-शब्दः श्रूयते 'सप्तदशानि पृष्ठानि'-इति, तानि पृष्ठानि विश्वजिति चोदक-प्राप्तत्वात् सर्वपृष्ठ-शब्देनानूद्यन्ते-इत्येकः पक्षः। रथन्तरपृष्ठ-बृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्प-प्राप्तौ सर्व-शब्देन समुच्चयोविधीयते, तथासत्यनुवाद-कृतं वैयर्थ्यं न भविष्यति-इति द्वितीयः। सर्वत्वं बहुषु मुख्यं न तु द्वयोः, तस्मादनेन सर्वपृष्ठ-शब्देन षट् सङ्ख्याकानि पृष्ठान्यतिदिश्यन्ते, षडहे प्रतिदिनमेकैकं पृष्ठं विहितम्। तानि च पृष्ठानि षट्— रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवत-सामभिः निष्पाद्यानि (२)। यद्यपि विश्वजितएकाहत्वाद् ज्योतिष्टोम-विकृतित्वमेव न तु षडह-विकृतित्वम्, तथापि सर्व-पृष्ठोक्ति बलात् तानि षट् पृष्ठान्यतिदिश्यन्ते"।[१८]-इति॥

(१)—ताण्ड्य-नवम-तृतीये, परं तत्र नैव पाठः।

(२)—रथन्तरादय इमे षडेव ऊह्यगानेश्नतानि।

तत्रैव दशमाधिकरणे स्वर-साम-विकार-चिन्ता— ४०"न विकारा विकारा वा स्वरसामादयो न हि । वैष्णव-न्यायतो नैवमनन्यगति-लिङ्गतः । गवामयने द्वयोर्मास-षट्कयोर्मध्ये (१) वर्त्तमानं (२) विषुवन्नामकं प्रधानभूतमेकमहर्विद्यते (३), तच्च 'दिवा-कीर्त्त्यम', (४) तस्मात् प्राचीनास्त्रयः स्वर-साम-नामकाः अहर्विशेषाः; तथोपरिष्टादपि त्रयः स्वर-सामानः तदेतदभिप्रेत्य श्रूयते 'अभितोदिवाकीर्त्त्यं त्रयः स्वर-सामानः'-इति (५) तेषु च ग्रह (६)-सान्तत्याय सप्तदश-स्तोमादयो धर्माः विहिताः (७), अन्यत्र

---

(१)—गवामयनं नाम सत्रमस्ति, तच्च द्विविधम्, "तासां दशसु मासु शृङ्गाण्यजायन्त (ता-४-१-१)"-इत्यादि विहितम् दशमास निष्पाद्यं; "इमौ द्वादशौ मासौ सम्वत्सरमापयामेति (ता-४-१-२)"-इत्यादि-विहितं द्वादश-मास-साध्यञ्च, तत्र शेषविधौ इयमुक्तिः ।

(२) —अशीत्युत्तरशतदिनानन्तरम् ।

(३) - तथाहि ताण्ड्य-चतुर्थस्य षष्ठ-प्रथमे "विषुवानेष भवति"-इत्यादि ।

(४) —दिवाकीर्त्य-नामक-सामकम्, तथाहि, ताण्ड्य-चतुर्थस्य षष्ठ-द्वादशे—"दिवाकीर्त्यं सामा भवति"-इत्यादि । तच्च साम 'भ्राजम्', 'आभ्राजम्' च तत्रैवाग्रे विहितम् — "भ्राजाभ्राजे पवमानमुखे"-इत्यादिना, तत्र ऊह्यगानस्य द्वितीय प्रपाठकीय द्वादशतममाद्यं, विंशतितमञ्चान्त्यम् ।

(५)—तथाहि, ताण्ड्यस्य चतुर्थ-प्रपाठकीय-पञ्चम-खण्डे—"त्रयः पुरस्तात् त्रयः परस्ताद् भवन्ति"-इतिषड्विंशेच तत् स्फुटतरं, तथाहि तृतीय द्वादशे—"त्रयः स्वरसामानः, दिवाकीर्त्तमहः, त्रयः स्वरसामानः"-इति । स्वर-नामक-सामानि विद्यन्ते येषु ते स्वरसामानः । तानि च स्वरसामानि आरण्यकार्चिकस्य द्वितीय सप्तम्यां 'यज्जायथा अपूर्व्य'-इत्यस्यामृचि उत्पन्नानि अरण्य-तृतीय प्रपाठकीय-द्वितीयार्द्ध-नवमादीनि षट् ।

(६)—ग्रहाः यज्ञीय-पात्र-विशेषाः ।

(७)—ताण्ड्यस्य चतुर्थ-प्रपाठक-गत-तृतीय खण्डे—"सप्तदशाभवन्ति"-इत्यादिना ।

त्विवं श्रूयते (१) 'पृष्ठः षडहो द्वौ स्वर-सामानौ' इति। तावेतावह विशेषौ पूर्वोक्तानां स्वरसाम्नां न विकारौ, कुतः! वैष्णव-समानत्वात्,(२)यथावैष्णवशब्दो देवता-रूप-गुण-विधानेन मुख्यवृत्तित्वान्न लक्षणया धर्मानतिदिशति, तथा साम विशेष-रूप-गुण-विधायकः स्वरसाम-शब्दः। इति प्राप्ते, ब्रूमः अनन्यगति-लिङ्ग वशात् स्वरसामानौ विकारौ भवतः, तथाहि—षडहो द्वौ स्वरसामानौ इत्येवं योऽयमष्टाह उपन्यस्तः तत्र षट्स्वहःसु क्रमेण 'त्रिवृत्' 'पञ्चदशः' 'सप्तदशः' 'एकविंशः' 'त्रिणवः' 'त्रयस्त्रिंशः' इत्येवं स्तोमषट्कं चोदकेन प्राप्तम्, एवं स्थिते तृतीय-षष्ठ-दिवस-गतयोः सप्तदश-त्रयस्त्रिंशयोर्व्यत्यासं * विधाय, सप्तमाष्टमयोरह्नोः सप्तदशस्तोमं सिद्धवत् कृत्य, त्रिषु चरमेष्वहःसु सप्तदश-स्तोम-नैरन्तर्यमर्थवादेनानुवदति। 'यत्

* 'त्रयस्त्रिंशयोरर्थव्यत्यासम्' इति संस्कृतविद्यालयपुस्तकपाठः।

(१)—विकृति-यागे।

प्रकृतेरतिदेशो विकृतिः यत्र विशेषरूपमेव कर्त्तव्यं श्रुत्योपदिश्यते, इतरत सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः। स चातिदेशः प्रत्यक्ष श्रुति वचनाद् सामान्याद्वा लिङ्गाद् वा ष्ववगन्तव्यः। एतत्सर्वं जैमिनीये सप्तमाष्टमाध्यायाभ्यां बहुधा विचारितम्॥

(२) वैष्णव नामकेद्वे सामनि, तत्रैकम् उत्तरार्चिकस्य तृतीय प्रपाठक-गत द्वितीयार्द्धस्य द्वादश-सूक्त सूक्तकम्, ऊहगानस्य विंशति प्रपाठक प्रथमार्द्धीयोनविंशतितम; द्वितीयं छन्दोनामार्चिकस्य षष्ठ-प्रपाठक प्रथमार्द्धीय-तृतीय-दशति स्थित प्रथमकं सूक्तकम, ऊहगानस्य विंशति-प्रपाठक प्रथमार्द्धीय विंशतितमम्। तदेतद्द्वय-साम घटितो विचारो न्यायमालायामत्रैवाध्याये षष्ठाधिकरणे गतः, ततस्तस्मादित्यर्थः।

तृतीयं सप्तदशमहः तत् त्रयस्त्रिंशस्थानमभिपर्य्या हरन्ति'-इति व्यत्यासविधिः, 'त्रयाणां सप्तदशानामनवानतायाः'-इत्यर्थवादः (१)। तत्र यद्यन्तयोरह्नोः* सप्तदशस्तोमं स्वरसामशब्दोऽतिदिशेत्, तदा नैरन्तर्य्यमुपपद्यते, नत्वन्यथा। तस्मान्न वैष्णवन्यायेन गुणः-विधिः किन्तु धर्म्माणामतिदेशकः४०"-इति ॥

दशमाध्यायस्य चतुर्थपादे नवमाधिकरणम् — ४१"बाध्यं श्लोकादिनाज्यादि न वाद्यः स्तुति-लिङ्गतः। देशसाम्नोर्विधौ भेदो वैशिष्ट्यात्तु समुच्चयः॥ महाव्रते श्रूयते 'श्लोकेन पुरस्तात् सदसः स्तुवते, अनुश्लोकेन पश्चात्'-इत्यादि (२)। तत्र श्लोकानुश्लोकादिनामकैः सामभिः (३) प्राकृतान्याज्य-पृष्ठादिस्तोत्र-गतानि रथन्तर-वामदेव्यादि-नामकानि सामानि बाध्यानि,

* 'यद्यन्तयोरह्नोः'-इति स० वि० पु० पाठः।

(१) तथाचेत्यादि समस्तं ताण्ड्यस्य गवामयन-सत्र-प्रकरणमाद्यन्त-समालोचनेनावगन्तव्यम्।

(२) ताण्ड्य-पञ्चम चतुर्थे स्फुटम्। तत्र गेयगानस्यैकादश-द्वितीयस्याद्ये सामनी श्लोकानुश्लोक-संज्ञके, तयोर्मूलं छन्दोग्रन्थस्य पञ्चम-द्वितीय-प्रथमार्द्धीय चतुर्थी ऋक्।

(३) श्लोकादिपदात् बहुवचनाच्च तत्र च श्लोकानुश्लोक-विधानानन्तर-श्रुतानि यामादीनि बोध्यानि। तत्र छन्दोग्रन्थस्य चतुर्थ-प्रपाठक-प्रथमार्द्धीय तृतीय-दशति-गताष्टम्यामृच्युत्पन्नम् अरण्यगानस्य तृतीय-प्रथम-तृतीयं साम 'यामम्', किञ्च छन्दआर्चिकस्य पञ्चम-प्रपाठक-द्वितीयार्द्धीय-प्रथम-प्रथमायामृच्युत्पन्नं अरण्यगानस्य-तृतीय-प्रथमे त्रयोदशं साम 'आयुः'-संज्ञकम्, अपरम् आरण्यकार्च्चिकस्य चतुर्थ-दशति-गतायां 'हरिमिन्द्र अभ्यर्षणीत्येतस्यामृच्युत्पन्नम्, अरण्यगानस्य-पञ्चम-प्रथमे द्वाविंशतितमम्-ऋष्याख्यं साम।

कुतः? 'स्तुवते'-इति प्रकृति-लिङ्ग-दर्शनात्, प्रकृतौ (१) आज्यैः स्तुवते, पृष्ठैः स्तुवते'-इति श्रुतम्। नैतत् सारम्। किमत्र स्तुतिमनूद्य देश-साम-गुणौ विधीयेते? किं वा गुणद्वयविशिष्टा स्तुतिः? नाद्यः, वाक्य-भेदापत्तेः। द्वितीये तु कार्य्यभेदेन बाध्याभावात् समुच्चयः स्यात्"४१-इति ॥ ॥तत्रैवदशमे कौत्सादि-साम्नः प्राकृत-साम-बाधकत्वम्— ४२"समुच्चीयेत कौत्सादि यद्वा प्राकृत-बाधकम् *। स्तुत्याभावादादिमोऽन्त्यो लिङ्ग-प्रकरण-द्वयात् ॥ विकृति-विशेषे श्रूयते— कौत्सं भवति काण्वं भवति-इति (२), तदेतत् कौत्सादि-नामकं साम प्राकृतेन साम्ना समुच्चीयते, कुतः? प्राकृतस्य स्तुति-लिङ्गस्याभावेन कार्य्यैक्याभावात्। नैवम्, प्रकरणात् क्लृप्ताङ्गत्वे सति ऋगक्षराभिव्यक्ति-सामर्थ्य-लक्षण-प्राकृत-लिङ्गेन कार्य्यैक्यावगमात्। तस्माद् बाध-

* 'प्रकृतिबाधकम्'-इति पाठः रा० पुस्तके।

(१)— प्रकृतियागे।
यत्र कर्त्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्षेण उपदिश्यते सा प्रकृतिः। तत्र चास्ति मूलावान्तरभेदाद् द्वैविध्यम्। सर्वात्मना कर्मान्तरनिरपेक्षा मूलप्रकृतिः, कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते स्वयञ्च कैश्चित् कर्मभिः अपेक्षणीया भवति सेयमवान्तर-प्रकृतिः, तत्र तिस्रो मूल-प्रकृतयः, ताश्चाष्टमाध्यायस्य प्रथमपादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिताः ॥

(२)—ताण्ड्य-त्रयोदश-नवमादौ। तेषां स्वरूपाणि गेयगानस्य षोडश-प्रथमार्द्धस्य त्रयोदशादीनि त्रीणि सामानि; तेषामाधारभूमिः छन्दोग्रन्थस्य षष्ठ-द्वितीय प्रथमाया द्वितीया ऋक्।

कम्"[४२]-इति॥ ॥एकादशे त्वेकाद्युक्तितः प्रकृत-बाधकत्वम्—[४३]"तत् सर्व-बाधकं सर्वमेक-द्व्याद्युक्तितोऽथवा। अविशेषादादिमोऽन्त्यएकाद्युक्ति-विशेषतः॥ तत् पूर्वोक्तं कौत्सादि-साम-विषयः। तत्र, किं 'कौत्सं' साम प्राकृत सर्व-साम-निवर्त्तकम्, 'काण्वमपि तथेत्येकैकस्य सर्व-निवर्त्तकत्वमुच्यते? आहोस्विदेक-वचनान्त-निर्दिष्टमेकस्य निवर्त्तकं, द्विवचनान्त-निर्दिष्टं द्वयोः, बहुवचनान्त-निर्दिष्टानि बहूनाम्? तत्र नियामकाभावादाद्यः पक्षः प्राप्नोति, एकादि-वचन-रूपाणां श्रुतीनां नियामकत्वादन्त्यः पक्षोऽभ्युपेयः। तथाहि 'कौत्सं भवति' (१), 'वसिष्ठस्य जनित्रे भवतः' (२) 'क्रौञ्चानि भवन्ति' (३)-इति निवर्त्तकेषु श्रूयमाणानि एक-द्वि-बहुवचनानि निवर्त्त्यानां तत्सङ्ख्यावत्वं प्रत्यासत्त्या बोधयन्ति, किञ्च एवं सति अबाधित-साम-विषयश्चोदकोऽनुगृहीतोभवति, कृत्स्न-बाधे तु सर्वश्चोदको निरुध्यते; तस्मान्न सर्व-बाधकः"[४३]-इति॥ ॥द्वादशे स्तोम-वृद्ध्यवृद्ध्योः प्राकृत-बाधिका—[४४]"स्तोमस्थयोर्वृद्ध्यवृद्ध्योः प्राकृतः किं निवर्त्तते।

(१)—ताण्ड्यस्य तृतीयपञ्चिकायां विभिन्नस्थलयोर्दृष्टव्यौ। कौत्स-स्वरूपन्तु ऊह-गानस्य प्रथमप्रपाठक-द्वितीयार्द्धीय-दशमं साम, तन्मूलन्तु उत्तरार्चिकस्य प्रथमस्य द्वितीये द्वादशं सूक्तं; काण्व-स्वरूपन्तु ऊहगानस्य प्रथम-प्रथमान्त्यं साम, तन्मूलन्तु उत्तरार्चिकस्य प्रथमस्य द्वितीये तृतीयं सूक्तम्।

(२)—ताण्ड्य-चतुर्दशैकादशे। स्वरूपविवरणादिकन्तूक्तमेव।

(३)—ताण्ड्योनविंशस्य तृतीये। तत् स्वरूप गेयगानस्य पञ्चदशप्रपाठक-द्वितीयार्द्धस्याष्टम-नवमे सामनी; तयोराधारभूता ऋक् तु छन्दोग्रन्थस्य पञ्चम-प्रपाठक-प्रथमार्द्धस्य चतुर्थ-दशत्यां पञ्चमी।

अवृद्धावेव वाद्यः स्यात् सामोत्पत्त्युपयोगतः अवृद्धावुपयोगाय प्राकृतस्य निवर्त्तकम्। वृद्धौ पूर्वोपयोगित्वात् वृद्धौ तु न निवर्त्तकम्। सन्ति वृद्ध-स्तोमकाः अवृद्ध-स्तोमकाश्च विकृति-रूपाः क्रतवः, तत्रोभयत्रापि यानि सामान्युपदिष्टानि तैरतिदिष्टानां साम्नां निवृत्तिः स्यात्, अन्यथा सामोत्पत्ति-वैयर्थ्यात् इति पूर्वपक्षः। सिद्धान्तः स्पष्टार्थः"[४४]॥ ॥त्रयोदशे स्तोत्रे छन्दो विशेषत आवापः— "[४५]क्वापि स्तोत्रऋचि क्वापि स्यादावापस्तयोरुतिः। पवमानेषु गायत्र्यादिष्वेवाता विशेषतः। आद्यो नो परिसङ्ख्यानादत्र ह्येवेति तद्विधेः। विध्यन्तराशेषरूपमपूर्वं तद्विधीयते। अवृद्ध-स्तोमकेषु प्राकृतस्यातिदिष्टस्य साम्नउद्वापः, प्रत्यक्षोपदिष्टानामावापः, वृद्ध-स्तोमकेष्वावापः; इति स्थितं पूर्वाधिकरणे। तावेतावावापोद्वापौ यस्मिन् कस्मिंश्चित् स्तोत्रे यस्यां कस्याञ्चिदृचिस्याताम्, कुतः? नियामकाभावात्; इति पूर्वपक्षः। नो खल्वेतद् युक्तम्, एव कारेण प्रकृत-पवमान-व्यतिरिक्तेष्वाज्यादि-स्तोत्रेषु गाय[illegible]-बृहत्यनुष्टुब् व्यतिरिक्तास्वृक्षु आवापोद्वापयोः परिसङ्ख्या[illegible]त्वात्। एवकारश्चैवमाम्नायते--'त्रीणि ह वै यज्ञस्योदराणि यद् गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवावपन्त्यतएवोद्वपन्ति'-इति। ननु माभूतामन्यत्रावापोद्वापौ, विवक्षित-देशेषु कथं प्राप्नुते?-इति चेत्— अनेन वाक्येन तद्विधानात्-इति प्राप्ते ब्रूमः— नचायमर्थवादः, अनन्य-शेषत्वात्। नाप्यनुवादः अपूर्वार्थत्वात्। तस्मात् पवमानेष्वेव गायत्र्यादिषु आवापोद्वापौ"[४५]॥ ॥ चतुर्विंशे तु "कण्वरथन्तरं" स्व-योनावेव— [४६]"बृहद्रथन्तरैकीय-योनौ कण्वरथन्तरं। रथ-

न्तरस्यैवयोनौ किं स्व-योनावुताग्निमः । चोदकस्याविशेषेण द्वितीयोनाम-साम्यतः । अनङ्गत्वान्नातिदेशः स्व-योनौ पठितत्वतः । वैश्य-स्तोमे पृष्ठ-स्तोत्रे साम-विशेषोविहितः—'काण्व-रथन्तरं पृष्ठं भवति' (१) इति, प्रकृतौ पृष्ठस्तोत्रे बृहद्रथन्तर-सामनी विकल्पिते, 'त्वामिद्धि हवामहे (छ० ३-१-५-२)' इतीयमृक् बृहतो योनिः— 'अभि त्वा शूर (छ० ३-१-५-१)' इति रथन्तरस्य— 'पुनानः सोम (छ० ५-१-३-१)'-इति काण्व-रथन्तरस्य । तत्र बृहद्रथन्तरयोरन्यतरस्य साम्नोयोनौ काण्व-रथन्तरं गेयम्, कुतः ? चोदक-प्राप्तयोर्विशेष-नियामकाभावात् । अथवा रथन्तरस्यैव योनौ गेयम्, कुतः ? रथन्तरेति-नाम-साम्यस्य धर्मातिदेशार्थत्वेन नियामकत्वात् (२)। नैतद् युक्तम्, बृहद्रथन्तर-साम्नोरेव प्रकृतावङ्गत्वेन विधानम्, न तु तद्योन्योः, अतो नास्ति तयोः (३) अतिदेशतः प्राप्तिः । तस्मात् स्व-योनौ गेयमिति परिशिष्यते (४)। प्राप्तिश्च सामगानामुत्तरा-ग्रन्थ-पाठादवगन्तव्या (५)। एवं सतिश्रुत-हान्यश्रुत-कल्पने न भवि-

(१)—ताण्ड्याष्टादशप्रपाठकस्य षष्ठखण्डे । तत्स्वरूपम् ऊहगानस्य चतुर्थ-प्रथमस्य चतुर्थं साम ; तदाधारभूमिस्तु उत्तरार्चिकस्य प्रथम-प्रथम-षष्ठ्याः प्रथमं सूक्तम् ।

(२)—प्रकृतिवद् विकृतिः कर्त्तव्येतिशास्त्रादिति यावत् ।

(३)—तद्-योन्योः कदा कदा प्राप्तिः स्यात्, यदि प्रकृतियागे तयोः स्तुतिरूपांगत्वेन विधानं, न च तथेति न तयोरेव विकृतावतिदेशः ।

(४)—स्व-योनौ पुनानः सोमेत्यस्यामृचि कण्वरथन्तरं गेयम्, तच्च गेयगानस्य चतुर्दश-प्रथमस्योनविंशतमं साम । कण्वरथन्तरपृष्ठन्तु तृचनिष्पाद्यम् ऊहे प्रसिद्धम् ।

(५)—उत्तराग्रन्थ-पाठश्चैवम्—अभित्वेति १,१,११,१, त्वामिद्धिहवेति २,१,१२,१ ; पुनानः सोमेति १,१,९,१ ।

ष्यतः"४६ ॥ ॥ पञ्चविंशे तु कण्वरथन्तरं स्वकीययोरेवोत्तरयोर्गेयम्—४७"सन्देह-निर्णयौ पूर्ववदेवोत्तरयोर्ऋचोः । योनि-त्यागः समस्तेन तृच-शब्देन बाधनात् ॥ 'एकं साम तृचे क्रियते'-इति श्रुतेः कण्वरथन्तर-साम्नः ऋचां त्रयमाश्रयः, तत्रैका स्व-योनिः इतरे स्व-योन्युत्तरे। एवं बृहद्रथन्तर-साम्नोर्द्रष्टव्यम्। तत्र बृहदुत्तरयोः रथन्तरोत्तरयोर्वा अतिदेश-प्राप्ताविशेषेण स्वेच्छया गेयमित्याद्यः पक्षः। नाम-साम्याद्रथन्तरोत्तरयोरेव गेयमिति द्वितीयः पक्षः। प्रकृतावृचोः * साक्षादङ्गत्वाभावेऽपि साम-द्वारकमङ्गत्वमङ्गीकृत्य चोदक-प्राप्त्या पक्ष-द्वयोपन्यासः। योनिवदुत्तरयोर्ग्रन्थ-पठितत्वात् स्व-योन्युत्तरयोर्गेयमिति तृतीयः पक्षो राद्धान्तः। (१) बृहद्रथन्तरोत्तरयोः स्व-योन्युत्तरयोर्वा गीयताम्, सर्वथापि स्व-योन्यृक्-त्याग ऋगन्तर-परिग्रहश्च समानः; तथा सति चोदकोऽत्र प्रापकः-इति (२) पूर्वपक्षिणोऽभ्यधिका शङ्का। तृच-शब्दः समानच्छन्दस्कानामेकदेवत्यानामृचां चये

* 'ऋचः'-इति पाठः रा० पुस्तकस्य ।

(१)—पूर्वाधिकरणादत्र विशेषः कोविचारः—इति दर्शयति बृहदित्यादिना।

(२)—अक्षरविशिष्टस्य स्वरादेर्नास्ति सामत्वमपितु स्वरादेरेवेति पूर्वं सिद्धान्तितम्, तथाच पुनान-इति सूक्तस्य दुहान-इति द्वितीयायामृचि अश्वक्रमिति तृतीयायामृचि च कण्वरथन्तर-गानकाले पुनान इत्याद्यामृचं त्यजत एवेति स्वयोनित्याग ऋगन्तरपक्षो गले पतित एव, एवञ्च अपरामृचमपि आधारतया ग्रहणे नास्ति वैषम्यमिति प्रकृतिवद्विकृतिरिति चोदकबलात् प्रकृतिमार्गं श्रुतस्य रथन्तरस्य इतरत्र योनौ अस्य आधारभते भवितव्ये-इति पूर्वपक्ष्याशयः।

प्रसिद्धः (१) ; अतस्तृच-श्रुत्या प्रत्यक्षया, चोदक-प्राप्तस्य बाधः-इति राद्धान्ताशयः इति"[४७]-इति ॥

पञ्चम-पादस्य द्वितीयेऽधिकरणे तिसृष्वित्यग्रिमस्तृचोविवक्षितः—[४८]"तृचाद्यासु तृचेवाद्ये तिसृष्वित्युच्यतेऽग्रिमः। त्रिच्छन्दस्त्वात् प्राकृतं स्यात् क्रमादत्र तृचोऽखिलः॥ एक-सङ्ख्यायास्त्रि-सङ्ख्यायाश्च व्यतिषङ्ग-विधानात् 'एकत्रिक-नामकः' कश्चित् क्रतुर्भवति, सचैवं श्रूयते—'अथैषएकत्रिकस्तस्यैकस्यां बहिष्पवमानं (२) तिसृषु होतुराज्यम् (३) एकस्यां मैत्रावरुणस्य (४) तिसृषु

---

(१)—ताण्ड्यादौ।

(२)—एतत्स्वरूपं तदाधार-स्वरूपादिकञ्च पर्वं वर्णितम्।

(३)—"पान्तमावो अन्धसः"-इति छन्दोग्रन्थस्य द्वितीय-द्वितीय-द्वितीये प्रथमा ऋक् अस्यामुत्पन्नानि त्रीणि सामानि श्रुतानि, तानि च गेयगानस्य चतुर्थ-द्वितीये षोडशादीनि 'वैतहव्य'-नामकानि, तत्रान्त्यमोकोनिधनं यद् वैतहव्यं तन्नात्र ग्राह्यं, तिसृष्वित्यर्थः, अपितु उह्यगानस्य प्रथम-प्रथमे श्रुतमष्टादशमोकोनिधनाख्यमेव ग्राह्यम्, तदाधारभूतस्तृचस्तु उत्तराग्रन्थस्य प्रथम-द्वितीये प्रथम-सूक्तात्मकः, तत्र प्रथमा "पान्तमावो" इत्याद्या छन्दसि श्रुतैव, द्वितीया "पुरुहूतं पुरुष्टुतमित्याद्या, तृतीया "इन्द्रइन्नो"-इत्याद्या। इति प्रथम पर्याये होतुराज्यम्। द्वितीयपर्याये "अयन्तइन्द्रसोम"-इति उत्तराग्रन्थस्य प्रथम-द्वितीये पञ्चमं त्यृचात्मकं सूक्तम्, तत्र तिसृषु गोमूत्रग्रन्थस्य प्रथम-द्वितीये द्वितीयं साम दैवोदासाख्यम्। तृतीये "इद ह्यन्वोजसा"-इति उत्तराग्रन्थस्य प्रथम-द्वितीयेत्यृचात्मकं नवम सूक्तम्, तत्र तिसृषु गौतमग्रन्थस्य—साधुच्छन्दसाख्यं साम।' अत्र प्रमाणं ताण्ड्य नवम-द्वितीयं खण्डम्।

(४)—अस्ति "प्रवइन्द्रायमादनम्"—इति छन्दोग्रन्थस्य द्वितीय-द्वितीय-द्वितीय-द्वितीया ऋक्, अस्यामुत्पन्नानि षट् सामानि, तानि च गेयगानस्य चतुर्थ-द्वितीये ऊनविंशादीनि, तत्र तृतीयं "गौरीवीतं" तदेवात्र प्रथमपर्याये मैत्रावरुणस्य। अस्ति "आतूनइन्द्रक्षुमन्तम्"—इति छन्दोग्रन्थस्य द्वितीय द्वितीय तृतीये तृतीये ऋक्,

ब्राह्मणाच्छंसिनः (१) एकस्यामच्छावाकस्य (२) तिसृषु माध्यन्दिनः पवमानः'-इति। सन्ति प्रकृतौ माध्यन्दिन-पवमानस्य त्रयस्तृचाः—'उच्चा ते जातम्'-इत्ययं (उ,१प्र,८सू,१।२।३ ऋ) प्रथमो गायत्रीच्छन्दस्कः, 'पुनानः सोम' इत्ययं (उ,१प्र,९सू,१।२।३ ऋ) द्वितीयो बृहतीच्छन्दस्कः, 'प्र तु द्रव'-इत्ययं (उ,११प्र,१०सू,१।२।३ऋ) तृतीयस्त्रिष्टुप्-छन्दस्कः। एतदेवाभिप्रेत्य श्रुतम्, 'तिसृ-

---

अस्यामुत्पन्नानि चत्वारि सामानि, तानिच गेयगानस्य पञ्चम-प्रथमे षोडशादीनि, तत्र तृतीयमाकूपारम्, तदेवात्र द्वितीयपर्य्याये मैत्रावरुणस्य। अस्ति "आत्वेतानिषीदत" इति छन्दोग्रन्थस्य द्वितीय-द्वितीय-द्वितीये दशमी ऋक्, अस्यामुत्पन्नं गेयगानस्य पञ्चम-प्रथमे श्रुतं 'द्वैगतिथ'-नामकं साम, तदेवात्र द्वितीये पर्याये मैत्रावरुणस्य। अत्र प्रमाणं ता.९.२। किञ्च "प्रवइन्द्रायेत्याद्या ऋचः सन्ति चोत्तरा ग्रन्थे, सन्ति च तदाधारकानि गानानि तत्तन्नामभिः प्रसिद्धानि ऊहग्रन्थे, परं तान्यत्र न गृह्यन्ते एकस्यामिति श्रवणात्।

(१)—अस्ति "वयमुत्वातदिदर्थाः"—इति उत्तराग्रन्थस्य प्रथम द्वितीये तृतीयं तृचम्, तत्र ऊहगानस्य प्रथम-प्रथमान्त्यं काण्वनामकं साम, तदेवात्र प्रथमपर्याये। अस्ति "अभित्वा वृषभासुतः"—इत्याद्याः उत्तराग्रन्थस्य प्रथमद्वितीये सप्तमसूक्तात्मिकास्तृचः, तत्रोहगानस्य प्रथम-द्वितीये पञ्चममार्षभाख्यं साम, तदेवात्र द्वितीयपर्याये। अस्ति "योगेयोगेतवस्तरम्" इत्याद्याः उत्तराग्रन्थस्य प्रथम-द्वितीये एकादश-सूक्तात्मिकास्तृचः, तत्रोहगानस्य प्रथम-द्वितीये श्रुतं दशमं कौत्सनामकं साम, तदेवात्र तृतीयपर्याये गृह्यते।

(२)—अस्ति "इन्द्रायमद्वने सुतम्" -इति छन्दोग्रन्थस्य द्वितीय द्वितीय-द्वितीये चतुर्थी ऋक्, अस्यामुत्पन्नानि त्रीणि सामानि, तानि च गेयगानस्य चतुर्थ द्वितीये सप्तविंशत्यादीनि, तत्र, तृतीयं शौनकञ्चाभिधं साम, तदेवात्र प्रथम-पर्याये। अस्ति "इदं वसो सुतमन्धः"—इति द्वितीय-प्रथम-तृतीयायां दशमी ऋक्, अस्यामुत्पन्नानि त्रीणि "गार"-नामकानि गेयगानस्य तृतीय-द्वितीये एकविंशत्यादीनि सामानि, तत् तृतीयमिह द्वितीय-पर्याये, ऊहग्रन्थे प्रथम-द्वितीये तस्यैव गारमिति प्रथितत्वात्।

न्द्राआवापोमाध्यन्दिनः’-इति (१)। एवं सति एकत्रिकस्य माध्यन्दिन-पवमाने तिसृष्विति यदुक्तं तत्र त्रयाणां तृचाना-मायास्तिस्रः ऋचो ग्राह्याः? किं वा प्रथम-तृच-स्थाः क्रम-पठितास्तिस्रः? इति संशयः। तत्र त्रिच्छन्दस्त्व-श्रुत्या प्रबलया दुर्बलं पाठ-क्रमं बाधित्वा प्रथम-पचो ग्राह्यः—इति प्राप्ते, अभिधीयते—यदेतत् त्रिच्छन्दस्त्वं तदेतत् प्राकृतम्, तत्र छन्दस्त्रयोपेतस्य तृच-त्रयस्योपदिष्टत्वात्। विकृतावपि तत्सर्वमतिदिष्टमिति चेत्— वाढम्! अतएव पाठ-क्रमोऽप्यतिदिष्टः, तथासति प्रक्रान्त-गायत्री-छन्दस्कस्य-तृचस्य समाप्तौ सत्यां पश्चाद् बृहतीच्छन्दस्के तृचे प्रथमायाः ऋचः प्रारम्भावसरः स चारम्भस्तिसृषु-इति विशेष-विधानेन बाध्यते; तस्मादाद्यस्तृचोनिखिलोग्राह्यः”[४८] (२)॥ ॥ तृतीये धूर्गानमेकस्यामृचि कर्त्तव्यम्—[४९]“तृचे स्यादृचि वैकस्यां धूर्गानं प्रकृताविव। तृचे भवेदिहैकस्यां श्रुत्यावृत्ति-विधानतः। एकत्रिकएव क्रतौ व्यति-

---

अस्ति “इन्द्रसुतेषु सोमेषु”—इति छन्दोग्रन्थस्य चतुर्थ-द्वितीये पञ्चम्यां प्रथमा ऋक्, अस्यामुत्पन्नानि त्रीणि सामानि, तानि च गेयगानस्य दशम-प्रथमे चतुर्विंशत्यादीनि, तत्र तृतीयं “कौत्सम”-नामकं, तदेवात्र तृतीयपर्याये पठनीयं भवति। अत्र सर्वत्र मानं ताण्ड्यनवमद्वितीयमार्षेयस्य ब्राह्मणम्।

(१)—तदेतत् स्फुटं ताण्ड्यमप्तमतृतीये, तथाहि-“त्रिभिश्च छन्दोभिः”—इत्यादि, “त्रिभिः गायत्री त्रिष्टुब् बार्हतैरिति तद्भाष्यम्।

(२)—तत्र “उच्चातेजातमन्धसः”-इत्यादिः प्रथमा, “सनइन्द्रा ययज्यवे”-इति द्वितीया, “एनाविश्वान्यर्य्या”-इति तृतीया ऋक्। गानञ्चैतत् ऊहगानस्य द्वादश प्रथमस्य प्रथमं प्रसिद्धम्। त्रिच्छन्दस्त्वन्तु त्रिभिःपर्य्यायैरुपपद्यते नत्वेकस्मिन्नेव पर्य्याये इति सिद्धान्ताशयः।

षड्गणैकस्यां च स्तोत्रेषु सम्पाद्यमानेषु यद्गानं तत् किं तृचे स्यात् ? उतैकस्यामृचि ? इति संशयः । तत्र चोदकेन तृचे भवेदिति प्राप्ते, ब्रूमः—इहैकत्रिक क्रतौ एकस्यामृचि गानं भवेत्, कुतः ? 'आवृत्तं धूर्षु स्तुवते'-इति आवृत्ति-विधानात् । तृचे गानेऽपि साम्नस्त्रिरावृत्तिर्भवेत् ? न, आवृत्तेः स्तुति-विशेषणत्वात् । गुण-सङ्कीर्त्तन-परः पद-समूहः स्तुतिः, तच्च ऋगावृत्तिं विना तिसृष्वृक्षु न सिध्यति । तस्मादेकस्यां धूर्गानम्"[४९]॥ ॥षष्ठे स्तोम-वृद्धिरागमाद् भवेत् – [५०]"स्तोम-वृद्धिः किमभ्यासादागमाद्वाग्रिमो यतः । न काल्पामश्रुतं मैवं सङ्ख्यावापादि-लिङ्गतः । विवृद्ध-स्तोमकः क्रतुरेवमाम्नायते, 'एकविंशेनातिरात्रेण प्रजा-कामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठा-कामम्' इति । प्रकृतिगतेभ्यः (१) त्रिवृत्-पञ्चदशादिस्तोमेभ्यो विवृद्धाः एकविंश-त्रिणव-त्रयस्त्रिंश-स्तोमाः (२), तेषु किं प्राकृतानां (३) साम्नाम् अभ्यासाद् वृद्धिर्भवति ? किं वा सामान्तरागमात् ? इति संशयः । अश्रुतस्य सामा गमस्य कल्पयितुमशक्यत्वाद् अभ्यासाद् वृद्धिः इति प्राप्ते, ब्रूमः— (४)-अभ्यासोऽपि न साक्षाच्छ्रुतः, किन्त्वेकविंशादि-सङ्ख्या-

(१)—प्रकृतियागो ज्योतिष्टोमादिः तद्गतेभ्यः ।

(२)—एषामुपजनिः ताण्ड्य-पञ्च-द्वितीयादौ । अत्र ताण्ड्य दशम-प्रथमस्थानि वाक्यानि ध्येयानि, तथाहि—"आदित्य एवैकविंशस्यायतनम्"-इत्यादि, "त्रिवृद्देव त्रिणवस्यायतनम्"-इत्यादि, "देवता एव त्रयस्त्रिंशस्यायतनम्"-इत्यादि ।

(३)—प्रकृतियागगतत्रिवृदादिस्तोमसूक्तानाम् ।

(४)—यदुक्तं पुरस्तात् पञ्चमाध्याय-तृतीयपाद-पञ्चमाधिकरण-व्याख्याने" किन्तु सामागमेन स्तोमपूरणमिति दशमे वर्ण्यते" इति तदेवात्र अभ्यासोऽपीत्यादिना वक्ति ।

पूरणाय कल्प्यते, सङ्ख्या च द्रव्य-गता, भिन्न-द्रव्यैरेव पूर्य्यते नत्वेकद्रव्यावृत्त्या, नह्यष्टकृत्वएक-घटमानीय मन्द्रं हे सन्त्यष्टौ घटाः-इति व्यवहरन्ति; ततः स्तोमावयव-द्रव्यगता सङ्ख्या तदवयवभूतानां साम्नां पदार्थानां भेदं गमयति, स च भेदः सामान्तरागम-लिङ्गम्; अत्र स्थैवावपन्तीत्यावापोद्देशेन देशविशेष-विधिरपरं लिङ्गम्— सामान्तरोत्पत्त्यर्थमन्यल्लिङ्गम्; तस्मादागमेन वृद्धिः"[५०] (१)॥

सप्तमे बहिष्पवमान-वृद्धावृचआगमः—[५१]"किं बहिष्पवमानेऽ साम्नर्चा वाभिपूरणम्। साम्ना पूर्वोक्तितोमैवं सामैकत्व-पराकृतः॥ प्रकृतौ प्रातः सवने बहिष्पवमानस्य अविवृद्धः स्तोमः, तस्य विकृतिषु वृद्धौ सत्यां पूर्वोक्त-रीत्या सामान्तरागमे प्राप्ते, ब्रूमः—'एकं हि तत्र साम'-इति बहिष्पवमानं प्रकृत्य सामैकत्व मान्नायते, अतो न सामान्तरागमः सम्भवति। एवं तर्ह्य-भ्यासेन सङ्ख्या-पूरणमस्तु-इति, न वाच्यम्, 'पराग् बहिष्पवमानेन स्तुवन्ति'-इति (२) पराक्-शब्देनाभ्यास-प्रतिषेधात्; तस्मादृगागमः"[५१]॥

---

(१)—ताण्ड्यस्य द्वितीयप्रपाठक-चतुर्दशादि-खण्डत्रयाणां तृतीयप्रपाठक-प्रथमादि-सप्तखण्डानाञ्च परिदर्शनात्, अपिच "वर्द्धमानेषु स्तोमेषु प्रथमस्य पर्य्यायस्य प्रथमा तृचभागा तस्यास्त्रिर्वचनम्, मध्यमावापस्थानम्, उत्तमा परिचरा तृचभागावापस्थानम्"-इति लाट्यायन-सूत्रपर्य्यालोचनात्, एष विचारो भवेद् बोध्यविषयोऽविवादः।

(२)—श्रुतिपाठस्तु नैवम्, परमर्थत एषएव, तथाहि—"अमुष्मै वा एतल्लोकाय स्तुवन्ति यद् बहिष्पवमानम् सकृद्धि इताभिः पराचीभिः स्तुवन्ति"-इत्यादिः, पराचीभिर्बहिष्पवमानीभिः स्तुवते"-इत्यादिश्च ताण्ड्य-षष्ठाष्टमे।

षष्ठपादस्याद्येऽधिकरणे एकं साम तृचे गेयम्—[५१]"सामैकस्यां तृचे वास्यादाद्यः स्वाध्यायवद् भवेत् । वचनाल्लिङ्ग-संयुक्तात् स्तोत्रे साम तृचे भवेत् पवमानाज्य-पृष्ठादि-स्तोत्रेषु यद् विहितं रथन्तर-बृहद्-वैरूपादि-साम अध्येतारः एकस्यामृच्यधीयते, तत् किं स्तोत्र-प्रयोग-कालेऽप्येकस्यामृचि गेयम्? किं वा तृचे गेयम्? इति संशयः (१) अध्ययनस्यानुष्ठानार्थत्वाद् यथाध्ययनमेकस्यामृचि साम्नः कृतं तथैकस्यामेव साम गेयम् * इति पूर्वपक्षः ।

* "यथाध्ययनमेकस्यामृचि सामगेयम्"-इति न्यून-पाठः गो० मा० पुस्तकयोः ।

(१)—अत्रेदं तत्त्वम्—अस्ति छन्दोग्रन्थस्य तृतीय-प्रथम पञ्चम्यां प्रथमा ऋक्, तस्यां गीतं रथन्तरम्, तच्च अरण्यगानस्य द्वितीय-प्रथमे एकविंशतितमं साम ; तथा छन्दोग्रन्थस्य तृतीय-प्रथम पञ्चम्यां-द्वितीया ऋक्, तस्यां गीतं बृहत् तच्च अरण्यगानस्य प्रथम-प्रथमे सप्तविंशतितमं साम; तथा छन्दोग्रन्थस्य तृतीय-द्वितीय चतुर्थ्यां षष्ठी ऋक्, तस्यां वैरूपसञ्ज्ञकान्यष्टौ सामानि, तत्र प्रथमम् अजोवैरूपम्, द्वितीयं ह्रस्ववैरूपम्, तृतीयं इडदोपशवैरूपं पञ्चनिधनवैरूपं वा, चतुर्थम् षण्णिधनवैरूपम्, पञ्चमं सप्तनिधनवैरूपम्, षष्ठम् अष्टानिधनवैरूपम्, सप्तमं द्वादशनिधनवैरूपम्, अष्टमम् पुष्पवैरूपम् ; (अत्र सामसामविधानब्राह्मणस्य तृतीयप्रपाठकाष्टमखण्डम्) तानि च अरण्यगानस्यारम्भे एव श्रुतानि । एवम् अस्ति उत्तराग्रन्थस्य प्रथम-प्रथमैकादशे प्रथमस्तृचः, तत्र च गीतं रथन्तरम्, तद्धि ऊह्यगानस्यादिमं साम ; तथा उत्तराग्रन्थस्य द्वितीय प्रथम-द्वादशे प्रथमस्तृचः, तत्र च गीतं बृहत्, तद्धि ऊह्यगानस्य प्रथम-प्रथमे पञ्चमं साम ; तथा उत्तराग्रन्थस्य द्वितीय-द्वितीयैकादशे प्रथमस्तृचः, तत्र च गीतं "(पञ्चनिधनं) वैरूपम्", तद्धि ऊह्यगानस्य प्रथमे सप्तमं साम । तदत्र रथन्तरं गेयमिति विहिते अरण्यगाने श्रुतं छन्दोग्रन्थीयैकस्यामृच्युतपञ्चं गातव्यमाहोस्वित् ऊह्यगाने श्रुतम् उत्तराग्रन्थीयतृचवोऽतकं गातव्यमिति शङ्कास्वरूपः । एवं बृहद्वैरूपयोरन्यत्र च बोध्यम् ।

'अष्टाक्षरेण प्रथमायाः ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोः'-इति(१) तिसृष्वृक्षु प्रस्तोत्रा गातव्य-भागो निरूप्यते, तदिदं तृचस्य लिङ्गम्—'ऋक्सामेवावमिथुनी सम्भवाव'-इत्यादौ ऋग्देवता-सामदेवतयोः संवाद-रूपेऽर्थवादे साम-देवतैकामृचं द्वे ऋचौ च प्रत्याख्याय तिस्रः ऋचोऽङ्गीचकार, तदिदम् अपरं लिङ्गम्; ताभ्यां लिङ्गाभ्यामुपबृंहिताद् एकं साम तृचे गीयते स्तोत्रियम्'-इतिवचनात् तृचे गातव्यमिति"[५२]॥ ॥द्वितीये स्वर्दृक्-शब्दो मीलनावधिः—[५३]"स्वर्दृक-शब्दे वीक्षणे च किं स्यादङ्गाङ्गिताथवा। मीलनावधिताद्योस्तु भिन्न-वाक्येन तद्विधेः। प्रतिशब्देनावधिर्हि द्योत्यो वाक्यं न भिद्यते। सत्येवं मीलनस्यापि विधिर्नोत्तरयोर्भवेत्। अस्ति रथन्तर-साम्नोयोनौ 'अभित्वाशूर'-इत्यस्यामृचि स्वर्दृक्-शब्दः 'ईशानमस्य जगतः स्वर्दृशम्'-इत्याम्नातः (२) अस्ति चोद्गातुः कर्त्तृता तृचे 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्

(१)—नैवमानुपूर्विकः श्रुतिपाठः; तथाहि—"पशवो वै बृहद्रथन्तरे अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौत्यष्टाशफांस्तत् पशूनवरुन्धे, द्व्यक्षरेणोत्तरयोर्ऋचोः प्रस्तौति द्विपाद् यजमानो यजमानमेव यज्ञे पशुषु प्रतिष्ठापयति, पञ्चाक्षरेण रथन्तरस्य प्रतिहरति पाङ्क्तांस्तत् पशूनवरुन्धे"-इति ताण्ड्य सप्तम-सप्तमाद्योभागः।

(२)—तद्यथा,

३ १ २ ३ १ २ ३ १ २
"अभि त्वा शूर नोनुमो दुग्धाइव धेनवः।

१ २ ३ १र २र ३ २३ १ २ ३ १ २
ईशानमस्यजगतः स्वर्दृशमीशानमिन्द्रतस्थुषः"-

इति छन्दोग्रन्थस्य तृतीय-प्रथम-पञ्चम्यां प्रथमा ऋक, इयमेव उत्तराग्रन्थस्य प्रथम-प्रथमैकादशस्य तृचस्याद्या। अत्रारण्ये यद् गीत तदेकर्ङ्मूलकत्वात् एकर्चं रथन्तरम्, यद्धि ऊह्य-प्रथम-प्रथमे गीत तत्तृचमूलकत्वात् तृच रथन्तरमिति व्यपदिश्यते

स्वर्दृशं प्रति वीचेत'-इति (१) श्रुतेः। तत्र संशयः। किं स्वर्दृक्-शब्दोच्चारण-वीक्षणयोरङ्गाङ्गिभावोऽत्र विधीयते? किं वा विधीयमान-सम्मीलनावधित्वेन स्वर्दृक्-शब्दोच्चारणं निर्दिश्यते? इति। तत्र सम्मीलन-वाक्याद् वीक्षण-वाक्यं भिन्नं ततो न मीलनावधित्वेनान्वयः सम्भवतीति। किञ्च वीचेतेति लिङ्-प्रत्ययोऽत्र विधायकः श्रूयते, ततः स्वर्दृक् शब्दोच्चारणं वीक्षणाङ्गम्, वीक्षणं वा तदङ्गम्-इत्यङ्गाङ्गिभावोऽभ्युपेयः (२)। तथा सति स्वर्दृक्-शब्दरहितयोर्ऋचोर्गीयमाने रथन्तरेऽपि विहित-सम्मीलनानुवृत्तिः फलिष्यतीति पूर्वपक्षः। स्वर्दृशंप्रतीत्यनेन कर्मप्रवचनीयेन (३) प्रतिशब्देन स्वर्दृक्-शब्दोच्चारणस्य मीलन कालावधित्वं द्योत्यते। न चात्र भिन्न-वाक्यत्वम्, एक वाक्यत्वसम्भवात्। तथाहि विरोध-परिहाराय स्वतएव प्राप्तत्वाद् वीक्षणं न विधेयम्। तथा सति आ स्वर्दृक् शब्दोच्चारणात् सम्मीलयेदित्येकं वाक्यं सम्पद्यते। एवंसत्युत्तरयोर्ऋचोर्मीलन-विध्यभावः फलिष्यतीति राद्धान्तः"५२ (४)॥ ॥ तृतीये बृहद्रथन्तरयोर्दिन-भेदेन

(१) ताण्ड्य-सप्तम सप्तमे। अस्याएव श्रुतेः सम्मीलयेदित्यन्त नवमाध्याय-द्वितीय-पाद-पञ्चदशाधिकरण-व्याख्यायां (४२९० पु) रस्माद्पन्यस्तमेकदा।

(२)—अयमेवाङ्गाङ्गिभावः शेषशेषिभावो-गुणगुणिभावश्चोच्यते। यद् यस्योपकारकं तत्तस्याङ्गम् इत्यङ्गलक्षणं शेष लक्षणञ्च, तदाह "शेषः परार्थत्वात् (जै३,१.२)"

(३)—"लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः (१,४,९०) इति पाणिनिस्मरणात्, अत्र लक्षणार्थे कर्मप्रवचनीय-संज्ञा, तथाच स्वर्दृशशब्दं सल्लक्ष्य यावत् स्वर्दृशमिति न गीयते तावत्कालं सम्मीलनेन भाव्यमिति तस्याः श्रुतेरर्थः सम्पद्यते।

(४)—परमतार्थे ताण्ड्य भाष्य-विरोधो हठात् प्रतीयते, तथाहि—"तस्मिन् प्लूयमाने चक्षुः 'सम्मीलेत' मुकुलितं कुर्यात्, पुनः 'स्वर्दृशं' स्वर्दृशमिति पदे गीयमाने 'प्रतिवीचेत' अवलोकयेत" इति (तां ७-७)।

प्रयोगः—[५९]"गावामयनिके * पृष्ठ्यः षडहे प्रत्यहं द्वयं। बृहद्रथन्तरं चोत भवेत् किञ्चित् क्वचिद्दिने। द्वन्द्व-गर्भ-बहुव्रीहे रायोऽन्येऽपि समोह्यतो। अन्योन्य-निरपेक्षस्य चोदकादन्तिमोभवेत्। द्वादशाहे (१) पृष्ठ्यः षडहउत्पन्नः (२) तत्र षण्णामप्यह्नां क्रमेण रथन्तर-बृहद्-वैरूप-वैराज-शक्वर-रैवतानि सामानि (३) विहितानि (४)। गवामयने (५) तु विकृतिरूपोयः

* "गावामायनिके" इत्युभयपदवृद्धि पाठः गौ पुस्तके।

(१)—द्वादशाहस्तावद् द्विविधः, सत्रात्मकोऽहीनात्मकश्च; पुनरपि प्रत्येकं द्वेधा समूढोव्यूढश्च, यत्र कामव्यूहनाभावः स आद्यः तदन्योद्वितीयः। इह सत्रात्मकः ताण्ड्य दशम-तृतीयखण्डादिना विहितः, संवत्सरमाध्यो ग्राह्यः। तत्र च अहःशब्देन सवनत्रयात्मकः सोमयागः, तं द्वादशाह-संज्ञं सोमयागमनृद्धिकामोऽत्यतिष्ठदिति स्फुटम्।

(२)—संवत्सरमाध्यस्य यागमात्रस्य द्वौ षडहौ भवतः अभिप्लवः पृष्ठ्येति; तत्र एकस्मिन् मासि आभिप्लविक-षडहाः चत्वारः, पृष्ठ्यः षडहः एकः, इत्थं षडह-पञ्चकैस्त्रिंशद्दिनानि भवन्ति। स्पष्टमेतत् ताण्ड्य-चतुर्थ-प्रथम-खण्डादौ।

(३)—पृष्ठ्यडहे याः स्तोत्रियाः सामानि च, तेषामसाङ्कर्थ्याय प्रत्यहं विभिन्नानि रूपाणि ताण्ड्य दशमाध्याय-षष्ठ-खण्डानन्तरं षड्भिः खण्डैः प्रदर्शितानि, तत्रादितस्त्रिभिः स्तोत्रियाणां रूपाणि, ततस्त्रिभिः साम्नां रूपाणीति विवेकः।

(४)—एतदाकाराः ऊह्यगानस्य प्रथम-पञ्चम-सप्तम-दशम-पञ्चदशाष्टादश संख्यक गानदर्शनाद्बोध्याः।

(५)—गवामयननामकं सत्रमस्ति, तच्च द्विविधम्; "गावो वा एतत् सत्रमासत तासां दशसु मासुः शृङ्गाण्यजायन्त"-इत्याद्याख्यायिकया दशमासमनिर्वर्त्त्यम्; तासां द्वादशसु मासेसु शृङ्गाणि प्रावर्त्तन्त"-इत्याद्याख्यायिकया द्वादशमासमनिर्वर्त्यञ्च; श्रूयते चेतत् समस्तं ताण्ड्य-चतुर्थ-प्रपाठकारम्भ खण्डे। तत्र अहर्नियमस्त्वेवम्—प्रायणीयोऽतिरात्रः प्रथममहः, चतुर्विंशो द्वितीयमहः, उकथस्तृतीयमहः ज्योतिगा-चतुर्थमहः, आयुर्गौरिति पञ्चममहः, आयुर्ज्योतिरिति षष्ठाहः, एषएव षडहः आभिप्लवि-

पृष्ठ्यः षडहः, तत्र श्रूयते— "पृष्ठ्यः षडहो बृहद्रथन्तरसाम,"-इति चोदक-प्राप्तयोः बृहद्रथन्तरयोः पुनर्विधानात् वैरूपादि-निवृत्तिः। ततः क्रियमाणं बृहद्रथन्तरं सामद्वयं किं प्रत्यहं कर्तव्यम्? किं वा केषुचिदहःसु बृहत्, केषुचिद्रथन्तरम्? इति

कउच्यते; एवं चतुर्भिराभिप्लविकैश्चतुर्विंशत्यहानि भवन्ति, ततः त्रिवृत्-स्तोम-साध्यः एकाहः पञ्चदशस्तोम-साध्यो द्वितीयाहः, सप्तदश स्तोम-साध्यस्तृतीयमहः, एकविंश स्तोम साध्यश्चतुर्थाहः, त्रिणव-स्तोम-साध्यः पञ्चमाहः, त्रयस्त्रिंश-स्तोम-साध्यः षष्ठाहः, सोऽयं षडहः पृष्ठ्य उच्यते; पूर्वविहित ाभिप्लविकषडहचतुष्टयैः सहास्य योगे त्रिंशद्दिनात्मक एक मासः सम्पन्नः। द्वितीय-तृतीय-चतुर्थ-पञ्चम-मासास्त्वेवमेव। षष्ठमासस्याद्यान्यष्टादश-दिनानि आभिप्लविकषडहत्रयात्मकानि, ऊनविंशत्याद्याः पृष्ठ्यः षडहः-इति चतुर्विंशतिः, पञ्चविंशतितममहोऽभिजित्, ततस्त्रीणि दिनानि प्रथमादि-स्वर-साम त्रय-साध्यानि, ऊनत्रिंशत्तमाहः प्रायणीयः, त्रिंशत्तमश्चतुर्विंशाख्यकम्। इत्थं सत्त्रस्य पूर्वार्द्धं भवति। उत्तरपक्ष मासानां प्रथममासस्य प्रथममहस्तृतीयस्वरसामसाध्यम्, द्वितीयमहो द्वितीय स्वरसामसाध्यम्, तृतीयमहः प्रथम-स्वरसाम-साध्यम्, चतुर्थमहो विश्वजिदाख्यम्, (पञ्च-मादीनि षट् दिनानि पृष्ठ्य-संज्ञकानि तत्र) त्रयस्त्रिंशस्तोमसाध्यं पञ्चममहः, त्रिणव-स्तोमसाध्यं षष्ठमहः, एकविंशस्तोमसाध्यं सप्तममहः, सप्तदशस्तोमसाध्यमष्टममहः, पञ्च दशस्तोमसाध्यं नवममहः, त्रिवृत्स्तोमसाध्यं दशममहः, ततोऽभिप्लवाः षडहास्त्रयः-इत्य ष्टाविंशतिः, ऊनविंशतममहो महाव्रताख्यं, अतिरात्राख्यश्च त्रिंशत्तमम्। द्वितीयादिषु मासचतुष्टये प्रथमं दिनषट्कं पृष्ठ्यषडहः ततः पूर्वोक्त प्रतिलोमेनानुष्ठिताश्चत्वारः आभिप्लविकाः षडहाः अन्त्यमासस्य त्रयोऽभिप्लविकाः षडहाः प्रथमाः, तथाचाष्टादश-दिनानि निष्पन्नानि, गोष्टोमसाध्यमुनविंशतितमम्, आयुष्टोम-साध्यं विंशतितमम् दशरात्रस्य दिवसा दश इति त्रिंशत्। इत्थमुत्तरार्द्धं सत्त्रस्य। अनयोर्मासषट्कयोः सन्धिस्थानम् अशीत्युत्तरशतदिनानन्तरम् अशीत्युत्तरशतदिनात् पुरस्ताच्च विद्यमानमहः विषुवन्नामकम्, तदिदमेकषष्ट्युत्तर-त्रिशद्दिन निर्वर्त्यं गवामयनं सत्रं ताण्ड्यस्य ब्राह्मणस्य चतुर्थप्रपाठकेन विहितम्; विस्तरश्च ततः परः परः। तदर्थं श्लोकः— 'शतानि त्रीणि षष्ठिश्च विषुवांश्च चतुर्थके। प्रोक्तानि गव्यमसत्रस्य सत्याहानि क्रमादिह'।

संशयः। बृहच्च रथन्तरञ्च बृहद्रथन्तरे ते च सामनी यस्य इति द्वन्द्व-गर्भिते बहुव्रीहावितरेतरयोग-द्वन्द्वे न साहित्यं प्रतीयते, ततः प्रत्यहं सामद्वयम्—इति पूर्वपक्षः। ते सामनी यस्याङ्गः-इ त्यङ्गोय यन्यपदार्थत्वं तदा भवदुक्तमेव स्यात्, इह तु षडहोऽन्य पदार्थः; तथासति षडहे द्वयोः साम्नोः साहित्यं सिद्धान्तेऽपि समानम्। प्रकृतौ साम्नोरन्योन्य-निरपेक्षत्वादिहापि निरपेक्षत्वमेव साम-चोदकेनातिदिश्यते। तस्मात् केषुचिदहःसु किञ्चित साम-इति राद्धान्तः"[५३]॥ ॥पञ्चमे सर्वपृष्ठे यथोक्तदेशे पृक्तानि—"किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्ति वा। पृष्ठ-शब्दात् पृष्ठ-देशे वचनात् तु व्यव-स्थितिः॥ इदमाम्नायते—'विश्वजित् सर्वपृष्ठः'-इति। षडहे षट्स्वहःसु क्रमेण 'रथन्तरं' 'बृहद्' 'वैरूपम्'-इत्यादिभिः सामभिः पृष्ठ-स्तोत्रं, निष्पादितम् तानि सर्वाणिपृष्ठ-सामानि यस्मिन् वि-श्वजिति सोऽयं सर्व-पृष्ठः; तत्र माध्यन्दि न-पवमान-मैत्रावरुण-साम्नोरन्तरालभूते पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठ-सामानि कार्या-णि? किं वा यथावचनं देश-व्यवस्था?-इति संशयः। पृष्ठ-कार्य्य-गमकेन पृष्ठ-शब्देन पृष्ठ-देशे प्राप्ते, वचनेन देश-विशेषोव्यवस्थाप्यते, वचनं चैवमाम्नायते—'पवमाने रथन्तरं करोत्यभिवे बृहन्मध्य-इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्म-साम शाक्करं मैत्रावरु-णस्य रैवतमच्छावाकस्य'-इति; वचनं हि न्यायाद् बलीयः, तस्माद्देशविशेषो व्यवस्थितः"[५४]॥ ॥षष्ठे वैरूप-वैराजे उक्थ-षोड़शिनोः पृष्ठ-गते—[५५]"कार्त्स्न्याद् वैरूप-वैराजे उक्थ-षोड़शिनोकृत। पृष्ठे स्यात् क्रतु-संयोगादाद्योन्तः पृष्ठ-लिङ्गतः॥ इदमाम्नायते—'उक्थी वैरूपसामैकविंशः षोड़शी वैराजसामेति। तत्र

क्लप्ते उक्थे 'वैरूपं' साम, क्लप्ते षोड़शिनि 'वैराजम्'; 'वैरूपं' साम यस्मिन्नुक्थे क्रतौ—'वैराजं' साम यस्मिन् षोड़शिनि क्रतौ-इत्येवं क्रतु-सम्बन्धः प्रतीतिः। मैवम्। प्रकृतौ रथन्तर-साम बृहत्साम-इत्येवंविधस्य निर्द्देशस्य पृष्ठ-स्तोत्र-विषयत्व-दर्शनादत्रापि तन्निर्द्देशेन पृष्ठ-लिङ्गेन पृष्ठ-कार्ये वैरूपं वैराजं च भवितुमर्हति; क्रतु-सम्बन्धस्तयोः पृष्ठ-द्वारेणोपपद्यते"[५५]॥ ॥सप्तमे त्रिवृदग्निष्टुति स्तोमएव—[५६]"त्रिवृदग्निष्टुदित्येतत् सर्वत्र स्तोमएव वा। आद्यस्त्रैगुण्य-वाचित्वादन्त्य-स्तोमेऽस्य रूढ़ितः। एवं श्रूयते—'त्रिवृदग्निष्टुदग्निष्टोमः'-इति (१)। किं त्रिवृत्वमग्निष्टुति क्रतौ सर्वेषु साधनेषु संबध्यते? किं वा स्तोम-मात्र-सम्बन्धि तत्? त्रिवृद्रज्जुरित्यादौ त्रिवृच्छब्दस्य त्रैगुण्य वाचित्व-दर्शनादत्रापि क्रतु-साधनेषु या सङ्ख्या श्रूयते सा सर्वा त्रिवृत्वेन विक्रियते इति प्राप्ते, ब्रूमः—यद्यपि त्रिवृच्छब्दोऽवयव प्रसिद्धा लोके त्रैगुण्यं ब्रूते, तथापि वेदे रूढ़्या स्तोम-वाचकः, त्रिवृद्बहिष्पवमानः इत्युक्त्वा स्तोत्रियाणां नवानामृचामनुक्रमणेन स्तोम-विषयमेव त्रिवृत्वम्"[५६]॥ ॥अष्टमे संसवादौ पृष्ठत्वम् [५७]"संसवादौ द्वयोरेकं पृष्ठं यद्वा समुच्चितम्। एकं प्रकृतिवद् विश्वजिद्वदन्यत्र चेतरम्। वचनाद् विश्वजित्येते साम्नी द्वे स्तोत्रयोर्द्वयोः। नेहास्ति तत् पृष्ठएव साहित्यं स्यात् पुनर्विधेः॥ इदमाम्नायते—'संसवउभे कुर्याद्, गोसवउभे कुर्याद्, अभिजित्येकाहः उभे बृहद्रथन्तरे कुर्यात्'-इति। किमत्र बृहद्रथन्तरयोरेकं पृष्ठ-स्तुतौ इतरदन्यस्तुतौ स्यात्? किं वा समुच्चितमुभयं पृष्ठ-स्तुतौ? इति

(१)—ताण्ड्यस्य तृतीयपञ्चिकायां.अङ्कत।

संशयः । प्रकृतौ द्वयोर्विकल्पितत्वादेकस्मिन् प्रयोगे एकस्य पृष्ठत्वा दन्यत्रापि तथात्वं युक्तम्, तथा सत्यवशिष्टं साम सर्वपृष्ठ-विश्वजिन्नायेन स्तोत्रान्तरे प्रयोक्तव्यम्-इति पूर्वपक्षः। तादृग्वचनाभावेनात्र विश्वजिद् वैषम्यात् प्रकृतिवद् विकल्पे सति पुनर्विधान-वैयर्थ्यात् समुच्चयः-इति राद्धान्तः"[५७] ॥

सप्तम-पादस्य षोड़शाधिकरणे बृहद्-यव-खादिराः नियताः —[५८]"बृहद्-यव-खादिराश्च * विकल्प्यानियताउत । विकल्प्या चोदक-प्राप्तेर्नियताः स्युः पुनर्विधेः ॥ क्वचिद् विकृतौ श्रूयते 'बृहत् पृष्ठं भवति'-इति, त्रैधातवीये श्रूयते—'यवमयो मध्यमः'-इति, वाजपेये श्रूयते—'खादिरो यूपोभवति'-इति; तत्र बृहद्रथन्तरयोः व्रीहियवयोः खादिर-वैल्वादीनाञ्च प्रकृतौ विकल्पितत्वादत्रापि चोदकेन विकल्पिता इति चेत्—न, पुन र्विधान-वैयर्थ्यात् । परिसंख्या तु दुष्टत्वात् (१) न शंक्या । तस्मान्नियताः । कोऽयन्तरं (२) त्वर्थान्निवर्त्तते"[५८] ॥

अष्टम-पादस्य षष्ठाधिकरणे विप्र-गानं (३) विकल्पितम्—[५९] "उन्नेयोर्ब्रह्म-गानस्य निषेधोविहितस्तुतिः । विकल्पितोवा शून्यो

* "बृहद् यवः खादिरश्च"-इति पाठः रा० पुस्तके ।

(१) तदुक्तम—"श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् । प्राप्तस्य बाध इत्येवं परिसङ्ख्या त्रिदूषणा"-इति। परिसङ्ख्या-लक्षणन्त्वत्र श्लोके स्फुटम्. तथाहि— "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते"-इति ।

(२—रथन्तरस्य पृष्ठत्वेनात्र ग्राह्यत्वं वैल्वादीनां यूपत्वेन च तथात्वमिति यावत् ।

(३—विप्र उद्गाता, तत्कर्तृकं वामदेव्यादि-साम्नां गानम् ।

ऽपि वपोत्खेदइव स्तुतिः। विध्यनन्वयतोऽस्तोत्रं ब्रह्मोद्गाता तथा सति। विषयैक्याद् विकल्पोऽत्र षोड़शि-ग्रहवन्मतः। आधाने वामदेव्यादि-साम्नां गानानि विहितानि, आधाने एवेदमपरमाम्नायते— 'उपवीता वा एतस्याग्नयोभवन्ति, यस्या ग्न्याधेये ब्रह्म-सामानि गायति'-इति। उप-शब्दः सामीप्यं ब्रूते, विगताः काल-विलम्बमन्तरेण परैस्त्यक्ताइत्यर्थः। अनया निन्दया ब्रह्मणः (१) साम-गान-निषेधउन्नीयते, स निषेध उद्गातुर्विहितं वामदेव्यादि-साम-गानं स्तौति। ननु ब्रह्मणः सामगानमप्रसक्तं (२) ततस्तन्निषेधोऽत्यन्तमसम्भावितत्वाच्छश-विषाणवच्छून्यः, न हि वन्ध्या-पुत्रो वा तद्वधो वा सम्भावयितुं शक्यते, तथासति तादृशेन कथं स्तुतिः? इति चेत्- वपोत्खेदवत्, इति ब्रूमः -'सआत्मनोवपामुदखिदत्'-इत्यनेनात्यन्तासम्भावितार्थेन यथा प्राजापत्यस्य तूपरस्य(३) अजस्य विधिः स्तूयते, तद्वत्- इति प्राप्ते ब्रूमः—नेदं वामदेव्यादि-सामविधीनां स्तोत्रं भवितुमर्हति, विधीनामनेकत्वेन स्व-स्व-सन्निधि-पठितैरर्थवादैर्निराकांक्षत्वेन च तदन्वयायोगात्। का तर्ह्यस्य-

(१)—ब्रह्मा यज्ञीयऋत्विग्विशेषः, स हि सर्वेषामुद्गात्रादीनामृत्विजां कार्य-दोषोपशमनकारी सर्वद्रष्टा।

(२)—ब्रह्मणा इदं गायेत-इत्येवं विधेः क्वचिदप्यदर्शनात।

(३)—तूपरः शृङ्गहीनः, सच अजातशृङ्गः पतितशृङ्गोवा. तथाहि ताण्ड्य चतुर्थ-प्रथमे "ताः सर्वमन्नाद्यमाप्नुवंस्ता एतास्तूपराः"-इत्यस्यभाष्य- "ताः पतितशृङ्गाः गावः सर्वर्तु-भवमन्नाद्यमदनीयमन्नं प्राप्नुवन, ता गावस्तूपराः शृङ्गहीनाः दृश्यन्ते" इति।

वाक्यस्य गतिः? इति चेत्, उच्यते—ब्रह्म-शब्दोऽत्र विप्रत्व-जाति-द्वारेणोद्गातारं ब्रूते, यस्य च गानं तस्मिन्निषेधे सति विधि-निषेधाभ्यामेक-विषयाभ्यामुद्गातुर्गानं विकल्प्यते"५९ ॥

एकादशाध्यायस्य द्वितीय-पादे द्वादशेऽधिकरणे ब्रह्मसामन्युत् कर्षः—६०"पर्यग्निकरणे त्यागश्चालम्भोब्रह्म-सामनि । कर्मशेष निषेधश्च कर्मान्तर-विधिर्भवेत् । किं वोत्कर्षोऽवशिष्टस्य ह्यारण्योक्तिवदादिमः । अदृष्ट-वाक्य-भेदाप्तेर्द्व्याभेदेन चान्तिमः ॥ वाजपेये 'सप्तदश-प्राजापत्यान् पशून् सञ्चिनुते'-इति प्रकृत्य श्रूयते— 'तान् पर्यग्निकृतानुत्सृजति'-इति, 'ब्रह्म-साम्न्यालभते'-इति, सप्तदशसु पशुषु पर्यग्निकरणेऽनुष्ठिते सत्युत्तरकाल-भावी कर्मशेषः उत्सर्ग-शब्देन निषिध्यते, अश्वमेधे 'पर्य्यग्निकृतान् आरण्यानुत्सृजति'-इत्यत्र कर्मशेष-निषेधस्य प्रतिपन्नत्वादत्रापि तथात्वेन सप्तदश पशवः पर्यग्निकरणान्ताः समाप्याः, आलभतिना च ब्रह्मसाम-काले कर्मान्तरम्-इति प्राप्ते, ब्रूमः कर्मान्तर-विधौ सप्तदश-जन्यादृष्टाद् भिन्नं किञ्चिददृष्टं कल्पेत, वाक्यभेदश्च प्राप्नुयात्, किञ्च 'ब्रह्मसाम्न्यालभते'-इत्यत्र द्रव्य-देवतयोरश्रवणात् न कर्मान्तर-विधिः सम्भवति (१)।

(१)—अत्रेदं तत्त्वम्— शब्दान्तरम् १ अभ्यासः२ सङ्ख्या३ गुणः४ प्रक्रिया५ नामधेयम्६-इति षट् कर्म-भेद-हेतवः स्वीकुर्वन्ति जैमिनीयाः। तथाहि, जैमिनीये द्वितीय-द्वितीये प्रथमं सूत्रम्—"शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्"-इति । यजति जुहोति, ददातीत्येवमादयो बहवः क्रियाशब्दाः श्रूयन्ते, तत्र सर्वत्रैव भावयेत्-इति समं प्रतीयते, एवञ्च भावनावाचकत्वांशे एकत्वेऽपि 'कृतानुबन्धत्वात्' यज्यादि धातु रूपानुबन्धकृतभेदात् शब्दान्तरत्वं स्वीकार्यमेव, सत्येवं कर्मभेदोप्यागतः-इति तदर्थः,

तस्मात् पर्य्यग्निकरणानन्तरमेव कार्य्यस्य सप्तदश पशूनामाल भादि-शेषस्य ब्रह्म-साम-काले उत्कर्षो विधीयते, तथासति अर्थप्राप्तः, पर्य्यग्निकरणानन्तर-भावि-कर्म-व्यापारोपरमउत्सर्ग-शब्देनानूद्यते"६० (१)॥

मन्त्र-लक्षणमारभ्य ब्रह्मसामोत्कर्ष-पर्य्यन्तैः पूर्व-मीमांसा गतैः* द्वि-षष्टि-संख्याकैर्विचारैः सामवेदस्य क्रतुषूपयोगो विस्प-

* 'जैमिनीयैः'-इति सा० पु० पाठः।

'सोमेन यजेत' 'हिरण्यमात्रेयाय ददाति' 'दाक्षिणानि जुहोति'-इत्यादि तदुदाहरणम्। तदेतद्ग्रायेनातकर्मभेदशङ्का - अपवादपादगत-विंशतितम-सूत्रानुसारेण च समाधानम्। तद्धि सूत्रम्—"अद्रव्यत्वात् केवले कर्मशेषः स्यात्"-इति। 'केवले' द्रव्यदेवतारहितवाक्ये 'कर्मशेषः' स्यात्' कर्मणः उक्तस्य शेषः अनुवादादिरूपः स्वीकार्यो भवति। कुतः? 'अद्रव्यत्वात् (द्रव्यमित्युपलक्षणं देवताया अपि केवले इति सम्बन्धात्) द्रव्यदेवतयोरश्रवणात्-इति तदर्थः। अतएवोक्तम—"शौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकौ। रूपवन्तौ ततो यागौ विधीयेते पृथक्तया"-इति।

(१)—अत्र हि—प्रजापतिर्देवता यस्य पशोः स प्राजापत्यः-इति तद्धितान्तं प्रातिपदिकं व्युत्पाद्य पश्चात् तद्धितान्त-प्रातिपदिकार्थस्य प्रजापतिदेवताविशिष्ट पशोः कर्म-बहुत्व-विवक्षायामुत्पन्नं इमे द्वितीयाविभक्ति-बहुवचनं, तत्र प्रथमभाविन्या द्वितीयाविभक्त्यैव तावत्तद्धितोत्पत्तिवेलायामन्वयो नास्ति, कुतः पश्चाद्भाविनो बहुवचनस्यान्वयः? एवं सति प्राजापत्येत्यनेन तद्धितान्तप्रातिपदिकेन एकपशुद्रव्य मेकदेवतोपेतं यागस्य रूपं समर्प्यते, तादृशानां बहुत्वाय बहुवचनं; बहुत्वविशेषः सप्तदश इति निर्दिश्यते—तस्मादिह सङ्ख्यया कर्मभेदः। सतोवमेकस्मिन् पशौ दृष्टं स एवावर्त्यते, न हि पशुः पश्वन्तरमाकांक्षति; अन्यथा एकस्मिन् पशौ दृष्टं हृतस्यः पशुगणस्यावर्त्तेत तच्चादृष्टार्थमभविष्यत्। विचारोऽयं जैमिनीय द्वितीय-द्वितीय-विंशतितमे सर्वे (तद्भाष्ये) भाषितं स्फुटम्।

ष्टोक्तः (१)। अतः (२) स प्रयोजनवत्त्वादृग्वेदादिवदेवावश्यं व्याख्यातव्यः ॥

नन्वस्मिन् सामवेदे ब्राह्मणभागस्य व्याख्यातुं योग्यत्वेऽपि मन्त्रभागस्य न व्याख्यान-योग्यतास्ति, तत्रत्यानां मन्त्राणां गीतिमात्रात्मकत्वात्—न खलु पद-वाक्य-व्यतिरिक्तायां स्वरस्तोभादि-साधारायां गीतौ क्रिया-कारक-योजनाभिव्यङ्ग्यः कश्चिदर्थोऽस्ति यस्याभिव्यक्तये भवता गीतिर्व्याख्यायेत। यत्तु स्वरादि-लक्षण विशेष-कथनेन गीति-व्याख्यानं तत्पूर्वाचार्यै (३) रेव तत्त लक्षण-मन्त्र ग्रहणेषु सम्पादितम्-इति न तत्र त्वया यतितव्यम्, अतः कथं भवतः मन्त्रभाग-व्याख्यानम् ? अत्रोच्यते—न तावद् गीतिर्निराश्रया, तस्याः ऋच्याश्रितत्वात्; अतएव छन्दोगा उपनिषद्येवमामनन्ति 'तस्मादृच्यध्यूढं साम गीयते'-इति (४)गीत्याश्रयभूता सेयमृगपि मन्त्रएव, 'तेषामृग्यत्रार्थवशेन

(१) अत्रेदं बोध्यम् दर्शितानामेषां द्विषष्टिसङ्ख्याक-विचाराणां जैमिनीय न्यायविस्तरादौ च तथा परः परः पाठादर्शनम्, प्रत्युत दृश्यते च तत्र सर्वत्र तेषां बहु-विधविषयक-बहुविचार-व्यवाय कृतं मिथो विभिन्न-देश-संस्थानम्। यदिच क्वचित् क्वचित् चतुर्णां पञ्चानामधिकरणानां वा साहित्यमस्ति, परं न तथा सर्वेषाम्, अध्याय-पादाधिकरण-व्यवायस्य तत्र तत्रात च स्फुटदर्शनात्। तथाच सामवेद-क्रतु-विषयक-विचार-सङ्ख्या-निर्द्धारणे एवास्य तात्पर्यम्, मन्त्रलक्षणादाब्रह्मसामोत्कर्षमिति कथनं न नैरन्तर्य्यपरम्।

(२)—ग्रन्थारम्भे एव नन्विति योविचार उपक्रान्तः तमिदानीमुपसंहरति।

(३)—पुष्पसूत्रकारादिभिः।

(४)—छान्दोग्य-प्रथमप्रपाठक-षष्ठखण्डे।

पाद-व्यवस्था'-इति मन्त्र-विशेषत्वेन सूचितत्वात्(१); ऋगात्मकस्य तु मन्त्रस्य क्रियाकारकान्वयाभिव्यङ्गोऽर्थो विद्यते, स च क्रत्वनुष्ठान-कालेऽनुस्मर्त्तव्यः—इति ऋग्-व्याख्यानमवश्यं कर्त्तव्यम्"॥ "मन्त्रैरर्थानुस्मरणं तु प्रथमाध्यायस्य द्वितीयपादे चतुर्थाधिकरणे निर्णीतम्—मन्त्रा उरुप्रथस्वेति किमदृष्टैक-हेतवः। यागेषूत पुरोडाश-प्रथनादेश्च भासकाः। ब्राह्मणे नापि तद्भानान् मन्त्राः पुण्यैकहेतवः। न तद्-भानस्य दृष्टत्वात् दृष्टं वरमदृष्टतः। उरुप्रथस्वेत्ययं कश्चिन्मन्त्रः, तस्यायमर्थः भो पुरोडाश! त्वं उरु विपुलता यथा भवति तथा प्रसर इति। एवमादयो मन्त्राः यागप्रयोगेषूच्चार्य्यमाणाः अदृष्टमेव जनयन्ति, न त्वर्थ-प्रकाशनाय तदुच्चारणम्, पुरोडाश-प्रथन-लक्षणस्यार्थस्य ब्राह्मण-वाक्येनापि प्राप्तत्वात् ('उरुप्रथस्वेतिपुरोडाशं प्रथयति' इति हि ब्राह्मण-वाक्यम्) नैतद् युक्तम्, अर्थ प्रत्यायनस्य दृष्ट-प्रयोजनसम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात् (२)। तस्मात् दृश्यमानार्थानुस्मरणमेव याग-प्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्, ब्राह्मण-वाक्येनार्थानुस्मरण सम्भवे मन्त्रेणैवानुस्मर

(१)—पूर्व मीमांसायां द्वितीय-प्रथमे मन्त्रविचारप्रक्रमे द्वात्रिंशत्तम सूत्रम। 'तेषाम्' मन्त्रभागानां यत्र भागे 'अर्थवशेन पादव्यवस्था' विद्यते स ऋगाख्यः; इह सूत्रे अर्धवशेनेत्यविवक्षितमिति शवरभाष्ये स्फुटम्, अन्यथा 'अग्निमीळे पुरोहितम्'-इत्यादे स्यादृक्त्वम्, अत्र न स्यात् 'अग्निः पूर्वेभिर्ऋषिभिः' इति; तस्माद् यत्र पादकृता व्यवस्था स मन्त्र ऋगाख्यः इत्येव सारम्।

(२)—तदुक्तम्—'लभ्यमाने फले दृष्टे नादृष्टफलकल्पना'।

णीयमिति योनियमः तस्य दृष्टा*सम्भवात् अदृष्टं प्रयोजनमस्तु"[६१] ॥

अस्मिन्नेवाधिकरणे (१) मतान्तरेण (२) पूर्वोत्तर-पक्षावाह — [६२]"मन्त्रब्राह्मणयोर्यद्वा कलहोविनियोजने। न मन्त्र-लिङ्ग-सिद्धार्थमनुवक्तीतरद् यतः। अस्य मन्त्रस्य लिङ्गेन विनियोगे ब्राह्मण-वाक्यम् अविवक्षितार्थं स्यात्, वाक्येन विनियोगे मन्त्र-लिङ्गं न विवक्ष्येत—इत्युभयोर्विरोधादप्रामाण्यं चोदनायाः-इति पूर्वपक्षः (३)। नायं विरोधः, प्रबलेन लिङ्गेन विनियोग-सिद्धौ वाक्यस्यानुवादकत्वात्-इतिराद्धान्तः"[६२] ॥

---

(इति हतत्त्वस्य भाष्यस्यावतरणिका समाप्ता)

---

* 'दृष्टार्था'-इति स० वि० पु० पाठः।

---

(१)- उरुप्रथस्वेति विषयवाक्यस्यैक्यादधिकरणैक्यम्।

(२—आसीत् कश्चन भट्टरहस्यादि-मीमांसा-जीवन-ग्रन्थ-निर्मातुः यागपद्धति-प्रथयितुश्च मीमांसकवरस्य भट्टेति प्रसिद्धस्यान्तेवासी कान्यकुब्जो ब्राह्मणः प्रभाकर नामकः गुरु-दत्त-गुरूपाधिकः तस्य मतेनेति यावत्। शालिकनाथीय-प्रकरण पञ्चिकादौ हतत्त्वं तन्मतं स्फुटतरम्।

(३)—प्रमाणाध्यायसङ्गत्या प्रामाण्याप्रामाण्यएव विचारोपयुक्त इति गुरोराशयः।

(१) अर्थानुस्मरणाय व्याख्यातव्याः साम-योनि-भूताः ऋचः संहिता ग्रन्थे (२) छन्दोनामके समाम्नाताः, ताः सर्वाः ऋचः आम्नात-क्रमेणेह व्याख्यायन्ते(३) ॥

(४) न च तासां क्रतुषु स्वातन्त्र्येण विनियोगोऽस्ति ब्राह्मणेन सूत्रेण च विनियुक्तानां साम्नामाश्रयतया (५) तदुपयोगात् तस्माद् ऋग्वेद-व्याख्यानइवैतद्व्याख्याने विशेषेण विनियोगोनान्वेषणीयः (६)। सामान्येन तु विनियोगो यद्यपि ब्रह्मयज्ञ(७)-विषयोऽस्ति तथाप्यसौ कृत्स्नस्य वेदस्यैकएवेति नान्वेषण-प्रयासोऽस्ति(८)। नन्वेवमप्यृचामृषि-च्छन्दोदैवतान्यवगन्तव्यानि, अन्यथा प्रत्यवाय-प्रसङ्गात्; तथाच छन्दोगा आमनन्ति— 'यो ह वा अविदितार्षेय-छन्दोदैवत-ब्राह्मणेन याजयति वाध्यापयति वा स्थाणुं

---

(१)—अथ पूर्व-संहिता-मूल-रूप-छन्दोनामार्चिकमारभ्य भाष्यस्यावतरणिका ।

(२)—उक्तं पुरस्तात् सामगानां संहिताग्रन्थौ द्वौ, तत्राद्य इति विवक्षायः ।

(३)—अथ तत्र ज्ञातव्य-विषयावाह-न चेत्यादि ।

(४)—यदिच त्रिवृदादि-स्तोमात्मकानामृङ्मात्राणामपि नियोगो दृश्यते, परं न ता ऋचः छन्दोग्रन्थ-पठिताः ।

(५)—आश्रयतामात्रेणैवेति भावः ।

(६)—परन्तु यथा ऋग्वेदीयानामृत्विजामुपकाराय ऋग्भाष्ये ऋचां प्रत्येकस्य विनियोगो ज्ञापितः, इह तथा अस्यामृचि इद गानं तस्य तत्र विनियोग इति साम्नां विनियोगः कथं न भाषितः -इति नितरकल्पः प्रश्न उज्जृम्भते ।

(७)—ब्रह्मयज्ञो वेदपारायणः । तथाहि मनुः—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् होमोदैवो बलिर्भौतो नृयज्ञोऽतिथि पूजनम्" (३ अ० ७० श्लो०) 'अध्यापन-शब्देनाध्ययनमपि गृह्यते जपोऽहुत ८४ श्लो०) इति वक्ष्यमाणत्वात्, अतोऽध्यापनमध्ययनञ्च ब्रह्मयज्ञः" इति तत्र कुल्लूकः ।

वर्च्छति गर्त्तं वा पद्यति प्रवामीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्त्यथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवत्ययातयामान्यस्य छन्दांसि भवन्ति, तस्मादेतानि मन्त्रे मन्त्रे विद्यात्'-इति (१)। एवन्तर्हि तासामृचां क्रम-व्यत्यासेन बह्वृचैः (२) अप्यधीयमानत्वात् (३) तदीयानुक्रमणिकोक्तान्यृष्यादीन्यत्रानुसन्धेयानि (४)॥

(१)—आर्षेयब्राह्मणस्य प्रथम-प्रथम-खण्डे। छन्दोगइति तु सामगानां यौगिकं नाम।

(२)—बह्वृच-शब्दः ऋग्वेदपरः, सूक्तपरः, तदभिज्ञपरश्च तथाचात्र ऋग्वेदीयरिति बोध्यम्।

(३)—स्वकीयसंहिताग्रन्थे इति शेषः।

(४)—साम्नां छन्दो नास्ति परमृषिदेवते ऋग्भ्यः प्रविभिन्ने आर्षेयदैवतयोर्ब्राह्मणयोर्विज्ञानात् स्तएव, वक्तव्ये च ते भाष्यकारस्य, तद्दमे च कथं नोक्ते? इत्यपि प्रश्नोऽनवद्योऽभ्युपेयोऽभ्युपगम्यवादिभिः।

# छन्द आर्च्चिकः ।

## अथ प्रथमप्रपाठके प्रथमार्द्धः ।

## हरिः ओम् । *

(१)आग्नेयमैन्द्रं पावमानमिति काण्ड-त्रयात्मकोयोऽयं छन्दो-नामकः संहिता-ग्रन्थः सोऽयमारण्यकेनाध्यायेन षट् सङ्ख्या पूरकेण सह षड्भिरध्यायैरुपेतः (२) ।

* वेदाध्ययनाध्यापनारम्भ-सूचकमेतद् वाक्यम्, वैदिक-सम्प्रदाय-सिद्धम् । अध्ययनारम्भावसानयोरोङ्कारोच्चारणं मन्वादि-विहितञ्च, तथाहि— "ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा ।
"स्रवत्यनोङ्कृतं सर्वं परस्ताच्च विशीर्य्यति"—इति मनुः २अ० ७४ श्लो० ।

(१) अथ ग्रन्थमधिकृत्य किञ्चिद् ब्रूते ।

(२) —संहिता-लक्षणं त्वेवमुक्तम् नैरुक्त-प्रथमाध्याय चतुर्थ-पादादिखण्डे 'परः सन्निकर्षः संहिता, पद-प्रकृतिः संहिता, पदप्रकृतीनि सर्वचरणानां पार्षदानि'-इति। अत्र भाष्यम् —"'परः' प्रकृष्टोयः 'सन्निकर्षः' संश्लेषः परस्परेण स्वराणां स्वराधिष्ठानां व्यञ्जनानाञ्च, सा 'संहिता' इत्युच्यते। सा च पुनरियं 'पदप्रकृतिः संहिता' अत द्विविधा वर्णयन्ति— पदानां या प्रकृतिः सेयं पद प्रकृतिः संहिता, विकारस्य संहितातोहि पदानि प्रक्रियन्ते, तस्मात् संहितैव प्रकृतिः, विकारः पदानि-इत्येवमेके मन्यन्ते; अपरे पुनः 'पद-प्रकृतिः संहिता' इति पदानि प्रकृतिर्यस्याः सेयं पद-प्रकृतिरिति, किं कारणम्? पदान्येव हि संहन्यमानानि संहिता भवति, तस्मात् पदान्येव प्रकृतिः

तत्र प्रथमे खण्डे(१) या ऋचस्ताः क्रमेणोदाहृत्य(२) व्याख्यायन्ते ॥

---

विकारः संहिता-इति । एवञ्च सति 'पद-प्रकृतीनि सर्वचरणाम् पार्षदानि' सर्वेषां चरणानां सर्वशाखान्तराणामित्यर्थः ; किम्? 'पार्षदानि' स्व-चरण-पर्षद्येव यैः प्रतिशाखा-नियतमेव पदावग्रह प्रग्रह्य क्रम-संहिता-स्वर-लक्षणमुच्यते तानीमानि 'पार्षदानि' प्रातिशाख्यानीत्यर्थः ; आह किं तेषाम्? इति, उच्यते—तानि 'पद-प्रकृतीनि पदं येषु संहितायाः प्रकृतित्वेन चिन्त्यते तानीमानि पद-प्रकृतीनि' तेषामपि स एव समयः-इत्यभिप्रायः ॥ आह किम्पुनरत्र साधीयः? पदानां प्रकृतित्वम्, संहिताया विकारत्वम्? उत वा विकारत्वम् पदानाम्, प्रकृतित्वं संहितायाः?-इति ; उच्यते—संहितायाः प्रकृतित्वं ज्यायः। आह किं कारणम् उच्यते—मन्त्रो ह्यभिव्यज्यमानः पूर्वमृषेर्मन्त्रदृशः संहितयैवाभिव्यज्यते, न पदैः। अतश्च संहितामेनं पूर्वमध्यापयन्त्यनूचानाः ब्राह्मणा अधीयते चाध्येतारः। अपि च यज्ञकर्मणि संहितयैव विनियुज्यन्ते मन्त्राः, न पदैः। यदि हि पदानि प्रकृतिरभविष्यन्, संहिता पदैरेव मन्त्रेऽभिव्यज्येत? पदान्येव च पूर्वमध्यापयिष्यन्, ब्राह्मणाः अध्येष्यन्त चाध्येतारः, पदैरेव विनियोक्ष्यन्त मन्त्राः कर्मसु। न त्वेतत् सर्वमस्ति। तस्मात् एतैर्विशेषैः हेतुभिः संहितैव प्रकृतिर्न पदानीति पश्यामः"-इति ॥ संहत्य पठिताः यत्र मन्त्राः, सा संहितेति स्फुटार्थः। अस्य हि सामवेदस्य चत्वारः संहिताग्रन्थाः, तत्र वेदसामोह-गाननामकौ गानग्रन्थौ द्वौ मुख्यौ, छन्द-उत्तराभिधौ आर्चिकग्रन्थौ द्वौ तदाधारभूतौ तत्र छन्दोनामके पूर्वार्चिके काण्डत्रयात्मक संहिताग्रन्थे अध्यायाः पञ्च वर्त्तन्ते, आरण्याभिधयापरोऽध्यायः क्रोडपत्रमिव च, स षष्ठः ; तदयं छन्दो ग्रन्थः षडध्यायात्मकः सम्पन्नः। तत्रात्र प्रथमेऽध्याये यावन्तो मन्त्रा विद्यन्ते ते सर्व एव अग्निमनुकूलयितुं क्रतुषु नियुज्यन्ते, ततस्तत्समुदायः आग्नेयं काण्डमित्युच्यते, अग्निर्देवता अस्येति विग्रहे 'सास्यदेवता'-इत्यधिकारे 'अग्नेर्ढक्'-इति अग्निशब्दात् ढक्प्रत्यये विहिते तथारूपं तथाविधेयस्य प्रतिपद्यते : एवं द्वितीयाद्यध्यायत्रयात्मकमैन्द्रं, पञ्चमाध्यायात्मकं पावमानम्, षष्ठमारण्यकम्, अरण्येऽधीतत्वतया तस्य तथाविधं नामधेयम।

(१)—प्रथमाध्याये द्वादशखण्डाः सन्ति, तत्र प्रथमे दश ऋचो विद्यन्ते ।

(२)—न हि विवरण-ग्रन्थकृद्भिरेव मन्त्रप्रतीकमात्र-दर्शनमपि त्वयकल्पः सतत्समन्त्रपाठ एव यथाक्रममुद्धृतोऽभिगन्तॄणां सुखबोधार्थेति भावः ।

अग्नआयाहीत्येषा(१) भरद्वाजेन दृष्टा(२)गायत्री(३) आग्नेयी(४)।

---

(१)—ननु गानग्रन्थारम्भे गायत्रीसामैव श्रुतम्, तद्योन्यृगेव चादौ व्याख्यातुं युक्तमिति चेत्-न, तस्याउत्तरा(६,२,१०,१) श्रुतत्वेन चतत्स्थानत्वात्; गानारम्भे श्रुतिस्तु लोकशास्त्रयोरनुशासनादिति ध्येयम्।

(२)—भरद्वाजादि नामधेयं पङ्कजादिवद् योगरूढम्। तथाहि—वाजस्यान्नस्य भरणाद् 'भरद्वाजः', यष्टुमस्तस्य मेधा प्रिया इति 'प्रियमेधः', भर्जनाद् 'भृगुः' अथेदमस्ति इत्तम्—प्रजापतिना आत्मीयं शुक्रमग्नौ हुतम् ततोऽर्चिषि ज्वालायां स महर्षिरुत्पन्नः, व्यपगते तस्मिन्नर्चिषि योऽङ्गारेषु जातः सः 'अङ्गिराः', अत्रैव अङ्गारेषु जातस्तृतीयः 'अत्रि', व्रतं कर्म महि महत् अस्य इति 'महिव्रतः' - इत्येवं नानारूपत्वात् 'विरूपः' इत्यादिकमभिधान-निर्वचनम्। स्फुटमेतत् निरुक्त-तृतीय तृतीयान्ते तद्भाष्ये च। एतदृक्प्रयोग-फलं भरद्वाजर्षिः साक्षात् पश्यन् शिष्येभ्योऽस्या उपदेशं ददौ-इत्यर्थः। तथाहि, निरुक्त-प्रथम षष्ठ-षड्विंशतितमे--'साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्राहुः' इति। अत्र धर्मपदेन तज्जन्यं फलं ग्राह्यं तस्यामूर्त्तत्वेनादृश्यत्वात्-इति, ऋषयस्तु परिणामं पश्यन्ति इति ऋषयः इति च तत्रैव तद्भाष्ये विवृतम् विस्तरतः। "उच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति"-इति निरुक्त सप्तम-प्रथम तृतीयेच। उच्चावचैरित्यस्य कर्मणां स्तुति निन्दाद्युत्कृष्टापकृष्टबोधकैरित्यर्थः॥

(३)—गायन्तं स्तुयन्तं देवता अनयेति गायत्री, तदुक्तम्, नैरुक्त-सप्तमे-तृतीय-षष्ठे—'गायत्री गायतेः स्तुति कर्मणः' इति। सैषा अष्टाक्षरात्मकैस्त्रिभिः पादैर्निबद्ध-छन्दोविशेषः, तत्परिस्फुटम् छन्दोग्रन्थस्य द्वितीयखण्डे 'छन्दः' इत्यधिकारे 'गायत्र्या-वसवः'-इत्याद्युक्तितः, तत्रैव निरुक्ते 'त्रिगमना' इत्युक्तेश्च छन्दस्त्वं चास्याः नियताक्षरादि-सन्निवेश-रूपच्छदनात्, तथाहि तत्रैव नैरुक्तम् 'छन्दांसि छदनादिति।

(४)—आग्नेयी, अनया ऋचा अग्निर्देवोपास्य इत्यर्थः। तथाहि, निरुक्त सप्तम-प्रथम-प्रथमे—"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति"-इति। आर्थपत्यमर्थपतेर्भावम्, अमुष्य देवतायाः प्रसादेन अहममुष्याऽर्थस्य पतिर्भविष्यामीत्याकारमित्यर्थः।

सैषा प्रथमा।

२ ३ १ २   ३ १ २   ३ २ ३ १ २

* अग्न आ याहि वीतये गृणानो हव्यदातये।

१ २ ३ २   ३ १ २

नि होता सत्सि बर्हिषि॥१॥

४   २र २   १ २   १

१† ओग्ना इ। आयाही३ वोइतोया २इ। तोया२इ।

१ २ २र   १   १   १ २र १

गृणानोह। व्यदातोया २इ। तोया २इ। ना इहोतासा

हे 'अग्ने' अङ्गनादि-गुण-विशिष्ट! (१)त्वम् 'आयाहि' अस्मद्यज्ञं प्रत्यागच्छ। किमर्थम्? 'वीतये' (२) हविषां चरु-पुरोडाशा-

* इयमेव ऋक् उत्तरार्च्चिके १,१,४,१,।

† इमानि त्रीणि अग्न आयाहीति प्रकृतायामृच्युत्पन्नानि गेयगानारम्भे एव पठितानि, तत्रहि छन्दःस्तुतासु सर्वास्वेव ऋक्षु यथाक्रमसाम-स्तुतिः। तत्र च क्वचिदेकं क्वचिद्बहूनि च; तेषां ऋषिनिर्णयं नामकीर्त्तनञ्च आर्षेय-ब्राह्मणान्वेषणेन लभ्यम्। तथाहि—'गोतमस्य पर्क्कावभितः काश्यपस्य बर्हिष्यम्'—इति तद्द्वितीयखण्डारम्भे। तदिदं निष्पन्नम्—अस्य साम्नः गोतमऋषिः पर्क्क इत्यभिधानम्।

(१). तथाहि नैरुक्तम्—'अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति. त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद् दग्धाद्वा नीतात् स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति। ७-४-१।

(२) "मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (पा० ३.३.९६)"-इति क्तिन्।

२३। त्वा २इ। वा२३४ औहोवा। ही२३४षी ॥१॥

२* अग्न आयाहोवी। तयाइ। गृणानोहव्यदाता। २३याइ। निहोतासत्सिबर्हा२३इषि। बर्हा२इषा२३४औहोवा। बर्हाइषी२३४५॥२॥१

३† अग्न आयाहि। वा५इतयाइ। गृणा नोहव्यदा१ता३ये। निहोता२३४सा। त्सा२३४इवा३। हा२३४इषोइहाइ ॥३॥

दीनां भक्षणाय। कीदृशः सन्? 'गृणानः' अस्माभिः स्तूयमानः (व्यत्ययेन कर्मणि कर्तृ-प्रत्ययः) पुनश्च किमर्थम्? 'हव्यदातये'(१)। देवेभ्योहविः प्रदानाय आगत्य च 'होता' देवानामाह्वाता सन् 'बर्हिषि' आस्तीर्णे दर्भे 'निषत्सि'(२) निषीद (सदेश्छान्दसः शपोलुक्) (३) ॥१॥

* कश्यपऋषिः, बर्हिष्यम्।

† गोतमऋषिः, पर्कः।

(१)—"मन्त्रे (३,३,९६) इत्यादिना क्तिनि दातिः सिद्धति।

(२)—"छन्दसिपरेऽपि"-इति छन्दस्यधिकारे व्यवहिताय (१,४,८१)-इति पाणिनिस्मरणात् होतेति-पद-व्यवहितस्यापि नीत्यस्योपसर्गत्वम्।

(३)—"अदिप्रभृतिभ्यः शपः"-इत्यधिकारे "बहुलं छन्दसि (२,४,७३)"-इति सूत्रात्।

त्वमग्ने-इत्यस्या ऋथाद्याः पूर्ववत्।

सैषा द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
*त्वमग्ने यज्ञाना होता विश्वेषा हितः।
३ २ ३ १ २ ३ १ २
देवेभिर्मानुषे जने ॥ २ ॥

४ ५ र ४र ५र ४ ५ ४ २ १र र र र र र
१† त्वमग्नेयज्ञानाम्। त्वमग्नाइ। यज्ञानांहोता। विश्वेषां
२ र१र २ ३ र २ १ २ ४ ५
हा२३इताः। देवैभा२३इ र्मा। नुषेजना। औ३होवा।
४
होऽ५इ। डा ॥४॥

हे 'अग्ने' त्वं 'विश्वेषां यज्ञानाम्' अग्निष्टोमाद्यग्निष्टोमादीनां सम्बन्धी 'होता' होम-निष्पादन-शीलः (जुहोतेस्ताच्छीलिकस्तृन्) यद्वा, 'यज्ञानां' यष्टव्यानां 'विश्वेषां' देवानां 'होता' आह्वाता। एवं भूतस्त्वं 'मानुषे' मनोरपत्य-भूते यजमान-लक्षणे 'देवेभिः' देवैः (छान्दसोभिसऐसभावः) देवनशीलैर्ऋत्विभिः 'हित': निहितः गार्हपत्यादि-रूपे संस्थापितोभवसि। यद्वा। देवैरेवेन्द्रादिभिरुक्त-लक्षणः सन् यज्ञानां निष्पादनाय यजमाने नियुक्तोसि ॥ २ ॥

---

* इयमेव उत्तरार्च्चिकस्य ६,३,१४,१।

† विश्वमना ऋषिः, सौपर्णम्।

अग्निं दूतमित्येषा कण्वपुत्रेण मेधातिथिना दृष्टा,

छन्दोदेवते पूर्ववत्।

मैषा तृतीया।

१ २३ १ २ ३ १ २ ३ १ २
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।

१ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम्॥ ३॥ ३

५ र २ १र २र १र १
अग्निंदूताम्। वृणीमहाइ। होतारा२३०वि।

१र २ १ २ र २
श्ववेदसाम्। अस्य या२३ज्ञा। आ। औ३होवा।

१ २ १ २ २
स्यासुक्रतुम्। इडा२३भा३४३। ओ२३४५इ। डा॥५॥ ३

'दूतम्' देवानां दौत्ये विनियुक्तम् 'अग्निं देवम्' 'वृणीमहे' स्तुतिभिर्हविर्भिः सम्भजामहे [अस्य च दूतत्वं तैत्तिरीयके समाम्नातम्—"अग्निर्वै देवानां दूत आसीदुशनाकाव्योऽसुराणाम्"-इति] कथम्भूतम्? 'होतारं' साधु देवानामाह्वातारं [ह्वयतेः साधुकारिणि तृन्(१), 'बहुलं छन्दसि (६,१,३४)'-इति सम्प्रसारणम्] 'विश्ववेदसं' विश्वानि वेत्तीति विश्ववेदाः, तम्

---

३-इयमेव उत्तरार्चिकस्य २, १, ६, १।

। भारद्वाजऋषिः, बृहद्।

(१)—'ताच्छील्य-तद्धर्म-तत्साधुकारिषु'। तृन् (३, २, १३४-१३५)।

अग्निर्वृत्राणीत्येषा भरद्वाजेन दृष्टा, छन्दोदेवते पूर्ववत्।

सैषा चतुर्थी।

३ २३१ २      ३ १ २३१ २

**अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया।**

१ २   ३ १   २ ३२

**समिद्धः शुक्र आहुतः॥ ४॥ ४**

[ वेत्तेरसुन् (१) ] यद्वा, वेद-इति धन-नाम(२) विश्वं सर्वं वेदो धनं यस्य, तम् [‘बहुव्रीहौ विश्वं संज्ञायाम् (६,२,१०६)’-इति(४) पूर्वपदान्तोदात्तत्वम्] ‘अस्य’ प्रवर्त्तमानस्य यज्ञस्य (५) ‘सुक्रतुम्’ निष्पादकत्वेन शोभन-कर्माणम्(६) [अथवा क्रतुरिति प्रज्ञा-नाम (७) ] शोभन-प्रज्ञं वा। तं त्वां वृणीमहे-इति पूर्वेण सम्बन्धः॥ ३॥ ३

‘द्रविणस्युः’ द्रविणं धनं (१) स्तोतॄणामिच्छन् [छन्दसि पर-

४-इयमेव उत्तरार्च्चिकस्य ६, २ ७, १।

(१)—विद ज्ञाने।

(२)—‘धन नामान्युत्तराण्यष्टाविंशतिः’-इति नैघण्टुकम् २, ९, १०। तत्र वेद इति चतुर्थम् निघण्टु द्वितीय-दशम-पाठात्।

(४)—‘बहुव्रीहौ प्रकृत्या पूर्वपदम् ६. २. १’-इत्यस्यापवादः।

(५)—‘षष्ठी-निर्देशात् परिसमाप्त्यर्थमिति वाक्यशेषः’-इति विवरणम्।

(६)—‘कर्म्मनामान्युत्तराणि षड्विंशतिः’-इति नै०२,१,१। तत्रैकादशतमम् नि२,१।

(७)—‘प्रज्ञानामान्युत्तराण्येकादश’-इति नै० ३, ९, १४। तत्र पञ्चमम् नि० ३, ९।

(१)—नै० २. ९. १०। तत्र द्रविणं पञ्चविंशतितमम नि० २, १०।

I अग्निर्वृत्रा। णा२यि जा२३४ औहोवा। घा२३४नात्। द्रविणस्युर्विपन्यया२। ओयिसमिद्धा२३ः शु। क्रायाहुतः। इडा२३भा३४३। ओ२३४५इ। डा॥ ६॥

II अग्निरौहोवा हायि। वृत्राणि। जाङ्घा३नात्। औहो३वा३। द्रविणा२३४स्युः। ओयिवोयिपन्यया२। समायि३। धा२ःशु२३४औहोवा। क्रयाहुता२३४५ः॥ ७॥

III ओग्नीः। वृत्राणि जङ्घनात्। औहौहो२३४वा। द्रविणस्युर्विपन्यया। औहौहो२३४वा। समिद्धः शुक्रया। औहौहो२३४वा। होपुतोई हायि॥ ८॥४

च्छायां क्यच(२)। प्रातिपदिकेभ्यः इच्छायां क्यचि सुगागमः(३)। यद्वा। हविर्लक्षणं धनं तदात्मन इच्छन्नग्निः 'विपन्यया' [स्तु]तिः

I, II, III त्रयाणामेषाम् आग्नेयम् नाम, ऋषिस्तदनुगतः कल्पः।

(२)—क्यच्प्रकरणस्थ-वार्त्तिकमेतत्।

(३)— 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ७, ४, ३६' इति सूत्रेण। 'क्याच्छन्दसि ३,२,१७०' इति उप्रत्ययश्च।

प्रेष्ठं वइत्येषा उशनसा दृष्टा, छन्दोदेवते पूर्ववत्।

सैषा पञ्चमी।

१२ ३ १२ ३२ ३१ २ ३२

प्रेष्ठं वो अतिथिꣳ स्तुषे मित्रमिव प्रियम्।

१२ २३ १ २ २र

अग्ने रथं न वेद्यम्॥ ५॥ ५

स्तुत्यर्थः (४)] अस्माभिः क्रियमाणया स्तुत्या स्तूयमानः सन्(५) 'वृत्राणि' बलेन जगतामावरकाणि रक्षः प्रभृतीनि, तमांसि वा(६) 'जङ्घनत्' भृशं हन्तु [ हन्तेर्यङ्लुगन्ताल्लिङर्थे लेट् (३,४,७) ] कीदृशोऽग्निः ? 'समिद्धः' समिदादिभिर्हविर्भिः सम्यग्दीपितः। अतएव 'शुक्रः' दीप्यमानः(७)। 'आहुतः' हविर्भिराहुतः॥ ४॥ ४

हे 'अग्ने'(१)'वः' त्वां [पूजार्थे बहुवचनं(२)] 'स्तुषे'(३)स्तौमि,

---

५-इयमेव उत्तरार्च्चिकस्य ५, १, १८, १।

(४) –'अर्षति-कर्माण उत्तरे धातवश्चतुश्चत्वारिंशत्'-इति नै० २, ४, १०। तत्रेदं षोडशतमम् नि० २. १४।

(५)––'वि शब्दो वैविध्यार्थः, विविधया स्तुत्या, तृतीया-निर्देशात् स्तुतः सन्निति वाक्यशेषः'-इति विवरणकारः।

(६) –'वृत्राणि शत्रु-कुलानि स्तोतुः यष्टुश्च' इति वि०।

(७) 'शुक्रः शुक्लवर्णः' इति वि०।

(१) 'सम्बुद्ध्येकवचनं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्'—इति वि०।

(२—'एकं वचनं न युञ्जीत गुरावात्मनि चेश्वरे'—इति शासन-मूलकमित्यर्थः. परं नेत्थमत्र सर्वत्र।

(३) स्तुषे नेदं लडात्मनेपद-मध्यमपुरुषैकवचनम्, किन्तर्हि? पञ्चमस्य

४र ५ ४ १ १ १ र २ २१
I प्रेष्ठं वाः। अता२३यिथीम्। स्तौषेमित्रम्। इवप्रा

२ १ २ २ १ २ १
२३याम्। अग्नायिरा३था३म्। नावा२३हा३४३यि। दा

५ ५
२३४योई्हायि॥ ८॥

४र ५ ४ १ २ २
II प्रेष्ठं वाः। ओहायि। अता२३यिथीम्। स्तुषा यि।

१ ३ ५ २र १२र
मित्रा३म्। इवा२प्रा२३४याम्। औहो ऽ१यि। अग्ने

१ १ ४ २ ५ ५
राथा२३म्। ना२३वे३। दा३४५यीई्हा। यि॥ १०॥

५र र १ १ र
III प्रेष्ठं वोहाउ। अतिथायिम्। स्तुषेमित्रमिवप्रा२३

२ १ २ १ २ ५र र २ १र २ १११
याम्। अग्नाये३। रा२था२३४औहो वा। न वेदिया२३४

१
५म्॥ ११॥ ५

अहमुशनादति शेषः। कीदृशम्? 'प्रेष्ठं' स्तोतृणामस्माकं धन

I, II, III, त्रयाणामेषामुशना ऋषिः, शैरिषं नाम।

लकारस्यात्मने पदे उत्तमपुरुषैकवचनम्, इति वि०। तथाहि 'सिब्बहुलं लेटि ३, ४, ३४' 'लेटोऽडाटौ ३. ४. ९४' इति सूत्रद्वयाभ्यां साधनीयम्।

त्वं न इत्येषा सुदीति-पुरुमीढ़ाभ्यां तयोरन्यतरेण वा दृष्टा, छन्दोदेवते पूर्ववत्।

सैषा षष्ठी।

१ २ ३ १ २ ३ १ २र३ १ २
त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः।
३२ ३१र २ र
उत द्विषोमर्त्यस्य ॥ ६ ॥ ६

दानेन प्रियतमम्। 'अतिथिं' सर्वैरतिथिवत्पूज्यम्। यद्वा [अत सातत्य-गमने। ऋतन्यञ्जीत्यादिना अतेरिथिन्] सततं देवानां हविः प्रदातुं गच्छन्तम्। 'मित्रमिव' सखायमिव 'प्रियं' स्तोतुः प्रीणन-करं। 'रथं न'(४) रथमिव 'वेद्यं' वेदोधनं धन-हितं लाभ-हेतुं, यथा रथेन धनं लभते, तद्वत्, स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ॥

"अग्ने"-इति छन्दोगानाम्, "अग्निम्"-इति बह्वृचानां पाठः॥ ५ ॥ ५

हे 'अग्ने' त्वं 'नः' अस्मान् 'महोभिः' पूजाभिः महद्भिर्धनैर्वा 'पाहि' रक्ष। कस्याः पाहि? 'विश्वस्याः' बहुविधात् 'अरातेः'

६ नास्तीयमुत्तरार्च्चिके।

(४)—'प्रतिषेधार्थीयः पुरस्तात् * * * उपमार्थीयउपरिष्टात् १,२,६,-इति नवक्रमासमादत परस्ताच्छ्रतस्य नञ्शब्दः इवार्थः।,

५ र २र १र२ १र २ २ १र र २र
I त्वन्नोयाग्ने महोभिः। पाहोयि वो३स्वा। स्या अरातेः।
१ २ १ २ १ २ १ :
उताद्वाऽ१यिषा२ः। मर्त्त्यस्य। इडा२३भा३४३। ओ३४इ।
डा ॥ १२ ॥

४र ५र र ४ ५ ५ २र १ २ २
II त्वान्त्वन्नोअग्नेम। होई भाईः। पाहो वोश्वा। औ३हो।
१ २ २ १ २ १ २ - १ २
स्या औ३हो। आरातेः। उताद्वा१ ईषाः२। मर्त्ता२या२३४
५र र २ १ १ १ १
औहोवा। स्या२३४५॥ १३ ॥ ६

अदातुः सकाशात् अदानाद्वा (१) पाहि। त्वमेव महद्धनं दत्वा अदातुरदानाद्वा सकाशाद्रचेत्यर्थः। यद्वा महोभिः (२) युक्तस्त्व-मिति योज्यम्। 'उत' अपिच। 'द्विषः' द्वेष्टुः 'मर्त्यस्य' मर्त्त्यात्स-काशात् पाहि अस्मभ्यं बलं दत्त्वेति भावः। अथवा मर्त्त्यस्य द्विषो द्वेषाद्रचेति सम्बन्धः। अरातेरित्यस्य अदानादितिपचे तत्रापि मर्त्यस्यादानादिति सम्बन्धनीयम्(३) ॥ ६ ॥ ६

I साकमश्वऋषिः, साम्वर्गम्।

II स एव ऋषिः, वार्तघ्नम्।

(१)—'अरातिः शत्रुः, स्त्रीलिङ्गनिर्देशो जात्यपचः, सर्वस्याः शत्रुजातेः सकाशात्'-इति वि०।

(२)—'कैः? सामर्थ्यात् पालनैः'-इति वि०।

(३)—विवरणग्रन्थे तस्मात् प्राक् 'अग्निर्मूर्द्धा (छ०१,१,६,७-उ०७,१,१६,१)'-इत्येषा

एह्यूष्विल्येषा भरद्वाजेन दृष्टा, छन्दोदेवते पूर्ववत्।

सैषा सप्तमी।

२ ३ १ २ २ २ ३ १ २ ३ १ २ ३ १ २

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः।

३ १ २ ३ १ २

एभिर्वर्द्धासि इन्दुभिः॥ ७॥ ७

५ २ २ १ ४ २ ५ ५ १ २ २

। एह्यूषू३ ब्रवाणाइ्यि तायि। अग्नइत्थेतरागा२

१ १२ १ १ २ १ ५

यिराः। एभा२यिर्वर्द्धा। सया२३हा३४३यि। दू२३४भोइ्

५

हायि॥ १४॥

५२२ २ १ ५ २ २ २ २

।। एह्युषु ब्रवो होणायिनायि। अग्न इत्थेतरा१गी३राः।

२ ३ ५ १ २ १ ५ ५

एभिर्वा२३४र्द्धा। सया२३हा३४३यि। द२३४भोइ्हायि॥

१५॥ ७

हे 'अग्ने' 'एहि' आगच्छ 'ते' तुभ्यं त्वदर्थं 'गिरः' स्तुतीः

७ इयमेव उत्तरार्चिकस्य १, १, २१, १।

। ।। अनयोर्वत्सऋषिः, शौनःशेपम् नाम।

व्याख्याता, इत्ता च तत्र यमवतरणिका-'अग्निर्मूर्द्धादिवः परापरूपेण व्यवस्थितोऽस्मा ऋचि अग्निः स्तूयते। अग्निर्मूर्द्धा दिव इति मन्त्रः अवत्यो न भवति, 'त्वमो अग्न मत्तोभिरित्यादिरवत्यः, अयमित्यभिनयेन दर्शयति'—इति।

आ ते वत्स इत्येषा काण्वगोत्रेण वत्सेन दृष्टा ।
छन्दोदेवते पूर्ववत् ।

सैषा अष्टमी ।

१ २ ३ १ २र ३ १ २३१ २
आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
२ ३ १ २ ३ २
अग्ने त्वाङ् कामये गिरा ॥ ८ ॥ ८

'इत्था' (१) इत्थमनेन प्रकारेण (२) 'सु' (३) सुष्ठु 'ब्रवाणि' इत्या-
शास्यते । ताः स्तुतीः शृणिवत्यर्थः । 'उ' (४) इत्येताः 'इतराः'(५)
असुरैः व ताः, स्तुतीः शृणुतिशेषः । [तथाच ब्राह्मणम्—
"अग्निरि त्थेतरागिरइत्यसुर्य्याह वा इतरागिरः" इति] अपि च ।
आगतस्त्वं 'एभिः' एतैः 'इन्दुभिः' सोमैः 'वर्द्धस' वर्द्धस्व ॥ ७॥ ७

'वत्सः' एतन्नामा ऋषिः 'ते' तव 'मनः' 'परमाच्चित्' उत्-

८ इयमेव उत्तरार्च्चिकस्य ४,२,१२,१ ।

(१)—'इत्थाः मत्याइत्यर्थः' इति वि० । इत्थत्यादन्त एव निघण्टु-तृतीये सत्य नामसु पठितः ।

(२)—इत्थमित्यव्ययस्य छान्दसमल्लोपे 'निपातस्य च ६. ३. १३६' इति दीर्घरूपम् ।

(३)—मन्त्रे 'षु'-इति ''सुञः ८. ३, १०७'-इति मूर्द्धण्य रूपम । एतच्च पादपूरणार्थमेवात्र प्रयुक्तमिति विवरणमतम् ।

(४)—'उ'-इत्येतदत्र पादपूरणे इति वि० मतम ।

(५)—'इतराः मत्यतोऽन्याः असत्याः' इति वि० ।

५र र १ र २ १ २र ३१

। आतेवत्साः। मनोयमत्। परमात्। चित्सधा२३

१ २ २ ४ ५ ४ ५

अग्नायित्वा३ङ्का३। मयो वा। गा॒ऽ५यिरोईहायि॥

४र५र ४र ५र ४ ५ २ १र

।। आतेवत्सोमनोयमत्। ऐयाहायि। परमाचित्

र १ १र र र र १

ढैया२३होइया। अग्ने त्वाङ् कामय ऐया२३ह

२ र १ २ १

गिरा। इडा२३भा३४३। ओ२३४५इ। डा। १

क्कष्टादपि 'सधस्थात्' सहस्थानात् द्युलोकात् (१)'आ य

आ यमयति। केन साधनेन? 'गिरा' स्तुत्या।

प्रत्यक्षकृतम् (४)। हे 'अग्ने' 'त्वां कामये' त्वदीयं मन

नियच्छामीति प्रार्थये।

"त्वाङ् कामये" इति छन्दोगाः। "त्वाम् कामय

बह्वृचाः, सुवन्तत्वादवग्रहञ्च पठन्ति॥ ८॥ ८

।.।। इन्द्राग्नेरिवानयोः काण्वऋषिः,

अभिधानन्तु ऋषिनामानुगतमेव कल्प्यम्।

(१) 'सह तिष्ठन्ति यत्र देवाः सः सधस्थः स्वर्ग उच्यते'-इति वि०।

पर्य्यायशब्दौ।

(२) 'छन्दसि लङ् लुङ् लिटः'-इति तृतीयाध्यायीयवचनात् इह लडर्थे

(३) -ऋग्गतादृतम्।

(४) त्रिविधाः ऋचोभवन्ति, परोक्षकृताः १, प्रत्यक्षकृताः २, आध्यात्मि

१२१म अ०

। २

स्थात्।

१६॥

र

सधस्था

र

१ाइया।

॥७॥८

मत्' (१)

ग्रष्टं (१)

। मय्येव

।"-इति

सहसधौ

लङ्।

प्रकाश १।

त्वामग्न इत्येषा भरद्वाजेन दृष्टा, छन्दोदेवते पूर्ववत् ।

सैषा नवमी ।

१ २ ३ १ २ ३ १ २३ १ २ ३ १ २
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
३ १ २ २ ३ १ २
मूर्द्ध्नो विश्वस्य वाघतः ॥ ८ ॥ ९

५र र ५र ५र १ २ र १ २
I त्वामग्ने पूष्काइरादधी । आथर्व्वा । नायिः । अमा२
२ ५ २ ५ २ ५ ४ ५
न्था२३४ता । मू२३४र्द्धो । वा२३४यिश्वा । स्य वो वा ।
४ ५
घा ऽ५तोइहायि ॥ १८ ॥ ९

हे 'अग्ने' 'अथर्वा' एतन्नामा ऋषिः 'त्वां' 'पुष्करादधि' पुष्करे

९ नास्तीयमुत्तरार्च्चिके ।

I वाभ्राश्विः सुमित्र ऋषिः ।

तत्र प्रथमपुरुषादिनिर्देशेन परोक्षार्थेषु नियुक्ता परा, यथा 'अग्निर्वृत्राणि जङ्घनत्' इति पुरस्तात्कृता, इहैव 'आ ते वत्सो मनो यमत्'-इति परेद्युश्च। मध्यमपुरुषादि निर्देशेन यत्र देवः प्रत्यक्षीकृतोऽनूद्यते सा द्वितीया, यथा 'अग्न आयाहि वीतये' इति प्रथमा, इहैवोत्तरदलञ्च। आत्मानमेव श्रोतव्यमधिकृत्य अभियुक्ता तृतीया, यथा— 'अहमिद्धि पितुष्परि मेधामृतस्य जग्रह। अहं सूर्य इवाजनि। ऋ०२.५,१,८' इत्येतत्स- मस्तम्—नैरुक्ते तद्भाष्ये च सप्तम प्रथम प्रथमादिग्रन्थे।

सैषा दशमी।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अग्ने विवस्वदाभरास्मभ्यमूतये महे।
३ १ २ ३ २ ३ २
देवो ह्यसि नो दृशे॥ १०॥ १०

पुष्कर-पर्णे 'निरमन्थत' अरण्योः सकाशादजनयत्। कीदृशात्पुष्करात्? 'मूर्ध्नः' मूर्धवद्धारकात्। 'विश्वस्य' सर्वस्य जगतः 'वाघतः' वाहकात् ["पुष्करपर्णे हि प्रजापतिर्भूमिमप्रथयत् तत् पुष्करपर्णे प्रथयत्-"इति श्रुतेः। भूमिश्च सर्व्वजगतआधार-भूतेति पुष्करपर्णस्य सर्व-जगद्धारकत्वम्। अत्र पुष्कर-शब्देन पुष्कर-पर्णमभिधीयते, इत्येतच्च तैत्तिरीयके विस्पष्टमाम्नातम्-"त्वामग्ने पुष्करादधीत्याह, पुष्करपर्णे ह्येनमुपश्रुतमविन्दत्"-इति(१)॥ ९॥९

'१० इयमेव उत्तरार्च्चिकस्य ८,१,६,१।

(१)—विवरणकारस्त्वेवमन्यथैव व्याख्याता, तथाहि—"अत्र निदानमभिधीयते—सर्वमिदमन्धतमसमासीत्, अथ मातरिश्वा वायुः आकाशे सूक्ष्ममग्निमपश्यत् स तम् मथ्नात्। अथर्वा ऋषिः तदेतदुच्यते—हे अग्ने' त्वाम् पुष्करमित्यन्तरिक्षनाम (नि०१,३,१३) तस्मात्, अधि शब्दस्य 'अधिपरी अनर्थकौ १,४,९३' इति कर्मप्रवचनीयः पादपूरणः। 'निरमन्थत' नितरां मथितवान्। कीदृशादन्तरिक्षात्? उच्यते—'मूर्ध्नः' प्रधानभूतात्। कस्य? उच्यते—'विश्वस्य' सर्वस्य 'वाघतः' ऋत्विङ्नामैतत् (नि०३,१८,३) अन्तर्णीतमत्वर्थश्चात्र द्रष्टव्यम् ऋत्विजोयजमानस्य च, षष्ठीनिर्देशात् अर्थायेति वाक्यशेषः" इति।

४ ५र ४ ५ १र ५ ४ ४ ५ २र २ १
I अग्ने विवस्वदाभरो। वाद्दायि। अस्मभ्यमूताऽइयायि
२र १ २ २ १ २ २ १ २ :
मह्वे। ओऽ। वाइद्दायि। ओ ऽ। वाइद्दायि। दायिवोऽ१

पूर्वोक्तासु ऋक्षु बह्वृचानामनुक्रमणिका-ग्रन्थं पर्य्यालोच्य तत्रोक्ता ऋषिछन्दोदेवता योजिताः। एव मुत्तरास्वपि योजनीयाः॥ अग्ने विवस्वदित्येषा तु बह्वृचैर्नाम्नाता, तथाप्यस्याः छन्दोदेवते पूर्ववद्विस्पष्टे, ऋषिस्तु वामदेवइति ग्रन्थान्तरादवगतः (°)॥

हे 'अग्ने' त्वम् 'अस्मभ्यम्' अस्माकं (¹) 'महे ऊतये' महते रक्षणाय [अव रक्षणे-इति धातोः ऊति-यूति-जूतीति (²) सूत्रेण निपातितं रूपम्] 'विवस्वत्' (³) स्वर्गादि-लोकेषु विशेषेण निवासस्य हेतुभूतमिदं कर्म 'आभर' सम्पादय। [हृ-ग्रहोर्भश्छन्दसीति भत्वम्] 'हि' यस्मात् त्वं 'नः' अस्माकं 'दृशे' दर्शनार्थं 'देवः' द्योतमानः 'असि'। [इन्द्रादयोनास्माभिर्दृश्यन्ते, त्वं तु गार्हप-

I वध्र्यश्वऋषिः अनूपो वा।

(०)—नैगेयादिग्रन्थात्।

(१)—षष्ठ्यर्थे चतुर्थी '२, ३. ६२'-इति कात्यायनवचनम्।

(२)—'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च' ३. ३. ९७।

(३)—'विवासनवत्, तमसां विवासनकरम्, किन्तत्? सामर्थ्यात् ज्योतिः' इति वि०।

३ १ २ २ १ २ २ १
ह्विया २। ओऽ। वा३हायि। ओऽ। वा३हा३यि। सा२यि
२ ५र र २
ना२३४ औहो वा। हशे ऽ१॥ १८ ॥ १०

इति प्रथमा दशति *॥

त्वादिदेशेऽतिद्योतमानः प्रत्यक्षेण दृश्यसे तस्मात्त्वां विशेषेण प्रार्थयामहे-इत्यभिप्रायः ॥१०॥१०

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य प्रथमः खण्डः ॥

* मूले मद्दृष्टेषु षडधिकपुस्तकेषु सर्व्वत्रैव 'दशति'-इत्येव पाठः। उदीच्य-मुद्रितेऽपि तथैव। विवरणग्रन्थे 'दशत्या'-इत्येवम्। सायण-मते तु खण्डइत्येव साधुः। इह मूलानुरोध एवाश्रितः।

अथ द्वितीयखण्डे

सेयं प्रथमा ।

(आयुङ्क्ष्वाहिर्ऋषिः) * ।

२ ३ ३ १ २ ३ १ र ३ १ २
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।
१ २ ३ १ २
अमैरमित्रमर्द्दय ॥ १ ॥ ११

४ ५ र ४ ५ १ २ १ ३
I नमस्तौ । होग्नायि । ओजसा३यि । गृणा२न्ता२३४
५ १ २ १ २ १ ३ ५ र र
यिदे । वाकृष्टया २ः । अमाये३ः । आ२मा२३४ औहोवा ।
२ ३ १ १ १ १
त्रमर्द्दया२३४५ ॥ १ ॥ ११

हे 'अग्ने ! देव' ! 'ते' (१) तुभ्यं 'नमो गृणन्ति' नमस्कार-शब्द-

११ इयमुत्तरार्च्चिकस्य ८,१,१२,१ ।
I ऋषिरविदितः संवर्गानाम ।

* इत आरभ्य खण्डद्वये भाष्यकृता ऋष्यादिकं नोल्लिखितम्। तत्र छन्दोदेवतायाश्च प्रथमखण्डतो वैलक्षण्याभावादकीर्त्तनं सुव्यवस्थितम्, परमृषिनाम्नां प्रकटने कोऽपि हेतुर्नोपलभ्यते ; प्रत्युत तत्प्रकाश एव लक्षितः इति विवरणग्रन्थ दृष्ट्वा त्वत्र सर्वत्र वेष्टन-चिह्नान्तर्गतः कृतः ।

(१)—षष्ठ्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्-इति वि० ।

सैषा द्वितीया।

(वामदेवऋषिः।)

१ १ २ ३ १ २ ३ २ ३ १ २

दूतं वो विश्ववेदसꣳहव्यवाहममर्त्यम्।

१ २ ३ २

यजिष्ठमृञ्जसे गिरा॥ २॥ १२

५र ४ २ १ ५र २ १र १

। I दूता३०वो३ विश्ववेदसाम्। हव्यवाहाम्। अमा२

५ ५ १ २ १ २ २ ० १

र्त्ता२३४ याम्। याजिष्ठम्। ऋ। जसे३हायि। गिरा।

२ १ ५ ५

औ३होवा। हो५इ। डा॥ २॥१२

मुच्चारयन्ति। किमर्थम्? 'ओजसे' बलाय (२)। के? 'कृष्टयः' मनुष्याः (३) यजमानाः [अतोऽहमपि गृणामीत्यर्थः] त्वं च 'अग्नेः' बलैः (४) 'अमित्रं' शत्रुम् 'अर्दय' नाशय॥ १॥ ११

हे अग्ने! 'विश्ववेदसं' विश्वं समस्तं वेदोधनं यस्यासौ विश्ववेदाः तम्, सर्वविदं वा। 'हव्यवाहं (१)' देवेभ्योहविषां वोढारम्।

१२ नास्तीयमुत्तरार्च्चिके।

(२)—ओजइति बलनामसु पठितम्-नि० २, ९, १।

(३)—कृष्टिरिति मनुष्यनाम, नि० २, ३, ८।

(४) 'रोमभिर्यवैर्वा' इति वि०।

(१)—"ऋक्च ७, २, १४"-इतिपिवः।

सैषा तृतीया।

(प्रयोगऋषिः)।

१ २     ३ २ ३ २ ३ १ २       ३ २
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः।
३ १२ ३ २
वायोरनीके अस्थिरन्॥ ३॥ १३

'अमर्त्यम्' अमरण-धर्म्माणं 'यजिष्ठम्' अतिशयेन यष्टारं। 'दूतं' देवानाम्। 'वः' त्वां 'गिरा' स्तुति-रूपया वाचा 'ऋञ्जसे' (१) यजमानोऽहं प्रसाधयामि वर्द्धयामीत्यर्थः [ऋञ्जतिः प्रसाधन-कर्म्मा (६,२,४)-इति यास्कः (२)॥ २॥ १२

हे अग्ने! 'हविष्कृतः'(१)यजमानार्थं 'गिरः'(२)स्तुतयः 'जामयः'(३) स्वसारइव 'देदिशतीः' (४) तव गुणान् दिशन्त्यः 'त्वा' (५) त्वाम्

१३ इयमुत्तरार्चिकस्य ७, २, १४, १।

(१)—'मध्यमपुरुषैकवचनमिदमुत्तमपुरुषस्य स्थाने द्रष्टव्यम्'-इति वि०।

(२)—यास्को निरुक्तकारः। निघण्टौ नैगमकाण्डे च पदश्रुतिः।

(१)—'हविषा याः क्रियन्ते ताः हविष्कृतः, कथम्पुनर्हविषा ताः क्रियन्ते? ताभ्यो हि प्रक्षिप्यमाणो वषट्कारो भवन्ति प्रत्यक्षमेतत्'-इति वि०।

(२)—'गिरन्ति भक्षयन्ति हवींषि ताः गिरः भक्षयित्र्यः'-इति वि०।

(३)—'जामयः भगिन्यः, काः पुनरग्ने र्भगिन्यः? ज्वालाः'-इति वि०।

(४)—'अत्यर्थं ददत्यः, किं ददत्यः? सामर्थ्याद् धनम्'-इति वि०।

(५)—'त्वा' इत्येतद् द्वितीयैकवचनं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम्, तव'-इति वि०।

५ र १२र ऽ१ ११ ७ २१ २

। उपत्वाजा। मयो२गि। रश्रोयियय्रू२ः। दायिदीश्च-

र १ २१ ७ २र१र १ ३२

तिर्हविष्कृ। तश्रोऽयियय्रू२ः। वायोरा२३ नी। कया३

४ ५ १२ १र १११

स्थाऽ५यिराइ५ई३न्। अस्थाइगावा२३४५ः॥ २२॥ २

५ र र ५र १ २ १

॥ उपत्वाजामाईयोगिराः। दाऽयिदिश्च। ताऽयिः।

२ ३ ५ ५रर रर ४५ १ २

हवी२ष्का२३४र्त्ताः। वायोरनाहायिकाया। स्थायिरा।

२र ५ ४५

औहो२३४वा। ई डा॥ २३॥ १३

उपतिष्ठन्ते। 'वायो': (६) 'अनीके' (७) समीपे त्वां समेधयन्त्यः 'अस्थिरन्' (८) अतिष्ठंश्च॥ ३॥ १३

। आभम्।

॥ औष्टीयम्।

(६)—वाति गच्छति 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (उ० १,१,१) वायुः। 'वायुर्गन्ता, सर्वयज्ञमानगृहान् प्रति गन्तुम्'-इति वि०।

(७)—'अनीक-शब्दोमुख-वचनः'-इति वि०।

(८)—'छन्दसि लुङ्लङ्लिटः (३,४,६)' इति काल-सामान्ये लङ्, 'प्रकाशन स्थेयाख्ययोश्च (१.३.२३)-इति आत्मने पदं व्यत्ययेन भस्य रन्।

सैषा चतुर्थी।

(मधुच्छन्दऋषिः)

१२   ३१ २३ २   ३ २३१२
उप त्वाग्ने दिवे दिवे दोषा वस्तर्धिया वयम्।
२३ १२ ३१२
नमोभरन्तएमसि ॥ ४ ॥ १४

२१  ४र ५र  १  १  २१र
I उपात्वा२३ग्नेदिवेदिवायि। दोषा२वास्ता२ः। धिया-
१  १  २१र  २  १
वयम्। नामो२भारा२। तयेमा२३सा३४३यि। ओ२३४
५इ। डा ॥ २४ ॥ १४

हे 'अग्ने' 'वयम्' अनुष्ठातारः 'दिवे दिवे' प्रतिदिनं 'दोषा-वस्तः' (१) रात्रावहनि च 'धिया' बुद्ध्या 'नमोभरन्तः' नमस्कारं सम्पादयन्तः 'उप' समीपे 'त्वा एमसि' त्वामागच्छामः ॥ [उप-शब्दस्य निपात-स्वरः २]। 'त्वामौ द्वितीयायाः (८,१,२३)'-इति

१४ नास्तीयमुत्तरार्च्चिके। ४
I वैश्वामित्रम्।

(१)—'दोषेति रात्रेर्नाम (नि० १, ७, ९) वस्ता आच्छादयिता, रात्रौ यः स्वेन ज्योतिषा तमांस्याच्छादयति सदोषावस्ता, तस्य सम्बोधनम् हे 'दोषावस्तः!' इति वि०।

(२)—'निपाता आद्युदात्ताः (५, ११)'-इति फिट्सूत्रम्।

अथ पञ्चमी।

(शुनःशेपऋषिः)।

१ २ ३ १ २ ३ १ २ ३ १ २

जराबोध तद्विविड्ढि विशे विशे यज्ञियाय।

१ १ ३ १ २ ३ २

स्तोमꣳरुद्राय दृशीकम्॥५॥१५

युष्मच्छब्दस्यानुदात्तत्वादेशः। दोषा-शब्दोरात्रि-वाची (नि०-१,७,८)। वस्तः-इत्यहर्वाची (नि० १,८,१)। द्वन्द्वसमासे कार्त्तकौजयादित्वादाद्युदात्तः (३)। साविकाचइति धियोविभक्तिरुदात्ता (४)। नमः-इति निपातः, (५); यद्वा, नञ्विषयस्येत्याद्युदात्तः (६)। भरन्तइत्यत्र शपः पित्वात् (७) शतुर्लसार्वधातुकत्वाच्च (८) अनुदात्तत्वे सति धातु-स्वरः (९) शिष्यते (१०)।

१५ इयमुत्तरार्चिकस्य ८, २, ३, १।

(३)—'कार्त्तकौजपादयश्च (६, २, ३७)'-इति पाणिनिसूत्रम्।

(४)—'साविकाचस्तृतीयादि विभक्तिः (६, १, १६८)' -इति पा०।

(५)—तथाच निपातस्वर श्चाद्युदात्तः।

(६)—'नञ्विषयस्यानिसन्तस्य (१, २)'-इति पा०।

(७)—'सुप्पितावनुदात्तौ (३, १, ४)'-इति पा०।

(८)—'तास्यनुदात्तेत् ङिदुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः (६, १, १८६)'-इति पा०।

(९)—'धातोः (६, १, १६२)'-इति पा०। अन्तोदात्तः स्यात्।

(१०)—'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति नियमादिति भावः।

४ ५ १ १ १ २र १
। जारा। बोधा२ बोधा२। तद्विविड्ढियि। विशेवा

१ र १ ५र र १र २ १र
यिशे२। यज्ञा२३। याया३४औहोवा। स्तोमऽ० रुद्राय

२ र १
दृशीकाम्॥ २५॥

५ र र ४ ५ १ २१ २१
II जराबोधोवा। तादिविड्ढियि। विशायिवा२३

२ २ १र र ७ ४ ५ २र २
यिशे। यज्ञियाया। स्तोमाऽ० रुद्रा२३याऽ। दृशीको३४५

इ। डा। २६॥ १५

एमसीति 'इदन्तोमसि (७,१,४६)'-इत्यनेन इकारः, 'तिङः-इति (११) निघातः] ॥ ४॥१४

हे 'जराबोध' जरया स्तुत्या बोध्यमानाग्ने! 'विशे विशे' तत्तद्यजमान-रूप-प्रजानुग्रहार्थं 'यज्ञियाय' यज्ञ-सम्बन्ध्यनुष्ठानसिध्यर्थं 'तद्' देवयजनं 'विविड्ढि' प्रविश। यजमानोपि 'रुद्राय' क्रूरायाग्नये तुभ्यं 'दृशीकं' दर्शनीयं समीचीनं स्तोत्रं करोतीति शेषः।

I, II हे इमे जराबोधीये।

(११)--'तिङतिङः' (८, १, २८)-इति पा०।

अत्र, यास्क एवं व्याख्यातवान्—"जरा स्तुतिः, जरतेः स्तुतिकर्म्मणः, तद्वाचतया बोधयितरिति वा तद्विविड्ढि तत्कुरु, मनुष्यस्य यजमानाय स्तोमं रुद्राय दर्शनीयम् इति" (१०,१,८)। जराबोध, 'जृष वयोहानौ' अत्र तु स्तुत्यर्थः(१)। "षिद्भिदादिभ्योऽङ् (३,३,१०४)" इत्यङ् प्रत्ययः, अतष्टाप् (४,१,४), जरया स्तुत्या बोधयत्यसौ जराबोधः; यद्वा, जरया बोध्यते इति जराबोधः, कर्म्मणि (२) आमन्त्रिताद्युदात्तत्वम् (३)। विविड्ढि 'विश् प्रवेशने' लोटो हिः (३,४,८७), 'बहुलं छन्दसि (२,४,७६)'-इति शपः श्लुः, अभ्यास-हलादिशेषौ (६,१,४।७,४,६०) 'हुझल्भ्यो-हेर्धिः (६,४,८७)' इति हेर्धिरादेशः, षत्व-ष्टुत्वे (८,२,३६।८,४,४१); यद्वा, विष् व्याप्तावित्यस्य लोण्मध्यमैकवचने अभ्यासस्य गुणाभावः। विशे विशे, सावेकाचइति (६,१,१६८) चतुर्थ्या उदात्तत्वम्। 'अनुदात्तञ्च (८,१,३,)-इत्याम्रेडितानुदात्तत्वम् (४)। यज्ञियाय, 'यज्ञर्त्विग्भ्यां घ-खञौ (५,१,११)'-इति घः। दृशीकम्, अनिदृशिभ्यां चेति कीकन् प्रत्ययः, नित्वादाद्युदात्तः (५)(०)॥५॥१५

(१)—निघण्टौ तृतीयस्य चतुर्दशे अर्च्चतिकर्म्मसु षडनक्षरपाठात्।

(२)—'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'-इति सूत्रात्।

(३)—'आमन्त्रितस्य च (६, १, १९८)'-इति सूत्रेण।

(४)—'तस्य परमाम्रेडितम्'-इति ८, १, २।

(५)—'ञ्नित्यादिर्नित्यम् (६, १, १९७)'-इति सूत्रात्।

(०)—'अत्रेतिहासमाचक्षते—ऋषिः श्यावाश्व एतमुवाच—रुद्रं स्तुहि, रौद्रा हि पशवः; स तं प्रत्युवाच—नाहं जानामि रुद्रं स्तोतुम्, त्वमेव चैनं स्तुहीति। तदेतद्-नया ऋचा उच्यते।' * *' हे 'जराबोध'! यन्नामबोधः तत्त्वमेव 'विविड्ढि' वेत्स

अथ षष्ठी।

(मेधातिथिर्ऋषिः)।

२३ १ २र ३ १ २ ३ १ ३ १ २
प्रति त्यञ्चारु मध्वरं गोपीथाय प्रहूयसे।
३ १ २ ३ १ २
मरुद्भिरग्न आ गहि॥ ६ ॥१६

२ १ ४र ५ २र २ १र २ १
I प्रतित्या२३ञ्चारुमध्वराम्। गोपीथा। याऽ। प्राहूया
५ ११२ १ २र १ २ ४ ५
२३४साइ। मरुद्भिः। आग्ना आगहा। औ३होवा।
४
हो५ इ॥ डा॥ २७॥ १६

१६ नाम्तीयमुत्तरार्चिके। ५

I मारुतम्।

जानामि, नाहम्; अथवा 'विविड्ढि' विष्लृव्याप्ताविव्यस्येदं रूपम्, अथवा धातुः, वेषतीति कर्मनामसु पाठात् मान्नां चाप्यातवत्वात्, कर्माणि च करोत्यर्थस्य सम्भवात् करोत्यर्थोऽपि व्याप्त्यर्थ एवेति गम्यते, तत् कुर्वित्यर्थः। किन्तत्? उच्यते 'विप्रविप्र' मनुष्यस्यार्थाय, 'यज्ञियाय' यज्ञसम्पादिनोऽर्थाय 'स्तोमम्' स्तोत्रम् 'रुद्राय' 'दृशीकम्' दर्शनीयम्। अथवा रोदन क्रियायोगात् अग्निरेवात्र रुद्र उच्यते, जगबोध इत्यपि चान्तरात्मनः सम्बोधनम्। प्रैषश्च। हे मदीयान्तरात्मन्! कुरु—किम्? सर्व मनुष्याणां यज्ञसम्पादिनः अग्नेरर्थाय स्तोमम्"-इति,वि०।

अथ सप्तमी।

(शुनःशेपऋषिः)।

१ ३ २ ३ १ २ ३१ २ ३ १ २र
अश्वं न त्वा वारवन्तं वन्दध्या अग्निन्नमोभिः॥
३ १ २ ३ १ २
सम्राजन्तमध्वराणाम्॥ ७॥ १७

[त्यच्छब्दः सर्वनामस्तच्छब्द-पर्यायः] हे 'अग्ने' योयम्ः चारुः अङ्ग-वैकल्य-रहितः 'त्यम्' तथा.वधं 'चारुम् अध्वरं' 'प्रति' लक्ष्य(१) 'गोपीथाय' सोम-पानाय 'प्र हूयसे' प्रकर्षेण त्वं हूयसे। तस्मादस्मिन्नध्वरे त्वं मरुद्भिर्देवविशेषैः सह 'आ गहि' आगच्छ॥ [सेयमृग्यास्केनैवं व्याख्याता—"तं प्रति चारुमध्वरं सोमं पानाय प्रहूयसे सोऽग्निर्मरुद्भिः सहागच्छ"-इति (१०,३,१२)॥ ६॥१६

अध्वराणां यज्ञानां 'सम्राजं तं' सम्राट्स्वरूपंस्वामिनमग्निं त्वां 'नमोभिः' स्तुतिभिः 'वन्दध्यै' वन्दितुम् (१) प्रवृत्ता इति

१७ इयमुत्तरार्चिकस्य ८, १, ७, १।

(१)—'प्रतीत्येष लक्षणे कर्मप्रवचनीयः'-इति वि०। 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः' १, ४, ९०।

(१)—'तुमर्थे—से, सेन, असे, असेन् क्से, कसेन्, अध्यै, अध्यैन्, कध्यै, कध्यैन, शध्यै. शध्यैन्, तवै, तवेङ्, तवेनः (३, ४, ९)'-इति पा०।

१ २ ३र ५ १ २ ३र ५
। आश्वा। औहो२३४वा। नात्वा। औहो२३४वा।
४र ५ ४ १ १ ३र ५ ४ ५र
वारंवन्तंवन्दध्या। अग्ना। औहो२३४वा। नमोभिः
४र ५ ४ १ २र २ १ ४ ५ ४
सम्राजन्ताम्। आध्वराणाम्। औ२३होवा। होपुई।
डा॥ २८ ॥

४ ५ ४ ५र ४र ५ ४ २ १ र र
II अश्वन्नत्वावारवन्ताम्। वन्दध्या अग्निन्नमोभायिः।
० १र २ २ ३र ४र ५ १ ३ ५
सम्म्राजम्। नमाध्वरा३औहोवा। इहा२३४हाइ।
३र ० ३ ५र र ०
औहो३१२। या२३४औहोवा। णा३४५म्॥ २९ ॥

५ र र ४ ५ २ ३ ५ २१
III अश्वन्नत्वाऔहोहायि। वारावा२३४न्ताम्। वन्दा-
५ १ ० ३र र ५ १ ३
ध्या२३४हायि। अग्नायिन्नमा३४। औहोवा। इहा २३४
५ २ ३ ५ २ १र २ १ ७ २
हायि। उक्वा२३४भीः। सम्म्राज। न्ताऽमध्वरा३४।
३र ४३ ५ १ ३ ५ ३र २
औहोवा। इहा२३४हायि औहो३१२३४। णाम्।
५र ५ ४
एहियाईहा। होऽ५इडा॥ ३०॥ १७

I, II, III अयाणामेवैषां भृगुःशुनःशेपोवा ऋषिः,
वारवन्तीयं नाम।

१६ का

अथाष्टमी।

(प्रयोगऋषिः)।

३ १ २र ३ १ २र

और्वभृगुवच्छुचिमप्रवानवदाहुवे।

३ १ २ ३ १ २

अग्निᳪसमुद्रवाससम् ॥ ८ ॥ १८

शेषः (¹)। अग्नेर्दृष्टान्तः 'वारवन्त' वालयुक्तम् 'अश्वं न' अश्वमिव। अश्वो यथा वालैर्व्यथकान् मशक-मक्षिकादीन् परिहरति तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः ॥ ७ ॥ १७

'समुद्रवाससं' समुद्रमध्य-वर्तिनं वाड़वं (¹) 'शुचिं' शुद्धम् अग्निम् 'और्वभृगुवत्' यथा और्वभृगुः 'अप्रवानवत्' यथा अप्रवानः, तथा 'आहुवे' (²) अहमाह्वयामि ॥ ८ ॥ १८

---

१८ नाम्तीयमुत्तरार्चिके। ६

(२) 'इच्छामइति वाक्यशेषः'-इति वि०।

(१) 'समुद्र इत्यन्तरिक्ष-नाम (नि० १, ३, १५) तत्र निवासोयस्य स समुद्रवासाः, तं समुद्रवाससम्, अन्तरिक्षनिवासमित्यर्थः ; वैद्युतात्मा ह्यसौ तत्र निवसति। अथवा ✱ ✱'-इति वि०।

(२)—'बहुलं छन्दसि (६, १, ३४)'-इति कः सम्प्रसारणम्।

५र ४ २ ५ १ २र
I और्वभृगुवत्। औहायि। शू२३४चीम्। आप्नवान

१ १२१ १ १ ११२१
वदा२हुवा२ यि। हुवओयि। अग्ना२ यि४ं समू२स मुओ।

२१२ १११
द्रवाससा३१ऊवा२३४५॥ ३१॥

२५ ४ ५ ४ ४ १ १र
II और्वभृगुवच्छुचिम्। ए॒५॥ शुचीम्। आप्नवान

२१ २१२ २१ ७ २१२ १ २ २
वदा२इहुवायि। हुवा२३यि। हुवए। अग्नायिंसा३मू।

२१ २१२ १ १ र २र २ १ १
समू२३। समूए३। द्रा२वा२३४औहोवा। ससा३मे२३-

११
४५॥ ३२॥ १८

अथ नवमी।

(प्रयोग ऋषिः।)

२ १ २२ १ २र२ १२ ३ १२
अग्निमिन्धानोमनसा धियंसचेत मर्त्यः।

२ १२ २१२
अग्निमिन्धे विवस्वभिः॥ ६॥ १९

---

I और्व ऋषिः, सामुद्रं समुद्रस्य वासो वा।

II वैधारय ऋषिः, सामुद्रं समुद्रस्य वासो वा।

१९ नास्तीयमुत्तरार्चिके। ७

५ ४ ५ र ४ ५ र ५ १ ४ ५ र
I अग्निमिन्धानोमनसौ। धौहोवाहाइ। धीयᳬसचे-
र र ८ १ १ १
तंमौ। होइहाइ। हो२३४र्त्तिया। अग्नायेइम्।
१ ५र र ७१ ३ १११ १
आयिन्धा२३४ओहोवा। विवस्वभो२३४५ः॥ ३३ ॥ १९

'मर्त्यः' मनुष्योऽग्निमिन्धानः काष्ठैः प्रज्वलयन् मनसा एव श्रद्दधानः 'धियं' कर्म (१) 'सचेत' काले भजेत। 'विवस्वभिः' ऋत्विग्भिश्च (२)अग्निम् एव 'इन्धे' प्रज्वलयति॥

अह्नानाम् "इन्धे"—इति पाठः॥ ८ ॥ १९

---

अथ दशमी।

(वत्सऋषिः।)

२उ ३ २३ १२ ३ १ २ ३ २
आदित्प्रत्नस्य रेतसोज्योतिः पश्यन्ति वासरम्।
३ २उ ३ १२ ३ २
परोयदिध्यते दिवि॥ २० ॥ २०

---

I अग्निऋषिः, असङ्गम्।

२० नास्तीयमुत्तरार्च्चिके। ८

(१)—धीरिति निघण्टौ द्वितीय-प्रथमे कर्मनामसु विंशत्यनन्तर पठितम्, तृतीय-नवमे प्रज्ञानामसु च षड्नन्तरं पठितम्। "अथवा धीरिति प्रज्ञानाम, तम्, सचेत सम्भजेत लभेतेत्यर्थः"-इति वि०।

(२)—'समम्मां विवासयितृभिश्च विभिः' इति वि०।

४र        र ४        १र        र
। आदित्प्रत्नाऽ५स्य रेतसाः । ज्योतिः पश्यन्ति वासा२

१   २१र   १   २ १
राम् । पराया२ दिध्यताइ । दिवि । द्योइ । द्योइ ।

२र १र  २र  १   १ १
औहो औहोवा२३४५हा उ । वा ॥ ३४ ॥ २०

## इति द्वितीया दशतिः ॥

'परोदिवि' (१) दिवः परस्तात् [व्यत्ययेन सप्तमी (३,४,८८)। बह्वृचानां दिवेति तृतीयान्तेन व्यत्ययः, दिवि द्युलोकस्योपरि] 'यद्' यदा अयं वैश्वानरोऽग्निः सूर्यात्मना 'इध्यते' दीप्यते 'आदित्' अनन्तरमेव (२) 'प्रत्नस्य' चिरन्तनस्य 'रेतसः' गन्तुः ['री' गति-रेषणयोः, अस्मात् 'सुरीभ्यां तुट् चे'त्यसुन् तुडागमश्च। यद्वा, रेतसइत्युदकनाम (नि० १,१२,१६) रेतस्विनउदकवतः, साम र्थ्यान्मत्वर्थोलिप्यते] इद्धस्येन्द्रस्य सूर्यात्मनः 'वासरं' (३) नियामकं

---

। प्रजापतिर्ऋषिः, निधनकामम् ।

(१)—'व्यत्ययेन पुंल्लिङ्गम्, नपुंसकलिङ्गं कर्त्तव्यम, परमरूपमेव दीप्यते। दिवि द्युलोके'-इति वि० ।

(२)—'आत्-इत-द्वावपि पादपूरणे'-इति वि० ।

(३)- 'वाशब्दः वैविध्ये वर्त्तते, सर इति सर्त्तेर्गत्यर्थस्य रूपम्, विविधं यद् गच्छति

* इति ग्रामे गेय-गाने प्रथमस्यार्द्धः प्रपाठकः ॥

वासरस्य निवास-हेतु भूतं वा 'ज्योतिः' द्योतमानं तेजः 'पश्यन्ति' सर्वे जनाः। [यद्वा वासरमित्यत्यन्तसंयोगे द्वितीया (२,३,५), कृत्स्नमहः उदयप्रभृत्यास्तमयात् ज्योतिः पश्यन्तीत्यर्थः 'इसुसोः सामर्थ्ये (८,३,४४) इति विसर्जनीयस्य षत्वम्॥१०॥ २०

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य द्वितीयः खण्डः॥

---

तद् वासरम्; किम्पुनस्तत्? तदेव सूर्याख्यं ज्योतिः, तद्धि दिवा उष्णेन गच्छति रात्रौ शीतेन। **। अथवा वासरं गमनं तत् करोतीति णिच्, वासरयति वासरयते, अथ वासरं गमयितृ इत्यर्थः; वैद्युतं हि ज्योतिः मेघात् यत् पृथिवीं प्रति उदकं गमयति नयति।—'ये पश्यन्ति जनाः, यच्च वासरम्, यच्च परम् इध्यते दिवि, तत् पुराणस्योदकस्य सम्बन्धी'-इति वि०।

अथ तृतीये खण्डे—

मैषा प्रथमा।

(प्रयोगऋषिः)

३ १ २३१ २ ३ १ २ ३ २
अग्निं वोवृधन्तमध्वराणां पुरूतमम्॥
२ ३ २३ १ २
अच्छा नप्त्रे सहस्वते॥१॥२१

५ र ४ ५ १ २र र १ २र
I अग्निंवोवृधान्ताम्। आध्वराणाम्। पुरूतामौ।
र २ १ १ २ १ ५ ४
होवाइहाइ। आच्छा२नाप्त्रे२३। सहो२३४वा। स्वा-
५
५तोई६हाइ॥१॥

५ ५ ११ र र र
II अग्निंवाई५। वृधन्ताम्। अध्वराणाम्। पुरूतम-
२ १
मच्छा२ हो१इ। ना२३प्त्रे। सहास्वा२३४५ताई५६इ।
३ ५
ई२३४तौ॥२॥

५ ४ ५ ४ १ २ १ र र
III अग्निंवः। ओहाइ। वृधा२३न्ताम्। अध्वराणाम्।

२१ इयमुत्तरार्च्चिकस्य ३, १, २०, १।

I, III, II। इमानि तौरश्रवसैन्युक्तिनानि।

अथ द्वितीया।

भरद्वाजऋषिः।

३ २ ३ १ २ ३ २ ३ २ ३ १ ३ १ १ २
अग्निस्तिग्मेन शोचिषा यꣳसद्विश्वन्न्य१ऽत्रिणम्।
३ १ २ ३ २
अग्निर्नोवꣳसते रयिं॥ २ ॥ २२

१ २ २ र २ ५ १ २ १
पुरु१ता३मम्। अच्छानप्रो१२३४त्वा३। मात्वा३त्वा।
१ २ ४ ५ ४
स्वना। औ३होवा। होऽ५इ। डा॥ ३ ॥ २१

'अध्वराणाम्' अहिंस्यानां बलिनां 'नप्त्रे' बन्धुं 'सहस्वते' बलवन्तं [ विभक्ति-व्यत्ययः (१.४,८८) 'हुवन्त' ज्वालाभिर्वर्द्धमानम् 'पुरुतमम्' अतिशयेन बहुमग्निं हे ऋत्विजः! 'वः' यूयम् 'अच्छा' (१) अभिगच्छत (२)॥ १ ॥ २१

'अयम्' 'अग्नि' 'तिग्मेन' तीक्ष्णेन 'शोचिषा' तेजसा 'विश्वं'

२२ नास्त्ययमुत्तरार्च्चिके। ८।

(१)—'निपातस्य च (६, ३, १३६)'-इति दीर्घः।

(२)—'अध्वराणाम्' यज्ञानां 'इधन्तम्' वर्द्धयन्तम् 'वः' त्वाम् अग्निम् 'सहसः' नप्त्रे बलवत्पुत्र-लाभाय 'अच्छ' अभिमुखं स्तौमि-इत्यर्थः वि०-सम्मतः।

१ २ ३   ५   २ र   १   २ ३
। आग्नाओ२३४वा। निग्मेना३श्रा। चाइषाओ२३४

५   १  २ र३   ५  १    २ ३
वा। या५साओ२३४वा। वा इस्वानिया। आइणाओ२३४

५   २ १४र   र ३ २
वा। अग्निर्ना२व५सतेरयी१म् ॥ ४ ॥

४ ५   ४ ५   ३   ५   ५ १ ३
।। ओहा। ओग्नीः। ता२३४इग्मे। नाम्रोचा३२४

५   १   ३   ५   २ ३   ५
इषा। य५सा२हा२३४इस्वाम्। नियत्रा२३४इणाम्।

२ १र   १ २ ३   ५र र   ३ ५
अग्निर्ना२। वा२५सा२ता२३४औहोवा। रा२३यीम् ॥ ५ ॥

सर्वम् 'अत्तिगम्' अत्तारं राचसादिकं 'नियंसत्' (१) निहन्तु [बह्वृचा अनुस्वारस्थाने आकारं कृत्वा "यामत्" इति पठन्ति] अपिच 'नः,' अस्मभ्यमग्निः 'रयिं' धनं (२) 'वंसते' ददातु ॥

"वंसते"-इति छन्दोगाः। "वनते" इति वह्वृचाः ॥ २ ॥ २२

।, ।। अनयोर्हर इति नाम, ऋषिरविदितः ।

(१)--यच्छतेर्लेटि रूपम्।

(२)--निघण्टौ द्वितीय दशमे धननामसु पठितमस्मम्।

अथ तृतीया।

(वामदेवऋषिः)

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १र २र
अग्ने मृड महाँ असि य ईमा देव युञ्जनम्।
३ १ २ ३ २ ३ १ २
इयेथ बर्हिरासदम्॥ ३॥ २३

५ ४ ५ ४र ५ र ४ ५र ४ १
।।। अग्निस्तिग्मेनशोचिषा। इहा। यꣳसद्विश्वं
१ २ १ र १ २ १
न्यत्रिणा२म्। इहा। अग्निर्नोवꣳसता२इ। इहा३रा२
५ ५
३४योईहाइ॥ ६॥ २२

१ ७ २ १ ३ ५ १
। अग्नाइमृडा२ऽ०। महाꣳ आ२३४सी। अय
र० ३१ ३ ५ १ र ३ २
आदा२इ। वयुञ्जा२३४नाम्। इयेथबा२३। र्हिरा३
५
सा५दा६५६म्॥ ७॥

२३ नास्तीयमुत्तरार्च्चिके। १
।।। इहवद्वामदेव्यम्।
। यामम्।

१ ४र  २ ४ १र  ४ ५   १र २ ४ ५  २ ४ १र ४र
।। अग्नेमृडमहा।ऽ०असि। ओहाइओहा। अयआदे-

२ ४ ५  १र २ ४ ५  ११र २ १ २ ४
वयुञ्जनम्। ओहाइओहा। इयेथा२३ब। र्हिरा इसा५
दाइ५इम्॥ ८ ॥ २३

५ र २  ४र ५र ४  ५  १  र २ १  २
। अग्नेरा३त्राणो अ२ंहसाः। प्रतिस्मदेवरिषा२३ताः।

१  २  १ र २  १
तपाइष्ठा२३इरा। जरौदा२३हा३४३। ओ२३४५इ।
डा॥९॥ २४

हे 'अग्ने'! 'मृड' अस्मान् सुखय। स त्वं 'महान् असि' प्रभूतो भवसि। 'यः' त्वम् 'अयः' गन्ता 'देवयुं' (१)देवानां कामयितारं 'जनं' यजमानं 'बर्हिः' दर्भम् (२)'आसदम्' यज्ञे आसत्तुम् (३) 'आ इयेथ' (४) आगच्छसि॥

"अयः"-इति छन्दोगाः। "ययीम्"-इति बह्वृचाः॥ ३॥२३

।। इदमपियामम्।

। राक्षोघ्नम्।

(१)—देवान् यष्टुमिच्छतीति क्यचि 'क्याच्छन्दसि (३, २, १७०)'-इति उः।

(२), (३)—'बर्हिः'— द्वितीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, बर्हिषि। 'आसदम्'-इदमपि द्वितीयैकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्. आसदं आसदना यमित्यर्थः'-इति वि०।

(४)—'छन्दसि लुङ् लङ् लिटः (३, ४, ६)'-इति लिट्।

अथ चतुर्थी।

(वसिष्ठऋषिः)

२३ १ २ ३ १ २ ३ १ २ ३ २
अग्ने रक्षा णो अꣳहसः प्रति स्म देव रीषतः।

१ २ ३ १ २
तपिष्ठैरजरो दह ॥ ४ ॥२४

हे 'अग्ने'! त्वं 'नः' अस्मान् 'अंहसः' पापात् 'रक्ष' पाहि [संहितायां(१) दीर्घश्छान्दसः(२)] अपिच हे 'देव' द्योतमानाग्ने! 'अजरः' (३) जरा-रहितस्त्वं 'रीषतः' हिंसतः शत्रून् [संहितायां दीर्घश्छान्दसः] 'तपिष्ठैः(४)' अतिशयेन तापकैस्तेजोभिः 'प्रति दह स्म' (५) भस्मीकुरु॥

स्मेति सकारस्य संहितायां 'प्रति ष्म' इति षत्वं (६) बह्वृचाः कुर्वन्ति॥ ४ ॥ २४

२४ नास्तीयमुत्तरार्च्चिके। ११

(१) -'अग्ने रक्षाणो' इत्यादौ ऋक्पाठे।

(२) -'द्व्यचोऽतस्तिङः (६, ३, १३५)'-इति सूत्रेण। तत्रैव रक्षाणइति णत्वमपि 'नश्च धातुस्थोरुषुभ्यः ८,४, २७)'-इति छान्दसम।

(३) - 'जरा स्तुतिः, सा यस्य कर्त्तव्यत्वेन विद्यते (तान् नास्तिकान्)'-इति वि०

(४)—'अन्येषामपि दृश्यते (६, ३, १३६)' इति सूत्रेण।

(५) 'स्म इति पादपूरणः'-इति वि०।

(६)—अनादिष्टस्यापि 'पर्वपदात् (८, ३, १०६)' इति षत्वम्।

अथपञ्चमी।

(भरद्वाजऋषिः)

१ २ ३ १र २र ३ १ २
अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः।
३ १ २ ३ १ २
अरं वहन्त्याशवः॥ ५॥ २५

५ र २ ४र ५ ४र ५ १ र र र १र २
। अग्ने यू२३ङ्क्ष्वाहियेतवा। अश्वासोदेवसाधा२३वाः।
१ २ १र १
अरंवा२३हा। तियाशा२३वा३४३ः। ओ२३४५इ।
डा॥ १०॥ २५

हे 'देव' द्योतमान! 'अग्ने!' तानश्वान् 'युङ्क्ष्व' आत्मीये रथे योजय [बहुलं छन्दसीति शपो लुकि "युङ्क्ष्व" इति पठन्ति] ये 'तव' त्वदीयाः 'साधवः' साधकाः सुशीलावा 'अश्वासः' (१) अश्वाः 'आशवः' शीघ्रगामिनः (२) 'अरम्' अलं पर्याप्तं त्वदीयं रथं 'वहन्ति' (२)॥

२५ इयमुत्तरार्चिकस्य ६,२,२,१।
। इयमपि रात्रौ गेयम्।

(१)—'आज्जसेरसुक' (७, १, ५०) इत्यसुकि रूपम्।
(२—नि० २. १५, १६।
(३)—अस्माभिः पादपूरणार्थः।

अथ षष्ठी।

(वशिष्ठऋषिः)

१ २ ३ १ २ ३ १
नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम्।
३ १ २
सुवीरमग्न आहुत ॥ ६ ॥ २६

५ र २ ४ ५ १ २ १
। नित्वा। क्षोइ। न। क्षिया। वाइश्पताइ। द्युम-
२ १ २ ३ ५ ४ २र १ २र
न्तम्। धाइ। माहेवा२३४याम्। सुवाहाइ। रामग्ना
१ ५ ४ ५
औ२३वा। होपूतोईहा इ ॥ ११ ॥ २६

"वहन्त्याशवः"-इति छन्दोगाः। "वहन्ति मन्यवः"-इति वह्वृचाः ॥ ५ ॥ २५

'नक्ष्य' उपगन्तव्य! [ नक्षतिर्व्याप्ति कर्मा (१) ] 'विश्पते' विशां पते! (२) 'आहुत' सर्वैर्यजमानैरभिहुत! हे 'अग्ने!'

२६ नास्तीयमुत्तरार्चिके। १.२
। वैश्वमनसम्।

(१)—निघण्टु-द्वितीयाष्टादशे व्याप्तिकर्मसु 'नक्षते २' इति पाठात्।
(२)—निघण्टु-द्वितीय-तृतीये मनुष्यनामसु 'विशः'-इति षष्ठं पदम्।

अथ सप्तमी।

(विरूपऋषिः)

३ २३ २ ३ २ ३ १२ २२ ३ २ ३ २
अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्।
३ १ २२
अपाᳲरेताᳲसि जिन्वति ॥ ७ ॥ २७

५ र र ५ १ १ १र
। अग्निर्मूर्द्धादो३इवःककूत्। पातो२ःपार्थो२। विया
१ १ १ २
अयाम्। आपा२ᳲराइता२। सिजिन्वा२३ता३४इ।
१
ओ२३४५इ। डा ॥ १२ ॥ २७

'दामन्तं' दीप्तिमन्तं 'सुवीरं' कल्याणस्तोत्रकं (१) 'त्वा' त्वां वयं 'नि धीमहे' निहितवन्तः॥

"धीमहे वयम्"-इति छन्दोगाः। "देव धीमहि" इति बह्वृचाः॥ ६ ॥ २६

'मूर्द्धा' देवानां श्रेष्टः 'दिवः' द्युलोकस्य 'ककुत्' उच्छ्रितः

२७ इयमुत्तरार्च्चिकस्य ७, १, १६, १।
। आग्नेयम्।

(१)—'शोभनाः वीराः पुरुषाः ऋत्विमाद्याः परिचारकत्वेन यस्मिन्निमोयस्य स सुवीरः, तं सुवीरम्, शोभनैर्वीरैः मरुद्भिरित्यर्थः'-इति वि०।

अथाष्टमी।

(शुनःशेपऋषिः।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १र २र
इममू षु त्वमस्माकꣳसनिं गायत्रं नव्याꣳसम्।
१ २ ३ २ ३ १ २
अग्ने देवेषु प्र वोचः॥ ८॥ २८

५ र २ १ ५ १ १
। इममूषू। त्वमास्मा२३४काम्। सानी२ꣳद्वोइ।
१ १ २१ २ १ १
गाया२द्वो। त्रन्नव्या२३ꣳसाम्। आग्ने२द्वोइ। दाइ-
१ २१ २ १
वा२द्वो। षुप्रावो२३चा३४२ः। ओ२३४५इ। डा॥ २८॥

'पृथिव्याः' च 'पतिः' 'अयम्' अग्निः 'अपां रेतांसि' (१) स्थावर-जङ्गमात्मकानि भूतानि 'जिन्वति' प्रीणयति॥ ७॥ २७

हे 'अग्ने'! त्वम् 'अस्माकम्' अस्मत्सम्बन्धिनम् ["अस्मभ्यम्"-इति

---

२८ इयमुत्तरार्च्चिकस्य ७, १, ४, १।
I सोमसाम।

(१) 'अप इत्यन्तरिक्षनाम (नि० १, ३, ८); रेत इत्युदकनाम (नि० १, १२, १६); अन्तरिक्षस्य सम्बन्धेन अन्तरिक्षस्य सारभूताः। अथवा अपां वीर्य्याणि रेतांसि तानीत्यर्थः। 'जिन्वति' प्रीणयति। कुत एतत्? 'अग्निर्वा इतोवृष्टिं समीरयति' इति श्रुतः' इति वि०।

अथ नवमी ।

(गोपवनऋषिः) ।

१ २ ३ १ २ ३ १र २र
तं त्वा गोपवनोगिरा जनिष्ठदग्ने अङ्गिरः ।
१ २ ३ १ २
सपावक श्रुधी हवम् ॥ ९ ॥ २९

तैत्तिरीयाः] 'इममू षु' (१) पुरोदेशेऽनुष्ठीयमानमपि 'सनिं' हविर्दानं 'नव्यांसं' नवतरं ["नवीयांसम्" इति तैत्तिरीयाः] 'गायत्रं' स्तुतिरूपं वचोऽपि 'देवेषु' देवानाम् अग्रे 'प्रवोचः' प्रब्रूहि (३)॥ ८ ॥ २८

हे 'अग्ने'। 'तं' 'त्वा' 'त्वां' 'गोपवनः' ऋषिः 'गिरा' स्तुत्या 'जनिष्ठत्' जनयति वर्द्धयति [स्तूयमाना हि देवता वर्द्धन्ते] तादृशाग्ने

२९ नाम्नीयमुत्तरार्च्चिके । १२

(१)—'ऊ षु-इति द्वावपि पादपूरणे'-इति वि० । 'सुञः (८, ३, १०७)' इति षत्वम् ।

(२)—'षणु दाने' तनादिः, तस्य रूपम् । 'छन्दसि वनसनरक्षिमथाम् (३, २, ६७)'-इति इनि रूपम् ।

(३)—'पूर्वैः कृतमिनयौ च (४, ४, १३३)'-इति य-प्रत्यये नव्यम्, तस्यातिशये 'नव्यांसम्'; 'देवेषु' देवेभ्य इत्यर्थे । तथाच हे अग्ने ! पूर्वैः कृतं नवतरं स्तोत्रम् आवहनं पुरोडाशादिदानञ्च देवेभ्यः 'प्रवोचः' प्रकर्षेण ज्ञापय-इत्यर्थो वि० सम्मतः ।

(१)—अभिगतावित्यस्य रूपम् । 'अङ्गिरा जाठरोऽग्निः तस्य सम्बोधनम्, हे अङ्गिरः ! शरीरस्थितिहेतोः' अभिनपीतरसस्य कर्त्तः' इत्यर्थः' इति वि० ।

अथ दशमी।

(वामदेव ऋषिः)।

२ ३ १ २ ३ २ ३ २ ३ १ २
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्॥
२ ३ १ २ ३ १ २
दधद्रत्नानि दाशुषे॥ १०॥ ३०

५ र र १ २ ५ २ १ २ १
। तं त्वागोपा। वनो२गा२३४इरा। जनाइष्ठदा।
७ २ ५ २ ३ ५ २ १ ३
ग्रया२ङ्गा२३४इराः। सपौवाश्रो२३४वा। कौवाश्रो२३४
५ ४ ४
वा। श्रुधीपुह्वाम्। हो ५इ। डा॥ १४॥ २९

'अङ्गिरः' (१) सर्वत्र गन्तः, अङ्गिरसां पुत्रो वा हे 'पावक' शोधक! गोपवनस्य 'हवम्' आह्वानं 'श्रुधि' (२) शृणु॥

"तं त्वा"-इति-"जनिष्ठत्"-इति च छन्दोगाः, "यं त्वा"-इति "जनिष्ठत्"-इति च बह्वृचाः॥ ८॥ २९

---

३० नास्तीयमुत्तरार्चिके। १४

। गोपवनम्।

(१)- पूर्वपृष्ठायाम्——(१)

(२)—'श्रुणु पूर्तेश्रयस्कन्दमि (६. ४, १०२)'-इति सिद्धम्।

अथैकादशी।

(कण्वऋषिः।)

१ १ २  ३ १ २  ३ १ २  ३ १ २
उदु त्यं जातवेदसं देवं वहन्ति केतवः।
३ १र  २र ३ १ २
दृशे विश्वाय सूर्यम्॥ ११॥ ३१

४ ५र  ४  ५  २ १  २  १ २ र
I पर्यौ। चोइवाजा। पताइः का१वी२ः। आग्निर्हव्या
१ ७  १  १ ३  ५र र
नायक्रमी२त्। दधा२३त्। रा२त्ना२२४ओवा।
२ र १ ३ १ १ १ १
निदाशुषे२३४५॥ १५॥ ३०॥

'वाजपतिः' वाजानामन्नानां (१) पतिः पालकः [परि वाजपतिः कविरित्येष हि वाजानां पतिरिति ब्राह्मणम्] 'कविः' क्रान्तदर्शी मेधावी वा। 'दाशुषे' हविर्दत्तवते यजमानाय 'रत्नानि' रमणीयानि धनानि 'दधत्' प्रयच्छन् 'अग्निः' 'हव्यानि' हवींष्यि 'पर्यक्रमीत्' परिक्रामति (४) व्याप्नोतीत्यर्थः॥ १०॥ ३०

३१ नास्तीयमुत्तरार्चिके। १५
I सूर्यवर्चा वा वसुरोचिर्वा ऋषिः, सूर्यसाम।

(१)—वाजइत्यन्ननामसु पठितम्, निघण्टु-द्वितीय-सप्तमे प्रथमानन्तरम्।
(२)—मेधाविनामसु दशमं कविरिति नि० ३, १५।
(३)—'दाश्वान् साक्षान् मीढ्वांश्च (६, १, १२)' इति सिद्धम्।
(४)—'गीतवानित्यर्थः। कमप्रति? सामर्थ्यात्—देवान्' इति वि०।

४५४ १ ७ २ ५
। उदुत्यम। ओवाइ। जा। तवे२दा२३४साम्।

१र१ २ ३ ५ १ र५ १ २र १र
देवंवहा। तीकेता२३४वाः। दा२३४औवाइ। वाइश्वायसू।

४ ५ ४
र्याम्। औ२३होवा। होपुइ। डा॥१॥३०

इयं सौरी। (१) आग्नेय-समाख्यानं छत्रिणोगच्छन्तीति-वत् (२) प्राणभृतउपदधातीतिवच्च (३) द्रष्टव्यम्(४)॥

---

। अस्यापि सूर्य्यवर्च्चावसुरोचिर्वा ऋषिः, इदमपि सूर्य्यसाम।

(१)—यद्यपीयं सौरी, तथाप्यग्निं वोष्टधन्तमिति खण्डेऽस्मिन् प्रथमादि-मन्त्राणामग्नि-पदोपेतत्वात् तस्यैव प्राधान्यात् तत्समवायात् इयमाग्नेयीत्युपचर्य्यते। तत्र दृष्टान्तमाह—

(२)—लौकिकदृष्टान्तमेतत्। छत्रिसहितसेनासु गच्छन्तसु छत्रिणः प्राधान्यस्य समवायात् उपचारात् अप्रधानानां हि सेनानां यथा छत्रिशब्देन ग्रहः तथा अत्रापीत्यर्थः; तदुक्तम्—"साहचर्य्यात् तथैव तादर्म्यात् तत्सामीप्यात्तथैव च। तत्साहचर्य्याच्च तादर्थ्यात् ज्ञेया वै लक्षणा बुधैः"; तत्र चेयमजहत्स्वार्था।

(३)—वैदिक-दृष्टान्तमेतत्। अस्त्यग्न्याधाने इष्टकोपधानविधिः। तदेवं श्रूयते—"प्राणभृत उपदधाति"; तत्र "अयं पुरोभवस्य प्राणोभौवायनः"-इत्येकस्यैव प्रथमस्यास्य मन्त्रस्य प्राणशब्दोपेतत्वेऽपि "तत्सिद्धि-जाति-सारूप्य-प्रशंसा-भूम-लिङ्ग-समवायात् (१, ४, १९)"-इति जैमिनि-शासनात् प्राण-लिङ्गक-मन्त्र-समवेताः अन्येऽपि प्राणभृच्छब्देन लक्ष्यन्ते, तथा चोक्तम्—"तत्सिद्धि जाति-सारूप्य-प्रशंसा-लिङ्ग-भूमभिः। षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता" इति।

अथ द्वादशी ।

(मेधातिथिर्ऋषिः)

१ २ ३ १र २र ३ १ २ ३ २
कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।
३ १ २ ३१ २
देवममीवचातनम् ॥ १२ ॥ ३२

'केतवः' प्रज्ञापकाः (५)सूर्याश्वाः [यद्वा, सूर्य-रश्मयः] 'सूर्यम्' सर्वस्य प्रेरकमादित्यम् 'उद्वहन्ति' ऊर्ध्वं वहन्ति 'उ' इति पाद-पूरणः। [उक्तञ्च—"मिताक्षरेष्वनर्थकाः कमीमिद्विति" (६)] किमर्थम ? 'विश्वाय' विश्वस्मै (७) सर्वस्मै भुवनाय 'दृशे' द्रष्टुं। यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः। कीदृशं सूर्यम् ? 'त्यं' तं प्रसिद्धम्, 'जातवेदसं' जातानां प्राणिनां वेदितारं, जात-प्रज्ञं, जात-धनं वा, 'देवं' द्योतमानम् [अत्र निरुक्तम्—'उद्वहन्ति जातवेदसं देवमश्वाः केतवारश्मयोवा सर्वेषां भूतानां सन्दर्शनाय सूर्यम् (१२, २, ४)-इति ॥ ११ ॥ (८) ३१

---

३२ नास्तीयमुत्तरार्च्चिके । १६

(५)—प्रज्ञा-नामसु केतुरिति द्वितीयम् नि० ३. ९ ।

(६)—अत्र नैरुक्त-प्रथमाध्याय-द्वितीयपाद-चतुर्दश-खण्डे । मिताक्षरेषु पद्येषु कम्, इम्, इत्, उत्-इति चत्वारः पद पूरणाः-इति तदर्थः ।

(७)—'षष्ठ्यर्थे एषा चतुर्थी'-इति वि० ।

(८)—'एकर्णवेदं श्रोति' त्रिधा विभक्तमित्यवगन्तव्यम्...पदम्'-इति वि०

अथ त्रयोदशी।

(सिन्धुद्वीपोऽम्बरीषो वा त्वतश्रामो वा ऋषिः)

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शन्नोदेवीरभिष्टये शन्नोभवन्तु पीतये।
२उ ३ १ २
शंयोरभिस्रवन्तुनः॥ १३॥ ३३

५ ३ १ १ ३ ५र र
[ कविमग्नीम्। उपा२३। स्तू२ह्वा२३४औहोवा।
२ १ २र १ र २र २ र १र २
सत्यधर्माणमध्वरे। देवाम्। अमोवचाता२३ना३४३म्।
१
ओ४५इ। डा॥ १७॥ ३२

हे स्तोतसङ्घ! (१) 'अध्वरे' क्रतो 'अग्निम्' 'उपस्तुहि' उपेत्य, स्तुतिङ्कुरु कीदृशम्? 'कविं' मेधाविनं 'सत्य-धर्माणम्' सत्य-वचनरूपेण धर्मेणोपेतं (२) 'देवं' द्योतमानम् 'अमोवचातनम्' अमोवानां हिंसकानां शत्रुणां वा घातकम्॥ २॥ ३२

---

३३ नास्तीयमुत्तरार्च्चिके।१७
[ वसुरोचिऋषिः, कावम्।

(१)—'अस्मदात्मनश्चायं प्रेषः। हे मदीयान्तरात्मन्!-'इति वि०।
(२)—'सत्यकर्माणम्'-इति वि०।

५ र र   २ १   २   ५ र   २ १र
I शन्नोदेवीः। अभिष्टा२३या३४इ। शन्नोभवा। तुपी

२   ५ र   २ १   २
ता२३या३४इ। शंयोरभी। स्रव। तू२। ना२३४।

५र र   २   ५
औहोवा। ऊ२३४पा ॥ १८ ॥

१ २ १   र ५र र   ४   ५   १ १
II हुवा३हो२३४इ। शन्नोदेवीः। अभिष्टयाइ। हुवा३

१   र ५   ४ र ५   १ २ १
हो२३४इ। शन्नोभव। तुपीतयाइ। हुवा३हो२३४इ।

र ५   ४ ५   २ २ १   १   ५र र
शंयोरभि। स्रवन्तुनाः। हुवा३हो२। वा२३४औहोवा।

२   ५
ऊ२३४पा ॥ १८ ॥ ३२

'नः' अस्माकं पापापनोद-द्वारेण 'शं' सुखं (१) भवन्तु। 'देवीः' देव्यः आपः 'अभिष्टये' (२) अस्मद्यज्ञाय भवन्तु, यज्ञाङ्गभावाय च भवन्त्वित्यर्थः। अपिच, 'नः' अस्मत्सम्बन्धिने 'पीतये' (३) पानाय च

I, II अनयोः पारावतिर्ऋषिः,
काणोतं कापोतं वा समन्तं वा नाम।

(१)--निघण्टौ सुखनामसु शं द्वादशम (३, ६)।

(२)--'अभष्टये अभिगमाय, अपां हि किमभिगमनम्? स्नानादिभि ततपुनरादिकम् तदर्थम् इति वि०।

(३)--'स्रागापापघोभावे (२, ३, १५), इति क्तिनि रूपम्।

अथ चतुर्द्दशी।

(उशना ऋषिः)

१ २ ३१र २र ३ १ २
कस्य नूनं परीणसि धीयोजिन्वसि सत्पते।
१ २ ३ १ २ ३ १ २
गोषाता यस्य ते गिरः॥ १४ ॥३४

१ २ ३ १ ३ ५ १ र
। कस्यानू१ना२म्। परीणा२३४सी। धियोजिन्वा२।
३ २ ३ ५ १र२र र १ १ ३ ५र र
सिसत्या२३४ताइ। गोषातायार३। स्या२ता२३४औहो-
२ ३ ५
वा। उप्। गी२३४राः॥ २० ॥३३

'शं' सुखंभवन्तु। तथा, 'शम्' (४) उत्पन्नानां रोगाणां शमनम् 'योः' यापनम् अनुत्पन्नानां पृथक्करणं च कुर्वन्तु। अपिच, 'नः' अस्माकम् 'अभि' उपरि स्रवन्तु, अत्यर्थं सिञ्चन्तु॥

"शन्नोभवन्तु"-इति छन्दोगाः। "आपोभवन्तु"-इति बह्वृचाः तैत्तिरीयाश्च॥ ३ ॥ ३३

---

३४ नास्तीयमुत्तरार्च्चिके। १८

(४)—'शमनं शम, यापनं युः अपनयनमित्यर्थः. द्वे अप्येते प्रथमैक वचने चतुर्थ्येक वचनस्य स्थाने द्रष्टव्ये; शमनाय, कस्य? सामर्थ्यात् रोगाणाम्; यापनाय, कस्य? सामर्थ्याद् भयानाम् अभिस्रवन्तु'-इति वि०।:

२र र　१　२३२　र　४ २र ३
II औहोइहुइवा३२इ । हुवए । कस्यनूना३मपा३रीण-

५　२र र　१　२३२　र　५
सि । औहोइहुइवा२३इ । हुवए । धियोजिन्वा३सी

हे 'सत्पते' सतां पते ! अग्ने ! 'नूनम्' इदानीं 'कस्य' कीदृशस्य जनस्य 'परीणसि' बहूनि (१) 'धियः' कर्माणि (२) 'जिन्वसि' प्रीणयसि । 'यस्य' 'ते' तव सम्बन्धिन्यः 'गिरः' स्तुतयः 'गोषाता' गोसातौ (३) गवां लाभे भवन्तु खलु । तस्मात्त्वं कुत्र तिष्ठसि ? अस्माकमिदानीं गवेच्छा प्रवर्त्तते ॥

यद्वा । हे अग्ने ! त्वमिदानीं कस्य कर्माणि प्रीणयसि ? न कस्यापीत्यर्थः । अस्माकमेव कर्माणि प्रीणयेतिभाव (४) ॥

I, II अनयोः गौराङ्गिरसोगोतमोवा ऋषिः, मनाज्यं नाम ।

(१)—परीणसीति बहुनामसु निघण्टु-तृतीय-प्रथमेऽपठ्यत ।

(२)—धीरिति कर्मनामसु एकविंशतितमम् नि २. १ ।

(३)—'ऊतियूतीत्यादिना (३, ३. ९७) सिद्धम् । 'सनोतेरनः (८, ३. १०८)'-इति षत्वम् ।

(४)—"कमिति सुखनाम (नि ३, ६. ७) तस्य सुखमित्यर्थः । 'नूनं' निश्चयेन । 'परीणसि' सप्तम्येकवचनमिदं द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम्, परीणसः बहूनित्यर्थः । 'धियः' प्रज्ञाः । 'जिन्वसि' प्रीणयसि पूरयसि, प्रज्ञा-सुखाभ्यां पूरयसः सुखिनः करोतीत्यर्थः । 'सत्पते' सतां पालयितः ! । कस्य पुनः प्रज्ञा-सुखेन पूरयसि ? उच्यते 'गोषाता यस्य ते गिरः' गो शब्देनात्र सोम उच्यते, सातावित्यपि सनोतेः सम्भजनार्थस्य

१ २५ १र र १ २१२ र र र
इसत्पताइ। औहोइहूइवा३२इ। हुवए। गोषाताय।
३ २ ४
स्यता३इगा५इरा६५६ः ॥ २१ ॥३४

इति तृतीया दशति।

"परीयसि"-इति "सत्पते"-इति च छन्दोगाः; "परिणसः" इति "दस्मते" इति च बह्वृचाः ॥१४॥३४

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य तृतीयः खण्डः ॥

---

कपम, सोमान् याः सम्भजन्ते ताः गोषाताः, सोमानां सम्भक्त्यः, सोमैः सह याः क्रियन्ते इत्यर्थः। 'यस्य' यजमानस्य 'ते' तव मन्त्रभिन्नो 'गिरः' स्तुतयः सोमेन सह, ताभिः यस्त्वां सौतीत्यर्थः" इति वि०।

यज्ञायज्ञेति-खण्डेषु त्रिकेष्वष्टौ च विंशतिः ।
ऋचो बृहत्य (१) आग्नेय्यस्त्वन्त्या तिस्रइमाऋचः ॥ १

अधज्मो अधवेत्यैन्द्री प्रैत्विन्द्रग् ब्रह्मणस्पतेः ।
ऊर्ध्वऊष्विति यूपस्य तं स्तुतिरग्नेरणोतराः (२) ॥ २

समाख्या प्राणभृन्नायादिति पूर्वमुदीरितम् (३) ।
तदा तदाऽभिधास्यन्ते ऋषयः पूर्ववत् क्रमात् ॥ ३

अथ चतुर्थ-खण्डे—

सैषं प्रथमा ।

शंयुर्ऋषिः ।

२ १ २    ३ १ २ ३ १ २    ३ १ २
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे।
१ २ ३१२ १२ ३ १२    ३२ ३ १र    २र
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ २ ॥ ३५

---

३५ उत्तरार्च्चिकस्य १, १, २०, १ ।

(१)—'बृहती परिबर्हणात्'- इति नै० ७, ३, ८। उक्तं पुरस्तात् 'गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टुभो भवति' तथाच पूर्वोक्ता अनुष्टुबेव परिवर्द्धिता बृहती भवतीति तदर्थः।

(२)—यज्ञायज्ञा वो अग्नये इत्याद्येकं खण्डम्, तत्र सन्ति ऋचो दश; एनावो अग्निमित्यादि द्वितीयम्, तत्रापि दश; देवो वो द्रविणोदा इति तृतीयम्, तत्राष्टौ; एवं मिलित्वा अष्टाविंशत्यृचो दशतयः, बृहतीच्छन्दस्काः। तत्र एतेति खण्ड-गता 'अधज्मो-अधवेत्यष्टमी ऋक्, देवो वो द्रविणोदेति-खण्ड-गता प्रैत्विति द्वितीया, ऊर्ध्व इति तृतीया,

I यज्ञायज्ञा। वो अग्नया३इ। गिरा२गिरा३४। चा

होइ। चादक्षा२३४साइ। प्रप्रा२वयममृतञ्जा। ता

वे१दामा२म्। प्रियम्मित्राम्। नशꣳसिषाम्। एहि-

या। औहोहो२३४५इ। डा॥२२॥

II यज्ञायज्ञ। होइ। वो३अग्नय२३४हिया। गिरागिरा।

चा२दक्षमाइ। प्रप्रावयाम्। अमृतञ्जा३। तवे२दा

२३४साम्। प्रियम्मित्राम्। नशꣳसिषाम्। एहिया

औहो२३४५इ। डा॥२३॥

हे स्तोतारः 'वः' यूयं 'यज्ञा यज्ञा'(१) यज्ञे यज्ञे सर्वेषु

---

I, II अनयोः भरद्वाजऋषिः, उपह्वम्।

एतास्मिन्नेवर्जयित्वा अवशिष्टाः आग्नेय्यः; तासु च तिसृषु प्रथमा ऐन्द्री, द्वितीया ब्रह्मणस्पति-देवताका, अन्त्या यूपस्य स्तुत्यात्मिकेति-स्फुटार्थः।

(२)—पूर्वम् उदुत्यमित्येकस्मिं शततमर्गव्याख्यानावसरे।

(१)—'सुपां सुलुक् पूर्वसवर्णाच्छे याडाड्यायाजालः (७, १, ३९)' इति सप्तम्येकवचनस्यालम्। 'नित्यवीप्सयोः (८, १, ४)'-इति वीप्सायां द्विर्वचनम्।

१ र    १    १ र
III याज्ञायाज्ञा२ । वो अग्नाया२इ । गाइरागाइरा२ ।
१ ७    १    १ १
चादक्षासा२इ । प्रप्रानाया२म् । अमृत ञ्जा३ ।
१ २ ५    १    १ ७
तवे२दा२३४साम् । प्रायम्माइत्रा२म् । नाप्र॑ंसा२३
२    १
इ षा३४३म् । ओ२३४५इ । डा ॥ २४ ॥

यागेषु 'दक्षसे' प्रवृद्धाय 'अग्नये' (२) 'गिरा गिरा' स्तुतिरूपया वाचा स्तोत्रं कुरुतेतिशेषः ['च'-शब्दोभिन्नक्रमोवइत्यस्मात्परोद्रष्टव्यः(३)]यूयं च स्तोत्रं कुरुत, वयमपि तमग्निं 'प्र प्र शंसिषम्' ['प्रसमुपोदः पादपूरणे (८,१,६०)'-इति प्र-शब्दस्य द्विरुक्तिः पादपूरणार्था। व्यत्ययेनैकवचनं (३,४,८८)। छान्दसोलुट् (४) प्रशंसामः] कीदृशम्? 'अमृतं' मरणरहितम्। 'जातवेदसं' जातानां वेदितारं जात-प्रज्ञानं जात-धनं वा। 'मित्रं न' सखि-

---

III भरद्वाजऋषिः, औष्टीगवम् ।

(२)—'क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२, ३, १४)'-इति कर्मणि चतुर्थी तयावाचाग्निमनुकूलयितुमित्यर्थः।

(३)—'च-शब्दः समुच्चयादेरर्थस्यासम्भवात् पादपूरणः'-इति वि०।

(४) 'छन्दसि लुङ्लङ्लिटः (३, ४, ६)' धात्वर्थानां सम्बन्धे सर्वकालेष्वेते।

४ ३ ४ २ ४ ५ १ २ २
IV यज्ञाऽ५य। ज्ञा३वोऽ२ग्नायाइ। गाइरागिरा। चा
१ २ २ १ र ऽ १ र १ १
३दाक्षा३साइ। प्रप्रा२वयमम्रुतम्। जाता२३वा। द्रु-
१ २ १ ३ २
म्नाइ। दा३साम्। प्रायम्मित्रन्नशा२४सिषा उ। वा
१ १ १
३४५॥ २५॥ ३५

भूतमिव प्रियमनुकूलम्। [यद्वा व्यत्ययेन त्वमित्यस्य वसादेशः (३,४,९८)। अग्नयइति च कर्म्मणि चतुर्थी, क्रिया-ग्रहणमपि-कर्त्तव्यम्, इति कर्म्मणः सम्प्रदानत्वात्। च शब्दश्च णिति (५) निपातश्चेदर्थे वर्त्तते। दक्षसइति दक्षेर्वृद्धि-कर्म्मणः अन्तर्भावित-ण्यर्थाल्लटि रूपम्। 'चण्-योगान्निपातैर्यद्यदिहन्त'-इति निघात-प्रतिषेधः (६)। तत्रायमर्थः—हे स्तोतस्त्वं यज्ञे इममग्निं गिरा स्तुत्या दक्षसे च वर्द्धयसि चेत् वयमपि अमृतत्वादि-गुणकं तं प्रशंसामः(७) ॥१॥ ३५॥

---

IV भरद्वाजऋषिः, यज्ञायज्ञीयम्।

(५)—णकारानुबन्धोपेतोयः सएवाचगृह्यते इतिभावः।

(६)—'तिङ्ङतिङः (८, १, २८)'-इति निघाते प्राप्ते 'निपातैर्यद्यदिहन्तकुविन्नेच्चण् कच्चिद्यत्रयुक्तम् (८, १, ३०)'-इति निषेधइत्यर्थः।

(७)—'अमृतं', 'जातवेदसं', 'दक्षसे' बलवन्तं 'वः' त्वाम् 'अग्नये' अग्निम् यज्ञे यज्ञे प्रियमित्रमिव 'गिरा प्रशंसिषम्' स्तुत्यामित्याभाष्ये-इति वि० सम्मतोऽर्थः।

अथ द्वितीया ।

भर्गऋषिः ।

२ १ २ ३१२ ३ १ २ ३ १ २

पाहि नो अग्न एकया पाह्यू३त द्वितीयया ।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २

पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥२॥३६

५र २ ४ ५ ५र ५ १ २ १ १

। पाहिनो३अग्नएकया । पाहियुत । द्विताया१या२ ।

१ २र २ १ २ १ २

पाहिगीर्भिस्तिसृभिः । ऊर्जाम्पा१ता२इ । पाहिचतो

ऽ २ २ १ २ १

३ । हो३वा । सृभिर्वा२३सा३४३उ । ओ२३४५इ ।

डा ॥ २६ ॥

हे 'अग्ने !' 'नः' अस्मान् 'एकया' (१) ऋचा गिरा 'पाहि' रक्ष । 'उत' अपिच । 'द्वितीयया' (२) ऋचा 'पाहि' पालय । 'तिसृभिः'

---

३६ उत्तरार्चिकस्य ७, २, ४, १ ।

। भरद्वाजऋषिः, कार्त्तयशम् ।

(१)—'ऋग्लक्षणया, तृतीयानिर्देशात् मनुतः भवन्ति वाक्यशेषः'-इति वि० ।

(२)—'यजुर्लक्षणया'-इति वि० ।

५र र र ५ २र १ २ १
II पाह्निनोअग्नएकयाइ६ए। पा। ह्वोइ। उ। ना।
२ १ २ २ १र २ ५ १ २ र
ह्वितायाइया। पाह्वोर्‌इगा२३४इभीः। ताइह्वभीः। ऊ
१ २ ३र र ५ १ ५ २ १ २
र्जाम्याता। औह्वौह्वो२३४वा। पा२३४चिह्वाइ। चताह्वभा।
३र र ५ १ ५र ५ ४
औह्वौह्वो२३४वा। वा२३४सा उ। एह्वियाइ६ह्वा। ह्वो५इ।
डा॥ २७॥

४र ३४र ५ र ३ २ १ ५ र
III पाह्निनो अग्नए। कया३। पा२३४। ह्वियुतह्विनी।
४ ५ ४र ३ ४र ३ ४ ३ ४ ५र र ३ २ २र
याया। पाह्विगोर्भिस्तिह्वभिरूर्जाम्। पाइताइ। पाह्वो
२ २ ५र ४ ५ १ २ र १ २११११
इचाइताइ४। ह्वा ओवा। ह्वभिर्वसो। उपा२३४५॥२२॥२६

'गीर्भिः' (३) स्तुतिभिः 'ऊर्जाम्' अन्नानां (४) बलानां (५) वा

---

II भरद्वाजऋषिः, नार्मेधम्।

III भरद्वाजऋषिः, कार्त्तवेशम्।

(३)—'ऋग्-यजुः-साम-लक्षणाभिः'-इति वि०।

(४)—निघण्टौ २, ७, सप्तदशानन्तरं पठितम् ऊर्क्-इति।

(५)— निघण्टौ द्वितीय-नवमे चैकविंशतितममूर्गिति।

अथ तृतीया ।

शंयुऋषिः * ।

२ १ २   ३ १ २ ३ १ २   ३ १ २   ३ १ २
बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा । भरद्वाजे
३ १ २   ३ १ २
समिधानो यविष्ठ्य रेवत्पावक दीदिहि ॥३॥ ३७

हे 'पते !' स्वामिन् ! तथा 'पाहि'। हे 'वसो !' (६) वासक !
अग्ने ! 'चतसृभिः' (७) गीर्भिः 'पाहि' ॥ २ ॥ ३६

हे 'देव !' दानादि-गुण-युक्त ! 'यविष्ठ' युवतम ! 'पावक' शोधक ! अग्ने ! 'शुक्रेण' निर्मलेन 'शोचिषा' तेजसा 'भरद्वाजे'

---

३७ नास्तीयमुत्तरार्चिके । १८

(६)—'लुप्तमत्वर्थश्चैतद् द्रष्टव्यम् —'वसो' हे धनवन !' इति वि० ।

(७)—'ऋग्-यजुः-साम-निगद-लक्षणाभिः'-इति वि० । 'उच्चैर्निगदेन' 'उपांशु यजुषा', इति धर्म-पार्थक्य-श्रवणात् निगदस्य तुर्यः । वेदानां त्रित्वे साधनीये तु ऋक्-सामान्य तमत्वमेव यजुष्ट्वमिति तस्यापि यजुष्ट्वम् । सत्वविचारी जैमिनीय-द्वितीयाध्याय-प्रथम पाद-गत-पञ्चविंशदादि-सप्त-सूत्रग्रामभिकरणमालादौ च द्वितीय-प्रथम त्रयोदशाधिकरणे सुपरिस्फुटः । 'प्रोक्षणीरासादय', 'इध्मबर्हिरुपसादय', 'अग्नीदग्नीन विहर'-इत्येवमादयः, पर-सम्बोधनार्थामन्त्राः निगदाः ॥

* 'तृणपाणिरार्षम्-इति वि० ।

२ १ ४ र ५ २ १ २र र १२र
I बृहाद्भी२३रग्ने अर्चिभिर्हा उ। शुक्राइणदेवशोचिषा
१ २ १ २ २ १ २र १ ७
भरद्वा१जे२३। हावा३हाइ। समिधानः। याविष्टि-
१ २ २ र १ २ १ २ २
ष्टिया२३। होवा३हाइ। रेवात्पो१वा२३। होवा३हाइ।
१ र २ १ २ १
का दीदिहि। इडा२३भा३४३। ओ२३४५इ। डा॥२९॥
५ र ५ २ १ २र र १२र १
II बृहद्भिरग्नेअर्चिभीर्१र। शुक्राइणदेवशोचिषा। भरा-
२ २ऽ २ १ २र १ ७
द्वा१जे२३। ओ३वा। समिधानः। याविष्टिया२३।
२ऽ २ र १ २ २ऽ २ १ र २
ओ३वा। रेवात्पा१वा२३। औ३वा। कादीदिहि।
१ २ १
इडा२३भा३४३। ओ२३४५इ। डा॥ ३०॥३७

अस्मद्भातरि (१) 'समिधानः' (२) समिध्यमानस्त्वं 'बृहद्भिः' महद्भिः स्तेजोभिः 'नः' अस्मदर्थं 'रेवत्' (३) धन-युक्तं यथा भवति तथा 'दीदिहि' (४) दीप्यस्व॥

I, II अनयोः भरद्वाजऋषिः, पृश्निनाम।

(१)—'मयि यजति'-इति वि०।

(२)—'ताच्छिल्योऽथं चानश्'-इति वि०।

(३—'रयेर्मतौ बहुलम् (६, १, ३४)-इति कात्यायन-वचनात् सिद्धम्।

(४)—दीधिङ्क्कान्तिम-धातोः रूपमिदम्॥

अथ चतुर्थी ।

वसिष्ठऋषिः ।

१ २   ३ १ २   ३ १ २   ३ २ ३ २
त्वे अग्ने स्वाहुतः प्रियासः सन्तु सूरयः। यन्तारो ये
३ १ २ ३ १ २   ३ १र २र३ १ २
मघवानो जनानामूर्वं दयन्त गोनाम्॥ ४ ॥ ३८

"रेवत् पावक"-इति छन्दोगाः। "रेवन्नः शुक्र दीदिहि द्युमत् पावक"-इति बह्वृचाः) ॥ ३ ॥ ३७

हे 'अग्ने !' 'स्वाहुत' यजमानैः सुष्ठुभिः हुत ! 'त्वे' (१) तव 'सूरयः' प्रेरकाः स्तोतारः (२) 'प्रियासः' (३) प्रियाः 'सन्तु' भवन्तु। किञ्च। 'ये' 'मघवानः' धनवन्तः 'यन्तारः' (४) प्रदातारः जनानाम् अस्मदीयानाम् 'ऊर्वम्' समूहम्। 'गोनां' (५) गवां

---

३८ नास्तीयमुत्तरार्चिके। २०

(१)—युष्मदः परस्य षष्ठ्येकवचनस्य "सुपां सुलुक् पूर्वसवर्णाच्छे-याडाड्यायाजालः (७, १, ३९)"-इति शे-भावे "शेश्छन्दसि बहुलम् (६, १, ७०)"-इति लोपे परस्वे रूपम्।

(२)—स्तोतृ-नामसु निघण्टु-तृतीय-षोडशे पठम्।

(३)—'आज्जसेरसुक् (७, १, ५०)'-इत्यसुकि रूपम्।

(४)—'स्तुतिभिर्हविर्भिश्चोद्वोढारः'-इति वि०।

(५)—"गोः पादान्ते (७, १, ५७)"-इति नुकि रूपम्।

१र ४र र ५ २ १र २ र१२ १
I त्वेआ२३ग्नेस्वाऊतहाउ। प्रियासः सन्तुसूरयः। यन्ता
२ ३ ४र ५र ४ ५र २ १ ०
रो१या२३४इ। मघवानोजना। नाम्। ऊर्वंदया२३
२ १र ५र १ २ १
हा। तगोना२म्। इडा२३भा३४३। ओ२३४५इ।
डा॥ २१॥ ३८

च ऊर्वं (६) समूहं 'दयन्त' प्रयच्छन्ति, ते च तव प्रियाः सन्त्विति पूर्वेणान्वयः(७)॥

"ऊर्वम्"-इति छन्दोगाः। "ऊर्वान्"-इति-बह्वृचाः॥४॥३८

अथ पञ्चमी।

भारद्वाजऋषिः।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
अग्ने जरितर्विश्पतिस्तपानोदेव रक्षसः। अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः॥ ५ ॥३९
३ १ २ ३ २ ३ १ २ ३ २

I उरोराङ्गिरसस्य साम।

३९ नास्तीयमुत्तरार्च्चिके। २१.

(६)—ऊर्वमिति नित्य-बहुवचनान्तस्य बहु-वाचकस्योर्वशब्दस्य छान्दसैकवचनेऽपि 'वाच्छन्दसि (६, १, १०६)'-इति सूत्रबलात् पूर्वरूपाभावे संहित-दीर्घे च रूपम्।

(७) अस्मदीयामीं गवां समूहम् एवमन्यत्रेमार्थः वि० सम्मतः।

४ ५र ४ ५ ४ ५ र ४ ५ र
I अग्नेजरितर्विश्पतिः। औहोवा। एहिया। हाउ।
२ र१र र१ १ २ १ २ १ २
तपानोदे२वरक्षसः। अप्रोषा१इवा२न्। गार्हपता३इ।
१ २ ३ ५ १ २ ३ ५ २
माहा॒आ२३४सो। दिवाः। पायौवाओ२३४वा। हा
२ ४ ४
३हाइ। दुरोणयूः। होपुइ। डा॥ ३२॥

३ ४र ३ ४ ५ ३ २ १ र र५र ४ ५
II अग्नेजरितर्विश्पतीः३। ता२३४पानोदेवर। क्षसाः।
१ र र र २ २ १ २ १ २
तापानोदेवरक्षसो। अप्रोषो३वान्। गृहपताइ। माहा
३ ५ ३ ५ ३ २ ५ २र १ १ १ १ १
॒आ२३४सो। ओ४हा। हहाइ। दिवस्पायू२३४५ः।
३ ५ ३ २ ३ १ २ १ १ १ १ १ ३ ५ ३ २
ओ४हा। हहाइ। दुरोणयू२३४५ः। ओ४हा। हहा
१
३४३इ। ओ२३४५इ। डा॥ ३३॥ ३९

हे 'अग्ने! देव!' 'जरितः' स्तोतः! (१)स्तुत्येत्यर्थः। 'विश्पतिः' प्रजानां (२) पालकः 'रक्षसः' राक्षसानां 'तपानः' सन्तापकः

I, II अनयोः गौतमऋषिः, पौरुमद्गम् नाम।

(१)—निघण्टु-तृतीय-चतुर्दशेऽर्चतिकर्मसु 'जरति'-इति सप्तमम्।

(२)—नि० २. ३. मनुष्य नामसु विशः इति पठितम्।

अथ षष्ठी।

प्रस्कण्व ऋषिः।

२ ३ १ २ ३ १ २ ३ १र २र २ ३ १ २

अग्ने विवस्वदुषसश्चित्रꣳराधो अमर्त्त्य। आदाशुषे

३ २ ३ २ ३ १ २ ३ १ २

जातवेदोवहा त्वमद्या देवाꣳउषर्बुधः॥ ६ ॥ ४०

'असि'। हे गृहपते' यजमान-गृहस्य पालकाग्ने! त्वम् 'अप्रोषिवान्' यजमानस्य गृहमत्यजन् 'महान्' अतिशयेन पूज्योऽसि। 'दिवः' द्युलोकस्य 'पायुः' पाता। 'दुरोणयुः' (३) यजमान-गृहस्य मिश्रयिता सर्वदा वर्तमानः इत्यर्थः। तादृशस्त्वं महानसीत्यन्वयः (४) ॥

"तपान" "तपान"-इतिपाठो। "गृहपते"

"गृहपतिः"-इति च ॥ ५ ॥ ३९

हे 'अग्ने'! त्वम् 'उषसः' उषोदेवतायाः (१) सकाशात्

---

४० उत्तरार्चिकस्य ८, १, ६, १।

(३)'—'दुरोणः-इति गृह-नाम (नि० ३, ४, ८), तद् यदृच्छति सदुरोणयुः (पा० ३, २, १७०'-इति वि०।

(४)—'यस्व विश्पतिः राक्षसान् तपानः महानसि, यस्व अप्रोषिवान्; यस्व दिवस्पायुः, यस्व दुरोणयुः, तं त्वां हे अग्ने! जरितः! देव! गृहपते! स्तौमीति शेषः'-वि० कृतोऽन्वयः।

(१)—उषा-नामके च द्वे देवते। या मेघादुदकादि विवासयति सा वायवी मध्यमस्थानीयदेवतासु चतुःषष्टितमा; या तु वह्नेः कान्तिकर्मणोरूपमिति निरुक्तप्रसिद्धा,

५ र र     २ १ २ २     १ ३ २
I अग्नेविवाहाउ । स्वाइदूषाइसाः । चाइत्रा२३हा

१ २ २     १ ३ ५     १ २
इ । राधोइहाइइ । अमा२र्त्ता२३४या । आदा१शुषे२ ।

१ २र     २ १ २     १र     २
जातवेदः । वहातू१वा२म् । अद्याहोइ । दा२३इवा९

१     ३     ५र र     २ र १ ३ १ १ १ १
उषः । बू२धा२३४औहोवा । हुवेवसू२३४५ ॥ ३४ ॥

५ र     ४ ५     २ १ र २र १ र ३
II अग्नेविवस्वदुषासाः । चित्र९राधोअमा२र्त्तिय ।

१ २     १ ३र     १     १र
आदा१शुषे२ । जातवेदः । वहात१वा२म् । अद्यादा

२     १     ३     ५र र     २ र १ ३
२३इवा९ । उषः । बू२धा२३४औहोवा । विदावस

१ १ १ १
२३४५ ॥ ३५ ॥ ४०

'राधः' (२) धनं 'दाशुषे' (३) हविर्दत्तवते यजमानाय 'आवह' (४)

---

I, II अनयोः जामदग्नऋषिः, माण्डवं नाम ।

सा सूर्या, द्य-स्थान-देवतास्तु तृतीया ( भेदएष निरुक्तपर्य्यालोचनादगन्तव्यः ; ततोद्या एकादश-चतुर्थ-द्वादशे; द्वितीया द्वादश-प्रथम-पञ्चमे ) ।

(२)—धननामसु अष्टादशतमम्—नि० २, १० ।

(३)—निघण्टु-तृतीय-विंशे दाशति दानकर्मसु द्वितीयम् । दाश्वानिति (६, १, १२) सिद्धम् क्वस्वन्तम्, तस्य चतुर्थ्यां रूपमिदं दाशुषे इति ।

(४) वहादिति मन्त्रे 'अचोतस्तिङः (६, ३, १३५)' इति दीर्घः ।

अथ सप्तमी।

तृणपाणिर्ऋषिः।

१ २ ३ २ ३ २उ ३ १ २ ३ २
त्वन्नश्चित्र ऊत्या वसोराधाꣳसि चोदय। अस्य
३ १२ २२ ३ १ २ ३ २ ३ २ ३ १२ ४ २२
रायस्त्वमग्नेरथीरसि विदा गाधन्तु चे तु नः॥७॥४०

आनीयप्रापय। सोऽग्निर्विशिष्यते। 'अमर्त्य' मरण-रहित! हे 'जातवेदः' जातानां वेदितः! कीदृशं राधः? 'विवस्वत्' विशिष्ट-निवासोपेतम्। 'चित्रं' नानाविधम्। किञ्च। 'अद्य'(५) अस्मिन् दिने 'उषर्बुधः' उषःकाले प्रबुद्धान् देवानावह (६)॥ ६॥ ४०

हे 'वसो' वासक! अग्ने! 'चित्रः' दर्शनीयस्त्वं 'ऊत्या' (१) रक्षया सह 'राधांसि' धनानि 'नः' अस्मभ्यं 'चोदय' प्रेरय। 'अस्य' लोके परिदृश्यमानस्य 'राधः' धनस्य त्वं 'रथीः (२)

४१ उत्तरार्चिकस्य ८, १, ३, १।

(५)—अद्या इति 'निपातस्य च (६, ३, १४६)'-इति मन्त्रे दीर्घः।

(६)—हे अमर्त्य, जातवेदः, अग्ने! राधः स्वरूपं विवस्वत् तमसां विवासनकरम् उषसः सम्भूतं चित्रं विचित्रं पूज्यं वा ज्योतिः, अन्यांश्च उषर्बुधो देवान् दाशुषे यजमानाय अद्य त्वम् आवह-इत्यर्थो वि० सम्मतः।

(१)—अवतेः रूपम् ऊतियूतीत्यादिना सिद्धम्। सहार्थे तृतीया (२, ३, १९)।

(२)—रथीरिति रंहतेः रूपम्, रंहतिश्च गतिकर्मसु पञ्चविंशतितमः—नि० २, १४।

१ १ ५र २१ २ १२
I त्वन्ना२३श्चित्र ऊत्या। वसोराधा। सिचोदा१या२३

१ २ ३ ५ १ २र १ २ १२ १
आस्यारा२३४याः। त्वमग्ने। रथाइरासा३इ। वोदागा

५ २१ २ १ २ ४ ५ ४
२३४धाम्। तुचा२३चाइ। तुना। औ३होवा। होपू

इ। डा॥३६॥४१

असि रंहिता नेता भवसि। अतः कारणात् अस्मभ्यं धनानि प्रेरयेत्यर्थः। अपिच 'नः' अस्माकं 'तुचे' [अपत्यनामैतत् (नै०२,२,१) अपत्याय अपतन-हेतु-भूताय पुत्राय 'गाधं' प्रतिष्ठां (२) 'तु' क्षिप्रं (३) 'विदाः' लम्भय (४)॥७॥४१

I भारद्वाजऋषिः, गाधम्।

इह विवरणकारः—"रथी-शब्दः सारथि-वाची, स इह प्रेरकत्वसामान्यात् अग्नौ प्रयुक्तः, प्रेरयितासि दातासीत्यर्थः"।

(२)—"गाध-शब्दोऽयमगाधमुदकमित्येवमादिषु प्रयोगेषु उदकमध्ये या भूमिःपाद योराश्रयत्वं प्रतिपद्यते, तस्याः वाचकः; इह तु स्थानसामान्यादाश्रयस्थाने प्रयुक्तः" इति वि०।

(३)—"तु-इति पादपूरणः"-इति वि०।

(४)—"विदाः वेत्थ जानीहि, ज्ञानेमात्र दानं लक्ष्यते, देहीत्यर्थः"-इति वि०।

* इति ग्रामे गेय-गाने प्रथमःप्रपाठकः॥१॥

अथाष्टमी।

(विरूपऋषिः)

२उ ३ १ २ ३ १ २ ३ २ ३ २ १र २
त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः। त्वां विप्रासः
३ १ २ ३ १ २
समिधान दीदिव आ विवासन्ति वेधसः॥ ८॥ ४२

५र र १ र २र १
I हाउत्वमित्सप्रथाअसिहाउ। आग्नेत्रातः। ऋताः
० १र २ १र २र १ २र
कवा२३४इः। हाहोइ। त्वांविप्रासः समिधा।
१ र २ १र २ १ २ १र २ २ १
नादीदिवा३४ः। हाहोइ। आविवासा३४हाहो३। तिवो
५ ४ ५
२३४वा। धा५सो६हाइ॥ १॥

५ ५ २ १ २ ३ ५
II त्वंत्वा६मे। इसप्रा३थायासाइ। आ२३४सी।
१ र २र १ ० ३ ५ १र २र
आग्नेत्रातः। ऋताःकवा१इः। का२३४वीः। त्वांविप्रासः

हे 'अग्ने'! 'त्रातः' रक्षक! 'ऋतः' (१) सत्यभूतः 'कविः

I, II अनयोः गौतमम् नाम।

४२ नास्तीयमुत्तरार्चिके। २२

(१)—ऋतमिति सत्यनामसु षष्ठम्—नि०३,१०।

अथ नवमी ।

(शुनःशेप ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २ १ २

आ नो अग्नेवयोवृधꣳरयिम्पावकशꣳस्यम् । राखा

१ २र १ र २ ३ ५ १ २र १

समिधा । नादोदिवो । दा२३४इवाः । आविवासा२३

२ १र २ १

हा । तिवेधा२३सा३४३ः । ओ२३४५इ । डा ॥२॥ ४२

आन्तप्रश्नः (२) 'त्वमित्' (३) त्वमेव 'सप्रथाः' (४) सर्वतः पृथुः 'असि' भवसि । हे 'समिधान' समिध्यमान ! हे 'दीदिवः' दीप्ताग्ने ! (५) 'त्वां' 'विप्रासः' (६) विप्राः मेधाविनः (७) विधातारः स्तोतारः 'आविवासन्ति' (८) विचरन्ति ॥८॥४२

---

(२)—कविरिति मेधावि नामसु दशमम्—नि० ३, १५ ।

(३)—"इदिति पादपूरणः"-वि० ।

(४)—प्रथतेरसुनि रूपम् सुविस्तीर्ण इत्यर्थः । "सप्रथाः सर्वतः पृथुः" इति मै० ६, २, ८ ।

(५)—दीदिर्दानं तद् विद्यते यस्येति मतुपि 'छन्दसीरः (८, २, १६)'-इति वत्वे दीदिवत्, तस्य सम्बोधने 'मतुवसोरुःसम्बुद्धौ छन्दसि (८, ३, १)' इति रुत्वे रूपम् । "दानवन्"-इति वि० ।

(६)—विप्र इति मेधावि-नामसु प्रथमम्—नि ३, १५ । असुकि (७, १, ५०) रूपम् ।

(७)—वेधः-शब्दो विधातृ-पर्यायः प्रसिद्धः, विधातृ-पदं च मेधावि-नामसु पञ्चदशम्; इह स्तोत्रर्थ-प्रतिपादकः । "वेधसः मेधाविनः ऋत्विजः"-इति वि० ।

(८)—आविवासतीति परिचरण कर्मसु अन्त्यम्—नि० ३, ५ ।

३ २ ३ १ २ ३ १ २
चन नुपमाते पुरूस्पृहꣳसूनीतो सुयशस्तरम् ॥८॥४३

३र ४र ५ र र ४ ५ २ ३ २ १ १ १
। आनोअग्नेवयोवृधम्। ए३४। रया३४५इम्।

१र १ ७ २ १र २र १ २र र १ ७
पावा३काशाꣳसा२३याम्। रास्वाचनउपमाते। पूरू-

१ २ २ ३ २ १
स्पृहा२म्। सुनाइताइहु३हाइ। यशस्तराम्। औ२३

४ ५ ४
होवा। होपुइ। डा॥ ३ ॥४३

हे 'अग्ने'! 'पावक' शोधक! 'वयोवृधं' अन्नस्य वर्द्धकं 'शंस्यं' स्तुवन्तं 'रयिं' धनं 'नः' अस्मभ्यम् आभरेति शेषः। आहृत्य च हे 'उपमाते! उपास्मात्समीपे मातिष्ठतमित्युपमातिः, हे तादृश! अग्ने! (१) 'नः' अस्मभ्यं 'सुनीती!' सुनीत्या शोभन-नयनेन (२) 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'सुयशस्तरम्' अत्यन्त-स्वभूतं कीर्ति-धनं 'रास्व' (३) देहि॥

---

४३ नास्तीयमुत्तरार्च्चिके। २३

। अग्निऋषिः, आयुः।

(१)—"उपमातिः उपमाता निर्माता, तस्य सम्बोधनम्, हे उपमाते! स्रष्टः! इत्यर्थः। एतदुक्तं भवति—त्वमेवास्माकं स्रष्टा, त्वमेवास्मभ्यं शरीरस्थित्यर्थः धनं देहीत्यर्थ"-इति वि०।

(२)—"नीतिशब्दोमार्गवचनः, तस्मादियं तृतीया, सुनीत्या सुमार्गेण प्रतिग्रहादिने त्यर्थः"-इति वि०।

(३)—रातिदान-कर्मसु चतुर्थ. नि० ३, २०।

अथ दशमी।

सोभरिऋषिः।

२उ　३　१　२ ३१ २ ३ १　२　३र　　२र　　३ १र
योविश्वादयतेवसुहोता२मन्द्रोजनानाम्। मधोर्न
२र　३ १　२ ३　१र　२र　२　३ १ २
पात्रा प्रथमान्यस्मै प्रस्तोमायं न्त्वग्नये ॥ १० ॥ ४४

५र　२　४र ५ ४र　५　　१　　१　　१ र
I योविश्वा३दायतेवसू। होता२मान्द्रो२। जना-
र　　१　　१　　१र　र　र
नाम्। माधो२र्नापा२। त्राप्रथमान्यस्मै। प्रास्तो२
१　　२ १　　५　　४　　५
माया२३। तुवी२३४वा। ग्रा५योई्हाइ ॥४॥

५र　र　र　　　१　　१
II योविश्वादयतेवसूहाउ। होता२। मान्द्रो२।
१ र र　　२　१　२　　१　　१　　१र
जनानाम्। ओवा। ओवा। माधो२र्नापा२। त्राप्र-
र　र　१　२　१　२　　१　　१　　२ १
थमान्यस्मै। औवा। औवा। प्रास्ता२माया२३। तुवो
५　　४　　५
२३४वा। ग्रा५योई्हाइ ॥ ५ ॥ ४४

"सुयमस्तर"-"स्वयमस्तरम्"-इति पाठौ ॥ ८ ॥ ४३

४४ उत्तरार्चिकस्य ७. ३. ५ १।

I, II अनयोः अग्निऋषिः, हरीनाम।

५र  र  र र र र  ५ १५ १२ १र र
III योविश्वादयतेवस्वोहाओहाइए। होता२मंद्रोजना
र  २ १  २ १ २ १ ३ २ ३ २  १ १
२नाम्। ओ३हा। ओ३हा३ए३४म३४धोर्नपा। आप्रथ-
र १ २  २ २  २ र १  र १ १र २
मानायस्माइ। ओ३हा। ओ३हा३ए३४। प्रस्तो३४माया
२ १ ५ ४ ५
३। तुवो२३४वा। म्रा५योई२हाइ॥ ६॥

५र र र ५ १र र र र र १
IV योविश्वादयतेवसुईए। होतामंद्रोजनानाम्। मा
२ २  १र र र १ २ २
धो१र्नापौ। वा३२। आप्रथमान्यस्मै। प्रास्तो१मायौ।
२र र २ १
वा३२। त्वग्नये। इडा२३भा३४३। ओ२३४५ इ। डा॥७॥

'होता' देवानामाह्वाता 'मन्द्रः' मोदनः(१)यः अग्निः 'विश्वा' (२) सर्वाणि 'वसु' (३) वसूनि धनानि 'जनानां' (४) जनेभ्यः 'दयते'

---

III, IV अनयोः अग्निऋषिः, दैर्घश्रवसम्।

(१)—'मदि' स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु-इत्यस्य रूपम्। "मन्द्रः स्तुत्यः"-इति वि०।

(२)—सुपां सु लुगित्यादिना (७, १, ३९) शस आले रूपम्।

(३)—"एकवचनमिदं बहुवचनस्य स्थाने"-इति वि०। परं, 'सुपां सुलुगिति (७, १, ३९) शसो लुगपि सिद्ध्यति।

(४)—'चतुर्थ्यर्थे बहुलं छन्दसि (२, ३, ६२)' इति षष्ठी। वि० मते तु जनानां स्तुत्यः-इत्येवमन्वयः।

## इति चतुर्थी दशति ॥

प्रयच्छति । तस्मै 'अस्मै' अग्नये 'मधोः (५) न' मदकरस्य सोमस्येव 'प्रथमानि' मुख्यानि 'पात्रा' पात्राणि 'स्तोमाः' स्तोत्राणि 'प्र यन्ति' गच्छन्ति ॥१०॥ ४४

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे—

सेयं प्रथमा ।

(वामदेवऋषिः)

३ १ २ ३ १र २र ३ १र २र ३ १ २ ३ १र
एनावो अग्निन्नमसोर्जोनपातमाहुवे । प्रियं
२र ३ १ २ ३ १र २र ३ २ ३ १ २
चेतिष्ठमरतिꣳस्वध्वरं विश्वस्य दूतमम्रतम् ॥१॥ ४५

४५ उत्तरार्च्चिकस्य १, २, १३ १ ।

(५) —'सुप्तिङुपग्रहलिङ्ग' इति (३ १, ८५) भाष्यवचनात्, इह लिङ्गव्यत्ययेन रूपम् ।

५र र र ४ ५ १ र २ र र २
I एनावोअग्निन्नामसा। ऊर्ज्जोनपा। तामा१
१ २र २ १ २ २ १
हुवे२। प्रायच्चेतिष्ठमरतिम्। सुवाध्वा१रा२म्। विश्वा
२ १ २ १ २ १
स्या१दू२।ताममृतम्। इडा२३भा३४३। ओ३३४५
५
इ। डा॥८॥

५र र र र १ र २ र १ २
II एनावोअग्निन्नमसाहाउ। ऊर्ज्जोनपा। तामा
२ १ २र २ १ २
१ऊवे२३। हाउ। प्रायच्चेतिष्ठमरतिम्। सुवाध्वा१
२ १ २ २ १
रा२३म्। हाउ। विश्वास्या१दू२३। हाउ। ताम-
२ १ २ १ ५
मृतम्। इडा२३भा३४३। ओ२३४५इ। डा॥९॥

५र ४र ५र ४ ४ ५ ४ २र १र २र १र २ र
III एनावोअग्निमेपुनमसा। ऊर्ज्जोनपातमाहुवे।
१ २ १ २ १ २ १ २
प्रा२३याम्। चाइतिष्ठम्। आरतिम्। सुवाध्वा१
१ २ १ २ १ २
रा२म्। विश्वास्या१दू२। ताममृतम्। इडा२३भा
१ ५
३४३। ओ२३४५इ। डा॥१०॥

---

I, II अनयोः गोतमऋषिः, आग्नेयं नाम।

५र ४र ५र  ४  र  ५र  ४ ५  १ र २ र

IV एना वो अग्निन्नमसो। ऊर्जोनपाता। तामाहुवे।

१ २  १ २  १ २  १

प्रा२३याम्। चाइतिष्ठम। रा२३तीम्। स्वध्वरम्।

२ १ २  १ २  १

विश्वस्या२३दू। ताममृतम्। इडा२३भा३४३। ओ२३४५इ।

डा ॥११॥४५

'ऊर्जः' (१) बलस्य 'नपातं' पुत्रं 'प्रियम्' अस्माकं, 'चेतिष्ठम्' (२) अतिशयेन ज्ञातारं प्रज्ञातारं प्रज्ञापकं वा। 'अरतिं' गन्तारं स्वामिनं वा 'स्वध्वरं' सुयज्ञं, 'विश्वस्य' सर्वस्य यजमानस्य 'दूतम्' 'अमृतं' नित्यम् 'अग्निम्' 'एना' (३) एनेन 'नमसा' स्तोत्रेण [यद्यप्यत्वान्वादेशोनास्ति तथापि छान्दसत्वादिदं शब्दस्यैनादेशः] हे स्तोतारः! 'वः' युष्मदर्थम् 'आहुवे' (४) आह्वयामि॥१॥४५

III, IV अनयोः गोतमऋषिः, मनाज्यं नाम।

(१)—"ऊर्क् अन्नम्, तस्य नपात् पौत्रम्; कथं पुनरसौ अन्नस्य पौत्रः? अन्नाद्धि बलं जायते, बलात्मथ्यमानएष जायते, एवमग्निरन्नस्य पौत्रत्वम्"-इति वि०।

(२)—चेत इति प्रज्ञा-नामसु तृतीयम्, नि० ३.९। अथवा 'चिती सञ्ज्ञाने' अस्य, तृचि 'तुश्छन्दसि (५, ३, १११)'-इतीष्ठनि रूपम्।

(३)—सुपां सुलुगित्यादिना तृतीयाया आत्वे रूपम्।

(४)—सम्प्रसारणं बाहुलकात् ६, १, ३४।

अथ द्वितीया।

भर्गऋषिः।

३ १२ ३ २३ २ ३ १२ १२
अग्ने वनेषु मातृषु सन्त्वा मर्त्तासइन्धते। अतन्द्रो
३ १ २ ३ २ ३ २उ ३ १ २
हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि॥२॥४६

४र र र ४ १ २र १ २र १
। अग्षेवना५इषु मातृषू। सात्वामर्त्तासः। इन्धा२३
२ १ २र १ २ १ ७ ३ ५
ताइ। आतंद्रोहव्यंवह। साइ। हवो२ष्का२३४र्त्ताः।
१ २र १ २ १र २ १
आदिद्देवाइ। षुराजा२३सा३४३इ। ओ२३४५इ।
डा॥१२॥४६

हे 'अग्ने' 'वनेषु' 'मातृषु' च 'स्वपिषि' वर्त्तसे। तथा भूतं 'त्वा' त्वां 'मर्तासः' मनुष्याः अध्वर्य्यादयः मन्थनेनोत्पाद्य 'समिन्धते'। पश्चात् प्रवृद्धस्त्वं 'अतन्द्रः' अनलसः सन् 'हविष्कृतः' यजमानस्य 'हव्यं' हविः 'वहसि' देवान् प्रति। 'आदिद्' अनन्तरमेव 'देवेषु' मध्ये 'राजसि' दीप्यसे (१)॥

---

४६ नास्तीयमुत्तरार्च्चिके।२४

I गोतमऋषिः, देवराजम्।

(१(—हे 'अग्ने!' यस्त्वम्,'अतन्द्रः' अनलसः देवान् प्रति 'हव्यं' हविः, 'हविष्कृतः'

अथ तृतीया ।

सोभरिर्ऋषिः ।

१ २　　३ १ २ ३ १ २　３ १ २ ३ २　　３ २
अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः । उपोषु
३ १र २र　२ ३ १ २　３ १ २
जातमार्यस्य वर्द्धनमग्निं नक्षन्तु नो गिरः ॥ ३ ॥ ४७

५　र　५ १　२ १र　१र १
I अदर्शि गातुवित्तमा६ए । यास्मिन् व्रतानि यादधुः ।
र २　२ २　१र २ १२　१
ऊपोषु जा३ । चा३चा३ । तमारि यस्य वर्द्धनम् । अग्ना-
२　२ २　र १२ १ २ १
इन्नक्षा३ । चा३चा । तुनोगिरः । इडा२३भा३४३ ओ२३
५
४५इ । डा ॥ १३ ॥४७

"मातृषु", "मात्रोः"-इति पाठौ । "चव्यं", "चव्य"-इति च ॥ २ ॥४६

'यस्मिन्' अग्नौ 'व्रतानि' कर्माणि (१) 'आदधुः' यजमानाः

४७ उत्तरार्चिकस्य ७, १, ११, १ ।

I कौशिकऋषिः, गाथिनम् ।

हविषा सह क्रियमाणाः सुतीव 'वक्षुषि', 'देवेषु' राजसि च—'समामः' तं 'त्वाम्' 'श्रेष' अपत्याय, 'मातृषु' जगतीनिमातृभूतेषु 'वनेषु' उदकेषु उदकार्थम् समिध्मते-इति वि०-सम्मतोऽर्थः । श्रेष-इति अपत्य-नामसु पष्ठम्, नि० २, २; वनंत्युदकनामसु नवमम्, नि० १, १२ ।

(१)—व्रतमिति कर्म-नामसु मतमम्, नि० २, १ ।

अथ चतुर्थी ॥

मनुः प्रार्थयते ।

३ २ ३ २ ३१ २ ३ १ २ ३ १ २ ३ २ ३ १
अग्निरुक्थे पुरोहितोग्रावाणोबर्हिरध्वरे । ऋचा

२ ३ २ ३ १ ३ १ २
यामि मरुतो ब्रह्मणस्पते देवाअवोवरेण्यम् ॥४॥४८

आहितवन्तः । 'गातुवित्तमः' (२) अतिशयेन मार्गाणां ज्ञाता सोग्निः 'अदर्शि' प्रादुरभूत् । किञ्च । 'सुजातं' सम्यक् प्रादुर्भूतं अस्य 'आर्यस्य' उत्तम-वर्णस्य 'वर्द्धनं' वर्द्धयितारं 'अग्निं' 'नः' अस्माकं 'गिरः' स्तुति-रूपाः वाचः 'उपो (३) नक्षन्तु' उप गच्छन्तु [नक्ष गताविति धातुः (४) ॥

"नक्षन्तु नोगिरः"-इति छन्दोगाः । "नक्षन्त नोगिरः' -इति बह्वृचाः ॥ १ ॥४७

---

४८ नास्तीमुत्तरार्च्चिके । २५

(२)—गातुरिति पृथिवी-नामसु षोडशम्, नि० १, १। इह तान्स्थात् ताच्छब्द मङ्गीकृतं भाष्यकृता । विवरणकारस्तु—'कैगैरै शब्दे-इत्यस्य रूपम्, गातुः शब्दयिता स्तुतीनाम् उच्चारयिता, तं यो वेत्ति सगातुवित, अतिशयेन गातुवित् गातुवित्तमः, स्तुतीनामुच्चारयितुरतिशयेन वेत्तेत्यर्थः"।

(३)—"उप, उ, सु चयोपि पादपूरणाः"-इति वि० ।

(४)—"नक्षतिः व्याप्तिकर्मा"-इति वि० । नक्ष व्याप्तिकर्मसु द्वितीयम्, नि० २, १८

५ ३ २ ४ ५ २र१र२र१ ३ १
। अग्निरुक्थाइ। पुरो३हाइताः। ग्रावाणोब। हिरा३

४ ५ २ १र र र ७ १
ध्वाराइ। ऋचायामिमरुतोब्रह्मणस्पाता२इ। दाइवा२

१ २ १ ५ ४
आवा२३ः। वरो२३४वा। णा५योई हाइ॥ १४॥

५ र र ४ ५ १२ ३ ५ ४
II अग्निरुक्थाऔहोहोहाइ। पुरौवाओ२३४वा। हि

२र१र२र१ ३ २ ३ ५ ४ २ १ २
ताः। ग्रावाणोब। हिरौवाऔ२३४वा। ध्वराइ। ऋचौ३हो

१र र ७ १ १ २१
यामिमरुतोब्रह्मणस्पाता२इ। दाइवा२आवा२३ः। वरो

५ ४ ५
२३४वा। णा५योई हाइ॥ १५॥४८

'उक्थे' स्तोत्र-शस्त्रात्मके 'अध्वरे' हिंसा-रहिते अस्मिन् यज्ञे 'अग्निः' 'पुरोहितः' यस्मात्पुरतः उत्तरवेद्याम् ऋत्विग्भिर्निहितो-ऽभूत्। तथा 'ग्रावाणः' सामाभिषवार्थं पुरतोनिहिताः। 'बर्हिः' च पुरतोनिहितम् आसादितम्। एवं सामग्र्यां सत्यां हे 'मरुतः' एकोनपञ्चाशन्मरुद्गणाः! हे 'ब्रह्मणस्पते' स्तोतस्य पालक! एतन्नामक! देव! हे 'देवाः' द्योतनादि-गुण-युक्ताइन्द्रादयः! 'वरेण्य' वरणीयं भजनीयम् 'अवः' रक्षणम् 'ऋचा' सूक्त-रूपया

I, II अनयोः वार्हदुक्थं नाम।

अथ पञ्चमी।

सुदीतिर्ऋषिः पुरुमीढोवाऽऽङ्गिरसोवा।

३ १ २ ३ १ २ ३ १ २ ३ १ ३ २
अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम्। अग्निं

३ १ २ ३ २३ ३ १ २ ३ १ २ ३ २
राये पुरुमीढ श्रुतन्नरोग्निः सुदीतये छर्दिः ॥५॥४९

स्तुत्या 'वः' युष्मान् 'यामि' मनुरहं याचामि (१) [याचतेर्लटि रूपम्। वर्णलोपश्छान्दसः (२)]॥

"मरुतोब्रह्मणस्पते देवाः"-इति चौथ्यामन्तितत्वेन छन्दोगाः पठन्ति। मरुतोब्रह्मणस्पतिं देवान्"-इति द्वितीयान्तत्वेन बह्वृचाः॥ ५ ॥४८

हे 'पुरुमीढ!' त्वम् (१) 'अग्निम्' 'अवसे' रक्षणाय 'ईडिष्व' स्तुहि 'गाथाभिः' [गाथेति-वाङ्नाम (१,११,२६)। मन्त्ररूपा

---

४९ नास्तीयमुत्तरार्चिके।२६

(१)—यामीति याच्ञाकर्मसु द्वितीयमस्ति पठितम् (नि० ३, १९), तदनुरोधेन याचतेर्लोपायासः कथं स्वीकृतइति चिन्तनीयम्।

(२)—इह उक्थे अध्वरे पुरोहितमग्निं, ग्रावाण, बर्हिः, मरुतः, ब्रह्मणस्पतिः। अत्र बहुव्यत्ययः स्तोकार्थः।

(१)—'हे पुरुमीढ! ...दीयाम्नराजन्!' -इति वि०।

५ ४५र २ २   २र ४र ५   २ २र   १र २र
[ अग्निमीडिष्वा३४औहोवा। आवसे। गाथाभिःशी।
१र   २   १ र   २
रशोचा२३इषाम्। अग्नि॑ꣳरायाइ। पुरुमा२३इढो।
१   १   २   १
श्रुतन्नरो। अग्निःसू२३दो। तयाइच्छा२३४५दी६५६ः।
१ २   १ १ १ १ १
दत्वाइया२३४५॥ १६ ॥४९

भिर्वाग्भिः] कीदृशम्? 'शीरशोचिषं' शयन-स्वभाव-रोचिषं (२) तथा 'राये' धनाय ईडिष्व। 'श्रुतम्' (३) एनं 'नरः' अन्येऽपि यजमानाः (४) स्तुवन्ति स्वार्थम्। तस्मात् 'सुदीतये' (५) मह्यम् 'अग्निः' (६) त्वयाभिष्टुतः सन् 'छर्दिः' गृहं (७) प्रयच्छत्वित्येवं सुदीतिः पुरुमीढं ब्रूते॥

---

[ पौरुमीढम्।

(२)—'शीरं व्यापि, शोचिर्दीप्तिः; व्यापिनी दीप्तिर्यस्यासौ शीरशोचिः, तं शीरशोचिषम्, व्यापि-दीप्तिमित्यर्थः। अथवा जठरात्मना आश्रयणीया दीप्तिर्यस्य'-इति वि०। "अनुशायिनमिति वा आशीनमिति वा"-इति नै० ४, २, १४। शीङ् अश्नोतेर्वेति भावः।

(३)—'श्रुतं विख्यातम्'-इति वि०।

(४)—नर इति मनुष्य-नामसु बहुवचनान्तं चतुर्थं पदम्, नि० २, ३ 'नरः प्रथमैकवचनमिदं (नि० २, ३, २) द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, नरं नराकारम्, इति वि०'।

(५)—'शोभनस्य दानस्यार्थाय'-इति वि०।

(६)—'अग्निः प्रथमैकवचनमिदं द्वितीयैकवचनस्य स्थाने'-इति वि०।

(७)- छर्दिरिति गृहनामसु ऊनविंशतितमम् नि० ३, ४। 'छर्दिः प्रथमैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, छर्दिषे गृहस्यार्थायेति यावत्'-इति वि०।

अथ षष्ठी।

प्रस्कण्व ऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः। आ सी-
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
दतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे॥६॥

२ २ १ ५ ४ ५ २र१र
I श्रुधी३। श्रू२३४। धिश्रुत्कर्णव। ह्निभाइः। देवै-
र १ १र २ १र र र २
रग्ने सयावा२३भीः। आसीदतुर्बर्हिषिमित्रोअर्या२३मा।
र १ २ १ ५र र २ २ १
प्रातर्या२३वा३। भा२इरा२३४औहोवा। ए२३। ध्वर
आ॥१७॥५०

"अग्निः सुदीतये छर्दिः"-इति छन्दोगाः। अग्निं सुदीतये छर्दिः-इति बह्वृचाः॥ ५॥४९

हे 'श्रुत्कर्ण' श्रवण-समर्थाभ्यां कर्णाभ्यां युत! अग्ने! अस्मदीयं वचनं 'श्रुधि' (१) शृणु। यः 'मित्रः' देवश्च 'अन्यैः' 'प्रातर्यावभिः' प्रातःकाले देव-यजनं गच्छद्भिः 'देवैः' सर्वैः 'सयावभिः'

---

५० नास्तीयमुत्तरार्च्चिके। २७

I कार्णश्रवसम्, प्रास्कण्वं वा।

(१)-"श्रु शृणु पृ कृ वृभ्य छन्दसि (६, ४, १०२)"-इति धेर्हिः।

अथ सप्तमी।

सौभरिर्ऋषि।

१२ २१ ३ २ ३ १ ३ ३ २ ३ १ २ १ २
प्र दैवोदासो अग्निर्देव इन्द्रोन मज्मना ※। अनु
३ १ २ ३ १२ २१ ३ १२ २१३ १ २
मातरं पृथिवीं वि वावृते तस्थौनाकस्य शर्मणि ॥७॥५१

५ २२ २ ४ ५ २२.१ २ १
। प्रदैवोदासोग्नीः। देवइंद्रोनमज्मना †। अनुमा२३

'आहवनीयाग्निना त्वया समान-गतिभिः अन्यैः बह्निभिः' देवैः सह 'अध्वरे' क्रतु निमित्ते 'बर्हिषि' दर्भे 'आसीदतु' उपविशतु ॥

"आसीदतु बर्हिषि मित्रो अर्य्यमा प्रातर्यावभिरध्वरे"-इति छन्दोगाः, "आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम्"-इति बह्वृचाः ॥ ६ ॥५०

'देवः, द्योतमानः इन्द्रः परमैश्वर्य-युक्तः (१) 'दैवोदासः' दिवो-

---

५१ उत्तरार्चिकस्य ७, १, ११, ३।

। दैवोदासम्।

※ "मज्मना"-इति अन्त्यस्थमध्य-पाठो बहुपुस्तके

† गानग्रन्थे सर्वत्रैव प्रायः "मज्मना"-इति अन्त्यस्थ मध्य एव पाठः।

(२)—'बह्निभि वोढृभिः देवैः अन्यैः अग्निभिः'-इति वि०।

(१)- 'दृटि' परमैश्वर्य्ये तस्मा दौणादिकेर प्रत्यये रूपम्।

अथाष्टमी ।

मेधातिथिर्मेध्यातिथिश्चोभावृषी । [इयमैन्द्रीत्युक्तमेव] ।

२ ३ १र २र ३ १ २ ३ १ २ ३ १र २र
अध य्मो अधवा* दिवोबृहतोरोचनादधि ।

२ १ २ १र र २ १
ता । रंपृथिवींविवावृताइ । तस्थौना२३का । स्वाश-

२ १ २ १ ५
र्मणि । इडा२३भा३४३ । ओ२३४५इ । डा ॥ १८ ॥५१

दासेनाहूयमानः 'अग्निः' 'मातरं' सर्वस्य लोकस्य धारणात् पृथिवी माता, ताम्, पृथिवीम् 'अनु (२)प्र वि वावृते' देवान् प्रति हविर्वोढुं विशेषेण प्रवर्तयति । यस्मादेनमग्निं दिवोदासः 'मज्मना' बलेन (३) आजुहाव तस्मादयम् अग्निः 'नाकस्य' स्वर्गस्य शर्मणि गृहे (४) स्वायतनएव 'तस्थौ' अतिष्ठत् (५)

"अग्निर्देव इन्द्रः"-इति, "नाकस्य शर्मणः"-इति च छन्दोगाः । "अग्निर्देवाऽअच्छ"-इति "नाकस्य सानवि"-इति च बह्वृचाः ॥५१

* "अधय्मो"-इति अन्त्यस्थ-मध्य-पाठो बहुपुस्तके ।

(२) 'अन्विति पादपूरणः'-इति वि० ।

(३) मज्मनेति तृतीयान्तं बलनामसु पञ्चविंशतितमम् नि० २, ९ ।

(४) शर्मेति गृहनामसु षोड़शतमम्, नि० ३, ४ । इह वि०—'वैद्युतोऽग्निः स्वेन बलेन मेघान् हन् पृथिवीं वर्त्तयति, प्रतस्थौ प्रतिष्ठते च, स्वेनैव बलेन गच्छतीत्यर्थः, क्व पुनर्गच्छति ? उच्यते—नाकस्य शर्मणि द्युलोकस्य सम्बन्धिनि गृहे, द्युलोक यद् गृहं तस्मिन् गच्छतीत्यर्थः' ।

(५) क्वचि श्रुतो न शब्दः पादपूरणार्थ एवेतीह न व्याख्यातः ।

२ १ २ क २र ३ २३ ३ १ २
अया वर्द्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥८॥५२

५ र ४ ५ १ २ १ र र
I अधय्मा*ओवा। धवादा१इवा२ः। बृहतोरो-
२ १ र २र २ १ २
चाना१दाधी२। आ। पौ। हौहो३। वा। वार्द्धस्त-
र १ २ १ २र र २
न्वा। गाइरा१ममा२। आजातासौ। हौहो३वा३४।
५ २ २र ३ १११
हा हाउवा३। क्रतोपृणा२३४५॥ १८ ॥५२

हे 'इन्द्र!' 'अध' अधुना (१)। 'ज्मः' जमन्ति गच्छन्त्यस्या मिति ज्मा पृथिवी, (२) तस्याः सकाशात्। 'अध वा' अपिवा व अन्तरिक्षात् 'बृहतः, महतः रोचनात् नक्षत्रैर्दीप्यमानात्स्वर्गाद्वा आगत्य। 'अधि' पञ्चम्यर्थानुवादी (३) 'अया' (४) अनया

---

५२ नास्तीयमुत्तरार्च्चिके।२८

I सौक्रतवम्।

* गान-ग्रन्थे प्रायः सर्वत्रैव "अधय्मा"-इति अन्तस्थ-मध्य एव पाठः।

(१)—वेदे प्रायः थ-धयो रैक्यम्, प्रयुज्यते च धएव बहुत्र, तथाचेहैवमन्त्रे अथेत्यर्थे अध, अथवेत्यर्थे अधवेति। अध अनन्तरम्, अधुनेत्यर्थस्तु फलल्लभ्यः।

(२)—ज्मेति पृथिवी-नामसु तृतीयम् नि० १,१।

(३)—"तथाच अधिपरी अनर्थकौ (१, ४, ९३)"-इति कर्मप्रवचनीयं गतिसञ्ज्ञा-भावात् "गतिर्गतौ (८, १, ७०)"-इति निघातो न।

(४)—छान्दसत्वादनादेशाभावे रूपम्।

अथ नवमी।

विश्वामित्रऋषिः।

१ २ ३ २३ ३ १र २र ३ २ १र २र

कायमानोवना त्वं यन्मातॄरजगन्नपः। न तत्ते

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २

अग्ने प्र मृषे निवर्त्तनं यद्दूरे सन्निहा भुवः॥ ९ ॥५३

४र र र ४ २ १र २र र १ २ ३

। काय मानोऽ५वनातुवाम्। यन्मातॄरा। जागन्ना

५ २ र १ २ २ १ ३

२३४पाः। नतत्तेऽग्ने३। प्रमृषे३हा३इ। निवा र्त्ता२३४

'तन्वा' (५) तथा, विस्तृतया 'ममा' मदीयया गिरा स्तुत्या 'वर्द्धस्व' वृद्धो भव। हे 'सुक्रतो'! शोभनकर्मवन्निन्द्र! 'जाता' (६) जातानस्मदीयान् जनान् अभिलषितैः फलैरापूरय (७)॥ ८ ॥५२

हे 'अग्ने'!' 'वना (१) वनानि काननानि भक्षितुं 'काय-

---

५३ नास्तीयमुत्तरार्च्चिके। २९

(५) 'तन्वा शरीरेणेति वि०।

(६)—जातेति सुपांसुलुगित्यादिना (७, १, ३९) शसथाले रूपम्। 'जाता जातानि समापत्यानि'-इति वि०।

(७)—'पृण प्रीणयेत्यर्थः'-इति वि०।

(१) सुपामित्याले (७, १, ३९) रूपम्। 'वन शब्देनात्र वनावयवकाष्ठानि-इति वि०।

५　　२ १र　　२　　३ र २ १　　२ ४ ५
नाम् । यद्दूरा२३इसान् । इहाभुवा । औ३होवा ।
४
होपुइ । डा ॥ २० ॥

४　५　१र　२ २ ३　५　२
I एकाया । मानो । वनाहू२३४वाम् । ओइ ।
२　५　४　५　२ ऽ २　२ १र २र
नू२३४वाम् । उऊवाहाइ । औ३हो३१इ । यन्मातृरा ।
१ २ ३　५　३　५　४　५　२ ऽ २
जागन्ना२३४पाः । आ२३४पाः । उहुवाहाइ । औ३हो
२ १ २ १　२　१　२　१　३
३१इ । नतत्त्वा । ग्ना३इप्रमृपा३इ । निवा२र्त्ता२३४
५　३　५　४　५　२ ऽ २
नाम् । ता२३४नाम् । उहुवाहाइ । औ३हो३१इ ।
२ १र २र १　१ २ ३　५　३　५　४　५
यद्दूरेसाम् । इहाभू२३४वाः । भू२३४वाः । उहुवाहा
२ ऽ २　३　५र र　३　५
इ । औ३हो३१२ । या२३४औहोवा । ऊ२३४पा ॥२३॥२३

मानः (२) कामयमानः त्वं 'यत्' यस्मात्कारणात् तानि विहाय 'मातॄः' (३) मातृभूताः 'अपः' 'अजगन्' (४) अगमः गतवानसि ।

I, II अनयोः कागवं नाम ।

(१)—'चायृ पूजा निशामनयोरित्यस्य चकारस्य ककारापत्त्या रूपम्' इति वि०। "कायमान चायमानः कामयमान इति वा" इति नै० ४, १, १४।

(३)—'मातर इति प्रथमा-बहुवचनान्त नदीनामसु दृश्यते, नि० १, १३ ३७। इह मातॄरिति सुपांसुलुगित्यादिना (७, १, ३९) शमि पूर्वसवर्णदीर्घे रूपम्।

(४) वर्त्तमाने लुङ् (३, ४, ६). छान्दसादेशः. प्रथमपुरुषे बहुवचनस्य व्यत्ययेन।

अथ दशमी।

कण्व ऋषिः।

१ २ २र३ १ २ ३ १ ३ १ २ ३ १ २ ३ २ ३
नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते। दीदेथ
१ २ ३ ३ १ २ २र३ १ २ ३ १ २
कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः॥१०॥५४

अस्तु प्रविष्टत्वाच्छान्तोवर्त्तसे। 'तत्' तस्मात् 'ते तव निवर्तनं नितरां तत्रैव वर्तनं, तेन च विनाशोलच्यते। सो 'न प्रमृषे' [कृत्यार्थे केन् प्रत्ययः (५)] न प्रमृष्यते न सह्यते। कुतः? इत्यत आह। 'यत्' यस्मात्कारणात् 'दूरे (६) सन्' दूरे अदृश्यतया वर्तमानस्त्वं 'इह' अस्मत्संबन्धिष्वरणीरूपेषु काष्ठेषु 'आभुवः' (७) समन्तात् भवेः [मथनात् चण-मात्रेणास्माकं समीपे भवसि, तस्मात्तव दूरतोवर्त्तनम् अस्मभ्यं न रोचते]॥

"इहाभुवः"-इति "अभव"-इति च पाठौ॥९॥५३

हे 'अग्ने!' 'ज्योतिः' प्रकाशरूपं 'शश्वते' (१) बहुविधाय यज-

---

५४ नास्तीयमुत्तरार्च्चिके।३०

(५)—"कृत्यार्थे तवै केन् केन्यत्वनः ३, ४, १४"-इति सूत्रेण।

(६)—पदकारास्त्विह 'दुः ए'-इत्येवं पठन्ति।

(७)—वर्त्तमाने लुङ् (३, ४, ७)।

(१)—शश्वत् इति बहुनामसु षष्ठम् नि० ३, १।

५ र    २ ३    ५    १ २र

I नित्वामग्नाइ । मनुर्द्दो२३४धाइ । ज्योतिर्जना ।

१ ०    २र १    २    १ ० २

याशश्वाता२इ । दो । दाइ । थक । णाऋतजा३ ।

१ ३    ५    १२ १    १ ३    ५र

तजु२त्वा२३४इताः । यन्नमस्या२३ । ता२इक्रु२३४औ

र    ३

होवा । ष्टा२३४याः ॥ २२ ॥

४    २ ५ र ४ ५ र    ४    १र

II होवाइ । नित्वामग्नेमनुद्दधे । होवाइ । ज्योति-

र र    १ २ २    १ ० २    ०

र्जनायशश्वते । दाइदे१थक । णाऋतजा१३ । तजु-

जनाय 'मनुः' प्रजापतिः (२) 'निदधे' देव-यजन-देशे स्थापितवान् । हे 'अग्ने' ! त्वम् 'ऋतजातः' ऋतेन यज्ञेन निमित्त-भूतेनोत्पन्न उक्षितः हविर्भिस्तर्पितः सन् (३) 'कण्वे' एतन्नामके महर्षौ मयि 'दीदेथ' (४) दीप्तवानसि । 'यम्' अग्निं 'कृष्टयः' मनुष्याः 'नमस्यन्ति' नमस्कुर्वन्ति स त्वमिति पूर्वत्रान्वयः ॥१०॥५४

I, II अनयोः मानवम् ।

(२) 'यामथर्वा च मनुष्य पिता'-इत्यादि नैगमम् (१, ७, १५) ।

(३) 'उक्षितः महानुपचितः'-इति वि० ।

(४) दीप्तिकर्मणः ।

र्चा२३४इता। पन्नामा२३स्या३। ता२इक्ट्र२३४औ३हो वा। ष्टा२३४याः॥ २३ ॥५४

इति पञ्चमी दशति।

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य पञ्चमःखण्डः॥ ५॥

---

अथ षष्ठे खण्डे—

सेयं प्रथमा।

वसिष्ठऋषिः।

देवोवोद्रविणोदाः पूर्णां विवष्ट्वासिचम्। उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वोदेव ओहते॥१॥५५

---

५५ उत्तरार्चिकस्य ७, १, १०।

अथ द्वितीया:।

अस्याउत्तरस्याश्च कण्वऋषिः।

१२ १ २ २ २ २ २ ३ २ क २र ३ १ २ १ २ ३१र
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरं
१र४ २ ४ ५र ३र१र २र १ २ १ २
I देवो३वो३द्रविणोदाः। पूर्णां विवष्ट्वासिचम्। ऊद्वा
१ २र १ ० १ र
१सिञ्चा२। ध्वमुपवापृणध्वम्। आदिद्दोदे२। वओ-
१ र १ २ १
हते। हुडा२३भा३४३। ओ२३४५इ। डा॥ २४॥ ५५

'द्रविणोदाः' धनानां दाता (१) 'देवः अग्निः' 'वः' युष्मदीयां 'पूर्णां' हविषा 'आसिचम्' आसिक्तां च स्रुचं 'विवष्टु' कामयताम्। अतः 'उत्सिञ्चध्वं वा' सोमेन पात्रं। 'उपपृणध्वं वा' सोमं [वा-शब्दो समुच्चयार्थौ। ध्रुव-ग्रहेण होतृ-चमसं पूरयत च, अग्नये-सोमं प्रयच्छत चेत्यर्थः] 'आदिद्' अनन्तरमेव 'देवः' अग्निः 'वः' युष्मान् 'ओहते' (२) वहति।

"विवष्टु" 'विवष्टो'-इति पाठौ॥ १ ॥५५

---

५६ नास्तीयमुत्तराचिंके।३१

I अग्निऋषिः, द्रविणम्।

(१)—द्रविणमिति धन-नामसु पञ्चविंशतितमम्; नि० २, १०।

(२)—'ओहते वहयति'-इति वि०। ओहते-इति सायण-मते वहतेरूपम्, विवरण-मते वंहते रूपम्, परमुभय नवे एवं शब्दमलं शरणम्।

२ २र १ १ २ १ २ १ १ २
नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥२॥५६

५र २ ४ ५ ४ ५ २ १ २ १ २
I प्रैतूऽ३ब्रह्मणस्पतिः। प्रदाइविये। तुसूनृताइ।
१ २ ५ १ १ २ १र
अच्छा२वा२३४इराम्। नर्यं प। ङ्क्तिराधा१सा२३म्। देवा
२ ५ १ ५र र २
२या२३४ज्ञाम्। ना२र्या२३४औहोवा। तू२३४
५
नाः ॥२५॥५६

'ब्रह्मणस्पतिः'(१) देवः 'प्रैतु' अस्मान् प्राप्नोतु। 'सूनृता' देवी प्रिय-सत्य-भूता वाग्देवता प्रैतु अस्मान् प्राप्नोतु। 'देवाः' ब्रह्मणोस्पत्यादयो देवताः 'वीरं' शत्रुं निःशेषेण 'दूरे' प्रेरयन्तु। तं 'नर्यं' मनुष्येभ्यो हितं। 'पङ्क्तिराधसं' ब्राह्मणोक्त-हविषा पङ्क्त्यादिभिः समृद्धं (२) यज्ञं प्रति न अस्मान् 'अच्छ' आभिमुख्येन (३) 'नयन्तु' प्रापयन्तु ॥ २ ॥५६

---

I अग्निऋषिः बार्हस्पत्यम्।

(१) 'ब्रह्म अन्नं, तस्य पतिः स्वामी'-इति वि०।

(२) द्विनाराशंसं प्रातःसवनम्, द्विनाराशंसं माध्यन्दिनं सवनम्, सकृन्नाराशंसं तृतीयं सवनम्, एषा नाराशंसपङ्क्तिः पशुरुपवसथ्यः, त्रीणि सवनानि पशुरनुबन्ध्यः; एषा सवनपङ्क्तिः। एताभिः पङ्क्तिभिः यः साध्यते तं पङ्क्ति-राधसम्—इति भावः।

(३) 'अच्छ आभिमुख्यावगितुम्' इति वि०।

अथ तृतीया ।

( ऋषिः स एव )

२ ३ १ १ २ ३ २ ३ १ २ ३१र २र ३ २ ३ १र
ऊर्द्ध्व ऊ षु ण ऊतये तिष्ठा देवोन सविता । ऊर्द्ध्वो

२र ३ १ २ ३ २ ३ १ २३ १ २ ३ १ २
वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्वि ह्वयामहे ॥३॥५७

२र र १ ५ १ र र र
I ऊर्ध्वऊषुणा३ऊता२३४याइ । तिष्ठादेवोनसवि-

र र २ १ २ र १ ७
ता । ऊर्द्धोवा२३जा । स्यासनिता । यादञ्जिभो२ ।

२र १ १ २ १र २ १
वाघाद्भो२ः । वीवो२ । ह्वयामा२३हा३४३इ । ओ२३४५

५
इ । डा ॥ २६ ॥५७

हे यूप! [यद्वा, यूपात्मक-दारु-निष्ठाग्ने ! 'नः' अस्माकम् 'ऊतये' रक्षणाय 'ऊर्द्ध्वः' (१) उन्नतः 'तिष्ठा' (२)

---

५७ नास्तीयमुत्तरार्चिके ।३२

I वशिष्ठ ऋषिः वौङ्कम् ।

(१)—'ऊषुण'-इति मन्त्रे पदपाठे ८, ३, १०७। ८, ४, २७। क, ख—इमौ चेह पादपूरणार्थावित्यस्य न व्याख्यातौ।

(२)—मन्त्रे तिष्ठा इत्यादन्तपाठः, तत्र द्व्यचोऽतस्तिङः (६, ३, १३५) इत्यतो दीर्घः।

अथ चतुर्थी।

सौभरिर्ऋषिः।

२उ ३ १र २र ३ २ ३ १ २ ३ १ २ ३ १
प्र योराये निनीषति मर्त्तोयस्ते वसो दाशत्। सवीर

२ ३ २ ३ १ २ ३ १ २
न्धत्ते अग्नउक्थशंसिनं त्मना सहस्रपोषिणम् ॥४॥५८

तिष्ठ। 'सविता (३) देवः 'न' यथा सूर्योदिवउन्नतस्तिष्ठति, तद्वत् ऊर्ध्वः उन्नतः सन् 'वाजस्य' अन्नस्य 'सनिता' (४) दाता भविष्यसि। 'यद्' यस्मात् कारणात् 'अञ्जिभिः' (५) यज्ञेन यूपमञ्जद्भि 'वाघद्भिः' यज्ञं वहद्भिः ऋत्विग्भिः सह 'विह्वयामहे'। अन्नस्य दानाय त्वां विशेषेणाह्वयामः, तस्मादन्नस्य दाता भवेति पूर्वत्रान्वयः ॥ ३ ॥५७

हे 'वसो' (१) वासकाग्ने ! त्वां 'ये' तव स्तोता 'राये'

---

५८ नास्तीयमुत्तरार्चिके।२२

(३)—'आदित्योऽपि सवितेत्युच्यते, तथाच—'हैरण्यस्तूपे स्तुतोर्वन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच तदभिवादिन्येषर्ग् भवति'-इत्यादि नै० १०, ३, ८।

(४)—'सनिर्लाभः, तस्मादियं तादर्थ्ये-चतुर्थ्या आ आदेशः (७, १, ३९ सनितये लाभायेत्यर्थः'-इति वि०।

(५)—'त्वद्-गुण-प्रकाशकैश्छन्दोभिः'-इति वि०।

(१)—'हे वसो ! प्रशस्तधनवन्'-इति वि०।

अथ पञ्चमी।

कण्वऋषिः।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
प्र वो यह्वं पुरूणां विशां देवयतीनाम्। अग्निं

४ र र र ४ १ र १र र
I प्रयोरायाऽइनिनीषताइ। मर्त्तायस्तेवसोदाशत्।
र २ १ २ १ र
सवीरा२३न्धा। ताअग्नउ। वथशाᳫँसिनम्। त्मनासा
२ १र २ १
२३हा। सुपोषा२३इणा३४३म्। ओ२४३५इ। डा ॥२०॥५८

धनार्थं 'प्र निनीषति' प्रणेतुमिच्छति(२)। 'यः' 'मर्तः' मनुष्यः 'ते' तुभ्यं 'दाशत्' (३) हवींषि प्रयच्छति। 'सः' मनुष्यः 'उक्थशंसिनम्' उक्थानां (४) शस्त्राणां शंसितारम् 'त्मना' (५) आत्मनैव 'सहस्रपोषिणं' बहु-धनम् 'वीरं' पुत्रं 'धत्ते' धारयति (६)॥

"प्र यो राये निनीषति"-"प्रयं राये निनीषसति"-इति पाठौ॥४॥५८

I आङ्गिरसऋषिः, वैरूपसम्।

(२)'प्रकर्षेण पूर्वस्यां दिशि आहवनीये आत्मान नेतुमिच्छति'-इति वि०।

(३)—दाशतीति दानकर्मसु द्वितीयम् नि० ३. २०।

(४)—'उक्थानि स्तोत्राणि तेषाम्'-इति वि०।

(५) —'मन्त्रे ष्वाङ्यादेरात्मनः (६. ४, १४१)'-इत्यात्मन आदि-लोपः।

(६) —'तस्य पुत्रं ददामीत्यर्थः'-इति वि०।

२ १ २ १ २ २ २उ २ २ २ १ २
सूक्तेभिर्वचोभिर्वृणीमहे यꣳसमिदन्य इन्धते ॥५॥५९

५ ४ २ २ १ र र २ १
। प्रवाः। यज्ञं पुरू२३णास्। विश्वादेवयता२३यि-
२ १ र र र २ १ र २ १
नाम्। अग्निꣳसूक्तेभिर्वचोभिर्वृणीमा२३हाइ। याꣳसा

हे ऋत्विग्यजमानाः! 'देवयतीनां' देवान् कामयमानानां (१) 'पुरूणां' बहूनां (२) 'विशां' (३) प्रजारूपाणां (४) 'वः' युष्माकमनुग्रहाय 'यज्ञं' महान्तम् (४) 'अग्निं' 'सूक्तेभिः' सूक्तरूपैः 'वचोभिः' वाक्यैः प्र वृणी-महे' (५)। 'अन्ये इत्' (६) अन्येऽप्यृषयः 'यम्' एनमग्निं 'समिन्धते' सम्यग्दीपयन्ति तमग्निमिति पूर्वेणान्वयः॥
"वचोभिर्वृणीमहे"-इति, "अन्यइन्धते"-इति च छन्दोगाः।
"वचाभिरीमहे"-इति "अन्यईच्छते"-इति च बह्वृचाः॥५॥५९

---

५९ उत्तरार्च्चिकस्य १, २, ५ १।
। ऐतवाध्यम्।

(१)—देवान् यष्टुमिच्छन्त्यीयाः प्रजास्तासामित्यर्थः। 'न छन्दस्यपुत्रस्य ७, ४, ३५'-इति इत्वाद्यभावः।

(२)—पुरु-बहु-पर्य्याय शब्दौ नि० ( ३, १, ४ ) स्फुटम्।

(३)—यद्यपि 'विशः'-इति मनुष्य-साधारण-वाचकः (नि०२,१,६), परमिह देवयतीनामिति स्त्रीत्व-बहुत्व-निर्देशात् विशामित्यस्य प्रजारूपाणामित्यर्थः।

(४)—'यज्ञः'-इति महन्नामसु त्रयोदशम् नि० ३, ३।

(५)—'प्रवृणीमहे—याचामहे, किम्पुनर्याचामहे? सामर्थ्यादनम्'-इति वि०।

(६)—सायण-मते इच्छब्दोऽप्यर्थः, विवरण-नये पाद-पूरणार्थः।

अथ षष्ठी।

अनेनोत्कोलः स्तौति।

१ २ ३ २　३ २ ३ २ ३ १२　२८　३ १२
अयमग्निः सुवीर्यस्येशे हि सौभगस्य। रायईशे
३ १ २ ३ १ २ ३ १ २　३ १ २
स्वपत्यस्य गोमतईशे वृत्रहथानाम्॥६॥६०

१　१ २र　१　१
२माइदा२न्। य इन्धत। इडा२३भा३४३ओ२३४५इ।
५
डा॥२८॥५९

५　र　१ २र र २
। अयमग्निः सुवीर्यस्यहाउ। आइशेहिसौभगस्य।
१ २ २　र.१र २र १ २　१ २
होवा३हाइ। रायईशेस्वपत्य। स्यागो१माता२३ः।
१ २ २　२र१र २　१ २ २　२ २र
होवा३हाइ। ईशेहा२३इ३। होवा३हा। त्राहथां-
र १ २ १　५
नाम्। इडा२३भा३४३। ओ२३४५इ। डा॥२८॥६०

'अयम्' यजनीयत्वेनाङ्गुल्या निर्दिश्यमानोऽग्निः 'सुवीर्यस्य' शोभन-सामर्थोपेतस्य 'सौभगस्य' त्वम् 'ईशे हि' ईष्टे खलु (१)।

---

६० नास्तीयमुत्तरार्चिके। ३४

1 मनाऋषिः, दाहः।

(१) 'ईशेति पादपूरणः' इति वि०।

अथ सप्तमी।

वसिष्ठऋषिः।

१ २ ३ १ २ ३ १र २र ३ २ १र २र
त्वमग्ने गृहपतिस्त्वꣳहोता नोअध्वरे। त्वम्पोता

३ १ २ ३ २ ३ १ २ ३ १ २
विश्ववार प्रचेता यक्षि यासि च वार्यम् ॥७॥६१

४ ५ र ४ ५ ४ १ र २र १
I त्वमग्ने गृहपताइः। त्वꣳहोतानोअध्वराइ। त्वंपो

ईश्वरोभवसि [सर्वस्य बलारोग्य-हेतुतया-सौभाग्य-कारित्वात्] तथा 'गोमत.' गवादि-पशु-युक्तस्य 'स्वपत्यस्य' शोभनापत्यस्य 'रायः' धनस्य 'ईशे' ईष्टे, पुत्र-पश्वाद्युद्देशेन क्रियमाण-कर्म-फल-सम्पादकत्वेन तत्स्वामित्वात्। तथा एवम् भूतोग्निः 'वृत्रहथानां' [हननं हथः (२)] शत्रु-भूत-पाप-विनाशानामपि 'ईशे' [त्वयि सम-र्पित-कर्मणामस्माकं त्वत्प्रसादात्पाप-चयोभवतीति तस्यापिस्वामी॥

"ईशेहि"-इति "ईशेमहे,"-इति च पाठौ॥ ६ ॥६०

हे 'अग्ने !' 'नः' अस्माकम् 'अध्वरे' यज्ञे 'त्वं' 'गृहपतिः' यजमानोसि। 'त्वं' 'होता' देवानामाह्वातासि। हे 'विश्ववार' सर्वै

६१ नास्तीयमुत्तरार्चिके। ३५

I अग्निर्वसिष्ठो वा ऋषिः, समम्सम्।

(२)—'नपुंसके भावे क्तः (३, ३, ११४)'-इति क्ते, 'तप्-तनप् तन-थनाश्च (७, १, ४५ इति तस्य थनादेशे रूपम्।

२ १ १र १ २र ३र २ ३र २
२३ता। वाइस्वबा। रप्रचाइताः। औहो३४वाहाइ।
१ २ १ २ २ १र २
य। चाइया२३सो३। होवा३हाइ। चवारा२३या३ ४३म्।
१
ओ२३४५इ। डा॥ ३०॥

४ ५र ४ ४ २ ३ ५ २ ३
॥ त्वमग्ने। हाऽपतीः। त्व२होऽ२३४ता। नोअध्वा
५ १ ३ ५ २ ३ ५ २र
राइ। त्वा२म्पो२३४ता। विश्वावा२३४रा। प्रचेता३ः।
१ २ १ ३ ५र र २१र ३ ११११
यक्षाये३। या२सा२३४औहोवा। चवारिया२३४५म्॥३१॥

वरणीयाग्ने! 'त्वं' 'पोता' एतन्नामकऋत्विगसि(१)। अतः 'प्रचेताः' प्रकृष्टमतिस्त्वं 'वार्य्यं' वरणीयं हविः 'यक्षि' यज। 'यासि (२) च' अस्माकं धनं प्रापय।

"यक्षि यासि च"-इति छन्दोगाः। "यक्षि वेपि च" -इति बह्वृचाः॥ ७॥ ६१॥

---

१। वरुणऋषिः,सममन्तम्।

१—'शोधयिता वा'-इति वि०।

२—'याप्नोति याचञा-कर्मसु पठितत्वात (नि० ३, १९, ७) यातिरत्र याचञा लेट लोडर्थे (३, ४, ७, पा० सू०), याहि याचस्व प्रार्थयेत्यर्थः' इति वि०।

अथाष्टमी।

विश्वामित्रः स्तौति।

१ २ ३ १ २र ३ १ २ ३ १
सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये। अपा न-
२र ३ १ २ ३ १ २ ३ १ २ ३ १ २
पातꣳ सुभगꣳ सुदꣳससꣳ सुप्रतूर्त्तिमनेहसम् ॥८॥६२

५ २ ४र ५ ४ ५ १ र २र र १ २ र १
॥। त्वमाइग्नेगृहापतीः। त्वꣳहोतानोअध्वरे। त्वा
र १ ३र २ ४र ५र ३र २ १ २र
२३म्पोता। औहोइ४इ। औहो। वाहाइ। वाइश्वबा।
१ २र ३र २ ४र ५र ३र २ १
रप्रचाइता:। औहोइ४इ। औहो। वाहाइ। यज्ञा-
२ ३र २ ४र ५र ३र २ १र २
इयामा। औहोइ४इ। औहो। वाहाइ। चवारा२३या-
१
३४३म्। ओ२३४५इ। डा ॥ ३२ ॥६१

हे अग्ने! 'सखायः' सोमाज्यादि हविः-प्रदानेनोपकारकत्वात् मित्राणि 'मर्त्तासः' मनुष्याः ऋत्विजोवयम् 'अपां नपातम्'

---

६२ नाम्तीयमुत्तरार्च्चिके। ३६

॥। अस्यापि वरुणऋषिः, समन्तम्।



(१) 'अपां नपातम्' अपां पौत्रम्। कथ पुनरग्नेरपां पौत्वत्वम्? अद्भ्यो ओषधयो वृक्षाश्च जायन्ते, वृक्षेभ्यः सकाशात् निर्मथ्यते; एवमग्नेरपां पौत्रत्वम्

५ र　र र ४ ५ २ ३ ५
। सखायस्त्वाऔहोहोहाइ। वव्रृ। मा२३४हाइ।
२र१ २ २ १ ३ ५ १र २
देव मर्त्ताइहाइ। सऊ२ता२३४याइ। अपान्नपाइ।
४ ५ ३ २ २ १ २ ३ ५
तꣳसू। भगौ। वाइहाइइ। सूदꣳसा२३४साम्।
२ १ २ २ १र २ १
सुप्रतू२३र्त्तीम्। अनेहा२३सा३४३म्। ओ२३४५इ।
डा॥ २३॥ ६२

इति प्रथमा दशति।

अपां नपातं 'सुभगं' शोभन-धन युक्तम्। 'सुदंससम्' सुकर्म्माणं (२) 'सुप्रतूर्त्तिं' (३) शोभन-प्रतरं कर्म्मानुष्ठातृभिः सुखेन गन्तव्यम् 'अनेहसम्' (४) उपद्रव-रहितम्। एतादृशन्त्वाम् 'ऊतये' (५) रक्षणाय 'ववृमहे' (६) वृणीमहे॥ ८॥ ६२

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य षष्ठखण्डः॥ ६।

---

। वाम्र-वैखानस ऋषिः, आङ्गिरस-दानवो वा।

(२)—दंसः कर्म-नामसु तृतीयम् नि० २,१।

(३)—'तूर्वति हिंसार्थः (नि० २,१०,४२) सुष्ठु प्रकर्षेण हिंसितारं 'शत्रूणाम्' वि०।

(४)—'अनेहसम् अक्रोधम्' इति वि०। एहः-इति क्रोधनामसु पञ्चम् नि० २,१३।

(५)—'चतुर्थ्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्' इति वि०। 'चतुर्थ्यर्थे बहुलं छन्दसि (२, ३, ६२)' इति सूत्रं तत्र साधकम्।

(६)—'प्रार्थयामः'-इति वि०।

खण्डयोराजुहोतेति त्रिष्टुभोदशपञ्च च।
अग्निमरोविराट्, चित्र-इमंस्तोममितिद्व्यचः।
जागतोऽग्नेर्ऋचः सर्वाः, पूष्णः शुक्रान्तइत्यसौ (०)॥

अथ सप्तम-खण्डे—

सेयं प्रथमा।

श्यावाश्वऋषिः वामदेवो वा।

१ २ ३ १ २ ३
आ जुहोता हविषा मर्जयध्वं
१ २र ३ १ २
नि होतारं गृहपतिं दधिध्वम्।
३ २ ३ १ २र ३ १ २
इडस्पदे नमसा रातहव्य९

(०) -आजुहोता हविषामर्जयध्वमित्याद्येकः सप्तमः खण्डः, अबोध्यग्निः समिधे-त्याद्यपरः; तत्र प्रथमे ऋचोदश, द्वितीये षष्टौ ; तदित्थमुभयोः खण्डयोरष्टादश ऋचः सन्ति। तत्राह— आजुहोता-इत्याद्योः द्वयोः खण्डयोः अग्निमरो-इति या सप्तम षष्ठ-स्याग्निमा ऋक्,— सा विराट्-छन्दस्का ; ये इमे चित्र इमंस्तोममित्याद्ये सप्तमा इत्य द्वितीय-चतुर्थे— ते जगती-छन्दस्के, अथावशिष्टाः पञ्चदश ऋचः त्रिष्टुप्-छन्द ाः। किञ्च, शुक्रन्तेअन्यदिति अष्टम-खण्डस्य तृतीया ऋक् सौरी, तदितराः समस्ताः ाग्नेय्यः इति स्फुटार्थः।

२ १ २　　२ २ २क २र
सपर्यता यजत मर्त्यानाम्॥ १ ॥६३

४र ५ र ४　　२ १ र　　१　　१र
। आ जुहोता। हविषामर्ज्जया२ध्वाउवा२। नि

र २　　१　　२ २　　१ २
होतारङ्गृहपतिन्दधा२इध्वाउवा२३४। इडा३४स्पदाइ।

१ र　　१ २ १　　२ १　　४
नमसा रात्या२म्। सापर्यता। याजतम्मा२३। र्त्ति

५　　४　　५
योवा। आ५नोई३हाइ॥ ३४ ॥६३

हे ऋत्विजः! (१) 'आ जुहोत' (२) अग्निमाह्वयत। किञ्च 'हविषा' 'मर्जयध्वं' मृडयध्वं सुखयध्वं (३) (डकारस्य जकारश्छान्दसः (४) अपिच। 'इडः' इलायाः (५) 'पदे' उत्तरवेद्याम्

---

६३ नास्तीयमुत्तरार्चिके। ३७

1. रावाश्वम्।

(१)—'हे ऋत्विजः! मनुष्या यजत'-इति वि०।

(२)—जुहोतेति मध्यमपुरुषे(५,१४,१४) रूपम्, 'ऋचि तुनु'-इत्यादिना (६,३,१३३) ऋचि दीर्घः।

(३)—'मर्जयध्वम्, शोधयध्वम्, सम्मार्गं तृणैः कुरुध्वम्'-इति वि०।

(४)—सुप्तिङित्यादिना—(३,४,९८) इत्युवर्ण-व्यत्ययः-इति भावः।

(५)—इला शब्दस्य पञ्चम्यन्तम् इलः इति, डलयोरैक्यात् इडः श्रुतिः, "षष्ठ्याः पति-पुत्र-पार पद पयस्पोषेषु-(८,३,५३)"-इति मत्वे इडस्पदे-इति।

अथ द्वितीया।

वाष्टहव्य * ऋषिः (१)।

२ २ उ ३ १ २ ३ २ ३
चित्र इच्छिशोस्तरुणस्य वक्षथो
२ उ ३ १ २ ३ २ ३ १ २
न यो मातरावन्वेति धातवे।
३ १ र १ र ३ १ २ ३ २
अनूधा यदजीजनदधा चिदा
३ १ २ ३ १ २ र ३ २ १ २
ववक्षत्सद्यो महि दूत्यं चरन्॥ २ ॥६४

इत्यर्थः (६)। 'होतारं' देवानामाह्वातारं 'गृहपतिं' गृह-पालकम् अग्निं 'निदधिध्व' निःशेषेण धारयध्वम्। किञ्च 'नमसा' नमस्कारेण हविषा वा युक्तम्। अतएव 'रातहव्यं' दत्त-हविष्कं 'पस्त्यानां' यज्ञ-गृहाणां (७) मध्ये 'यजतं' यजनीयं पूजनीयमग्निं 'सपर्य्यत' परिचरत॥ १ ॥६३

* वार्षहव्येति पाठान्तरम्।

(१) - 'उपस्तुतस्य वार्षम्'-इति वि०।

६४ नास्तीयमुत्तरार्च्चिके। ३८

(६) 'इडित्यन्न नाम (नि०२.७,१६) तेन चात्र हविर्लक्षणमन्नं परिगृह्यते, तस्य पदे वेद्याख्य स्थाने इत्यर्थः'-इति वि०।

(७) -'पस्त्यानि गृहाणि (नि०३.४,७), तेषु ये निवसन्ति ते पस्त्याः, तेषाम्'-इति वि०।

I ओइ । चित्रइच्छाइशो१स्तरुणा२३ । स्याइवत्तथः । ओइ । नयोमातारा१वनुवा२३इ । तो३धातवे । ओइ । अनूधायादजीजना२३न् । आ३धाचिदा । ओइ । वव-त्तमाद्यो१महिद२३ । तिया३च्चापुरा६५ई न् । इत्यस्वर-न्महं२३४५ ॥ ३५ ॥

'शिशोः' शिशु-भूतस्य (¹) । अतएव 'तरुणस्य' (²) अग्नेः 'वत्तथः' (वत्तेरौणादिकोऽथस् प्रत्ययः) हविर्वहनं (³) 'चित्रइत्' आश्चर्यभूत मेव(⁴) । 'यः' जातोग्निः 'मातरौ' सर्वस्य निर्मात्रौ सर्वस्य मातृ-भूते द्यावापृथिव्यावरण्यौवा 'धातवे'(धेट् पाने' तुमर्थे इति (३,४,९) तवेन् प्रत्ययः) स्तनपानाय न 'अन्वेति' न गच्छति (इण्, गतौ लट्युपसर्गेण समासः (⁵) तिङि चोदात्तवतीति

(१) 'शंमनीयस्य'-इति वि० ।

(२) –'तृ प्लवन तरणयोरित्यस्येतद्रूपम्, प्लवन समर्थस्य, अथवा तरुणस्य गुमः ।

(३)—'वत्तथः वहनं गमनमित्यर्थः' इति वि० ।

(४) इह चिदइति पुंस्त्रिङ्गोव्यत्ययेनेति (७,४,९८) बोध्यम । चित्रः पूज्यं गमन-मिति विवरण-कृद्-व्याख्यानम् ।

(५) 'सह सुपा (२,१,४)' इत्यत्र सहेति योगविभागात् ।

५ ५ २ ५र ४ ५ ४ ५

॥ चित्राइए। ए३१२३४। शिशोस्तरुणस्यवक्षथः।

४ ५ ५ ५ २ २ ५र ४ ५र

क्षथः। हिहिहियाइहाउ। ए३१२३४। नयोमातरा

४र ५ ४र ५ र ४ ५र ५ ५ २

वन्वेतिधातवे। तवे। हिहिहियाइहाउ। ए३१२३४।

५र ४र ५ र ४ ५र ४र ५र ५

अनूधायदजीजनादधाचिदा। चिदा। हिहिहियाइहा-

२ ५ ४र ५ र ४ ५ ४ ५ ४ ५

उ। ए३१२३४। ववक्षत्सद्योमहिदूतियञ्चरन्। चरन्।

५ २ २ १

हिहिहियाइहाउ। वा। ए३। ऋतून्॥ ३६ ॥६४

(८,१,७१) गतेर्निघातः) 'अनूधाः' (नञा बहुव्रीहि समासः(६), तस्मिन्, अनूङ्स्त्रियामिष्टत्वात् (७) अत्रानङ्भावः। प्रत्येक-विवक्षया एकवचनम्) ऊधोरहितः। अयं लोकोऽसौ लोकस्य 'यत्' यदि एनमग्निम् 'अजीजनत्' जनयेत् तर्हि स्तनपानाय न गच्छतीति युक्तम्, तथा न भवति, किन्तु द्यावापृथिव्यौ हि सर्वेषां कामदुघे खलु तथापि न याति, तस्मादस्य हविर्वहनं विचित्रम्। 'अध चित्' उत्पत्त्यनन्तरमेव 'सद्यः' तदानीमेव

I,II इमे ऋतु-सामनी।

(६)—'नञोऽस्त्यर्थानां वोत्तरपदलोपः (२.२.२४)'-इति वचनात्।

(७)--'उधसोऽनङ् (५,४,१३१)'-इति सूत्रे स्त्रियामित्युपसङ्ख्यानात्।

अथ तृतीया ।

बृहदुक्थऋषिः ।

३ १ २ १ २ ३ १ २ ३ १ २
इद न्त एकं पर ऊ त एकं

३ १ २ ३ १ २ ३ १ २
तृतीयेन ज्योतिषा संविशस्व ।

३ १ २ ३ २ १ २
संवेशनस्तन्वे३चारुरेधि

३ २ ३ १ २ ३ २ ३ १ २
प्रियो देवानां परमे जनित्रे ॥ ३ ॥ ६५

शीघ्रं 'महि' महत्त्वम् 'दूत्यं' ["दूतस्य भाग-कर्म्मणी (४,४,१२०)" इति कर्म्मणि यत् प्रत्ययः] दूत-कर्म्म 'चरन्' आचरन् 'आ ववक्षत्' देवान् प्रति हवींष्यावहति ॥ २ ॥ ६४

एतया बृहदुक्थो वाजिनं नाम स्व-पुत्रं मृतं वदति। हे मृत पुत्र! 'ते' तव 'इदम्' (उपरि(१)ज्योतिषेति वक्ष्यमाणत्वात् अत्रेदं शब्देन ज्योतिरभिधीयते) इदं ज्योतिरग्न्याख्यम्, 'एकम्' एको ऽंशः, अतः 'ते' तव देह-गताग्न्यंशेनवाह्यमग्निं 'संविशस्व' सङ्गच्छस्व। तथापरः 'ऊ' अन्योपि 'ते' तव 'एकं' वाय्वाख्योऽंशः, तेन च प्राणवाय्वाख्येनांशेन वाह्यं वायुं संविशस्व (शरीराग्नि-

६५ नास्तीयमुत्तरार्च्चिके। ३८

(१)—अस्या एव ऋचो द्वितीये पादे इति यावत।

२ ५ ३ २ १ २ १ २ ३४
। ओ४हा। हहाइ। इदन्तए। का३म्परः। उतए
५ २ १ र र र र २ ३ ४ ५ २ १र
काम्। तृतीयेना। ज्योतिषा३। संविशस्वा। संवेशनाः।
२ १र २ ३ ४ ५ ३ ५ ३ २ १र र
तनुवे। चारुरेधी। ओ४हा। हहाइ। प्रियोदेवा।
२ १ २ २ ४
ना३म्पर। मा३४३इ। जा३ना५इत्राई५ईइ ॥३ ७॥ई५

-प्राणवायुः वाह्याग्नि-वाय्वोरैकत्वादंशत्वमिति भावः) तथा, 'तृतीयेन ज्योतिषा' आदित्याख्येन तेजसा तवात्मना संविशस्व (सूर्यगतात्म-चैतन्ययोरभेदादंशत्वम्, "योऽहं-सोऽसौ"—"योऽसौ सोऽहं"-"सूर्य आत्मा जगतः"-इत्यादि-श्रुतेः आत्मनः सूर्य-प्रवेशो-युक्तः) 'तन्वे' तनवे पुनः शरीर-ग्रहणाय 'चारुः' कल्याणोभूत्वा तस्मिन् सूर्ये 'संवेशनः' सम्यक् प्रवेष्टा 'एधि' भव। कीदृशस्त्वं ? 'प्रियः' तेन सह प्रीयमाणः। कीदृशि तस्मिन् ? 'देवानां' 'परमे' उत्तमे 'जनित्रे' जनके ("देवानां ह्येतत् परमं जनित्रं यत् सूर्यः"-इति हि श्रुतिः (१) ॥ ३ ॥ ई५

---

। यामं कौत्सं वा, अग्नेः।

(१)—'इदं' 'ते' तव 'एकं' ज्योतिः वैद्युताख्यम्, 'परः' परम् उत्कृष्टमित्यर्थः (उ-इति पादपूरणः)। 'ते' तव 'एकम्' आदित्याख्यम्। 'तृतीयेन ज्योतिषा' पार्थिवेन अग्न्याख्येन 'संविशस्व'। क्व पुनः संविशामि? उच्यते,—'संवेशनः तन्वे' संविशते अस्मिन्निति संवेशनं स्थानम्, तस्मिन्नित्यर्थः, 'तन्वे' तन्वः शरीरस्य। संविश्य

अथ चतुर्थी ।

कुत्स ऋषिः ।

२ २उ   ३ १ २   ३ १ २ ३
इमꣳ स्तोममर्हते जातवेदसे

१ २   ३ १ २   ३ १ २
रथमिव सम्महेमा मनीषया ।

३ २उ   ३ १ २   ३ १
भद्रा हि नः प्रमतिरस्य सꣳसद्-

२र ३ १र   २ र   ३ १ २
यग्ने सख्ये मा रिषामा वयन्तव ॥ ४ ॥६६

'अर्हते' पूज्याय 'जातवेदसे' जातानामुत्पन्नानां वेदित्रे जातप्रज्ञाय जात-धनाय वा अग्नये 'मनीषया' निशितया बुद्धा 'इमं स्तोमम्' एतत् स्तोत्रं 'रथमिव' यथा तक्षा रथं संस्करोति तथा, 'सम्महेम' सम्यक् पूजितं कुर्म्मः(१) । 'अस्य' अग्नेः 'संसदि' सभ्यजने 'नः' अस्माकं 'प्रमतिः' प्रकृष्टा बुद्धिः 'भद्रा हि' कल्याणी

---

६६ उत्तरार्च्चिकस्य ४,१,७,१ ।

'चारुः एधि' शोभनोभव । 'प्रियः' 'देवानाम्' । क्व पुनः प्रियः ? उच्यते, 'परमे' उत्कृष्टे 'जनित्रे' जन्यतेऽस्मिन्निति जनित्रं कर्म्म यागाख्यम्, तस्मिन्नित्यर्थः । अथवा अस्मैव जनित्रम्, परमं जन्मनि, इत्यादौ यज्जन्म, तस्मिन्नित्यर्थः" इति वि० ।

(१)—'सम्महतिरत्र गमनार्थः, अन्तर्गीत ण्यर्थश्च द्रष्टव्यः । यथा कश्चिद्रथं गमयति तद्वद् गमयेम उच्चारयामीत्येतदाशास्महे-इत्यर्थः'-इति वि० ।

अथ पञ्चमी।

द्वयोर्भारद्वाज* ऋषिः।

३ १२ ३१ २३१ २३ १
मूर्द्धानं दिवो अरतिं पृथिव्या

३ २ ३ ५ ३ ५ १ २र १ २
। इमा॒स्तो२३४माम्। अर्हति२३४जा। तावेदसे

१ ३ २ ३ ५ २ ३ ५ १ २र
३। ह्वोइ। रथामी२३४वा। सम्माहे२३४मा। मानी-

३ २ १ ३ २ ३ ५ २ ३ ५
षया३। ह्वोइ। भद्राह्वी२३४ना। प्रमाती२३४रा।

१ २ १ २ १ ३ २ ३ ५ २ ३
स्यास॒सदे३। ह्वोइ। अग्नाइसा२३४ख्याइ। माराइषा

५ १ २ १ २ १
२३४मा। वायन्तवा३। ह्वो२३४५इ। डा॥ ३८ ॥ ६६

समर्थाः खलु (१) अतस्तया बुद्ध्या कुर्मइत्यर्थः। हे 'अग्ने!' 'तव सख्ये' अस्माकं त्वया सह सखित्वे सति वयं 'मा रिषाम'(३) हिंसिता न भवाम। अस्मान् रक्षेत्यर्थः॥ ४ ॥ ६६

* भरद्वाजइति पाठान्तरम्।

1 यज्ञसारथिः, अग्नेः।

(२)—'हि यस्मादर्थे। यस्माद् 'भद्रा' कल्याणी 'नः' अस्माकम् 'उपरि'-इति वाक्यशेषः। 'प्रमतिः' प्रकृष्टा मतिः अनुग्राहिका बुद्धिरित्यर्थः'-इति वि०।

(३)—रिष् हिंसायाम्-इति रेषतेः रूपम्।

२ ३ १ २ ३ १ २ ३ ३ १ २ ३ १ २
वैश्वानरमृत आ जातमग्निम्।
३ १ ३ १ ३ १ १ २ ३ १ २
कविꣳ सम्राजमतिथिं जनाना-
३ २ ३ १ २ ३ २
मासन्नः पात्रं जनयन्त देवाः॥ ५ ॥ ६७

'मूर्द्धानं' शिरोभूतम्। कस्य? 'दिवः' द्युलोकस्य, 'पृथिव्याः' प्रथितायाभूमेः 'अरतिं' गन्तारम् (१)। यद्वा गन्तव्यं स्वामिनं। 'वैश्वानरं' विश्वेषां सर्वेषां नराणां सम्बन्धिनम्। 'ऋते' ऋतमिति सत्यस्य (२) यज्ञस्य वा नाम। (निमित्तसप्तम्येषा (३)) ऋत-निमित्तम् 'आ' आभिमुख्येन जातं (४) सृष्ट्यादावुत्पन्नम्। 'कविं' क्रान्त-दर्शिनम् 'सम्राजं' सम्यग्राजमानं, यजमानानाम् 'अतिथिं' हविर्वहनाय सततं गन्तारम्। यद्वा, अतिथिवत्पूज्यम्। 'आसन्' (५) (आसनि आस्यं, द्वितीयार्थे सप्तमी) आस्य-भूतम् (अग्नि-लक्षणेनास्येन हि देवा हवींषि

६७ उत्तरार्च्चिकस्य ४,२,३,१।

(१)—पृथिवीतः हवींषि गृहीत्वा द्यु-लोकस्य गन्तारमित्यर्थः।

(२)—नि० ३,१०,६।

(३)—'निमित्तात् कर्म-योगे (२,३,३६)'-इति वचनात्।

(४)—'आ-इत्येष उपेतोतस्य स्थाने। उपजातम् प्रवृद्धमित्यर्थः'-इति वि०।

(५)—पद्दन्नो-इत्यादिना (६,१,६३) आस्य-शब्दस्यासन्, सुपां सुलुगित्यादिना (७,१.३९) सप्तम्यालुक् च।

५र४ ५ २३ ५ १ १२
I मूर्द्धौहोवाइ। नन्दा२३४इवाः। अरताइम्। पृथी-
२ र१र २१र १३४५ २१
इव्याः। वैश्वानराम्। ऋतआ। जातमग्नीम्। कवि
र ०७ २ र१ २
सम्राजमतिथायिम्। जना२३नाम्। आसन्नःपा। त्रा-
१ २ २ ४
इज्जन। या३४३। ता३दा५इवा६५६ः॥ ३९॥

४र५र र४५ २१ २१ २
II होवाइ। मूर्द्धौहाइ। नन्दाइ। वा३अर। ति
३४५ २र ऽ२ २र१र २१र
म्पृथिव्याः। इहोइया३। ई३या। वैश्वानराम्। ऋतआ
२३४५ २र ऽ ऽ२ १ २
जातमग्नीम्। इहोइया३। ई३या। कविसम्रा। जा
१ २ ३४५ २र ऽ२ र१
इमति। थिञ्जनानाम्। इहोइया३। ई३या। आसन्नः
२ १ २३४५ २र २ १ ३
पा। त्रा३ज्जन। यन्तदेवाः। इहोइया३। ई२। या२३
५र र ३११११
४५औहोवा। ई२३४५॥ ४० *॥ ६७

भुञ्जते (६) 'पात्रं' पातारं रक्षकम्। यद्वा, आस्येन धारकम्।

---

I,II वैश्वानरस्येमे।

(६) —तथाहि ऐतरेयादौ श्रूयते 'अग्निमुखा वै देवाः' इत्यादिः।

* इति ग्रामे गेय गाने द्वितीयस्यार्द्धः प्रपाठकः॥

अथ षष्ठी।

२उ　३ १　२र　३ २
वि त्वदापो न पर्वतस्य पृष्ठा-
३ १　२　३ २
दुक्थेभिरग्ने जनयन्त देवाः।
३　१२　३ १ २
तं त्वा गिरः सुष्टुतयो वाजय-
३　१　२र ३ १ २　३ १ २
न्त्याजि न गिर्ववाहो जिग्युरश्वाः॥ ६ ॥ ६८

एवं गुण-विशिष्टं वैश्वानराग्निं 'नः' अस्माकं सम्बन्धिनि यज्ञे 'देवाः' स्तोतारऋत्विजः (७) देवाएव वा 'आ जनयन्त' यज्ञाभिमुख्येनाजनयन् अरण्योः सकाशात् उदपादयन् ॥ ५ ॥ ६७

हे 'अग्ने'! 'त्वत्' (१) त्वत्-सकाशात् 'उक्थेभिः' (२) उक्थैः स्तोत्रैः यज्ञे हविर्भिश्च (३) 'देवाः' स्तोतारः कामान् आत्मनः 'व्यजनयन्त' विविधं जनयन्ति। तत्र दृष्टान्तः—'पर्वतस्य' मेघस्य (४) 'पृष्ठात्' उपरि भागात् 'आपो न'(५) आपः उदकानि

६८ नास्तौथमुत्तरार्च्चिके। ४०

(७)—द्युतिमत्त्वेन स्तोतारः ऋत्विजोपि देवाः उच्यन्ते।

(१)—पञ्चम्यादेश लुक् ७,१,३९।

(२)—भिसऐसादेशोन ७,१,१०।

(३)—उक्थ-शब्दः स्तोत्रे एव रूढः, यज्ञादावौपचारिकः।

(४—नि०१,१०,९।

(५)—न शब्दः उपरिष्टादुपमार्थीयः नि०१,४,३।

४ १र र २
I ओम्॥ विल्वत्। ओ्वाइ। आपोनपर्वतस्य

१ २ २१र र २१ २ १र
पा२३ष्ठात्। उक्थेभिरग्नेजनयन्तदा२३इवाः। तंत्वागिरः

र र २१ २ र १ ० २ १ २
सुष्टुतयोवाजया२३न्तो। आजिन्नगाइर्ववा२३हाइः। जाये

१ २ ५र र २१ ११११
३। ग्यू२रा२३४ औहोवा। अस्वा२३४५ः॥१॥

५ ३२ ३४५ ४५ १र २१
II. हा। ययाइदिवोहाइ। विल्वत्। आपो। तपर्व।

२३४५ ३२ ३४५ ४५ १
तस्यपृष्ठात्। हा। ययाइ। दिवोहाइ। उक्थाइ। भिरा

२ १ २३४५ ३२ ३४५ ४
ग्ने३जन। यन्तदेवाः। हा। ययाइ। दिवो हाइ। तं

५ १ २ १ २३४५ ३२
त्वा। गिराः। सुष्टुतयः। वाजयन्तो। हा। ययाइ।

३४५ ४५ ० २ १ २
दिवोहाइ। आजीम्। नगाइर्ववा२३हाइः। जाये३।

१ २ ५र र २ १ १११५
ग्यू२रा२३४औहोवा। अस्वा२३४५ः॥ २ ॥ ६८

यथा, तद्वत्। अपिच, हे 'गिर्ववाहः' गीर्भिः स्तुति-रूपाभिः

I, II अनयोरभिधानमाख्यम् ऐरतं वा।

अथ सप्तमी।

वामदेवोऽब्रूते।

१ २ १ २   २ १ २ ३ १
आ वो राजानमध्वरस्य रुद्रं
२र   ३ २ ३   १ २
होतारं सत्ययजं रोदस्योः।
३ २ ३ १ २ ३ २ ३ २ ३
अग्निं पुरा तनयित्नोरचित्ता-
१ २   ३ १ २
द्धिरण्यरूपमवसे कृणुध्वम्॥ ७॥ ६९

धाभिर्वहनीयाग्ने! 'भरद्वाजाः' (६) स्तोतारः 'तं' प्रसिद्ध 'त्वा' त्वां 'वाजयन्ति' बलिनं (७) कुर्वन्ति। यद्वा, याजमन्न (८) मिच्छन्ति। अपिच, त्वां 'सुष्टुतयः' शोभन स्तुति-रूपाः 'गिरः' वाचः 'जिग्युः' जयन्ति वशीकुर्वन्ति। तत्र दृष्टान्तः— 'अश्वाः' वाहाः 'आजिम' संग्रामं यथा शीघ्रं जयन्ति तद्वदित्यर्थः॥ ६॥ ६८

---

६९ नाम्नीयमुत्तरार्चिके। ४१

(६)—अस्याभरद्वाजदृष्टत्वात।

(७)—नि०२,९,३।

(८)—नि०२,७२।

४र ५र र ४ ३ २ ३ २ २ ४ ५ १ २र
। आवोराजा। नमध्व। रस्यरुद्राम्। होता।

१ २ २ ३ ४ ५ २ १
राम्। स। त्ययजा३म्। रोदसीयोः। अग्निम्पु। रा।

२ ३ २ ३ ४ ५ १ २ १ २ १ २
तनयि। त्नोरचित्तात्। ह्निरण्य। रू। पा३मव। सा

२ ३
३४३इ। का३र्णुध्वा६५६म्॥ ३॥ ६९

हे ऋत्विग्यजमानाः! 'अध्वरस्य' यज्ञस्य 'राजानम्' अधिपतिं 'होतारं' देवानामाह्वातारं 'रुद्रं' (१) रोरूयमाणं द्रवन्तं, शत्रून् रोदयन्तं वा। यद्वा, 'एषा वा घोरातनूर्यद्रुद्रइति रुद्रात्मकम्। 'रोदस्योः' द्यावा-पृथिव्योः (२) 'सत्ययजं' सत्यस्यान्नस्य (३) दातारम्। यद्वा सत्ययजं सत्येन हविषा (४)

। वामदेव्यं रौद्रं वा।

(१) रुद्र इति निघण्टोस्तृतीय काण्डीय-तृतीय-खण्डस्य तृतीयं पदम्। "रुद्रो-रौतीति, सतो रोरूयमाणो द्रवतीति वा, रोदयतेर्वा, यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकम्, यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्"-इति नैरुक्तम् १०,१,५। 'रुद्रं रोदनस्वभावकरम्। पार्थिवोग्निः प्रदीप्तः धुगुधुगाशब्दं करोति, वैद्युतोपि गर्जित-लक्षणम्, मोर्घा ⁂ स्यः। अतोऽसौ रोदन-क्रिया-योगात् रुद्रः उच्यते' -इति वि०।

(२) नि०३,३०,४। 'द्यावा-पृथिवी-ग्रहणञ्चात्र प्रदर्शनार्थं सर्वदेवानां यष्टारम्' -इति वि०।

(३) नि०२,७,२४।

(४) हविर्लक्षणेनाथ नेतार्थं।

अथाष्टमी ।

वसिष्ठऋषिः ।

३ २उ ३ २ ३ १र २र ३
इन्धे राजा समर्य्यो नमोभिः

२ ३ १ २ ३ १ २ ३ १ २
यस्य प्रतीकमाहुतं घृतेन ।

१ २ ३ १ २ ३ २ ३
नरोहव्येभिरीडते सबाध

१र २र ३ १ २
अग्निरग्रमुषसामशोचि ॥ ८ ॥ ७०

देवान् यजन्तम् । यद्वा, सत्यस्यानन्द-लक्षणस्य सङ्गमयितारं रोदस्योर्व्याप्य वर्त्तमानम् । 'हिरण्य रूपं' सुवर्ण-प्रभम् । एवं विधम् 'अग्निं' 'वः' युष्माकम् 'अवसे' रक्षणाय 'तनयित्नोः' तनयित्नुरशनिः (५) सह्याकस्मिकः, तत् सदृशाद् 'अचित्तात्' न विद्यते चित्तं यस्मिन् तदचित्तम्, (चित्तोपलक्षित-सर्व्वेन्द्रियोप-संहारो मरणमिति यावत्) तस्मान्मरणात् 'पुरा' प्रागेव 'आ कृणुध्वं' यूयं समन्तादविभिरग्निं भजध्वम् ॥ ७ ॥ ६९

७० नास्तीयमुत्तरार्च्चिके । ४२

(५)—स्तनयित्नुर्मेघ-वाचकः प्रसिद्धः, तच्छब्द-परोऽशनि पर्य्योपचारिकमन्यः । तथा च विवरण-कृत् 'अचित्तात् अचेतनात् तनयित्नोः' गर्जन लक्षणाच्छब्दात् 'पुरा' प्राक् दृश्यमानम् 'हिरण्यरूपं' वैद्युतात्मानमग्निम् इत्याद्यर्थः ।

२ १ ५र र र ४र ५र ४ ५ ४र
I इन्धा३१२३४इ। हाउहाउहाउ। राजासमर्यौन।
५ ४ ५ ४ ५ ३ १ ५र र
मोम्मोरोभीः। ओभीः। यस्या३१२३४। हाउ। हाउ
र ४ ५र ४र ५ ४ ५ ४ ५ ४ ५
हाउ। प्रतीकमाहुतङ्घृ। ताइनाआइना। आइना।
३ २ ५र र र ४र ५ र र ४ ५
नरा३१२३४ः। हाउहाउहाउ। हव्येभिरीडतेस। बाधा
४ ५ ४ ५ ३र २ ५र र र
बाधाः। बाधाः। आग्ना३१२३४इ। हाउहाउहाउ।
२ १ २ १ १ १ १
अग्रमुषसा२३मशाउ। वा३। चो२३४५॥ ४॥

१ १ १र २ र र र र
II चौहो२। चौहो२। चौहोइ। इन्धेराजासमर्यौ-
१ १ १ २ र र
ना३मोभी२ः। ओभी२ः। ओभी२ः। यस्यप्रतिकमाहुत
१ १ १ र र
ङ्घृ३ताइना२। आइना२। आइना२। नरोहव्येभि-
र र १ १ १ १
रीडतेसा३बाधा२ः। बाधा२ः। बाधा२ः। चौहो२।
१र २र १ २
चौहोइ। अग्निरग्रमुषसा२३मशाउ। वा३। चो
१ १ १ १
२३४५॥ ५॥ ७०

---

I, II इमे वैश्वज्योतिषे।

अथ नवमी।

त्रिशिरास्त्वाष्ट्रऋषिः।

३ १ २　　२ १ २ २ १र
प्र केतुना बृहता यात्यग्नि
२र　　३ १ २
रा रोदसी वृषभोरोरवीति।

'राजा' दीप्तः (१) 'अर्य्यः' स्वामी (२) हविषां प्रेरकोवा 'अग्निः' 'नमोभिः' स्तुतिभिः सह 'समिन्धे' समिध्यते। 'यस्य' अग्नेः 'प्रतीकं' रूपं (३) 'घृतेन आहुतं' भवति। ये च 'नरः' अस्मदीयाः 'सबाधः' संश्लिष्टाः सञ्जात-बाधाः(४) 'हव्येभिः' हव्यैः सार्द्धम् 'ईडते' स्तुवन्ति। 'सः' अग्नि 'उषसाम्' 'अग्रम्' 'आ अशोचि' आ दीप्यते॥ ८॥७०

'अग्निः' 'बृहता' 'केतुना' प्रज्ञानेन (१) युक्तः सन् 'आ' इदानीं 'रोदसी' द्यावापृथिव्यौ 'प्र याति' प्रकर्षेण गच्छति।

(१)—यद्यपि राजेति राजतोरैश्वर्य्यकर्मणोरूपम (नि०२.२१.४) भवितुं युक्तं, परमिह्योत्तरमीश्वर-वाचकापराख्य शब्द श्रुतेर्दीप्तार्थस्य प्रसिद्धस्यैव ग्रहणम।

(२)—नि०२,२२,१। स्वामिनः प्रेरकत्वं सम्भवत्येव।

(३)—'प्रतीकं, नाम मुखं वा'-इति वि०।

(४)—'सबाधः ऋत्विजः' इति वि०। युक्तं चैतत तस्य निघण्टु तृतीयाष्टादश पञ्चम-पदत्वात्।

(१)—नि०७.९.२।

३ २ ३ १ २ ३ १र २र
दिवश्चिदन्तादुपमामुदान
३ २ ३ १ २ ३ १ २
ड़पामुपस्थे मह्विषोववर्द्ध ॥ ८ ॥ ७१

२ र १ २ १र २ १ २ १
। प्रकेतुना। बृहताया। तियग्नाइः। होइहोवा३होइ।
२र र २ २ १र २ १र २ १
आरोदसाइ। वृषभोरो। रवीताइ। होइहोवा३होइ।
१ १ २र २ १र १ २ १
दिवश्चिदा। तादुपमाम्। उदानाट्। होइहोवा३होइ।
२ र १ २र १ २ १ २र
अपामुपा। स्थेमह्विषो। ववर्द्धा। होइहोवाहा३१उ।
२ १ १११
वा२३। दे३। दिवा२३४५म्॥ ६ ॥

किञ्च, देवानामाह्वान-काले 'वृषभः' (३) इव 'रोरवीति' अत्यर्थं शब्दं करोति। 'दिवश्चित्' अन्तरिक्ष-लोकस्यापि 'अन्तात्' पर्य्यन्तात् 'उपमाम्' (उपमेत्यन्तिक-नाम ४) मेघस्य समीपम् 'उदानट्' उदश्नुते ज्वलनात्मनादित्यात्मनावस्थितः सन् ऊर्द्ध्वं

७१ नास्तीयमुत्तरार्च्चिके। ४३

(३)—'वृषभः वर्षिता'—इति वि०।

(४)—नि०२,१६,११।

अथ दशमी।

वसिष्ठऋषिः।

३ २३ ३ १ २ ३१ २

अग्निं नरोदीधितिभिररण्यो

५ २ र ३ ५ १ २ ३ २
॥ हा। हाऔहोइ। प्रा२३४के। तुना। वृहता३।

१ २ ४ ५ २ र ३ ५ १
यातियग्नोः। हा। हाऔहोइ। आ३४रो। दसाइ।

२ ३ २ २ ३ ४ ५ २ र ३ ५
वृषभो३। रोरवीति। हा। हाऔहोइ। दो२३४वाः।

१ २ १ २ ३ ४ ५ २ र
चिदा। ता३दुप। मामुदानट्। हा। हाऔहोइ।

३ ५ १ २ १ २ ३ ४ ५ २
आ२३४पाम्। उपा। स्थे३महि। पोववर्द्धा। हा। हा

र ३ ५र र २ १ १११
औहो। वा२३४औहोवा। ए३। दिवा२३४५म् ॥७॥७२

व्यामोति। अश्नोतेर्व्यत्ययेन परस्मैपदम्। तिपोहल्ङ्यादिलोपः। 'अपां' वृष्टिलक्षणानामुदकानाम् 'उपस्थे' उपस्थाने अन्तरिक्षे (४) वैद्युतात्मना 'महिषः' महान् 'ववर्द्ध' वर्द्धते ॥८॥७२

I, II इमे यामि, इन्द्रस्य।

(४) आपउपगम्य यत्र तिष्ठन्ति, तदपामुपस्थमन्तरिक्षम्, तस्मिन्नित्यर्थः—इति वि०।

१ २ ३ २
हस्तच्यूतं जनयत प्रशस्तम्।
३ १ २ ३१२ ३ २
दूरेदृशं गृहपतिमथव्युम्॥ १०॥ ७२*

५र र र ४ ५ २१ २१ २१
। हाउहाउहाउ आग्नोम्। नराः। नराः। नराः।
२ १ २३४५र र र र ४ ५ २ १
दी३धिति। भिररण्योः। हाउहाउहाउ। हास्ता। च्युताम्।
२ १ २ १ २ १ २३४ ५ र र र
च्यूताम्। च्यूताम्। जनय। तप्रशस्तम्। हाउहाउहाउ।
४ ५ २ १ २ १ २ १ २ १ २ ३ ४ ५
दूराइ। दृशाम् दृशाम्। दृशाम्। गृहप। तिमथव्युम्।
ऽ ऽ ऽ ३ १११
हाउहाउहाउ। वा। ई२३४५॥ ८॥

'नरः' नेतारऋत्विजः 'प्रशस्तं' प्रकर्षेण स्तुतं 'दूरे दृशं' दूरे दृश्यमानं दूरे पश्यन्तं वा 'गृहपतिं' गृहाणां पालकम् 'अथव्युं' (अथर्वतिर्गत्यर्थः [१]) अगमम् अतनवन्तवा 'हस्तच्युतं' हस्तेन गतम् हस्तेन जातम्, अरण्यो विद्यमानम अग्निः 'दीधितिभिः'

---

७२ उत्तरार्चिकस्य ६,१,१०,१।

* यदुक्तं परस्तात् सप्तमखण्ड-भाष्यारम्भ 'अग्निर्नरोविराट्' इति तदिह साक्षात् द्रष्टव्य प्रमाणीकार्य्यम

(१) —अथर्गति-इति गति-कर्मसु नि०२,१४,९०। अथर्युमिति नैगम काण्डे ४,२,४१। उभयैव यकार-वकारात्मकः पाठ-भेदः।

पर र र ४ ५ २ १ २ १
॥ हाउहाउहाउ। आग्नीम्। नराः। दी३धिति।
१ २ ४ ५र र र र र र ४ ५
भिररण्यो। ण्यो। ण्योः। हाउहाउहाउ। हास्ता।
२ १ २ १ १ २ ३ ४ ५
च्यूताम्। जनय। तप्रशस्तम्। स्तम्। स्तम्।
र र र ४ ५ २ १ २ १ १ २ ४
हाउहाउहाउ। दूराइ। दृशाम्। गृहप। तीमथ
५ ऽ ऽ ऽ २
व्यूम्। व्यूम्। व्यूम्। हाउहाउहाउ। वा। ई
१ १ १ १
२३४५॥ ८॥ ७२

इति द्वितीय दशति ॥

अङ्गुलिभिः(२) 'जनयन' जनयन्ति। [अत्र यास्कः (३)''दीधितयो

।,॥ अनयोर्त्रसिष्ठः प्रजापतिर्वा ऋषिः, राशिमराय, मरायराशिनं वा स्फान्तिकरणं वा च्यावनं वा गेरवग्निद्दनं वा इन्वकं वा नाम।

(२)—'दीधितयः' इति नि०२,५,८।

(३) यास्क-धृतेऽस्मिन मन्त्रे 'जनयन्त' 'हस्तच्युती', 'अथर्यम' इति त्रय. पाठ भेदाः परिलक्ष्यन्ते। किन्तु अथर्यमिति नानेन व्याख्यानम्। व्याख्यातमेतद् देवराज यज्वना तद्यथा.—'अतनेः जनि-मनि यजि-दमिभ्यो वाप्रि निर्मोति बाहुलकाद्

ङ्गुलयो-भवन्ति, धीयन्ते कर्म्मसरणौ प्रत्युतराने अग्निः समरणा-ज्जायत इति वा, हस्तच्युती हस्त-प्रच्युत्या जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् (५,२,११)"-इति॥ १०॥ ७२

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने, प्रथमस्याध्यायस्य सप्तमखण्डः॥ ७॥

---

अथ अष्टम-खण्डे—

प्रथमा।

बुधस्य गविष्ठिरस्य द्वाहषी।

१ २ ३ २ ३ २ ३ १ २ ३
अबोध्यग्निः समिधा जनानाम्

१ २ ३ १ २ ३ १ ३ १ २
प्रति धेनुमिवायतीमुषासम्।

३ २ ३ २ ३ २ ३ १ २ ३
यह्वा इव प्र वयामुज्जिहानाः

२ ३ १ २ ३ २ ३ १ २
प्र भानवः सस्रते नाकमच्छ॥ १॥ ७३

---

७३ उत्तरार्च्चिकस्य ८,३,१३,१।

युस-प्रत्ययो धातोः अयरादेशश्च, सकार इत्संज्ञकः। अतनं गमनं अयर्यु-शब्देनो-च्यते। मत्वर्थीयस्य लुक्, गमनवन्तमित्यर्थः।

४ ५र ४ १ २ १ २र १ ूर र १ २
I अबोधिया। ग्नाइःसमिधा। जना२नाम्। प्रनाइधे३
२ र १र र २ २ २ २ १ ूर १र २
नूम्। इवायतीमुषासम्। यह्वाई३वा। प्रवा२यामु
१ २र र १र २ र १र २ १ २ १
ज्जिहानाः। प्रभाना२३वाः। मस्रतेनाकमच्छ। इडा२३
२ १
भा३४३। ओ२३४५इ। डा ॥१०॥ ७३

अयम् 'अग्निः' जनानाम् अध्वर्य्यादीनां 'समिधा'(१) समिद्भिः 'अबोधि' प्रबुद्धोभूत्। 'धेनुमिव' अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वद् 'आयतीम्' आगच्छन्तीम् 'उषासम्'(२) प्रति उषः काले इत्यर्थः। अथ प्रबुद्धस्याग्नेः 'भानवः' रश्मयोज्वालाः 'यह्वाः' महान्तः (३) 'वयां' (४) शाखां 'प्रोज्जिहानाः' प्रोद्गमयन्तोवृत्ताइव। यह्वामहान्तः प्रोज्जिहानाः स्वाधिष्ठानं

I श्येनः प्रजापतिर्वा ऋषिः, श्यैतं वा गयनं वा गायनं वा दीर्घायुष्यं वा नाम।

(१)—'समिन्धनेन' इति वि०।

(२)—'वा ष पूर्वस्य निगमे (६,४,९)' इति सूत्रे अनचननुष्ठिमते नमेव दीर्घः।

(३)—'पक्षिणः'-इत्यधिकोभावार्थः परिदृश्यते विवरण-ग्रन्थे।

(४)—'वयां, द्वितीयैकवचनमिदं पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम्, वयायाः-इत्यर्थः'-इति वि०।

अथ द्वितीया।

वत्सप्रिर्ऋषिः।

२ ३ १ २ ३ १ २ ३ ३
प्र भूर्जयन्तं महां विपोधां

३ १र २र ३ २ ३ १ २
मूरैरमूरं पुरान्दर्माणम्।

१ २ ३ २ ३ १र २र ३
नयन्तङ्गीर्भिर्वना धिय धां

१ २ ३ १र २र ३ २
हरिश्मश्रुं न वर्मणा धनर्च्चिम्॥२॥ ७४

त्यजन्तोभानवः 'नाकम्' अन्तरिक्षम् (५) 'अच्छ' आभिमुख्येन 'प्र सस्रते' प्रसरन्ति॥

"सस्रते"-"सिस्रते"-इति पाठौ॥१॥ ७३

हे स्तोतः! त्वम् 'जयन्तम्'(१) असुर-सेनानां जेतारं 'महां'

७४ नास्तीयमुत्तरार्च्चिके। ४४

(५)—'नाकं द्युलोकम्'-इति वि०। नाकमिति निघण्टौ दिवश्चादित्यस्य च साधारण नामसु पठितम्। 'मर्य्यादा स्थानः' इति नैरुक्ताष्टम-समाम्नानाद् आदित्य-पर-पक्षेऽपि द्यु लोक-परं सुलभम्, अन्तरीक्ष परन्तु कृच्छ्र-लभ्यम्।

(१)—'प्रत्ययं जयन्तमित्यनेन सम्बन्धयितव्यः, भः प्रथमैकवचनमिदम् द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, भूः पृथिवीलोकं जयन्तम्, भूर्ग्रहणञ्च प्रदर्शनार्थम् त्रीनपि लोकान् जयन्तम्'-इति वि०।

४ ५र ४ ५ ४　　३ २　　२ ३र ५र　　२र १र र
। प्रभूर्जयन्ताम् । मह्वा३४३०विपोधाम् । मूरैरमूरं पुरां

१　　२　　३ २　　२ ३र ५　　३ २　　२ ३ ५र
दर्मा३३णाम् ।　नया३४३न्तङ्गीर्भिः ।　वना३४३धियन्धाः ।

४ ५　　४ ५　　५　　२　　१ १ १ १ १
हरिश्मश्रुं नवर्मणा६ । हाउवा । धना३र्च्चो२३४५म् ॥११॥७४

महान्तं 'विपोधां' ([२]) मेधाविनः ([३]) धर्तारं 'मूरैः' मूढैरधिष्ठितानां 'पुरां' शरीराणां 'दर्माणं' आदरेण रचकम् 'अमूरम्' अमूढमग्निं 'प्रभूः' स्तोतुं प्रभव समर्थोभव 'गीर्भिः' स्तुतिभिः 'वना' वननीयं सम्भजनीयं 'नयन्त'' धनानि प्रापयन्तं 'वर्मणा' कवच-स्थानीय-ज्वालयोपेतं 'हरिश्मश्रुं न' ([४]) हरित-वर्ण-केशमयमिव 'धनर्चि'' धार्यमाणं क्रियमाणं स्तोत्रं यस्य तम्, प्रीणनकर-स्तोत्रं वा अग्निमुद्दिश्य 'धियं' परिचरणरूपं कर्म 'धाः' विधेहि ॥

"मूरैः"-"मूराः"-इति च पाठौ॥ "नयन्तं गीर्भिर्वना धियन्धा हरिश्मश्रुं न वर्मणा धनर्चिम्"-इति छन्दोगाः, "नयन्तीगर्भं वनां धियं धुर्हरिश्मश्रुं नार्वाणं धनर्चम्"-इति बह्वचाः ॥ २ ॥ ७४

। पौषम् ।

(२)– 'वेपइति कर्म-नाम (नि० २, १, १) तस्मादस्मादि ह्रस्वत्वम्, स्व कर्मणा हविर्वह नादेर्धारयितारम्' इति वि० ।

(३)- विपइति निघण्टौ मेधावि-नामसु चतुर्दशतमम ।

(४) हरिश्मश्रुम्, श्मश्रु-स्थानीय-हरित वर्ण ज्वाला समेतम । न शब्दः पाद पूरण इति वि० सम्मतोर्थः ।

अथ तृतीया।

भरद्वाजऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ १र
शुक्रं ते अन्यद्यजतं ते अन्यद्

१र ३ १ २ ३ १ २
विषु रूपे अहनी द्यौरिवासि।

२ ३ २ ३ १र २र
विश्वा हि माया अवसि स्वधावन्

३ १ २ ३ २ ३ १ २
भद्रा ते पूषन्निह रातिरस्तु॥ ३ ॥ ७५

हे 'पूषन्'! 'ते' तव 'शुक्रं' शुक्लवर्णम् 'अन्यत्' एकमहर्भवति वासरात्मकम्, तथा 'ते' तव सम्बन्धि 'यजतं' [यजिरत्र सङ्गतिकरणे (१) वर्त्तते] यजनीयं प्रकाशेन सङ्गमनीयं स्वतः कृष्णवर्णम् 'अन्यत्' एकमहर्भवति रात्र्याख्यम्। इत्थं 'विषु रूपे' शुक्ल-कृष्णतया नानारूपे 'अहनी' तव महिम्ना निष्पद्येते। यद्वा। हे पूषन्! त्वदीयमन्यद्रूपं 'शुक्रं' निर्मलं दिवसस्योत्पादकम्, त्वदीयमन्यदेकं रूपं 'यजतं' केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकम्। अतएव 'विषु रूपे' विषम-रूपे 'अहनी' अहश्च रात्रिश्च भवतः। अहोरात्रयोर्निर्माणे सूर्य्यएव कर्त्ता।

---

७५ नास्तीयमुत्तरार्च्चिके। ४५

(१) —'यज, देवपूजा-सङ्गतिकरण-दानेषु'-इति धा० उभयपदिषु।

५ ४ र५ ४ ५ ४ ५ ५ १ र र
। शुक्रंतेअन्यद्यजतम्। तआ२इन्यात्। विषुरूपे
र ७ ६ १ र र र
अहनिद्यौः। इवा२३सी। वाइश्वाहिमायाअवसाइ।
२ २ १र १र १ २ १ २ ३ ४ ५
स्वधा३वान्। भद्रा ते। पू। षा३निह। रातिरस्तु।
४
निरा५स्तुहाउवा॥ १२ ॥ ७५

कथमस्य प्रसक्तिरिति? तत्राह,– 'द्यौरिवासि' यथा द्यौरादित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि। कुतः? इत्यतआह,– हे 'स्वधावन्!' अन्नवन्! (२) पूषन्! 'विश्वाः' सर्व्वाः मायाः प्रज्ञाः 'हि' यस्मात् कारणाद् 'अवसि' रक्षसि, अतः कारणात् त्वं सूर्य्य-इव भवसीत्यर्थः। तादृशस्य 'ते' तव 'भद्रा' कल्याणी 'रातिः' दानम् 'इह' अस्मासु 'अस्तु' भवतु(३)। यास्कस्त्वाह "शुक्रं तेऽन्यल्लोहितं तेऽन्यद्यजतं तेऽन्यद्यज्ञियं तेन्यद्विषमरूपे ते अहनी कर्म्मणा द्यौरिव चासि सर्व्वाणि प्रज्ञानान्यवस्यन्नवन्(१२,२,६)" इति॥

"स्वधावन्"-"स्वधावः"(४) इति च पाठौ॥ २ ॥ ७५

। शुक्रम्।

(२) स्वधेत्यन्न नामसु विंशतितमम् (नि० १, ७, २०)।

(३) –क्वचि 'ते अन्यत' इति पाठः, 'प्रकृत्यान्तःपादमव्यपरे (६, १, ११५)'-इति साधनीयः।

(४) –'मतुवसो रुसम्बुद्धौ छन्दसि (८, ३, १)' इत्यादिना सिद्धम्।

अथ चतुर्थी ।

विश्वामित्रऋषिः ।

१ २ ३ १ २ २ १र
इडामग्ने पुरुदंसं सनिं गोः
२र ३ १र २र
शश्वत्तमं हवमानाय साध।
१ २ ३ १र २र ३ २उ
स्यान्नः सूनुस्तनयो विजावा
३ १ २ ३ १ २ ३ २
ग्नेसा ते सुमतिर्भूत्वस्मे ॥ ४ ॥ ७६

५ र २ २ ३ ४ ५ ४ ३ ४
। इडामग्नाइ। पुरुदा३। संसनिंगोः। शश्वत्तमंहव
५र र ३ ५ १र र २ २
माना। यसा२३४धा। स्यान्नसूनुस्तनयः। विजा३वा३।
४ ५ ४ ५ ३ २ २ ४र ५ ३
आग्नेसाताइ। सुमा३४३। तो३ः। भूत्वाहाउवा। स्मा
१ १ १ १
२३४५इ ॥ १३ ॥ ७६

हे 'अग्ने !' 'पुरुदंसम्' [ 'दंसः वेषः'—इति ( नि० १२, १, ३) कर्म्म-नामसु पठितत्वाद्दंसः-शब्दः कर्म्म वाची ] पुरूणि बहूनि

७६ नास्तीयमुत्तरार्च्चिके। ४६
। कौत्सम् ।

अथ पञ्चमी।

वत्सप्रिऋषिः*।

१र  २र  ३  २  ३१  २३  २
प्र होता जातो महान्नभोविन्

३ १ २  ३ १  २ ३ २
नृषद्मा सीदद्पां विवर्त्ते।

दंसांसि कर्म्माणि यस्याः सा, तां बहु-कर्म्माणं 'गोः सनिं' (१) गवादि-पशूनां सम्पादयित्रीं 'इडाम्' (२) एतन्नामिकां गोरूपां देवतां 'शश्वत्तमं' निरन्तरं 'हवमानाय' यजमानाय मह्यं 'साध' साधय। किञ्च। 'नः' अस्माकं 'सूनुः' पुत्रः 'तनयः' पौत्रः 'स्यात्' भवतु—इति 'ते' तव या 'सुमतिः' शोभना बुद्धिः सा 'विजावा' (३) अवन्ध्या सती 'अस्मे' (४) अस्माकं 'भूत्' (५) भवतु ॥ ४ ॥ ७६

'यः' अग्निः 'अपाम्' [ अन्तरिक्ष-नामैतत् ( नि० १, ३, ८ ) ]

---

* 'वत्सप्रोः' इति वि० पाठः।

(१)—"छन्दसि वनसनरक्षिमथाम् (३,२,२७)" इति इनि रूपम्। 'षणदाने, तत्पूर्वकत्वाल्लाभ उपलक्ष्यते; सनिं च लाभं च गोः' इति वि०।

(२)—'इडामन्नमिति' (नि० २, ७, १६) वि०। 'कीदृशमन्नम्? पुरुदसमभिमिति च वि०। एतदुक्तम्भवति 'यत्र गावश्च अश्वाश्च दृश्योत्यपि वि०।

(३) विजावेति तनय-विशेषणमिति वि० मतम्। तथाचोक्तम् 'कीदृशः पौत्रः उच्यते 'विजावा' विविधं जनयिता पुत्राणाम्, अनेन प्रकारेण वंशस्याविच्छेद आशास्यते' इति वि०।

(४) सुपां सुलुगित्यादिना (७,१,३९) विभक्तेः शे भावे, 'शेश्छन्दसि बहुलम्' (६,१,७०) इति सिद्धम्।

(५—विकरणाभावादिकं सर्वं छान्दसत्वात् (२,४,७३)।

२ ३ २ ३ २ ३ १र २र

दधद्यो धायी* सुते वयाꣳसि

३ १र २र ३ १ २ ३ २

यन्ता वसूनि विधते तनूपाः ॥ ५ ॥ ७७

अन्तरिक्षस्य 'विवर्त्ते' (१)विवर्त्तनउत्सङ्गे वैद्युत-रूपेण निषण्णोऽभूत्, सइदानीं 'होता' यजमानानां होम-निष्पादकोजातः प्रादुर्भूतः 'महान्' गुणैः पूज्यः। 'नभोवित्' अन्तरिक्षस्य ज्ञाता यतस्तत्रोत्पन्नः अतस्तस्य ज्ञाता 'नृषद्मा' नृषु सीदन् [सदेर्मनिन्, नित्स्वरः (६,१,११७)] 'प्रसीदत्' वेद्यां प्रसीदति। "**अपामुपस्थे महिषा अगृभ्णत**"-इति हि निगमः(२)। यद्वा, अपामयसामित्यर्थः, कर्म्मणामुपस्थे (३) उपस्थाने समीपे वेद्यामुत्पन्नाः सन्। अथवा, अपाम् उदकानां(४) विवर्त्ते मध्ये योऽग्निर्हविर्वोढुमसहमानो निगूढः सन् स देवैः पुनः प्रार्थितः, उक्तविधः सन् वेद्यां प्रसीदति, सोऽग्निः 'दधत्' हवींषि धारयन् 'सुधायी'(५) वेद्यां निहितोऽभूत्। हे स्तोतः! सोऽग्निः

---

* प्रतीच्यमुद्रितपुस्तके, भाष्ये च'धायि'-इति ह्रस्वान्तपाठः।

---

७७ नास्तीयमुत्तरार्च्चिके।४७

(१)--'आपो यत्र विविध वर्त्तन्ते सोऽपां विवर्त्तः अन्तरिक्षलोकः'-इति वि०।

(२)--नैरुक्त-सप्तमाध्यायीय सप्तमपादस्य तृतीये खण्डे एतद्विशेषोद्रष्टव्यः।

(३)--अपः-इति नि० २,१,१ कर्म-नामसु।

(४)--आपः-इति नि० १.१२.५१ उदक-नामसु।

(५)--'धायीसुते'-इत्येवं पाठोमन्त्रे। तत्र 'छन्दसि परेऽपि (१,४,८१)' इति प्रामक

४ ८ ५ ८ ८ ४   २ १ ८   ८   ८ ८
I प्रह्वोताजाताः। महान्नभोविन्नृषद्मा२३सीदात्।

१ ८   २   ८ १ ८
अपांविवर्त्ताइ। दधद्यो२३धा। याइ। सुतेवया१सि-

१ २   १ ८ २   १   ३   ५ ८ ८
यन्ताउ। वा। वासूनिविध। ता२। या२३४ओहोवा।

२   १ १ १ १ १
तनू३पा२३४५ः ॥१४॥

४ ८ ५ ८ ८ ४   ५ ४   ५   १   १
II प्रह्वोताजातः। उऊवाहाइ। माहा२न्नाभो२।

१   ८ ८   ७   २   १ ३ २   १ २
वाइन्नृषद्मासोददपांविवा२३र्त्ताइ। आऔ३हो। इहा।

'विधते' परिचरते 'ते' तुभ्यं 'वयांसि' अन्नानि (५) 'वसूनि' धनानि च 'यन्ता' नियमयिता भवतु। किञ्च, तनूपाः, 'तन्वः'(६) पाता च भवत्विति शेषः॥

"नृषद्मा"-"नृषद्वा"-इति च पाठौ। "दधद्यो धायी सुते" -इति छन्दोगाः, "दधिर्यो धायी सते"-इति बह्वृचा॥५॥ ७७

---

I, II इमे काश्यपे।

बलात् 'सुधायी'-इत्येव स्थापनं शक्य-परम्। वि०-मते तु 'धायी' धारयिता हविर्वह-नादि-कर्मणः-इत्येकं दधर्मानि-विशेषणम्, सुते इत्येकं पदमभिप्रेतं इति मदर्थः। पद-कारस्तु 'धायी,' 'सुते'-इत्येवमेकं विच्छेद।

(५)—वयः-इति नि० २,७,९।

(६)—'तन्वादीनां छन्दसि बहुलम्'-इति वचनम (६.४,७७)।

अथ षष्ठी।

वसिष्ठऋषिः।

२ ३ २ ३ १ २ ३ २
प्र सम्राजमसुरस्य प्रशस्तं

३ १ २ ३ १ २ ३ १ २
पुंसः कृष्टीनामनु माद्यस्य।

१ २ ३ २ ३ १ २ ३ १ २
इन्द्रस्येव प्र तवसस्कृतानि

३ १ २ ३ १ २
वन्दद्वारा वन्दमाना विवष्टु ॥ ६ ॥ ७८

१ १ १ २ र र २ १
दाधा२यीधा२। याइस्तुतेवयाꣳसियन्तावसू२३नी। आ

२ २ १ २ १ २ १ २ ५र र
औ२३हो। इहा। विधतायेश। तनू२पा२३४औहोवा।

२ र ३ १ १ १ १
हविष्मते२३४५ ॥१५॥७७

'असुरस्य' बलवतः(१) 'पुंसः' वीरस्य [पौंस्यमिति वीर्यमुच्यते(२) तथाच यास्कः—'पुमान् पुरुमना भवति पुंसतेर्वेति] 'कृष्टीनां'

---

७८ नास्तीयमुत्तरार्च्चिके। ४८

(१)—'प्राणवतः'-इति वि०। "असुरिति प्राणनाम"—इति नै०३,२,९। तेन तद्वान् असुरः। प्राणबलयोरेकार्थता प्रायः प्रसिद्धा।

(२)—पौंस्यानि-इति नि० २.९,२६।

५ र  २  २ ३ ४ ५  २ १
। प्रसंम्राजाम् । असुरा३ । स्याप्रशस्ताम् । पुरुसः
२ १  २ ३ ४ ५  २ र  १ ३
कृष्टाइ । ना३मनु । मादियस्या । इंद्रस्येवा३४३प्रतव ।
२ ३ ४ ५  २ १ र २र १  २र र  १ ३  ५र र
सस्कृतानि । वन्दद्वारावन्दमाना । विवा२ष्ट२३४ओवा ।
३ ५
वो२३४शाः ॥ १६ ॥ ७८

जनानाम् 'अनु माद्यस्य' स्तुत्यस्य 'तवसः'(२) बलवतः 'इन्द्रस्येव'(३) तस्याग्नेः प्रशस्तम् (४) उत्कृष्टं 'सम्राजं' सम्यग्राजमानं स्वरूपं प्रस्तौतु । तथा 'वन्दद्वारा'(५) वन्दनं वन्दः स्तुतिः, तद्द्वाराणि स्तुति-प्रमुखानि 'वन्दमाना' सर्वैः स्तूयमानानि 'कृतानि' कर्माणि 'प्र विवष्टु' प्रकर्षेण कामयताम् ॥

"प्रसम्राजमसुरस्य प्रशस्तम"-इति छन्दोगाः; "प्रसम्राजो असुरस्य प्रशस्तिम्"-इति बह्वृचाः । "वन्दद्वारा वन्दमानां विवष्टु"-इति, "वन्दे दारुं वन्दमानो विवक्मि"-इति च पाठौ ॥ ६ ॥ ७८

---

१ घृताचेराङ्गिरसस्य साम ।

(२)—तवः-इति नि० ३.९.५ । पदमेतत् 'इन्द्रस्य'-इत्यस्य विशेषणम् ।

(३)—'यथा इन्द्रस्य कृतानि हव-वर्षादीनि कर्माणि कश्चित् वदति, तद्वदग्नेरपि कृतानि कर्माणि हविर्वहनादीनि 'प्र वदतु' प्रकर्षेण स्तौति'- इति वि० ।

(४)—विवरण-सम्मतेऽस्मिन् द्वितीया षष्ठ्यर्थे, तथाचेदमपि पदमिन्द्र-विशेषणम् ।

(५)—विवरण मते 'वदद्वारा'-इति पाठः । प्रत्यनेन च वददित्यस्य सम्बन्धः ।

अथ सप्तमी।

विश्वामित्रऋषिः।

३ २ ३ १ २र ३ १ २ ३
अरण्योर्निहितो जातवेदा

१ २ ३ १र २र ३ १ २
गर्भइवेत्सुभृतो गर्भिणीभिः।

३ १ २ ३ १ २ ३ १ २
दिवे दिवईड्योजागृवद्भि-

३ १ २ ३ २र ३ २
र्हविष्मद्भि र्मनुष्येभिरग्निः॥ ७॥ ७९

५ २ र २ ३र ५र ३ ४ ३र ४ ५र
। अरण्योः। निहितोजा३४३तवेदाः। गर्भइवेत्सुभृतो

३ ५ २ १र र र ० २
ग। भिणा२३४इभीः। दिवेदिवईड्योजागृवा२३ह्नीः।

'जातवेदाः' सर्व-विषय-ज्ञानवान् 'अयम्' अग्निः 'अरण्योर्निहितः' देवैर्यज्ञार्थं नितरां स्थापितः। तत्र दृष्टान्तः—'गर्भः इव'-

---

७९ नास्तीयमुत्तरार्च्चिके। ४९

I भरद्वाजस्य, प्रासाहम्।

तथाच,—'प्रवदत्' प्रकर्षेण स्तौति 'वारा' वारं वरणीयं 'वन्दमाना' वन्दमानं स्तुवन्तं 'विवष्टु' विविधं कामये इत्यर्थः।

अथाष्टमी।

पायुर्ऋषिः।

३ १ २　　　३ २ ३
सनादग्ने मृणसि यातुधानान्
२ ३ १ २　२ १ २
न त्वा रक्षाꣳसि पृतनासु जिग्युः।

३　५　३　५　४र　४　५र
हा२३४वो। आ२३४ङ्गोः। मनुष्येभिरग्निः। एच्चियाई
५　४
हा। चो५इ। डा ॥१७॥७९

इति, यथा गर्भो गर्भिणीभिः स्त्रीभिः 'सुभृतः' सुष्ठु धार्यते तद्वत्। स तादृशोऽग्निः 'हविष्मद्भिः' सम्भृत हविष्कैः अतएव 'जागृवद्भिः' कर्मणि जागरूकैः 'मनुष्येभिः' मनुष्यैरस्माभिः 'दिवे दिवे' प्रत्यहं स्तुत्यर्थम् 'ईड्यः' स्तुति रूपाभिर्गीर्भिः स्तोतव्यः(१)॥

"सुभृतोगर्भिणीभिः"-इति, "सुधितोगर्भिणीषु"-इति च पाठौ ॥ ७॥ ७९

हे 'अग्ने'! त्वं 'सनात्' चिरादेवारभ्य 'यातुधानान्' कु-व्यापारेण युक्तान् 'क्रव्यादः' क्रव्यादोमांस-भक्षकान् राक्षसान्(२)***

(१) इह मन्त्रे मृतर च्छन्दः पाद पूरणार्थमेवेति न व्याख्यातः।

(२) इह किञ्चित् पाठोनष्ट इति लक्ष्यते, मृणसीत्यादेर्व्याख्यानादर्शनात्। किञ्च

१ २ ३ १ २ ३ २ ३
अनु दह सह मूरान् क्रयादो

१ २ ३ १ २ ३ १ २
मा ते हेत्या मुक्षत दैव्यायाः॥ ८॥ ८०

३ २ २ २ १र २ १
। अक्षा। वो३क्षा। वो३क्षा। सनादग्नाइ। मृणसि।

२ ३ ४ ५ २ १र २ १ २ ३ १ ५
यातुधानान्। नत्वारक्षा। सी३पृत। नासुजिग्यूः।

२ १ २ १र २ ३ ४ ५ ३ २ २
अनुदहा। सहमू। रान्क्रयादाः। अक्षा। वो३क्षा।

'दह' तेजसा भस्मीकुरु। किञ्च। तव सम्बन्धिनो 'दैव्यायाः'

८० नास्तीयमुत्तरार्च्चिके। ५०

। अग्नेर्वैश्वानरस्य अत्रेर्वा, राक्षोघ्नम्।

रणकारस्त्वस्यैव व्याख्यानं कृतम्—हे 'अग्ने' त्वं 'मृणसि' मारयसि 'यातुधानान्,' राक्षसान् [मित्यर्थं प्रतिषेधो जिग्युरनेन सम्बन्धयितव्यः] 'त्वा' त्वां 'रक्षांसि 'पृतनासु' सङ्ग्रामेषु (नि०२.१६.९) 'न जिग्युः' न जयन्तीत्यर्थः, सर्वदा अपराजिता एव, अतो ब्रवीमि 'अनुदह'। 'सह मूरान्' सह मूतान् मूढान् सर्वानित्यर्थः। 'क्रयादः' क्रव्य-शब्दस्य रेफयकारयोश्छन्दसि वर्णलोपेन क्रयइत्येतद् भवति, तानि ये अदन्ति ते क्रयादः, तान्, मांसस्य भक्षितॄनित्यर्थः। किञ्च 'मा ते' 'हेत्याः' हेतिर्वधः तस्य मांसम 'मुक्षत' अमुच्यत इत्यर्थः दैव्यायाः देवानां स्वभूतायाः, सर्वदा देवैर्हन्यमाभि-त्यर्थः" इति।

२     २ १ २२ १     २ १     २     २ ४
वो३च्चा। माताइहेत्याः। मुञ्चत। दा३४३इ। वो३या

पुयाइपुइ॥ १८॥ ८०

इति तृतीय-दशति॥

दैव्यात् 'हेत्याः'(२) 'आयुधात्' ते यातुधानाः 'मा मुञ्चत' मुक्ता मा भूवन्॥

"कयादः"-"क्रव्यादः"--इति च पाठौ॥ ८॥ ८०

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य अष्टमखण्डः॥ ८॥

---

---

षोडशानुष्टुभोऽग्न ओजिष्ठमिति खण्डयोः।
सोमं राजानमित्येषा वैश्वदेवी ततः परा।
स्तुतिरङ्गिरसां शिष्टाः आग्नेय्यस्तु चतुर्दश (०)।

(२)--हेतिः नि०२.२०.३। ऋति यतीत्यादिना (३,३.९७) सिद्धम्।

(०) —अग्न ओजिष्ठमाभरेत्यादि नवमं दशम खण्डयोः प्रथमं दश, उत्तरं षट् इति षोडश ऋचः सन्ति। तत्र दशम खण्डारम्भके सोमं राजानमिति, अस्याः विश्वे देवा देवताः, तदन्यवर्त्तिन-श्रुता इतरेतति, सा तु अङ्गिरसां स्तुतिः, तदितराः सर्वाएव आग्नेय्य इति विवेकः।

अथ नवमे खण्डे —

सेयं प्रथमा।

गयत्रिर्ऋषिः।

२ ३ १ २३१ २ ३ २३१ २
अग्न ओजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो।
१ २ ३१२ २२ ३ २ ३ १ २ ३ १ २
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम्॥ १ ॥ ८१

हे अग्ने! 'ओजिष्ठं'(१) बलवत्तमं 'द्युम्न' द्योतते कटक-मुकु-टादि-रूपेण सर्वत्र काशतेइति द्युम्नं(२) धनम् अस्मभ्यम् 'आभर' आहर। हे 'अध्रिगो!' अधृत-गमन! [अधृतमप्रतिहतं गमनं यस्येति, अधृता अनिवारिता गावोरश्मयोयस्येति वा, अध्रिगुः(३), तस्य सम्बोधनं हे अध्रिगो] 'पनीयसे' पनीयसा स्तोतव्येन 'राये' राया धनेन। [सुपां सु लुगिति (७,१,३९) शे आदेशः] 'नः' अस्मान् प्रकर्षेण योजय। 'वाजाय' अन्नस्य लाभाय 'पन्थाम्'

---

८१ नास्तीयमुत्तरार्च्चिके। ५१

(१)—ओजः-इति निघण्टौ द्वितीय-नवमे बल-नामसु प्रथमं पदम्।

(२)—'द्युम्नम्'-इति निघण्टौ द्वितीय नवमे धन-नामसु सप्तदशतमम्। द्युम्ना-ह्याद्युम्ननिम्नेत्यादिना द्युत-दीप्तावित्यस्मात् नञ् प्रत्ययो मकारान्तादेशश्च निपात्यते।

(३)—'अधृत-शब्दस्याध्रिभावः, गमनं गौः'-इति निघण्टु-भाष्यम्। रश्मि-नामस्वपि गो-शब्दः परिपठ्यते, यथाहि-'गावः'-इति नि० १,५,२।

१ २ २ ५ २र १ २ २
। आग्नाओ२३४वा । ओजिष्ठा३मा । भाराओ२३४
५ २ १ २ १ २ २ ५
वा । द्युम्नमस्मभ्यमध्रिगो३ । ओइ । प्रानाओ२३४वा ।
२र १र ५र १ २ २ ५ १र २र १ २
रायेपनो २यसे३ । ओइ । रात्माओ२३४वा । वाजायपन्था
१ १ १ १
२३४५म् ॥ १९ ॥

४ ५ १र २ २ ३र
II अग्नेद्दाउ । ओजि । ष्ठामा१भारा । औद्दो२३४
५ २ १ ० २ ३र ५ १ र
वा । द्युम्नस्म । भ्यामध्रीगा । औद्दो२३४वा । प्रनो
र र २ २ ३र ५ १ १
राये । पानो१यामा । औद्दो२३४वा । रात्मो२वाजा२ ।
१ २ १ ५ ४ ५
यपोवा३ । ओ२३४वा । था५वो६द्दाइ ॥ २० ॥ ८१

पन्थानम् अस्मभ्यं, मत्समीप-प्राप्ति-साधनं मार्गं, 'रत्सि'(४) विलिख कुर्वित्यर्थः ॥

"प्र नो राये पनीयसे"--इति छन्दोगाः; "प्र णो राया परीणसा"--इति बह्वृचाः ॥ १ ॥ ८१

I, II इमे पाठे द्वे ।

(४)—'रद' विलेखने भ्वादिः, द्वितीयाध्यायीय-बहुल वचनाच्छपो लुक् ।

अथ द्वितीया।

वामदेवऋषिः, भरद्वाजोवार्हस्पत्योवा।

यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः।

आ जुह्वद्धव्यमानुषक् शर्म्म भक्षीत दैव्यम्॥ २ ॥ ८२

I यदिवीरो अनुष्यात्। ऐया३४३ई३४या। अग्नि

मिन्धीतमौ। हो३हा३। हो२३४र्त्तियाः। आजु२ह्वा

द्धा२३। व्यमा२नू२३४षाक्। शर्मभ। क्षाइ। तदा३

हा३इ। वा३ओ२३४वा। व्या२३४५म्॥ २१॥ ८२

'यदि' यदा 'यस्य' मनुष्यस्य 'वोरः' पुत्रः 'स्यात्' भवति, तदा सः 'मर्त्यः' 'अग्निमिन्धीत' आधानमादधीत कुर्वीत। किञ्च। 'आनुषक्' अविच्छिन्नं यथा भवति तथा 'हव्यम्' 'आ जुह्वत्'

---

८२ नास्तीयमुत्तरार्च्चिके। ५२

I बृहत्, आग्नेयम्।

अथ तृतीया।

द्वयोर्भरद्वाजऋषिः।

१ १ २ ३ १ २ १ २३ १ १र २र
त्वेषस्ते धूम ऋण्वति दिवि सञ्छुक्र आ ततः।
३ २३ १ २उ ३ १ २ ३ १ २
सूरो न हि द्युता त्वं कृपा पावक रोचसे॥ ३॥ ८३

२र १ ४र ५ २ १ २
I त्वेषास्ते२३धूमऋण्वतिद्याउ। दिविसंच्छुक्रा३आताता

आभिमुख्येन जुहोति। अपिच। 'दैव्यं' देव-सम्बन्धि 'शर्म्म' गृहं सुखं वा 'भजीत' भजेत सेवेतेत्यर्थः(१)॥ २॥ ८२

हे अग्ने! 'त्वेषः' दीप्तस्य 'ते' तव 'शुक्रः' शुक्लोनिर्मलः शुभ्र-वर्णोवा 'धूमः' 'दिवि' अन्तरिक्षे 'आ ततः' विस्तीर्णः 'सन्' 'ऋण्वति' मेघात्मना परिणतोगच्छति। अपिच। हे 'पावक!'

८३ नास्त्येयमुत्तरार्चिके। ५३
I सामम्।

(१)—'यदि' 'मर्त्यः' 'इयम्' 'आनुषक्' आनुपूर्व्येण 'आजुह्वत्' अग्निम् 'इन्धीत', तर्हि 'वीरः' 'स्यात्', किञ्च 'दैव्यं' 'शर्म' 'भजीत' लभेतेत्यर्थः, अर्थात् पाद-पूरणः--इति वि॰-सम्मतोऽर्थः।

अथ चतुर्थी ।

१र २र३१र २र ३ १र २र
त्वꣳ हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे।
१ २ ३ २ ३ १ २ ३ १र २र
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ ४ ॥ ८४

४र र ५ २ १ २ ४ र ५
३ः। सूरोनरोचाउ। द्युतात्वाइम्। क्रपापवाहाउ।
१ २ १र २ १
करोचा२३सा३४३इ। ओ२३४५इ। डा ॥ २२ ॥ ८३

शोधक! अग्ने! 'सूरोन' सूर्यइव 'क्रपा'(१) स्तोतव्याभिमुखीकरण समर्थया स्तुत्या स्तूयमानस्त्वं 'द्युता' दीप्त्या 'रोचसे हि' प्रकाशसे खलु।

"दिवि सन्"--इति, "दिवि षन्"-इति च पाठौ(२)॥३॥८३

हे 'अग्ने!' 'त्वं हि' त्वं खलु 'क्षैतवत्' क्षितिः क्षयोऽ क्षयः तत्सम्बन्धि क्षैतं शुष्क-काष्ठं, तद्युक्तं 'यशः' अन्नं (नि०२,७ हविर्लक्षणं 'पत्यसे' अभिपतसि गच्छसि। तत्र दृष्टान्तः—'मि

८४ नास्तोयमुत्तरार्च्चिके। ५४

(१)—'क्रपा'-इति निघण्टु-तृतीय-चतुर्दशे अर्चति-कर्मसु द्वादशं पदम्, स सुपामित्यादिना (७,१,३९) तृतीयायालुक्।

(२)-'पूर्वपदात् (८,३,१०६)'-इति षत्व वैकल्पात्र सिद्धमेव।

४ र ५ ४ ५ ४ ५ ४ ५ १ २
I त्वꣳह्यैतवद्यशः । इयइयाहाइ । अग्नाइमि ।
१ २ र ५ १ २ ५ ४ ५
त्रो । नापत्या२३४साइ । आऔ३४हो । इयाहाइ ।
१ ७ र ५ १ २ ५ ४
त्वंवि । चा । षणो२आ२३४वाः । आऔ३४हो । इया-
५ १ २ २ १ २ र ५
हाइ । वासा३उवा । पु । ष्टाइम् । नापुष्या२३४सी ।
१ २ ५ ४ ५ ४
आऔ३४हो । इयाहा । होऽ५इ । डा ॥ २३ ॥ ८४

त्रोन' अहरभिमानी मित्रोदेवः(१) सइव [यद्वा । क्षयइति गृह-नाम (नि० ३,४) 'चैतवत्' चैतं निवासकं हविर्लक्षणमन्नं तद्युक्तम् यजमान-गृहं मित्रभूतः पुरुधाभिपतसि । यद्वा । पत्यतिरैश्वर्य-कर्मा, (नि० २,२१) ईदृशमन्नं 'पत्यसे' ईशिषे ] अतः कारणात् हे 'विचर्षणे !' विशेषेण सर्वस्य द्रष्टः ! 'वसो !' वासकाग्ने ! त्वं 'श्रवः' श्रवणीयमन्नम् (नि० २,७) अन्न-कार्य-भूतां 'पुष्टिं' च पुष्यसि वर्द्धयसि ॥ ४ ॥ ८४

I बृहत्स्वैवाग्नेयम् ।

(१)—स च अन्तरिक्षस्थः, नैरुक्ते (१०,१,८-९) वाय्वादिषु परिगणितत्वात् । 'मित्रो जनान्यातयति ब्रुवाणोमित्रोदाधार पृथिवीमुतद्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे मित्रायहव्यं घृतवज्जुहोत'-इति ऋक् च तत्रैवोदाहृतम् ।

अथ पञ्चमी।

सूक्त*वाहाद्वितऋषिः।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रातरग्निः पुरुप्रियो विशस्तवेतातिथिः।
३ २ ३ १ २ ३ १र २र ३ १ २
विश्वे यस्मिन्नमर्त्ये हव्यं मर्त्तास इन्धते॥ ५ ॥८५

५र र ५ २ १ २ र १ २
I प्रातरग्नाइः पूइरुप्रियाः। विशास्तवे। ता२३। अ-
३ २ १ २ १ ३ ५ १
तिथाइः। वाइश्वेयास्मीशन्। अमा२र्त्ता२४याइ। हव्या

'पुरुप्रियः' बहु-प्रियः 'विशः' यजमाने धनस्य निवेशकः(१) 'अतिथिः' यजमानानां गृहान् प्रति [तिथिषु न अभ्येतीत्यतिथिः। तथाह यास्कः—"अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु पर-कुलानीति पर-गृहाणीतिवा(४,१,५)" इति] एवं विधोऽग्निः 'प्रातः' 'स्तवेत' स्तूयते। 'अमर्त्ये' अमरण-धर्मके 'यस्मिन्'

८५ मास्तोयमुत्तरार्च्चिके। ५५

* सूक्त-इति वि०-पाठः।

I बृहतश्च कौमुदस्य साम।

(१)—'विशः', प्रथमा-बहुवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम्, विड्भिः यजमान मनुष्यैः; 'स्तवेत' लिङयं लडर्थे द्रष्टव्यः कर्मणि च विड्भिः स्तूयते'-इति वि०।

अथ षष्ठी।

वसूयव आत्रेया ऋषयः ।

१र २र ३ २ ३ १ २ ३ १ २
यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
१ २ ३ १ २ ३ २उ ३ १ २
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ६ ॥ ८६

१ २ १ २१ २ १
२३ए्होइ । मर्त्ता३चो । सइन्धा२३ता३४३इ । ओ२३
४५इ । डा ॥ २४ ॥ ८५

अग्नो 'विश्वे' सर्वे 'मर्तासः' मर्ताः मनुष्याः 'हव्यम्' 'इन्धते' दीपयन्ति दधतइत्यर्थः(२) ॥

"विश्वे यस्मिन्नमर्त्त्ये हव्यं मर्त्तास इन्धते" इति छन्दोगाः, "विश्वानि यो अमर्त्त्यो हव्या मर्त्तेषु रण्यति" इति बह्वृचाः ॥ ५ ॥ ८५

'वाहिष्ठं' वोढृतमं 'यत्' स्तोत्रं 'तत् अग्नये' क्रियते । अतः हे 'विभावसो' (१)प्रभा धनाग्ने ! 'बृहत्' बहुलं धनं च 'अर्च'

८६ नास्तीयमुत्तरार्चिके । ५६

(२)-'विश्वे यस्मिन्' इति परस्मात् यच्छब्दश्रवणात् पूर्वस्मिन्नप्यर्द्धे तच्छब्दोऽध्याहार्यः । पाठक्रमादर्थक्रमस्य बलीयस्त्वात् पूर्वं द्वितीयोऽर्द्धो व्याख्यातव्य इति वि० । एवञ्च यस्मिन्नग्नौ विश्वे मर्तासो हव्यमिन्धते, सोऽयं विद्भिः स्तूयतइति भावार्थः ।

(१) वसु धनं, तद् यस्य विविधं भाति दीप्यते स विभावसुः ।

४ र ५ ४ १ ११र १
। यद्वाह्निष्ठं तदा। ग्नयाइ। बृहद्र्चविभावा२३साउ।
१ १ १ १ १र २
माहि२षाइवा२। त्वद्रयिः। त्वद्वा२३जाः। उदीरा२३ता
१
३४३इ। ओ२३४५इ। डा॥२५॥

४ र ५ ४५४५र र ४ ५ ११
। यद्वाह्निष्ठं तदग्नये। यद्वाह्निष्ठोवा। तदग्नयाइ।
२ १र १ १
वृहदा२३र्चा। विभावसाउ। महिषा२३इवा। त्वद्रयिः।
२ १र २ १
त्वद्वा२३जाः। उदीरा२३ता३४३इ। ओ२३४५इ। डा
॥२६॥८६

अस्मभ्यं प्रयच्छ। कथमस्यान्न-धन-प्रदातृत्वमित्यपेक्षायामाह— यतः 'त्वत्' त्वत्तः सकाशात् 'महिषी' महती(२) 'रयिः' धनम् 'उदीरते' उद्गच्छन्ति(३)। 'इव'-इति पाद-पूरणः(४)॥६॥८६

I, II अग्निऋषिः, यद्वाहिष्ठीये यन्मऽहिष्ठीये वा।

(२)—महन्नामसु 'महिषः'-इति षष्ठं पदम् (नि० ३, ३)।

(३)—'त्वद्वाजा'-इत्यस्य व्याख्यानमिह नोपलभ्यते। विवरणकारस्तु 'त्वद्रयिः'-इत्यस्य त्वया सह धनम् इति व्याख्याय 'त्वद्वाजा' त्वया सह अन्नानि इति व्याख्यातम्। भाष्य-नये खलु 'त्वत्' त्वत्तः सकाशात् 'वाजा' अन्नानि इत्यर्थः सम्भवपरः।

(४)—'एतदुक्तं भवति—यस्मादग्निर्ना दत्तं धनमन्नं च त्वया सङ्गच्छते, यस्मा-

अथ सप्तमी ।

गोपवनऋषिः, सप्तवध्रिर्वा ।

३ १ २ ३ १ २ ३ १ २ ३ २
विशो विशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
३ २ ३ २३ १२ ३२ ३ २३ १२
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ ७ ॥ ८७

५ र र र ५ १र २
। विशोविशोऽ३म्वो६अतिथाइम् । वाजयन्ताः । पू-
१ २ २ १ २र १ २ १
३रुप्रो३याम् । अग्निंवो२ । दूरा२३याम् । हुम्माइ ।
२ २ १ र ५ १ ३ २ २ ५
वा३चा३ः । स्तूर३४षेद्दाइ । ओ । हुवाइ । शू२३४षा ।
१ २ २ १ १ ५र ५ ४
हुम्मा । स्या३मा३ । न्मार३४भाइ । एहियाद्दा । हो
५इ । डा ॥ २७ ॥ ८७

हे ऋत्विग्यजमानाः ! 'वः' यूयं 'वाजयन्तः' अन्नमिच्छन्तः

---

८७ उत्तरार्चिकस्य ७,२,१२,१ ।

। अग्निऋषिः, विशोविशोयम् ऐडं वा ।

इग्निना इन्तेन धनेनान्नेन च त्वमोषधीऽसि । (कथमप्यनर्घनमन्नामि च त्वया सङ्गच्छन्त्यो उच्यते—'महिषीव' यथा राजभार्य्यां तेनैव सह सङ्गच्छते तद्वदित्यर्थः)-इति वि० ।

यतः 'अग्रणे' अग्निम् 'अर्च' इति योजना ।

अथाष्टमी।

पुरुराग्नेयऋषिः।

१ २ ३ १ २ १ १ २ २ २ १ २ २ १ १ २
बृहद्वयो हि भानवे ऽर्चादेवायाग्नये।

१ १ २ २ २ २ १ १ २ १ २ १ २
यं मित्रं न प्रशस्तये मर्त्तासो दधिरे पुरः॥ ८॥ ८८

५ २ १ २ २ १ २ २२ १२ २
। बृहद्वयाः। हिभानाऽ२३वाइ। आर्चादेवा। य-

'विशोविशः' सर्वस्याः प्रजायाः 'पुरु-प्रियं' बहुप्रियम् 'अतिथिं' पूज्यम् 'अग्निं' स्तुत्या परिचरतेतिशेषः। अहं च 'वः' युष्मदर्थं 'दुर्य्यं' गृह-हितम्(१) अग्निं 'वचः' 'स्तुषे' स्तौमि 'शूषस्य' सुखस्य(२) लाभाय। कैः साधनैः? 'मन्मभिः' मननीयैः स्तोत्रैः॥ ७॥ ८७

यस्मै 'भानवे' दीप्तिमते 'अग्नये' 'बृहत्' महत् 'वयः' हवी-

---

८८ नास्तीयमुत्तरार्च्चिके। ५७

(१) 'दुर्य्याः'-गृहनामाम्'-इति नि० ३, ४,'९। 'दुर्य्य' यस्य गृह-द्वारि भवम्'-इति वि०।

(२)—'शूषम्'-इति निघण्टु तृतीय-षष्ठे सुख-नामसु एकादशतमम्। लाभायेति षष्ठी भवन-सामर्थ्याद् गम्यते।

१　२　१　 ० 　१　२
अग्नार३याइ। यम्मित्रन्न। प्राशस्ताया२इ। मर्त्तासो-
२　४　५　४　५
३दा३। धिरोवा। पुपूरो६हाइ ॥२८॥

५　२　२　५　१ २ १२ २　१
॥ बृहद्वयोहिभाना६वाइ। आर्चादेवा। यअग्नार३
२　१　२　१　०　१ २२ २　१
याइ। यम्मित्रन्न। प्राशस्ताया२इ। मर्त्तासोद। धा
२　२　३२ २ २ २　५२ २　२ १ ११
दूरे१पूरा। औहोवाहा३४औहोवा। वा३चा २३
११ १२
४५ः॥ २८॥ ८८

रूपमन्नं(१) दीयते 'हि' अतस्त्वमपि 'देवाय' द्योतमानायाग्नये वयः 'अर्च' प्रयच्छ। 'मर्तासः' मनुष्याः 'यम्' अग्निं 'मित्रं न' सखायमिव 'प्रशस्तये'(२) प्रकृष्ट-स्तुतये अस्मदर्थं देवानग्निः स्तौत्विति 'पुरः' 'दधिरे' पुरस्कुर्वन्ति(३)॥

"प्रशस्तये"—"प्रशस्तिभिः"-इति पाठौ॥ ८॥ ८८

---

। ॥ शार्गप्रजापतिऋषिः, कनीनिके द्वे।

(१)—'वयः'-इत्यन्न-नामसु द्वाविंशतितमम्। नि० २, ७।

(२)—'प्रशस्तये, चतुर्थ्येकवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम्, प्रशस्तिभिः स्तुतिभिः; स्तुवन्तीति वाक्यशेषः'-इति वि०।

(३)-'पुरः' पूर्वस्यां दिशि 'दधिरे' धारयन्ति आह्वनीयात्मनेति वि०-सम्मतोऽर्थः।

अथ नवमी।

गोपवनऋषिः।

१२ ३१२ ३ १ २ ३ १र २र
अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम्।
१ २ ३ १३ २ ३ १ २ ३ १ २
यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते॥ ८॥ ८९

५ २ १ २ २ १ १ १
[ अगन्मवृ। त्रा३हान्ता३माम्। ज्या३ष्ठम। ग्निमा-
२ २ १ १ २ १ र
ना३वाम्। यस्मा२३होइ। श्रुतर्वन्नार्क्षाइ। बृहा२३-
१ र २ २ ५ २
द्धोइ। आनीकया३१उवाये३। ध्या२३४ते॥ ३०॥ ८९

'वृत्रहन्तमं' पापानामतिशयेन हन्तारं 'ज्येष्ठं' प्रशस्यम् 'आनवं' मनुष्य-सम्बन्धिनं, तेषां हित-कारिणम्(१) 'अग्निम्' 'अगन्म' गन्ता 'वयं' [पूजार्थे बहुवचनम्] अग्निः 'यः' 'आर्क्षे' ऋक्ष-पुत्रे 'श्रुतर्वन्' नाम्नि राजनि(२) निमित्तं 'बृहत्' महान् 'अनीकः'

---

८९ नास्तीयमुत्तरार्च्चिके। ५८
[ अत्रिऋषिः, श्रौतर्वणम्।

(१)—'आनवः मनुष्याः' नि० २, ३, १०। 'अनुर्मनुष्यः तस्यापत्यम् मनुष्येण हि मन्थनेन अग्निर्जन्यते, तेनासौ आनवः, अतस्तम् आनवम्' इति वि०।

(२)—'श्रुतर्वा नाम ऋषिः' इति वि०।

अथ दशमी।

वामदेवः कश्यपोवा मारीचोमनुर्वा वैवस्वतउभौवा।

३ १२　२१३ १ २ ३　२ ३ १ २　३ १ २
जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः।
३ २उ　३ १ २ ३ २ ३ २ ३ १२ २१ ३ २
पिता यत् कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥१०॥ ९०

२र　र　१　३ २　१　३ २　३
। जातः परेणा३धा। इहा। मणा। इहा। यो
५　१र　२　१　३ २
२३४नीम्। योनिमिन्द्रस्यगकथः। यत्सवृद्भिःसा३हा। इहा।

ज्वाला-समूहः सन् 'इध्यते स्म' प्रवृद्धो भवत्। [लट् स्मे (३,२,११८) इति भूते लट्] तमग्निमागताइति समन्वयः। एवं श्रुतर्वाणं भिक्षणायागतो गोपवनः अग्निं स्तौति ॥

"अगन्म"—"आगम्म"-इति च पाठौ। "यः स्म श्रुतर्वन्नार्क्षे बृहदनीकइध्यते"-इति छन्दोगा,: "यस्य श्रुतर्वा बृहन्नार्क्षो अनीकएधते"-इति च बह्वृचाः ॥ ८ ॥ ८९

९० नास्तीयमुत्तरार्चिके। ५९
। कश्यपस्य च स्वयोनीन्द्रस्य वा, इन्द्रियम्। इन्द्रस्य वा प्रियम्।

१ २ २ ३ ४ १र २
भुवाः। इहा। योऽ२३४नीम्। योनिमिन्द्रस्वगच्छथः।
र १ २ २ र १ २ र ३ ३ ५
पितायक्तश्याऽ३पा। इहा। स्याग्नाइ। इहा। योऽ२३४नीम्।
१र २ र र र १ २ २ १
योनिमिन्द्रस्वगच्छथः। अद्धामातामाऽ३नूः। इहा। कवा-
२ २ ३ ५ १र २ २ ११११
इ। इहा। योऽ२३४नीम्। योनिमिन्द्रस्वगच्छथाऽ२३४५ः॥
३१॥९० *

इति चतुर्थ-दशति॥

हे 'अग्ने' त्वं 'परेण' उत्कृष्टेन 'धर्मणा'(१) आधानादि कर्मणा 'जातः' प्रादुर्भूतोसि। 'यत्' यः 'महद्भिः' यज्ञे सह वर्तन्ते इति महतः ऋत्विजः, तैः सह 'अभुवः' भुमि-सम्बन्धि-यज्ञे वर्तसे [कश्यपस्याग्निरित्येतयोः परस्परं विभक्ति-व्यत्ययः(२)] 'यत्' यस्या

(१)—धर्म इति यज्ञ-नामसु अन्त्यम् नि० ३, १७।

(२) विवरण-ग्रन्थे तु यथा विभक्ति व्याख्यानं दृश्यते। तथाहि—'यत्' यः 'अग्निः', 'कश्यपस्य' ऋषेः 'पिता' पालयिता, 'श्रद्धा' अदिति सत्य-नाम (नि० ३, १०, २), तस्य धारयिता, 'माता' वृष्टि-प्रदान-द्वारेण सर्वस्य जगतो निर्माता, 'मनुः' ज्ञाता अधिकारस्य भक्ततया अभक्ततया वा, 'कविः' मेधावी; यश्च 'महद्भिः' सह विद्यमानैर्देवैः 'महाभुवः' सहैव प्रादुर्भवति; सोयम् 'परेण' उत्कृष्टेन 'धर्मणा' कर्मणा 'जातः' प्रादुर्भूतः। इति विवरण-निष्पन्नोर्थः।

* इति ग्रामे गेय-गाने द्वितीयः प्रपाठकः। २।

ग्नेः 'कश्यपः' 'पिता' 'श्रद्धा' देवी 'माता' च 'मनुः' 'कविः' क्रान्त-कर्मा मेधावी वा ["मनुर्वैवस्वतः स्तोतासीत् सोऽग्निः यजमानायाभीष्टं फलं प्र यच्छतु" अनेन सुचितमुपाख्यानं ब्राह्मणान्तरे द्रष्टव्यम् ॥ १० ॥ ९०

इति सायणाचार्य्य विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोआख्याने प्रथमस्याध्यायस्य नवमखण्ड ॥ ९ ॥

---

अथ दशमे खण्डे

सेयं प्रथमा।

अग्निस्तापसऋषिः*।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
सोमꣳ राजानं वरुणमग्निमन्वारभामहे।

१ २३ २ १ २ ३ १ २ ३ २ ३ १ २
आदित्यं विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ १ ॥ ९१

४र५ ४र४र ४५४ २ १ र १र
। ओम्। सोमꣳ राजानं वरुणाम्। अग्निमन्वारभाम

* 'वामदेवस्यार्षम्'-इति वि०।

९१ नाग्नीयमुत्तरार्च्चिके। ६०

। वार्हस्पत्यम्।

१ २ २ २ १ २ १२१ १ २
हे३। होवा३हाइ। आदित्य विष्णु॑सूर्यम्। होवा३
१ १२ २ १ २ २ १ ऽ २
हाइ। ब्रह्माणा२३स्वा३। होवा३हाइ। बृहा३उवा३।
५ ८
पा२३४तोम्॥ १॥ ९१

'राजानं'(१) राजमानमीश्वरं वा 'सोमं'(२) 'वरुणं'(३) च 'अग्निं' च 'गोभिः' स्तुतिभिः 'अन्वारभामहे' रक्षणार्थम् आह्वयामहे। तथा 'आदित्यम्' अदितेः पुत्रं(४) 'विष्णुं'(५) च 'सूर्यं'(६) च 'ब्रह्माणं'(७) च बृहस्पतिं'(८) च अन्वारभामहे(९)॥ १॥ ९१

(१)—राजानमिति सोममित्यादेर्विशेषणम्।

(२)—"चन्द्रमसो वैतस्य वा 'सोमं मन्यत' * * सोमोरूपविशेषैरोषधिश्चन्द्रमा वा" इति नै० ११,१,१—५।

(३)—"वरुणो वृणोतीति * * वृष्टिर्गुनक्ति भूमिम् इत्यादि नै० १०,१,४-५।

(४)—यद्यप्यादित्यः सूर्य इति प्रसिद्धः "सूर्यमादितेयम्" इति नैघण्टुक (२,१,१६) परमिह सूर्यमिति पृथगुक्तेः अदितेः पुत्र-विशेषस्य इन्द्रानुजस्य वायोर्ग्रहणमित्याशयः, तथोक्तम् तत्रैव नैरुक्ते—"अदितेः पुत्रः * * अन्यासामपि देवतानामादित्य-प्रवादाः स्तुतयो भवन्ति" इति।

(५)—"विष्णुर्भवति * * 'इदं विष्णुर्विचक्रमे" इत्यादि नै० १२,२,८।

(६)—"सूर्यः * * उदुत्यं जातवेदसम्"-इत्यादि नै० १२,२,१-५।

(७)—"ब्रह्मा सर्वविद्यः, सर्वं वेदितुमर्हति"-इति नै० १,२,१२। नायं दैवतकाण्डे देवतासु परिगणितः।

(८)—"बृहस्पतिर्ब्रह्मणः पाता"-इत्यादि नै० १०,१,११।

(९)—आश्रयामइत्यर्थः। इह मन्त्रे क्षित्यप्तेजोमरुद्व्योमसूर्यचन्द्रमसाम-यजमानेत्यष्टमूर्त्युपासनं ध्वन्यतइति बोध्यम्।

अथ द्वितीया ।

वामदेवोह्यो: ।

१ २ ३२ ३ १ २ ३ १ ३ १र २र
इत एत उदारुहन्दिवः पृष्ठान्यारुहन् ।
२ ३ २ ३ १ २ ३ १र २र
प्रभूर्जयो यथा पथो द्यामङ्गिरसो ययुः ॥ २ ॥९२

१र ५ २ १ र १ २
I आरो३हान् । ३ । इत एतऊ३दारु१हा २न् । दिवः
र १ २ र र १ २
पृष्ठानो३याहू१हा २न् । प्रभूर्जयोया३थापा१था २ । उ
र १ २ १र ५ २ १
द्यामङ्गिरा३सोया१यू २ः । आरो३हान्२ । आ२३ ।
१ ३ ४र र ३ ४ १२
रो२ । हा२३४ । औहोवा । ऊ२३४पा ॥ २ ॥९२

एते अङ्गिरसः 'यथा' 'उत्' मार्गेणेव 'द्यां दिवं' 'प्र ययुः' प्रापुः । कीदृशाः ? 'भूर्जयः' [भञ्जतिः पाककर्मा] हविषां पक्तारः(१) । तत्र दृष्टान्तः—'पथा' मार्गेण जना ग्रामादीन्

---

९२ नास्तीयमुत्तरार्चिके । ६१

I आरूढवत् आङ्गिरसं यामं वा ।

(१)—नेदं व्याख्यानं साधु मन्यते, 'भूः, जयः' इत्येव पदकारकृतावग्रहदर्शनात्, न हि भञ्जतेर्भुर्जयइतिरूपं 'भूः, जयः'-इत्येवमवग्रहः सम्भवति, नापि तद्योगे स्वरश्रुतिः । विवरणकारस्तु — 'भूः पृथिवी तां ये महावीराख्यमानुभावेन जितवन्तः तं' इत्याह ।

अथ तृतीया।

एतस्याः कश्यपोऽसितोदेवलोवा*।

१ १ २ ३२ ३ १ २ ३ १ २
राये अग्ने महे त्वा दानाय समिधीमहि।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ईडिष्वा हि महे वृषन्द्यावा होत्राय पृथिवी॥ ३॥ ९३

I राये अग्नेमहाइ। त्वा। दानायसमिधीमा२३
ही। आइडो२ष्वाहो२। महेवृषन्। द्यावा२होत्रा२।
यपीवा३ ओ२३४वा। था५इवो६हाइ॥ ३॥

II रायायार३ग्नेमहेत्वाहाउ। दानायसमिधीमा२३

गच्छन्ति, तथा इतः भूमेः सकाशात् 'उदारुहन्' उदगच्छन्। आगत्य च 'दिवः' स्वर्गस्य 'पृष्ठानि' स्थानानि 'आरुहन्' प्राक्रमन्ति॥ २॥ ९२

---

* 'वामदेवस्यार्षम्'-इति वि०।

९३ नास्तीयमुत्तरार्च्चिके। ९२

I, II इमे आसिते।

अथ चतुर्थी ।

भार्गहुतिः सोमो वा ऋषिः* ।

१ २ ३ २३१ २ ३ २ ३ २३ ३ २३ २
दधन्वे वा यदीमनु वोच द्ब्रह्मेति वेरु तत् ।
२३ १ २ ३ १ २ ३ २ ३ १ २
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥ ४ ॥ ९४

२ १ २ २ १ २ ३ ५ १र
हाइ । आइडाइषाश्हाश्इ । माहेवा३३४र्षान् । द्यावा
१ २ २१ ५ ४ ५ ८
हो३त्रा३ । यपो२३४वा । था५इवो६हाइ ॥ ४ ॥ ९३

हे 'अग्ने' ! 'त्वा' त्वां 'महे' महतः 'राये'(१) धनस्य 'दानाय' दानार्थं 'समिधीमहि' वयं सम्यग् दीपयामहे । 'वृषन्' वर्षितः । अग्नये 'महते' 'होत्राय' अग्निहोत्रार्थं(२) 'द्यावा' दिवं 'पृथिवी' च 'इडिष्व' स्तुहि ॥ ३ ॥ ९३

---

* 'गृत्समदस्यार्षम्'-इति वि० ।

९४ नाम्तीयमुत्तरार्च्चिके । ६२

(१)—'राये महे इ आर्थ्ये चतुर्थी इति वि० । एवञ्च कमः ग-भावे रूपमिति ध्वनितम् ।

(२)—'हूयते तदिति होत्रं होमद्रव्यम्, इ अपि चैव तादर्थ्य-चतुर्थ्या, महतो होमद्रव्यस्यार्थायेत्यर्थः । होम-प्रधानत्वात् प्रदर्शनार्थम्, सर्वासां दानादि क्रियाणां सम्बन्धिनो द्रव्यस्यार्थायेत्यर्थः'-इति वि० ।

४ र र ४ १र र र
। दधन्वेवापूयदीमनू। वोचद्ब्रह्मोतिवे-रुतत्। पारि-

१र २ ३ ५
विश्वा२। निकाव्या। नाइमिश्वकौवा। ई२३४वा।

२ १ ४ ५ ४ ६
भुवात्। औ२३होवा। होपूइ। डा॥ ५ ॥९४

'वा' अथवा 'ईम्' एनं यज्ञम् 'अनु' लक्षीकृत्य(१) 'यत्' हविरादिकं 'दधन्वे' धारयत्यध्वर्य्वादिः(२) यद् 'ब्रह्म' स्तोत्रम् 'अनुवोचत्' अनुवक्ति होत्रादिः [अत्र वा अन्वित्येतद्योज्यम्]। 'तत्' सर्वं 'वेरु' (३) वेरेव कामयते जानाति वा स्वयम-नुष्ठातुम्। अयमग्निः 'विश्वानि' सर्वाणि 'काव्या'(४) काव्यानि 'कवयः' मेधाविनऋत्विजः तत्-सम्बन्धीनि कर्माणि 'पर्यभुवत्' परिभवति स्वायत्तानि करोति व्याप्नोतीत्यर्थः। व्याप्नो-

। त्वाष्ट्रीसाम।

(१)—'वेति पाद-पूरणः'-इति वि०। 'इम्', 'अनु' द्वावपि पाद-पूरणौ-इति च वि०।

(२)—'दधन्वे धारयति, अश्रुतस्य धारणं न सम्भवति अतः धारणेनात्र श्रवणं लक्ष्यते शृणोतीत्यर्थः, किम्पुनः शृणोत्यग्निः। उच्यते'-इत्यादि वि०।

(२)—इह वेः, उ—इतिच्छेदः; उ-शब्द एवार्थः।

(३)—'वेः, मध्यमपुरुषस्यैकवचनमिदं प्रथमपुरुषैकवचनस्य स्थाने द्रष्टव्यम्; वक्ति जानातीत्यर्थः।

(४)—आलं सुपामित्यादिना। 'काव्यानि श्रुति-वचांसि हव्यानि वा'-इति वि०।

अथ पञ्चमी।

पायुर्ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ ३ ३ २ ३ १ २
प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि।
३ १ २ ३ २ ३ २ ३क २र ३क २र
यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम्॥ ५॥ ९५

३ ४ ५र १ ३ ४ र ४ ५ १ १र २ १
। प्रत्यग्ने। होइ। हरसाहरा६ए। शृणाहिवा२
३ २ ३ ५ १र १र २ १ ५र
इ। श्वता३४५ः। पा२३४री। यातुधानस्यरक्षसो३।
१ २ १ २ १ ५ ३ ५ ६
बा२३लाम्। नियुब्जवो२३४वारी२३४याम्॥ ६॥ ९५

दृष्टान्तः—'नेमिः' वहिर्वेष्टन वलयः 'चक्रमिव' रथाङ्गं यथा कार्त्स्न्येन व्याप्नोति तद्वत्॥

"ब्रह्म"-इति "ब्रह्माणि"-इति च पाठौ। "'भुवद्"-"भवत्"—इति च॥ ४॥ ९४

हे 'अग्ने!' त्वं 'हरसा' त्वदीयेन तेजसा क्रोधेन वा(१)

---

९५ नास्तीयमुत्तरार्च्चिके। ६४
I अगस्त्यऋषिः, राक्षोघ्नम्।

(१)—'निघण्टौ—प्रथम-सप्तदशे ज्वलत् पर्य्याये, द्वितीय त्रयोदशे क्रोध पर्य्याये चेत्युभयत्र पाठात्।

अथ षष्ठी।

प्रस्कण्व ऋषिः।

१ २५ १ २ ३ २ ३ १ २ ३ २ ३ २
त्वमग्ने वसूꣳरिह रुद्राꣳआदित्याꣳ उत।
१ २ ३ २३ ३ १ ३ ३ १ २
यजा स्वध्वरञ्जनं मनुजातं घृतप्रुषम्॥ ६॥ ९६

४ ५ र ४ ५ ४ २१र र
। त्वमग्ने। त्वमग्नाइ। वसूꣳरिहा। रुद्राꣳआ२३
२ १र र २ १
हो। तियाꣳउता। यजासू२३वा। ध्वरञ्जनम्। मनु

[तथाच यास्कः—हरोहरतेर्ज्योतिर्हर उच्यते-इति। 'यातुधानस्य' राक्षसस्य 'हरः' हरणशीलं बलं 'विश्वतः' सर्वतः 'परि' गतं प्रति 'शृणाहि' नाशयेत्यर्थः। तथा, 'रक्षसः' राक्षसस्य 'वीर्यं' च 'न्युब्ज'(२) निःशेषेण रुज भञ्जयेत्यर्थः॥

"शृणाहि"—"शृणीहि"—इति पाठौ। "बलं न्युब्ज वीर्यम्"-"बलं विरुज वीर्यम्"-इति च॥ ५॥ ९५

हे 'अग्ने' त्वम् 'इह' कर्मणि वस्वादीन् 'यज'। 'उत'

---

९६ नास्तीयमुत्तरार्च्चिके। ६५

। मानवम्।

(२)—"न्युब्ज. न्यञ्चं कुर्वित्यर्थः'-इति वि०।

२  १ २  १  २  १
जा२३ताम्। घृतप्रुषम्। इडा२३भा३४३। ओ२३४
५
पूइडा ॥ ७ ॥ ९६

इति पञ्चम-दशति* ॥

अपिच 'जनम्' अन्यमपि देवता-रूपं प्राणिनं(१) यज। कीदृशम्? 'स्वध्वरं' शोभन-याग-युक्तं 'मनुजातं' मनुना प्रजापतिना उत्पादितं 'घृतप्रुषं' उदकस्य सेक्तारं(२) यजेति सम्बन्धः(३) ॥६॥ ९६

इति सायणाचार्य्य विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य दशमखण्डः ॥ १० ॥

---

(१) प्राणो वायुः, तदेकस्थानतया तदवन्तं प्राणिनम् आकाशापरपर्य्यायं प्रजापति-देवमित्यर्थः। "वायुर्वेन्द्रो वान्तरिक्षस्थः" इति हि नैरुक्तम् (७,२,१), प्रजापतेः आन्तरिक्षस्थानेषु परिगणनञ्च स्पष्टं निघण्टु-पञ्चम काण्ड तृतीय खण्डे ; आकाशो हि प्रजापतिरिति च शवरस्वामिना स्फुटमुक्तम् (१,२,१०)। अन्यास्वपि ऋचि वस्वादीनां सर्व्वासामेव देवगणानामुल्लेखः परिदृश्यते, प्रजापतेरुल्लेखस्त्वत्र विशिष्टः उक्तत्वात्मन स एव द्योत्यते। एवञ्चोपपत्स्यते सर्व्वासामेव त्रयस्त्रिंशत्सङ्ख्याकानां देवतानां यजनमिति ध्येयम्।

(२)—घृतमित्युदकस्य नाम, निघण्टु-प्रथम द्वादशे तस्य दशम पदत्वात्। उदक सेचनञ्च वायोः कर्म,-तदुक्तं भगवता निरुक्तकारेण- "अथास्य कर्म रसानुप्रदानं, वृत्र-वधः"-इत्यादि (७,३,३) "वृत्र वधो मेघ वधः"-इति च तद्भाष्यम्। वायुरिन्द्रश्चाभिन्न "वायुर्वेन्द्रो वेति यास्कोक्तेः (७,२,१)। वायुरिन्द्रश्चैक एव यथा स्मृतः करदति" तद्भाष्याच्च।

(३)—'इदेदं तत्त्वम्'-"त्रयस्त्रिंशद्देवताः"-इति हि ताण्ड्यादि-श्रुतिः, तत्र च

* इति छन्द आर्च्चिके प्रथम-प्रपाठकः ॥ १ ॥

खण्डयोर्हं पुरुत्वेति ककुभोऽष्टौ दशोष्णिहः ।
जज्ञानः पावमानी स्यादुतस्येत्यदितेः स्तुतिः ।
शिष्टाः षोड़श चाग्नेय्यः समाख्या छविणोति वत्(०) ॥

अथैकादश-खण्डे--

सेयं प्रथमा ।

दीर्घतमाऋषिः ।

१ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
पुरु त्वा दाशिवाङ्* वोचे ररिग्ने तव स्विदा ।
३ १ २ ३ २ उ ३ १ २
तोदस्येव शरण आ महस्य॥ १ ॥ ९७

*"दाश्वान्"-इतिपाठो बह्वृचां निरुक्त-सम्मतश्च(५,३,८) ।

९७ नास्तीयमुत्तरार्च्चिके । ६६

"अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः, इन्द्रश्चेति द्वात्रिंशत्, प्रजापतिस्त्रयस्त्रिंशत मह्ग्रा-पूरकः"-इत्यादि भाष्यम् । ते च सर्वे मनु-जाताः, तद्यथा —"इति स्तुतासो असथा रिशा दसो ये स्थ त्रयश्च त्रिंशच्च । मनोर्देवा यज्ञियासः"-इति ऋग्वेदीया श्रुतिः (८.४,१०.२)। तत् सर्वं यज ।

(०) --'पुरु त्वा'-इत्यादिरेकादश-खण्डः, तत्र ऋचोदश , 'प्र मंहिष्ठाय'-इत्यादि द्वादश खण्डं तत्र ऋचोऽष्टौ ; अनयोरुभयो खण्डयोः सङ्कलनया अष्टादश ऋचः श्रूयन्ते । तासु द्वादश-खण्डात्मकाष्टौ ककुप्छन्दस्काः, एकादश-खण्डात्मकास्तु दश उष्णिक्छन्दस्काः किन्तु एकादश-खण्डीय जज्ञानइत्याद्या पञ्चमी ऋक् पवमान-देवताका, तदव्यवहित-श्रुता उतस्येत्याद्या षष्ठी अदिति-देवताका, अवशिष्टास्तु सर्वाः आग्नेय्यः । नन्वनाग्नेय-मन्त्र-संश्रवेऽपि कथमस्याग्नेय-पवत्वं न ग्रस्यति ? इति शङ्कामपनोदयितुमाह,— 'समाख्या छत्रिणोति वत्' एकस्मिन्नेव प्रधाने छविणि राश्रियाने यथा, अप्रधानभूतासु

५ ४  २र१र  र  र  र  ४ ५ ४ ५
I पुरू । त्वादाशिवा ३ वोचाये३ । आरोराग्नाइ ।
२र१  २र१ र  १  १ २
तावस्विदा । तोदस्येवशरणआ२३ होइ । महा२३ होये
२  ३  र ५र  ३ १ १ १ १  ८
३ । स्यो । या२३४औहोवा । ई२३४५ ॥ ८ ॥

५ ४ ५र र  ४र  ५र  २ ऽ २  ५
II पुरुत्वादाशिवा ३ वो । चे । आरोरा२३४ग्नाइ ।
२  ३  ५  ४र ३ ४र ५  ३  ४
तावस्वा२३४इदा । तोदस्येवशर । णयो२३४हाइ । मा
२  १  २  २  ३  ५र र  ३ १ १
३हा३ । हुम्माये३ । स्यो । या२३४औहोवा । ई२३
१ १  ८
४५ ॥ ८ ॥

हे 'अग्ने' ! 'त्वा' त्वां 'पुरु' बहु 'वोचे' [यद्वा बहु दाश्वानितिसम्बन्धः] पुत्रं देहि, वित्तं देहि इत्याद्याशासनानि ब्रवीमीत्यर्थः। किन्त्वेषाम्? नेत्याह—यत 'दाशिवान्' दाश्वान्(१) अभिमतं हविर्दत्तवानस्मि, अतो वोचे। इतर-साधारण्येन ब्रुवतः कथं दातव्यम्-इति न मन्तव्यम्। यतः हे अग्ने' 'तव स्विदा'(२)

I, II इमे तौदे, दैर्घतमसे वा ।

समस्तासु सेनासु इविलारोपेण इविषो याम्नोति समाख्यानम्, तद्वदित्यर्थः। प्राधान्यानुरोधात् अनाग्नेय्योऽपि ऋचः आग्नेय्यः-इति व्यवह्रियन्ते-इति भावः।]

(१)—"दाश्वानसाकात् मीढ्वांश्च (६,१,१२)" इति कर्मौ वाक्ये न कृतम्।

(२)—'स्वित्, आ-इत्येतौ एव-शब्दस्यार्थे द्रष्टव्यौ ।

I पुरुत्वादाशिवाꣳवो। चे। चे। अराइरार३४
ग्राइ। तावस्वार३४इदा। तोदास्यार३४इवा। शारा-
णार३४या। माइहापुस्याई५६। ए३१ ॥ १० ॥

II पुरुत्वाइदाशिवाꣳवोचे। अरिर। ग्राइ। तवा
२स्वार३४इदा। तोर३४दा। स्यार३४इवा। शाराणा
२३४या। माइहापुस्याई५६ ॥ ११ ॥

III पुरुत्वार३दाशिवाꣳवोचे* ओहा। हा। औहोइ
हा। ओर३४वा। अरिरग्नेतवस्विदा। हा। औहो
इहा। ओर३४वा। तोदस्येवशरणआ। हा। औहोइ
हा। ओर३४वा। ए३। महस्यार३४५ ॥ १२ ॥ ९७

* व्र० पुस्तके पञ्चस्वेषु सामसु "वाङ्वोचे"-इति स-ङकारः पाठः।

III, IV, V इमानि दैर्घतमसानि तौदानि वा।

अथ द्वितीया।

विश्वामित्र ऋषिः।

१र २र ३१२उ ३ १२ ३२
प्र होत्रे पूर्व्यं वचोग्नये भरता बृहत्।

३ १र २र ३ १२३ २ ३१२
विपां ज्योतींषि बिभ्रते न वेधसे॥ २॥ ९८

'अरिः'(३) तवैव भर्त्ता सेवकोहं(४) 'महस्य' महतः 'तोदस्य' शिक्षकस्य स्वामिनः(५) 'शरणआ'(६) ['इव'—इत्युपमार्थे] सदा ईशगृहे यथा गर्भ-दासादिर्नियतोवर्त्तते तद्वदहमपि। यस्मादेवं तस्मात् अभिमतं बहु वोचि। त्वमपि तत् सर्वं देहीत्यर्थः॥

अत्र निरुक्तम्—"वहु दाश्वांस्त्वामभिह्वयाम्यरिरमित्रमृच्छतेरीश्वरोप्यरिरेतस्मादेव यदन्यदेवत्या अग्नावाहुतयोह्रियन्त इत्येतद्दृष्ट्वैवमवक्ष्यत्तोदस्येव शरणआ महस्य तुदस्येव शरणेधि महतः (५,१,८)" –इति॥ १॥ ९७

९८ नास्तीयमुत्तरार्च्चिके। ६७

(३)—निघण्टु-तृतीय-पञ्चम-पठितस्य परिचरण-कर्मण ऋच्छतेरूपम्। उक्तञ्च निरुक्तकारेण 'ऋच्छतेः'-इति ५,१,८।

(४)—'अरिः ईश्वरः त्वम्'-इति वि०। अर्थ्यः-इति निघण्टौ द्वितीय द्वाविंश ईश्वर पर्याये द्वितीयं पदम्। निरुक्त-स्तत्पृक्तम् –ईश्वरोप्यरिरिति (५,१,८)।

(५) –'तोद-शब्देनात्र गृहस्थ उच्यते' इति वि०।

(६)—शरणे. आ—इति छेदः पदग्रन्थे तथैव दर्शनात्। आ-इत्येतत् पाद-पूरणं कस्मिन्नपि भाष्ये तदर्थादर्शनात्, निरुक्त मते त्वयमा आधार्थः।

५ र र ६ १ १ २ १र
I प्रह्नोत्रेपू । विंयं वचो । अग्नयार३इभा । रताबृ-

र २ १ २ १ ३ ५र र
हत् । विपाज्ज्योर२३तो । षिबायेइ । भा२रता२३४औहो-

१ २र १३११११ ७
वा । न वेरधसेर२३४५ ॥ १२ ॥

५ र२ ४र५ ४ ५ २ १ र २ र१ २ ३
॥ प्रह्नोत्रा३इपूर्वियं वचाः । अग्नये२भरता३बृ । हा

२ ३र र २ ३ ५ ३ २ ३
२३त् । विपाज्ज्योता३इ । षो२३४बो । भता३इ । नार

४ २ ५ ६
३वे३ । धा३४५सो६हाइ ॥ १४ ॥ ६८

यजमानो होत्रादीन् प्रति ब्रूते - हे होत्रादयः ! 'विपां' विप्राणाम् मेधाविनाम् अध्वर्य्यादीनां 'ज्योतींषि' सत्कर्मानुष्ठान-सम्पाद्यानि तेजांसि 'बिभ्रते' निमित्ततया कुर्वाणाय 'वेधसे' जगतीविधात्रे 'होत्रे' देवानामाह्वात्रे 'अग्नये' 'बृहत्' महत् 'पूर्व्यं' पुरातनं 'वचः' स्तोत्र-शस्त्रादिकं वाक्यं 'प्र भरत'(१) सम्पादयत। नेत्ययं पाद-पूरणः, अन्वयाभावात्। यद्वा 'वेधसे न' यथा

I, II अनयोः आश्वऋषिः, प्रहितो नाम ।

(१)—भरतेति हरते रूपम् हृग्रहोर्भश्छन्दसीति वचनाद्धस्य भत्वम्। क्वचि अन्यात्वम् "क्वचि तु-तु (६,३,१३३)"-इत्यादि सूत्रे तङ्-ग्रहणात्।

अथ तृतीया ।

गोतमऋषिः ।

३ १ २ ३ १ २ ३ १ २
अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
३ १ २ ३ २ ३ १ २
अस्मे देहि जातवेदो महिश्रवः ॥ ३ ॥ ९९

वेधाः जगद्विधाता परमेश्वरः आदित्यादीनि ज्योतींषि करोति तद्वदिति । प्र-शब्दस्य "छन्दसि" "व्यवहिताश्च" इति(१) भरतेत्यनेन सम्बन्धः ॥ २ ॥ ९८

हे 'सहसोयहो'(१) बलस्य पुत्र ! 'अग्ने' ! 'गोमतः' बहुभिर्गोभिर्युक्तस्य 'वाजस्य' अन्नस्य 'ईशानः' ईश्वरस्त्वमसि, अतः 'अस्मे' अस्मासु हे 'जातवेदः' जात-धन ! जातानां 'वेदितः' वा अग्ने ! 'महि' प्रभूतं 'श्रवः' अन्नं 'देहि' प्रयच्छ स्थापयेत्यर्थः । सहसो-यहो-परांगवद्भावाद्(२) आमन्त्रितस्य षष्ठ्यामन्त्रित(३) समुदायो-

९९ उत्तरार्चिकस्य ७,२,११,१ ।

(१) "छन्दसि परेऽपि (१,४,८१)"-इति सूत्रात् छन्दसीत्यधिकारे वर्त्तमाने "व्यवहिताश्च (१,४,८२)" इति सूत्रेणेति स्फुटार्थः ।

(१) -निघण्टौ द्वितीय नवमे बल-पर्य्यायेषु सहः पदमष्टादशम्, तृतीय-द्वितीये अपत्य-पर्य्यायेषु यहुः पदमेकादशम ।

(२)---"सुबामन्त्रिते पराङ्गवत् स्वरे (२,१,२)"-इति सूत्रेणेति यावत् ।

(३)- "षष्ठ्यामन्त्रित-कारक वचनम"-इति वचनं-कृतं परिगणन बाधाधमस्तीति-त्यभिप्रायः ।

४ र र र ४ २र २र१ ३ ३

I अग्नेवाजा५स्य । गोमतोवा । ईशान सा । ह-

१र २१ २ ३ २र २र १र र ३ र

सोयह्वो । अस्माइदेहि जातवेदोम । हा२३इ । अवा-

२र ३ १ ३

ओवा । अूधिया३ । ए२३हिया३४३ । ओ३४३५इ ।

११

डा ॥ १५ ॥

१ ४ र र र र ४ ५ र र २र १र २ १

II अग्नेवाजस्य गोइम् मतोहोहाइ । ईशानः सा ।

२ ३ ५ १ २ २ ४र ५ ३र २

हासोया२३४ह्वो । आस्मो१दाइह्वो२ । जात । वेदा३ः ।

१ ४ २ ५ ८

मा१२३ह्वो२ । आ३४५वो६हाइ ॥ १६ ॥ ९९

निहन्यते (४) । अस्मे—सुपांसुलुगिति (७,१,३९) सप्तम्याः शे आदेशः(५) ॥

"अस्मे देहि"—"अस्मे धेहि"-इति च पाठौ ॥ ३ ॥ ९९

I, II इमे सुधिये वा सुडो वा अड्डे वा सत्ये वा सामनी, अनयोः प्रजापतिर्ऋषिः ।

(४)—"आमन्त्रितस्य च (८,१,१९)"-इत्ययमाष्टमिको निघातः ।

(५)—"शेश्छन्दसि (६,१,७०)"-इत्यादपीह स्मर्तव्यम् ।

अथ चतुर्थी ।

विश्वामित्रऋषिः ।

३ १ २　　३ २३ १ २ ३ २र २
अग्ने यजिष्ठो अध्वरे देवान् देवयते यज ।
१ ३ ३ १र २र　२ ३ १ २
होता मन्द्रो वि राजस्यति स्रिधः * ॥ ४ ॥ १००

५ र　र　५　२र र　र　१ २
1 अग्नेयजिष्ठो अध्वराइए । देवां देवयाउताइयाः
३ २　५ २　१ र २　१ २
जा२ । हुवा३होवा । होतामन्द्रः । विराजा१सी२ ।
१ २　५ २　१　२　१
हुवा३ । हो३वा । अतिस्रा२३इधा३४उः । ओ२३४५इ ।
६
डा ॥ १७ ॥

हे 'अग्ने' 'यजिष्ठः यष्टृतमः 'त्वम्' 'अध्वरे' यज्ञे 'देवयते' (१)

* "स्रधः"-इति क० पाठः । "स्त्रिधः"-इति ग० पाठः ।

१०० नास्तोयमुत्तरार्चिके । ९८
1 प्रजापतिऋषिः सदोनाम ।

(१) — "न च्छन्दस्यपुत्रस्य (७,४,३५)"-इति दीर्घ-निषेधः, "देवसुम्नयोर्यजुषि काठके (७,४,३८)"-इत्यस्यायमविषयः ।

अथ पञ्चमी।

चितऋषिः।

३ २ ३ २ ३ १र २ ३ १र ३ २र १ ३ २
जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये।
३ २ ३ १ २ ३ १ २ ३ २
अयं ध्रुवो रयीणाञ्चिकेतदा॥ ५॥ १०१

५ र २ २ ५ १ र र
॥ अग्ने। इया३४३ई३४या। यजिष्ठो अध्वराइ।
१र र र १ १ १ १
देवां देवयते२। हो्हो२। याजा२। होता२। मान्द्रो
१ २ २ १ ३२ ५र र ३
२। विराजा३सी। आ२। तिया३४औहोवा। सो२३-
४ ५
४धाः॥ १८॥

५ ४ ५ ४ ५ १ र रर
॥॥ अग्नइया। ओवा। यजिष्ठो अध्वराइ। देवां दा
२ १ २ १ २ २ र १
२३इवा। याते१याजा२। होता३ओवा। मन्द्रोवी३रा२३
१ ३ ५र र १ २ १ ३ १ १ १ १ ६
जा२सा२३४औहोवा। अतिस्त्रिधा२३४५ः॥ १९॥ १००

देवामात्मनइच्छते यजमानाय 'देवान् यज' तदर्थं यष्ट-

---

१०१ नास्तीयमुत्तरार्च्चिके। ६८

II, III इमे हविर्द्धाने, अनयोरपि प्रजापतिऋषिः।

५ र                १ र १              २ ३ १         ५
। जज्ञानः सा। प्तमातृभाइः। मेधामा२३४ग्रा।
२ १          ३   ३   ५       १      २       १
मतग्रायाइ। अया२ध्रू२३४वाः। रया२३इणाम्। चि
२   १  ३   ५र र      ३   ५   ४
कायेइ। ता२दा२३४औहोवा। ऊ२३४पा॥ २०॥ १०१

च्यानग्न्यादीन् देवान् पूजय। किञ्च। 'होता' देवानामा-ह्वाता 'मन्द्रः' यजमानस्य मादयिता स त्वं 'स्रिधः' क्षपयितृन् शत्रून् 'अति' अतिक्रम्य 'वि राजसि' विशेषेण शोभसे॥४॥ १००

'ध्रुवः' स्थिरोऽयमग्निः 'रयीणां' धनानाम् 'आचिकेतत्' अस्यानुशासने जानाति। 'सप्त' सप्त-सङ्ख्याभिः 'मातृभिः'(१) हविर्मान-समर्थाभिर्जिह्वाभिः स्वात्मनि हविः-प्रक्षेप्तीभिर्वा जिह्वाभिः सह 'जज्ञानः' प्रादुर्भूतः सोग्निः 'मेधां' कर्म्मणो विधातारं सोमं 'श्रिये' सेवार्थम् 'अनुशासत' अनुशास्ति। [शास्तेर्लटि व्यत्ययेनात्मनेपदम् (३,४,९८) "बहुलं छन्दसि" इति(२,४,७३) शपो लुङ् न भवति] अन्विच्छतीत्यर्थः॥

"जज्ञानः सप्तमातृभिः"—"जज्ञानं सप्त मातरः" इति च पाठौ। "चिकेतद"-"अचिकेतयद्" इति च॥ ५॥ १०१

---

I त्वष्टाऋषिः, आतिथ्यम्।

(१)—'सप्त मातरः—सप्तच्छन्दांसि अथवा सप्त होत्राः अथवा सप्त सोम-संस्थाः, ताभिः'-इति वि०।

अथ षष्ठी।

इरिमिठिर्ऋषिः।

१ २३ २ १ १ ३१र २र ३ १ २
उत स्या नो दिवा मतिरदितिरूत्यागमत्।
१र २ ३ १ २ ३ २ ३ १ २
सा शन्ताता मयस्करदप स्निधः* ॥ ६ ॥ १०२

५ २ ४र ५ ४र ५ १ १र १
। उतस्याइनोदिवामती:। आदितिरू। तिया
२ १र २ २ ४ ५ ३ २ ३
गा१मा२त्। साशन्ताइताइ। मा। यः। कराओ२३४
५ ४ ६ ४
वा। अपा५स्निधाः। होपुइ। डा॥ २१ ॥ १०२

'उत' अपिच 'स्या' सा पूर्वोक्ता 'मतिः' मन्त्री(१) मन्तव्या स्तोतव्या वा 'अदितिः'(२) 'ऊत्या' रक्षया सार्द्धं 'दिवा' अहनि 'नः'

* इह सर्वत्रापि "स्रधः"-"स्निधः"-"स्रिधः"-इति पाठ-भेदः।

१०२ नास्तीयमुत्तरार्च्चिके। ७०
I अदितिर्ऋषिः, आदित्यम्।

(१) –'मतिर्म्रान्ती'-इति वि०।

(२) –दीङ् क्षये, क्तत्य-ल्युटोबहुलमिति कर्त्तरि क्तिनि छान्दसं ह्रस्वत्वम्, नञ् समासः; अदितिः सकल-प्रपञ्च-धारणेऽक्षीणा, न क्षियते इत्यर्थः। अदितिरदीनेत्यत्र भाष्ये स्कन्दस्वामी—यद्यपि नञ्-पूर्वात् द्यतेः क्तिनि 'द्यति-स्यति-मा-स्थामित्तोत्ति' च रूपं सिध्यति, तथापि द्यतेर्नित्यमपूर्वादर्शनाच्चयात् दीङ् क्षये इत्यस्यैवेदं छान्दसं रूपं द्रष्टव्यम्। यथा चोक्तं 'न संस्कार माद्रियेत, अर्थोमित्यः परीक्षेत'-इति। 'अदिति

अथ सप्तमी।

द्वयोर्विश्वमनावैयश्वऋषिः *।

१ २३ १ २३१ १२ ३१२
ईडिष्वा हि प्रतीव्या३ं यजस्व जातवेदसम्।

३ १ २३ २ ३
चरिष्णुधूममगृभीतशोचिषम्॥ ७॥ १०३

अस्मान् 'अगमत्' आगच्छतु; आगत्य च 'शन्ताता' शन्तातिः(३) शान्तिकरं 'मयः' सुखं(४) 'सा' अदितिः 'करत्'(५) करोतु। 'स्निधः' नाशकान् शत्रूंश्चापगमयतु [स्निधिर्बाधनार्थः]॥

"उत स्या"-"उत त्या"-इति च पाठौ। "सा शन्ताता" "सा शन्तातिं"-इति च॥ ६॥ १०२

* 'विश्वमनस आर्षम्'-इत्येव वि०।

१०३ नास्तीयमुत्तरार्च्चिके। ७१

देवमाता' इति वि०। ऐतिहासिकानां मते देवमाता, नैरुक्तानां मते अदीनादि-गुणः, आत्मपक्षे प्रकृतिः। 'अदिति द्यौरदितिरन्तरिक्षम्" इति निघण्टु भाष्यम्। 'अदितिरदीना देवमाता। "अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्"-इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा'-इति नै० ४,४,११—२४।

(३)—"शिवशमरिष्टस्य करे (४,४,१४३)"-इति शङ्करोतीति विग्रहे तातिलि रूपम्।

(४)—निघण्टौ तृतीय-पञ्चमे सुख-पर्य्याये मय इत्यष्टमं पदम्।

(५)—लेटो रूपमिदम्।

२र१ ४ ५र १ २१ १२र
। इडाइघा२३द्धिप्रतीवियाम्। याजस्वआ। तवे-
२१ २१ २ ३ ५ ३२ १
दसा२३म्। चरिष्णुधू। मा२३४म। गृभा३इ। ता२
३ ५र र २ ५ ५
श्रो२३४औहोवा। चो२३४षाम्॥ २२॥ १०३

'प्रतीव्यं' शत्रुषु प्रतिगमन-शीलम्(१) अग्निं ['हि' अवधारणे(२), अग्निमेव] 'ईडिष्व' स्तुतिभिः स्तुतं कुरु। किञ्च, 'चरिष्णुधूमम्' सर्वत्र चरण-शील-धूम-ज्वालम् 'अगृभीतशोचिषं'(३) रक्षोभिर-प्रधृत-दीप्तिम् 'जातवेदसं' जातप्रज्ञं [यद्वा, जातानि भूतानि वेत्तीति जातवेदाः,(४) तमग्निं(५) 'यजस्व' हविर्भिः पूजय॥ ७॥ १०३

---

। वाङ्कजम्भम्।

(१)—'महाभूतत्वात् सर्वगतम्'-इति वि०।

(२)—'हीति पादपूरणः'-इति वि०।

(३)—'हृग्रहोर्भश्छन्दसि, हस्य' इति भत्वे रूपम्।

(४)—"जातवेदाः, कस्मात? जातानि वेद, जातानि वैनं विदुर्जाते जाते विद्यत इति वा, जातवित्तो वा, जातधनोव, जातविद्यो वा, जातप्रज्ञानो यत्तज्जातः पशून-विन्दत, तज्जातवेदसो जातवेदस्त्वमिति** अयमेव सोऽग्निर्जातवेदाः"-इति नै०७, ५,१—५। 'एष माहाभाग्यात् कर्मपृथक्त्वादग्निरेव'-इति च तद्भाष्यांशः।

(५)—सूर्योऽपि जातवेदा इत्युच्यते, तथा च'तत्रैव नैरुक्ते—"जातवेदसे सुनवाम"-इत्यृचमुदाहरणमुखेन व्याख्याय—"यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते स न मन्येत अयमेवाग्निरिति अप्येते उत्तरे ज्योतिषी जातवेदसा उच्येते** अथासावादित्यः -उदुत्यं जातवेदसमिति"-इदमुक्तम्।

अथाष्टमी।

१र २र ३ १ २ ३ २ ३ १ ३ १ २
न तस्य मायया चन रिपुरीशीत मर्त्यः।

३ १ २ ३ १ ३ २
यो अग्नये ददाश हव्यदातये ॥ ८ ॥ १०४

५ ४ ३ ५ २ १र २ १ २
I नतोवा। स्या२३४मा। ययाचा२३ना। रिपुरी-

२ १ ३ ५ १र ५ १र
शीतमा३१ओवा२३। तो२३४याः। योअग्नये२ददा।

५ ७ ५ ६
शहव्यदो२३४वा। ता२३४ये ॥ २३ ॥ १०४

'मर्त्यः' मनुष्यः 'रिपुः' शत्रुः [चनेति निपात-समुदायोऽप्यर्थे(१)] 'मायया चन' माययापि(२) 'तस्य' जनस्य 'न ईशीत' ईश्वरो न भवति। 'यः' जनः 'हव्यदातये' हविषामादान-समर्थाय 'अग्नये' योयजमानः 'ददाश' हवींषि प्रयच्छति तस्य रिपुर्न ईशीतेत्यर्थः॥

'हव्यदातये'-"हव्यदातिभिः"-इति च पाठौ ॥ ८ ॥ १०४

---

१०४ नास्तोयमुत्तरार्चिके।'७२

I अगस्त्यऋषिः, गाशोम्नम्।

(१)—'चन शब्दः पादपूरणः'-इति वि०।

(२)—'मायया प्रज्ञया' इति वि०।

अथ नवमी।

भारद्वाजऋषिः*।

३ १ २ ३ २३ २ ३ १ ३ क २र
अप त्यं वजिनꣳरिपुꣳस्तेनमग्ने दुराध्यम्।
१ १ ३ २ ३ २
दविष्ठमस्य सत्पते कृधी सुगम्॥ ८॥ १०५

३ ४ ३ ४ ५ ३ २ र ३ १ १ १ १ २
I अपत्यं वृजिनम्। रिपूम्। स्तेना२३४५म्। अग्ना-
१र २ ३ ४ ५ ३ २
इ। दूराधा२३या३४म्। दविष्ठमस्य सत्। पता३इ।
१ ४ २ ५ ४
का२३ध्रो३। सू३४५गो६हाइ॥ २४॥ १०५

हे 'अग्ने!' त्वं 'त्यं' तं प्रसिद्धं 'वृजिनं' कुटिलं 'रिपुं' पापकारिणं 'दुराध्यं' दुःखस्याध्यातारं दुष्टाभिप्रायम् एवम्भूतं 'स्तेनं' हिंसकं 'दविष्ठं' दूरतमम् 'अपास्य' अप क्षिप [असु, क्षेपणे-इति धातुः]। हे 'सत्पते!' सतां पालयितः अग्ने! अस्माकं 'सुगं' शोभनेन गन्तव्यं सुखं 'कृधि' कुरु। [अत्र सर्वदेवात्मकस्याग्नेः स्तवनाद् वैश्वदेवत्वम्(१)॥ ८॥ १०५

---

* 'ऋजिश्वनआर्षम्'-इति वि०।

१०५ नास्तीयमुत्तरार्च्चिके। ७३

I सौमक्रतवं बृहदाग्नेयीयं वा।

(१) 'विश्वे देवाः सर्वे देवाः' इति नैरुक्तम् (१२,४५)। 'बनादिष्ट देवता लिङ्गो

अथ दशमी।

विश्वमनाऋषिः।

१क २र १ १२ १ १ २
अष्टग्रे नवस्य मे स्तोमस्य वीर विश्पते।
१ १र ११२ ११ २
नि मायिनस्तपसा रक्षसो दह ॥ १० ॥ १०६

५र र र १र १ २ ५
। हाउअष्टग्ग्रेनवस्य मेहाउ। स्तोमास्य वा
१ १ २ ५र र र ४ ५ २र १ ६
रविश्पतायेउ४। ऐहोहाउहोवा। निमायिनाः। र..
२र १ ५र र र ४ ५ १ ५र र र
सारा२३४। ऐहोहाउहोवा। त्तासा२३४ः। ऐहोहाउ
४ ५ २ ५ ५ ४ १५
होवा। दहए३४। हियाहा। होपुइ। डा ॥ २५ ॥ १०६

इति प्रथम-दशति ॥

'वीर' शत्रूणां विनाशयितः। वीर्यवन्' वा 'विश्पते' विशां पाल

यितः' हे अग्ने' 'नवस्य' इदानीं क्रियमाणत्वान्नूतनं 'मे' मदीयं

---

१०६ नास्तीयमुत्तरार्चिके। ७४

[ अगस्त्यऋषिः, राक्षोघ्नम्।

मन्त्रराशिः स्यात् स सर्वसाधारणत्वाद् बहुदेवतो वैश्वदेव. स्यात्'-इति देवराजयज्वा (७,१,४)। आग्नेयत्वमप्यस्याधाहृतम्, अग्नावेव सर्वदेवताभिवादात्, अत उक्तं निरुक्त-भाष्य-कारेण—'अग्निर्वै सर्वा देवता इति च विज्ञायते, अग्निर्वै देवतानां भूयिष्ठ भाक्तिति च, अपरिग्रहं च प्रधानमासीति न्यायः, तस्मादाग्नेय स मन्त्र स्यात्' इति (७,१,४)।

'स्तोमस्य' स्तोत्र-शस्त्रादिकं 'श्रुष्टी' श्रुत्वा 'मायिनः' मायाविनः रक्षसः कर्म-विघ्न-कारिणः, राक्षसान् 'तपसा' तापकेन तेजसा 'निदह' नितरां भस्मीकुरु(१)। [श्रुष्टीति "स्नात्व्यादयश्च(७,१, ३८)"-इति निपातितः(२); वकार-लोपश्छांदसः(३)]॥

"तपसा"-तपुषा-इति च पाठौ॥ १०॥ १०६

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य एकादश-खण्डः॥११॥

---

अथ द्वादश-खण्डे—

सेयं प्रथमा।

प्रयोगोभार्गवऋषिः *।

१ २ २ र ३ १ २ ३ २ ३ १ २
प्र मꣳहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे।
३ १ २ ३ २
उप स्तुतासो अग्नये॥ १॥ १०७

---

* "सौमरेरार्षम्"-इति वि०।

१०७ उत्तरार्च्चिकस्य २,२,१७,१।

(१)—'मे' 'नवस्य' 'स्तोमस्य' बलेन 'वीर!' 'विश्पते!' 'अग्ने!' 'मायिनः' 'रक्षसः' 'तपसा' 'श्रुष्टी' क्षिप्रम् 'नि दह'—इति वि०-निष्पन्नोऽन्वयः; इह मते न विभक्ति-व्यत्ययः।

(२)—अनेन हि सूत्रेण आकारस्य ईत्वमात्रं विधीयते।

(३)—यकारागमश्च तथैव।

५ ३ ४र ५ २१ १र
I प्र मꣳहा३इ ष्ठाय गायता। ऋताव्ने२। बृहते
२ ४ ५ २ १ २ २ १
शूक्रा३शो३। चा२३४इषाइ। उपाश्रौ३हो। स्तोता
२ ४ २ ५ २
सो३आ३। ग्रा३४५योई६हाइ॥ २६॥

४ ५ र ४ ४ २ १
II प्रमꣳहिष्ठाय। गा५यता। ऋता२१व्ने२। बृहा
२ १र २ १
ता१इशू२। क्र। शोचा२३इषाइ। उप। स्तुयतौ२।
१ ५ २ २ १ ५ ४ ५ ६
ऊवाइ। हो३वा३। सओ२३४वा। ग्रा५या६हाइ॥ २७॥

३ ४५र र २ २ ५ १ र र
III प्र मꣳहिष्ठाय गा। इया३४३ई३४या। यतऋताव्ने
र २ १ १ १२
बृहतेशुक्रशो२। हौ२। हुवा२इ। चाइषा२इ। उपा
१ २ १ २र१ २ १
३होइ। स्तुता३हो। सोअग्रा२३या३४३इ। ओ२३४
६
५। इ। डा॥ २८॥

---

I, II प्रमꣳहिष्ठीये, इन्द्रऋषिः।

III प्रमꣳहिष्ठीयम् आसितं वा, इन्द्रो वसिष्ठो वा ऋषिः।

अथ द्वितीया।

द्वयोः सौभरिर्ऋषिः *।

१२ २र३ २ ३ १ २ ३ १ २ ३ १ २
प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः।

४ ५ २ २ ४ ५ १ २ २
IY प्र मꣳहिष्ठाय गायता। प्र मꣳहिष्ठा वा। यागायत।
१ २ २र ४ ५र २ २ र
ऋता(२३न्वा३४इ। बृहतेशुक्रशो। चा३इषाइ। उपौ-
र २ २र २ २ १
होवा३हाइ। स्तुतौहोवा३हा३। सओ२३४५ई। डा-
६
॥ २८ ॥ १०७

हे 'उपस्तुतासः' (१) हे उपस्तोतारः! यूयं 'मंहिष्ठाय'(२) दातृतमाय 'ऋतावे'(३) यज्ञवते सत्यवते वा 'बृहते' महते 'शुक्र-शोचिषे' दीप्त-तेजसे 'अग्नये' 'प्र गायत' स्तोत्रं पठत(४)॥१॥ १०७

---

* "सोभरिः"-इति वि० पाठः।

IY प्रमꣳहिष्ठीयम्, इन्द्रऋषिः।

(१)—कर्त्तरि तृजर्थे क्तः। 'उपगम्य ये स्तुवन्ति'-इत्यादि वि०।

(२)—मंहतिर्दान-कर्मा, निघण्टौ तृतीयाध्यायीय-विंशतितम खण्डे पाठात्। तस्मात् अपि "तुश्छन्दसि (५,३,५९)"-इतीष्ठनि रूपम्।

(३)—"मतौ (६,३,१३१)"-इति योग-विभागादकारस्य दीर्घः।

(४)—अपि 'स्तुताशो अग्नये' इति (६,१,११५) प्रकृतिभावे रूपम्।

२ १२ १　२ १र　२र
यस्य त्वꣳ सख्यमाविथ॥ २ ॥ १०८

१ २　२　१ २ २
। प्रासो३हाइ। आग्ने३हाइ। तवा३१ओवा२३।
२　५　२ १२र २　१र २　१ २
तो२३४भीः। सुवीराभिस्तरतिवाजकर्मभिः। यस्या३-
२　१　४ ५ ४　५
हाइ। त्वा३सा२३। ख्यमोवा। वा५इयो६हाइ॥३०॥१०८

हे 'अग्ने'! 'तव' 'ऊतिभिः' रक्षाभिः 'सः' यजमानः 'प्र तरति' प्रवर्द्धते। ऊतयो विशेष्यन्ते—'सुवीराभिः' शोभन वीराः पुत्रादयो यासु, ताभिस्तथोक्ताभिः 'वाजकर्मभिः' वाजानामन्नानां बलानां वा कर्म रक्षणं यासु, तादृशीभिः। हे अग्ने! 'त्वं' 'यस्य' यजमानस्य 'सख्यं' सखित्वं मित्रत्वम् 'आविथ'(१) प्राप्नोषीत्यर्थः, स प्र तरतीति पूर्वेणान्वयः॥

"तरति वाजकर्मभिः"-"तिरते वाजभर्मभिः"-इति च पाठौ। "आविथ"-"आवरे"-इति च॥ २ ॥ १०८

---

१०८ उत्तरार्चिकस्य ८,२,२,१।

। वाजभृद् वा वाजाभृद् वा वाजाभर्मीयं वा, भरद्वाजऋषिः।

(१)—"छन्दसि लुङ्-लङ्-लिटः (३,४,६)"-इति काल सामान्ये लिट्।

अथ तृतीया।

१ २ ३क २र २ १ २ ३ १ २ ३ १ २
तं गूर्द्धया स्वर्णरं देवासो देवमरतिं दधन्विरे।
३ २ ३ १ २
देवत्रा हव्यमूहिषे ॥ ३ ॥ १०९

५ ४ १ ४ ५ ५ ४ ५ २र १र र र १
I तं गूर्द्धा३या सुवर्णरोवा। देवासो देवमरा२ता
७ ५ ४ ५ १ ३ ५
इन्दधावा। ग्रा५यो६हाइ२३। हो। न्वा२३४इराइ।
२र १र ५ २ १ ३ ५र र ३
देवत्राह। व्यम३हा३। हा२इषा२३४ओहोवा। ऊ
१ १ १ १ ८
२३४५ ॥ ३१ ॥

५ र र ४ ५ २र १र ५र १ २ ३ २ १
II तं गूर्द्धयासुवर्णाराम्। देवासोदाइ। व मरता२३
२ ३ २ २ ५ २र १
इम्। दधन्वउरा। वा३। दे२३४वा। त्राहा२३।
४ ५ ४ ५
व्यमोवा। हा५इषो६हाइ ॥ ३२ ॥

५ र र र ४ ५ १र ३ ५ १
I,II तं गूर्द्धयास्वौहोर्णाराम्। देवा२सो२३४दे। वम-

---

१०९ उत्तरार्चिकस्य ८,२,११,१।

I,II,III इमानि त्रीणि सौभराणि।

१ ५ १ ५ २ १

रता२इम्। दा२३४धा। न्वा२३४इराइ। चाहो२३४

५ १र १ ५ १२ ४ १ ११११

हा। देवा२न्वा२३४हा। व्यमू३हा५इ। चा२३४५

५

॥ ३२ ॥ १०९

हे 'स्तोतः'! 'तं' प्रसिद्धमग्निं 'गूर्द्धय' स्तुहि[गूर्धयतिः स्तुतिकर्मा (नि०३,१४,५] कीदृशम्—'स्वर्णरं' सर्वस्य नेतारं सर्वैः यजमानैः कर्मादौ नेतव्यं वा। अथवा, स्वर्गं प्रति हविषां नेतारम्(१)। 'देवासः' दीव्यन्ति स्तुवन्तीति(२) देवाऋत्विजः 'देवं' दानादि-गुण-युक्तम् अर्यं स्वामिनं, यद्वा, अभिप्राप्तव्यं(३) 'दधन्विरे' [धन्वन्ति गच्छन्ति] स्तुत्यादिभिः प्राप्नुवन्ति [धविर्गत्यर्थः(४)] प्राप्य च तेनाग्निना 'देवता' देवान् [देवमनुष्येत्यादिना(५)) द्वियीयार्थे ता

(१)—'स्वः', 'नरम्'—इति पृथक् पद-द्वयमिति पद-कृत-पाठात् स्वर-श्रुतेश्च स्पष्टमवगम्यते ; विवरणकारश्चैवमेव व्याचष्टे, तद्यथा,—'स्वः सुप्रोपमिदं द्रष्टव्यम्, स्वरिव आदित्यमिवेत्यर्थः, नरं नराकारम्' इति। स्वः, पृश्निः—इत्यादि नाम-षट्कं दिव आदित्यस्य च साधारणम्, निरुक्त-द्वितीयस्य तृतीय-षोडशं हि तत्र प्रमाणम्। क्वचि स्वर्णरमिति सत्वमसमानपदेऽपि छान्दसम्।

(२)—दीव्यतेः स्तुतिरेकोऽर्थः स्पष्टोऽस्ति गण-पाठादौ।

(३)—'अर्यतिम् अलमतिम्, पर्याप्त मतिं सर्वज्ञमित्यर्थः ; अथवा देवान् यजमानांश्च प्रति गन्तारम्'-इति वि०।

(४)—निघण्टोर्द्वितीय-चतुर्दशे पठितत्वात्। 'दधन्विरे, धारितवन्तः, स्थापितवन्तः'-इति वि०।

(५) —"देव-मनुष्य पुरुष-पुरु-मर्त्येभ्यः।"

अथ चतुर्थी।

प्रयोगोभार्गवऋषिः, सोभरिः काण्वो वा *।

१ २ १ १ २ ३ १ २ ३ १ १ २ ३ २ ३ २
मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः।
३ १ २ ३ २
यः सुहोता स्वध्वरः॥ ४ ॥ ११०

४ ५ २ ५ र १ ० २ १ २
।मा। नाः। हृणो३थाअतिथो३म्। वासूरा२३४
५ २ र र २ र र २ २ १
ग्नीः। पुरौहोवा३हाइ। प्रशौहोवा३हा३। स्तओ२३
५ ४ ५ ५
४वा। आ५इषो६हाइ॥ ३४ ॥ ११०

प्रत्ययः] 'हव्यं' चरु-पुरोडाशादि-लक्षणं हविः 'आ ऊहिषे' अभि प्रापय [वहेर्लिटि(६) यजादित्वात् सम्प्रसारणम्(७)॥ ३ ॥ १०९

---

* 'सोभरेरार्षम्'-इत्येव वि०।

११० नास्तीयमुत्तरार्चिके। ७५

(६)—"लिङर्थे लेट (३.४.७)"। लिङर्थश्चात्र प्रार्थनं, लोडर्थश्च सम्भवेति भाष्यकृता अभिप्रापयेति लोटोरूपं प्रतिपदं दत्तम।

(७)—"वचि स्वपि यजादीनां किति (६.१.१५)"।

४र ५ १ र र ३ ४ ५ २
॥ मानोह्वाउ। ह्वा२३४। णीथाअतिथिम्। वा
२ ५ २१र २ १ २ १र २ १ र
सूरा२३४ग्राइः। पुरौह्वहोइ। प्रशौह्वहो। स्ता२३४णषाः।
५र ५ ४ ७
एह्वियाइ्हा। होपुइ। डा॥ ३५॥ ११०

हे ऋत्विक्-सङ्घ! 'नः' अस्मत्-सम्बन्धि यज्ञे 'अतिथिम्' अतिथिवत् प्रियम् अग्निम् 'मा हृणीथाः' मा हर। कमग्निम्? इत्यत-आह—'यः' अग्निः 'सुहोता'(१) सुष्ठु देवानामाह्वाता(२) 'स्वध्वरः' शोभन-यज्ञो भवति 'एषः'(३) अग्निः 'पुरुप्रशस्तः' बहुभिः स्तुतः 'वसुः'(४) वासकश्च भवति [तमिति पूर्वेणान्वयः(५)]॥

"मा हृणीथा अतिथिम्" इति छन्दोगाः, मा हृणीताम तिथिः"-इति बह्वृचाः॥ ४॥ ११०

---

I,II पक्थस्य सौभरस्य सामनी।

(१) पाठ बहुल वचनात (५.१,७४) ह्रः सम्प्रसारणम्।

(२) अन्यत्रापि 'त्वमग्ने यज्ञानां होता' इत्यादौ (ऋ०६,१,१,२) अग्नेर्होतृत्वं श्रूयते। अतएव यास्कः 'अथास्य कर्म, वहनं च हविषामावाहनञ्च देवतानाम्'-इत्यादि(७,२,१.)।

(३)—'इण् गतौ'(भ्वा०प०) इत्यस्येदं रूपम्, गन्ता' इति वि०।

(४)- यद्यपि वसुर्देवविशेषोऽपि श्रूयते परं नेह तस्य ग्रहणम् अग्नेः तस्य च स्थानैक्याभावादसामञ्जस्यात्, अस्ति हि नैरुक्तम 'अग्निः पृथिवीस्थानः'(७,३,१)' इति, 'मध्यस्थाना वसवः'(१२ ४,८)' इत्यादि च।

(५)- यः 'अतिथिम्' अतिथिस्थानीयः, 'वसु' प्रशस्तधनवान् वा, 'पुरुप्रशस्त'

अथ पञ्चमी।

तिसृणां सोभरिर्ऋषिः।

२१ २ ३१र २र ३२ ३ १ २ ३१ २३२
भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः।
३ २ ३१र ३र
भद्रा उत प्रशस्तयः॥ ५॥ १११

४ ३ ५ २ ३ ४र ५ ५ ३ र २र १
। भद्रो४नः। होइ। अग्निराऊताइ६ए। भद्राराताइः।
२१ २ १ ३ ५ २१र २ १
सुभगाभा३। द्रो२ध्वा२३४राः। भद्राऊ२३ता३। प्रा२
४ २ ५ ४
३शा३। स्ता३४५यो६हाइ॥ ३६॥१११

'आहुतः' हविर्भिस्तर्पितोऽग्निः 'नः' अस्माकं 'भद्रः' कल्याणो भवतु। हे 'सुभग' शोभन-धनाग्ने! 'भद्रा' 'कल्याणी' 'रातिः' दानं च अस्माकं भवतु। 'भद्रः' कल्याणः 'अध्वरः' यागश्च भवतु। 'उत' अपिच 'भद्राः' कल्याण्यः 'प्रशस्तयः' प्रशंसाः स्तुतयश्च भवन्तु॥ ५॥ १११

---

१११ उत्तरार्चिकस्य ७,२,१०,१।

। दैवानीकम्, पथो वा पक्थस्य ऋषिः।

बहुभिः स्तोतृभिः स्तुतः, 'सुहोता' 'स्वध्वरः' 'एषः' गन्ता 'अग्निः' त्वम् 'नः' अस्माकमुपरि माहृणीथाः' मा क्रोत्सीः—इत्ययमर्थो वि०-सम्मतः। हृणिर्निघण्टु-द्वितीय-द्वादशे क्रुधकर्मसु, शंसतिश्च निघण्टु-तृतीय-चतुर्दशे पठितो दृश्यते।

अथ षष्ठी ।

१ २    ३ १२ ३ १ २ ३ १ २    ३ २ ३ १ २
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम ।
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥ ६ ॥ ११२

२    ४ २ ४ ५    १ २ १ र र र
। याऽ५जि । ष्ठं त्वा २वा ३वृमहाइ । देवं देवत्रा हो
२ १ २ १ ७ १ ४
ता२३राम् । आमर्त्तियम् । आस्ययाज्ञा२३ । स्या२३सू३ ।
२ ५ ४
क्रा३४५तो६हाइ ॥ ३७ ॥ ११२

हे अग्ने ! 'यजिष्ठं' यष्टृतमं 'त्वा' त्वां 'ववृमहे' वृणीमहे मम भजामहे । कीदृशं त्वाम् ? 'देवत्रा'(१) देवेषु मध्ये 'देवम्' प्रतिशयेन दानादि-गुणम् । 'होतारं' देवानामाह्वातारम् । 'अमर्त्यम्' अविनाशिनम् । 'अस्य' 'यज्ञस्य' यागस्य 'सुक्रतुं' सुष्ठु कर्तारं(२) ॥ ६ ॥ ११२

---

११२ उत्तरार्चिकस्य ६,२,१३,१ ।
I गौतमं साध्यं वा ।

(१)—"निपातस्य च (६,३,१३६)" इति दीर्घः ।

(२)—'यजिष्ठम्, 'देवत्रा' 'देवम्,' 'होतारम, 'अमर्त्यम' 'सुक्रतुम' 'त्वा त्वाम 'ववृमहे' प्रार्थयामहे । 'अस्य' प्रक्रान्तस्य यज्ञस्य परिसमाप्त्यर्थमिति शेषः । अयमर्थो विवरणकृत् सम्मतः ।

अथ सप्तमी।

१ २ ३ १र २र २ ३ २ ३ १ २ ३ १ २ ३ १ २
तदग्ने द्युम्नमाभर यत्सासाहा सदने कञ्चिदत्रिणम्।
३ १र २र ३क २र
मन्युं जनस्य दूढ्यम्॥ ७ ॥११३

४ र र ४ २ १र २ १
। तदग्नेद्यूपुम्नम्। आभरोवा। यत्सासार३हा। स-
१ २ १ २ १
दार३नाइ। कञ्चिदत्रार३इणाम्। मान्युञ्जनस्यदू२३
१ ५ ५र ५ ४ ४
हो। ढार३४याम्। एहियाह्हा। होपुइ। डा॥ ३८ ॥११३

हे 'अग्ने' 'तत्' 'द्युम्नम्' अन्नं यशोवा 'आभर' अस्मभ्यमाहर। 'यत्' यदा 'आसदने' यज्ञ-गृहे वर्त्तमानं कञ्चित् कमपि 'अत्रिणम्' अत्तारं राक्षसादिकं 'सासाह' अत्यर्थमभिभव। तथा 'दूढ्यं'(१) दुर्धियं पाप-बुद्धिं(२) शत्रुं 'जनस्य' 'मन्युं' क्रोधं च अभिभव, तदेति पूर्वत्रान्वयः॥

"दूढ्या"-"दूढ्यम्"-इति च पाठौ॥ ७॥ ११३

---

११३ नास्तोयमुत्तरार्च्चिके। ७६

। संवर्गः, जमदग्निर्ऋषिः।

(१)—"तन्वादीनां छन्दसि बहुलम् (६,४,७७)"-इति वचनात् यणि, छान्दस-रेफ-लोपे च रूपम्।

(२)—'दूढ्यः, दुर्धियः पापधियः'-इति नै० ५.४ २६।

अथाष्टमी।

विश्वमना ऋषिः।

१र २र ३ १ २ ३ १र १र ३ १ २ ३ २
यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे।
२उ ३ १उ ३ १ २
विश्वेदग्निः प्रति रक्षांसि सेधति॥ ८॥ ११४

२ १र ४ ५ १ र २र १ २र १र
। यद्वाऊ२३विश्पतिः शिताः। सुप्रीतोमनुषोविशे।
२ १ २ १ २र ३ र २ १ २ ४ ५
विश्वाइदा२३ग्नीः। प्रतिरक्षा। सिसेधता। औ३होवा।
४
होपइ। डा॥ २८*॥ ११४

इति द्वितीय-दशति॥

'विश्पतिः' विशां पतिः(१) पालयिता 'शितः' हविर्भिस्तीक्ष्णी-

---

११४ नास्तीयमुत्तरार्चिके। ७१

। राक्षोघ्नम्, अगस्त्यऋषिः।

(१)—विडिति मनुष्य नामसु विट् 'मनुष्य-नामान्युत्तराणि पञ्चविंशतिः' इति नैरुक्तम २,३,८ निघण्टौ द्वितीय तृतीये चतुर्थम् पद विशः इति तेषां पतिरीश्वरः।

---

* इति ग्रामे गेय गाने तृतीयस्यार्द्धः प्रपाठकः।

शतः(२) सोग्निः 'सुप्रीतः' सुष्टु प्रीतः सन् 'मनुषः' मनुष्यस्य 'विशे' [विश निवेशने (तु०प०] गृहे 'यद्वै'(३) यदा खलु वर्तते तदा-नीम् 'अग्निः' 'विश्वाइत्' विश्वान्येव(४) तस्य बाधकानि रक्षांसि 'प्रति(५)सिधे धति' हिनस्ति। [षिधु गत्यां(६) भौवादिकः]; 'उ'-प्रसिद्धौ ॥

"विशे" "विशि"-इति च पाठौ ॥ ८ ॥ ११४

इति सायणाचार्य्य विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य द्वादश खण्डः ॥ १२ ॥

---

(२)—'शो तनुकरणे (दि०प०) इत्यस्यैतद्रूपम्, शयतिः संस्कारार्थः, शितः संस्कृत इत्यर्थः'-इति वि० ।

(३)—'वै, उ—द्वावपि पाद-पूरणे।

(४)—विश्वा-इति "सुपां सु लुक् (७,१,३९)"-इत्यादिना आले रूपम्। 'इदिति पादपूरणः-इति वि० ।

(५)—'प्रति शब्दः पाद-पूरणः'-इति वि० ।

(६) —गत्यर्थः सोयमिह हिंसार्थः'

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ १ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिक-मार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-
साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-
प्रकाशे छन्दोव्याख्याने आग्नेय पर्वणि प्रथमोऽध्यायः॥ १ ॥

॥ समाप्तम् आग्नेयं पर्व आग्नेय-काण्डं वा ॥

॥ इति १म पर्व ॥

( सामवेदीय-मन्त्र-भाग-लभ्याः सन्ति यावन्तः अग्नि-देवता मन्त्राः
तावन्तः सर्व्व एवेहैव पर्व्वणि काण्डे वा दृश्यन्ते। )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

## अथ द्वितीयाध्याय आरभ्यते ।

अस्मिन्नध्याये इन्द्रः स्तूयते * ।

---

अथ प्रथमे खण्डे

सेयं प्रथमा ।

शंयुर्बार्हस्पत्यऋषिः † ॥

१ २   ३ १र   २र   ३ २ ३ १ २
तद्वो गाय सुते सचा पुरुहूताय सत्वने ।
२उ   ३ २   ३ १ २
शंयद्गवे न शाकिने ॥ १ ॥ १

---

* इत आरभ्य चतुर्थाध्याय-शेष-पर्य्यन्तमध्याय-त्रयात्मकमैन्द्रं काण्डमैन्द्रं पर्व्व वेत्युच्यते ।

† 'भरद्वाजस्यार्षम्'-इति वि० ।

१ उत्तरार्च्चिकस्य ८.२,४,१ ।१

५ र ४ ५ १ २ २ १ ५

I ओम्। तद्वोहोवा। गायार। सुताइमा२३४चा।

१ २र र १ ५ १ १ २

पुरुहूता। यमात्वा१ना२इ। शंयत्। हा। औ२होइ।

३ ५ १ ३ ५र र २ १ ११११

गा२३४वाइ। ना२गा२३४औहोवा। ए३। किने२३४५

॥ १ ॥

हे "स्तोतारः!" "वः"(१) यूयम् "सुते" अभिषुते सोमे सति "पुरुहूताय" बहुभिर्यजमानैराहूताय "सत्वने" शत्रूणां सादयित्रे [यद्वा धनानां सनित्रे दात्रे (२)] इन्द्राय "तत्" स्तोत्रम् "सचा"(३) सह संहता भूत्वा "गाय" गायत। "यत्" स्तोत्रं "शाकिने"(४) शक्तिमते इन्द्राय "शं" सुखकरं भवति। "गवे न" यथा गवे यवसं(५) सुखकरं तद्वदित्यर्थः(६) ॥ १ ॥ १

(१) 'द्वितीया' बहुवचनमिदं प्रथमैकवचनस्य स्थाने 'यूयम्' इति. "अन्तरात्मन् एतां प्रेष, हे मदीयान्तरात्मन्" इति च वि०।

(२) 'सत्वने' षणु दाने इत्यस्मादेतद्रूपम्, दात्रे सनित्रे-इति वि०।

(३) 'सचा सह इत्यर्थः' इत्यादि नैरुक्तम् ५.१।

(४) शकनं शाकः शक्तिः।

(५) यवसम् अमत्र घासं तृणम्।

(६) विवरणमते 'शाकिने'-'गवे' इति विशेष्यविशेषणम्। तथाच यथा कश्चित् कृषीवलः शक्तिमते वृषभाय सुखकराः मतीकवारयति, तद्वदिन्द्रस्य सुखकरं स्तोत्रमुच्चारयेत्यर्थः सम्पन्नः।

५ र र २ १ र १
II तद्वोगाया। सुताइसचा३। पूरु२३हूता३४।
१र २ १ २ ३ ५ ११ २
द्वाद्वो३। यासत्वा२३४नाइ। शंयद्गा२३वे। नशौ२।
१ ५ ४ ५
चौ२। ऊवो२३४। वा। का५इनो६द्वाइ॥ २॥

५ र र र ५ २ र १र १र १
III तद्वोगायसुतेसचा६ए। पुरुहूतायसत्वने। पुरु।
र १र १ ७ २ ५ २ ३ ५
हूता। यासत्वा२३ना३४इ। शंयत्। गौवाओ२३४वा।
१ ४ २ ५
ना२३शा३। का३४५इनो६द्वाइ॥ ३॥

५ र र र ५ २ र१र
IV तद्वोगायसुतेसचा६ए। पुरुहूतायसत्वनाइ। शं-
२ २ १ १ ३
यद्गा२३वे। ऐ२द्वो१आ२३इद्वो। नशा२३। का२इना-
५र र ३ ३११११
२३४औहोवा। ई२३४५॥ ४॥१

I,II,III,IV "रौद्रे द्वे मार्गीयवे द्वे, अपि वा मार्गीयवं च रौद्रे च मार्गीयवं च, सर्व्वाणि वा रौद्राणि सर्व्वाणि वा मार्गीयवाणि। इत्यार्षेयकम्।

अथ द्वितीया।

सूभकच्चऋषिः *।

१ ० ३ १ २ ३ १ २ ३ १ २ ३ १ २

यस्ते नूनꣳ शतक्रतविन्द्र द्युम्नितमो मदः।

१ २ ३ १२ ३२

तेन नूनं मदेमदेः ॥ २ ॥ २

५ र र ५ १ र १

। यस्तेनूनापू ꣳ शतक्रताउ। इन्द्रद्युम्नितमोमा २दाः।

२र १ र २ १ ५ २ १ १ १ १

तेननूना२३म्मा। दाइमा३उवा३। दे२३४५ः॥ ५ ॥ २

अत्र सोमः स्तूयते—

हे "शतक्रतो"-शतविध प्रज्ञान (१) हे "इन्द्र" (२)

---

* 'शुतकक्षस्यार्षम्' इति वि०।

। आभ्रम्।

(१)—'क्रतुरिति निघण्टौ तृतीये नवमं पञ्चमं पदम्। शतमिति बहुनाम (नि०३,१,१०), क्रतुरपि कर्म नाम (नि०२,१,११) शत क्रतवो यस्य स शतक्रतुः, तस्य सम्बोधनं शतक्रतो 'बहुकर्मन्' इति वि०।

(२)—इन्द्रः अन्तरीक्षस्थ-देवः, "यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः" इति ऋक्। स च वायुरेव "वायुर्वेन्द्रो वा अन्तरिक्ष-स्थानः (७,७,१)"-इति हि नैरुक्तम्, "वायुरिन्द्रश्चैक एव यथा स्तनः कः"-इति तद्-भाष्यम्। "इन्द्रः इरां दृणातीति वा इरां ददा

अथ तृतीया ।

हर्यतः प्रगाथः* ।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
गाव उपवदावटे मही यज्ञस्य रप्सुदा ।

"द्युम्नितमः"(३) यशस्वितमः "यः मदः" [माद्यत्यनेनेति मदः सोमः] यः सोमः "नूनं" पुरा "ते" त्वदर्थम् अस्माभिरभिषुतोऽस्ति । "तेन" अस्माभिर्दीयमानेन सोमेन "नूनम्" इदानीम् "मदे"(४) तत्पानेन मदे । तत्र सञ्जाते सति अस्मानपि "मदेः" धनादिदानेन त्वं मादय [ मदी हर्षे, अन्तर्भावितण्यर्थः] "छन्दसि बहुलम्"-इति शप्(५) ॥ २ ॥ २

* 'हर्यतस्यार्षम्'-इति वि० । प्रग्रथनं प्रगाथः ।

नीति वेरां दधातीति वेरां दारयतइति वेरां धारयतइति वेन्धे भूतानीति वा तद् यदेनं प्राणैः समैन्धन् तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदं करणादित्याग्रायण इदंदर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इन्दञ्छत्रूणां दारयिता वा द्रावयिता वा यज्ञानाम्'-इत्यादि नैरुक्तम् १०.१,८। "इरा शब्दे उपपदे दृणातेर्दधातेर्दारयतेर्धारयतेर्वा"-इत्यादि, "इरा अन्नं तेन सम्बन्धाद्वा तद्धेतु हेतुकं बलं लक्ष्यते, तेन बल-लक्षित लक्षणया तदाधार भूतो मेघः"-इत्यादि च देवराजः ॥

(३) 'द्युम्नं द्योतते, तेन दीप्त्यर्थस्य, अतिशयेन दीप्तितमः'-इति वि० ।

(४) 'मदे सप्तम्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्, मदेन ; 'मदे' माद्यस्वेत्यर्थः' इति वि० ।

(५) 'छन्दसि शायजपि (३.१.८४)'-इतश्छन्दसि पदं 'व्यत्ययो बहुलम् (३,१.८५)' इतो बहुलपदञ्च सङ्कलय्य छन्दसि बहुलमिति वचनम् । वस्तुतोऽयमुपग्रह-व्यत्ययः ।

३ १र २र  १ १ १
उभा कर्णा हिरण्यया ॥ २ ॥३

४र ५  ४ ५  २  १  १ ३
I गावः। ए गावाः। उपव। दा३। वा२दा
५र र  १ ५ १ २ ५ ३ १
२३औहोवा। वा२३४टे। महीया२३४ज्ञा। स्यरा३।
१ १ ५र र  १ ५ २ १ ५
स्या२रा२३४औहोवा। रसूर३४दा। उभाका२३४र्णा।
३ २ १ ३ ५र र ३ ५
हिरा३। हा२इरा२३४औहोवा। ण्या२३४या॥ ६ ॥

हे "गावः" घर्मदुघाः। (?) यूयम् "अवटे"(१) अवटं महावीरं(२) प्रति "उप वद" उपावत [वर्णव्यत्ययः (२,४,९८)] उप गच्छत। "यज्ञस्य" घर्मयागस्य(?) साधनभूते "रप्सुदा"(३) रप्सुदे आ रिप्साः फलदे [रिप्सारश्विनोर्दातव्ये वा; यद्वा रपणं शब्दनं रप् मन्त्रः, तेन सुदातव्ये; अथवा पद चरणे (भ्वा० आ०), रपा मन्त्रेण चारणीये दोहनीये, ईदृशे] गवाजयोः पयसी "मही" महती(४) बहुले अपेक्षिते, अत उपावत [गा शब्दो

३ उत्तरार्चिकस्य ७,३,१६,१।२

(१) -ओ-भावे (७,३,२९) पररूपे (६,१,९०) च रूपमिदम्।
(२) -"घर्मयागे प्रधानभूत महावीर नामकमत्रिम्" इति वि०।
(३)-,(४) द्विवचनार्थे एकवचनम् (१,१,८५)।

२ ३ ५ २ १ २ ३
॥ ओइ गा२३४वाः। उपवा३दा। वाटाओ२३४-

५ २१र २ १ २ २ ३ ५ १ ५
वा। मह्वोयज्ञस्यरपसुदा३। ओउ२३४भा। कार्णा

५ २ १ ११११
ओ२३४वा। हिरण्यया२३४५॥ ७॥ ३

अजाया अप्युपलक्षकः, अजा-पयसोऽपि महावीरे आसेचनीय-त्वात्]। अपिच अस्य महावीरस्य "उभा"(५) "उभौ" कर्णा(६) कर्णस्थानीयौ द्वौ रुक्मौ "हिरण्यया"(७) हिरण्मयौ सुवर्ण-रजत-मयावित्यर्थः(८)॥

"उपवदावटे"-इति छन्दोगाः, "उपावतावतम्"-इति बह्वृचाः॥ ३॥ ३

।,।। ऐटते।

(५), (६), सुपां सुलुगित्यादिना (७,१,३९) आलम्।

(७) -"ऋत्व्य वास्त्व्य-वास्त्व-माध्वी-हिरण्ययानि छन्दसि"। ६,४,१७५।

(८) 'गावः' हे महीया वाचः! 'अवटे अवट मेघम् 'मही' महत्यौ च द्यावापृथिव्यौ 'उप' उपगम्य 'वद' वदत। कीदृशं मेघम्? 'उभा कर्णा हिरण्यया' उभौ कर्णौ हिरण्मयौ यस्य। कीदृश्यौ द्यावापृथिव्यौ? 'यज्ञस्य रपसुदा' यज्ञस्य रूपदे। अय मर्थो विवरण-कृतम्मतः।

अथ चतुर्थी ।

द्वयोः श्रुतकक्षनाम ऋषिः ।

३ १ २　　३ १ २ ३ २ ३ १ २
अरमश्वाय गायत श्रुतकक्षारङ्गवे ।
३ १ २ ३ १ २
अरमिन्द्रस्य धाम्ने ॥ ४ ॥ ४

३ २　　र　　५र　　५　　१　१
। अरा३४म् । अश्वाय । गाया६ता । श्रुतक ।
र १ २　　३　　५　　२ २　　१
क्षाराङ्गावाइ । आर२३४राम् । क्षा३क्षाइ । इ । द्रास्या-
२　　१　　२　　२　　३　　५र र　　३
२३धा । ऊम्मायेर । म्नो । या२३४औहोवा । ई२३
५
४नो ॥ ८ ॥

४ ५ ४ ५र र र　　४ ५　१ र २　　१ २
॥ अरमश्वायगायता । रमश्वोवा । यागायत । श्रुत-
१　　२ २　　२　　४　　५　१
क । क्षार३ । क्षा३क्षा३इ । आरा२ङ्गा२३४वाइ । आ

श्रुतकक्षऋषिरात्मानमेव सम्बोधयति,(१) हे 'श्रुतकक्ष' आत्मन् !

[,] औतकक्षे ।

(१) नेदं वि० सम्मतम्, तत्र हि "हे 'श्रुतकक्ष' श्रुतकक्षस्य मम पुत्र '-इति ।

अथ पञ्चमी।

श्रुतकक्षऋषिः।

१र २र ३ २ ३ २ ३ १ २
तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे।

१र २र ३ १ २
स वृषा वृषभो भुवत्॥ ५॥ ५

१ २ २ २ १ २र १ २ ४ ५ ४
रमिन्द्रा३। हा३हा। स्थाधाम्ना। औ३होवा। हो
५इ। डा॥ ८॥ ९

"अरम्" अलं "गायत" [वचन-व्यत्ययः (३,१,८५] गाय गीतिं कुरु। किमर्थमिन्द्रोद्देशेनस्तुतिस्तत्राह—"अश्वाय" इन्द्रेण दीयमानायाश्वाय तदर्थम् "अरम्" अलं गाय इन्द्र-विषयं स्तोत्रं कुरु, तथा "गवे" अलं गाय. "इन्द्रस्य" इन्द्रकर्तृकाय "धाम्ने" गृहाय तदर्थञ्च "अरम्" पर्याप्तं स्तुहि; गृहादिकमिन्द्रः प्रयच्छति, तस्मै गायेति [यद्वा इन्द्रस्येति कर्मणि षष्ठी, गवादिलाभार्थमिन्द्रं स्तुहि॥

"श्रुतकक्षा"—"श्रुतकक्षः"-इति च पाठौ॥ ४॥ ४

यजमाना आहुः—"तम्" पूर्वोक्तलक्षणम् "इन्द्रम्" वाजया-

५ उत्तरार्चिकस्य ५,१,१०,१। ३

२१　०४र ५र　१र२र　१२
। तमिन्द्रा२३वाजयामसि। माहेवृत्रा। यहान्ता-
१२　२१ ५ ४ ५
१वे२। सवार्षा१वा२३। षभो२३४वा। भूपुवो६हा
इ॥ १०॥

२१　०४र र ५　१र२र　१
।। तमिन्द्रा२३वाजयामसिहाउ। माहेवृत्रा। यहा
२　१२२　२१२　१२
न्ता१वे२३। होवा३हाइ। सवार्षा१वा२३। होवा३
२　१　१० ५र र　२　२र१६
हा। षभो२३। भू२वा२३४औहोवा। ए३। दावस्व-
१११९
२३४५॥ ११॥

मसि (१) सोमेन स्तुतिभिर्वाजयामः वाजवन्तं कुर्मः, किमर्थम्? "महे" (२) महान्तम् "वृत्राय" (३) अपावरकं वृत्रासुरं "हन्तवे" (४) हन्तुम्, सोमपानेन मत्तः स्तुतिभिर्वा स्तुतः सन्, वृत्रहत्यायाञ्च,

। तन्वः पार्थऋषिः।

।। तन्वः पार्थो वा दावसगाङ्गिरसो वा ऋषिः।

(१) 'वाजयति' इति निघण्टौ, तृतीयचतुर्दशे पर्यन्तनाम पदम्। "इदन्तो मसि (७,१,४६।)" इति मसइगागमे रूपम्।

(२). (३) द्वितीयार्थे चतुर्थी (२,३,६९)।

(४) "तुमर्थे सेसेन् (३,४,९)" इति तवेन् प्रत्ययः।

५ र र ५ १ २ १ २र
III तमिन्द्रं वाजयामसीᳮए। महाउहाइ। वृत्राउ-
१ ७ १ २ १ १ २ र
याहन्तवे२। ओ२। ई२३या। ओमोवा। सहे-
१ १ १ २ २ १ २ १
वार्षा२। ओ२। ई२३या। ओमोवा। वृष। भो२।
२ ५र र २ ५
या२३४औहोवा। भू२३४वात् ॥ १२ ॥

२र र १ २ र ४५
IV औहोइऊवा३होइ। तमिन्द्रं वाजया३मसी।
२र र १ २र ४ २३५र ५र र
ओहोइऊवा३होइ। महेवृत्रा३या३हन्तवे। औहोइ
१ २ २३ ५ २१र२ १ २
ऊवा३होइ। मवार्षा२३४वृ। षभोभुवत्। इडा२३भा
४ ५ ४ ५
३। एहीडा। होᳮ५इ। डा ॥ १३ ॥५

[वाजयामसि वाजवन्तं करोतीत्यर्थे तत् करोतीति(५)णिच्, 'णावि-
ष्ठवत्(६)'-इति णेरिष्ठवद्भावात् 'टेः' (६,४,१५५)-इति टिलोपः,

III वसिष्ठऋषिः, निवेष्यो नाम।
IV वसिष्ठऋषिः इडा वा ऋषयः, निवेष्यः संचारो नाम।

(५)—"तत् करोति तदाचष्टे"-इति गणसूत्रम (३,१,२५)।
(६)—"प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च"-इति ग०(३,१,२५)।

अथ षष्ठी।

इन्द्रमातरोदेवजामयऋषिकाः।

१ २ ३ २ ३ २ ३ १ २ ३ १र २र
त्वमिन्द्र बलादधि सहसो जातओजसः।
१र २र ३ १र २र
त्वꣳसन् वृषन् वृषेदसि॥ ६ ॥६

५र २ १ २ २ १
। हाउत्वमिन्द्रा। बलादधि। हा३उहाउ। सह
२र र १ २ २ २ २ १ २
सोजा। ताओ१जमा३ः। हा३उहाउ। त्वाꣳसन्वृषा
२ २ १ ३ ३ ५र र
३न्। हा३उहाउ। वृषाये३त्। आ२सा२३४औहो
२
वा। वृषे१॥ १४॥

'विन्मतोर्लुक्(५,३,६५)'-इति वचनान्मतुपो लुक्] "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता(५) "भुवद्"(६) भवतु॥ ५॥ ५

हे "इन्द्र!" "त्वम् "सहसः"(१) परेषामभिभावकाद्

(५)-'वर्षणाद् वृषभः' इति नै०९,२२।

(६)—लेटोरूपम्।

(१)-'षह मर्षणे, छन्दस्यभिभवार्थे', असुन्'-इति देवराजयज्वा।

५ र ५ १ २र र १ २ २
II। त्वमिन्द्रबलादधोई्ए। सहसोजा। ताओ१जसः।

३ २ १ २ २ ३ ५ १ २ ३ २ १
इयाइहोइ। इयायो२३४वा। त्वा॰सन्नृषन्। इयाइहो

३ २ २ ५ २ १ २ १ ३ ५र र
इ। इयायो२३४वा। वृषायेइत्। आ२मा२३४औहो

२
वा। महे१॥ १५॥

४ ५ ४ ५र ४ ५ ४ ५ ४ १ १र
III। त्वमिन्द्रबलादधिसहसाः। जाता २ः। ओजमा

४ ५र ४ १ २ ४ ५र ४
२३४ः। इहोइहा। त्वा॰सन्नृषा३४न्। इहोइहा।

२ १ २ १ ३ ५र र ३ ५
वृषायेइत्। आ२मा२३४औहोवा। ई२३४हा॥ १६॥ ६

"बलात्" "अधि जातः" असि(२) [अधिः पञ्चम्यर्थानुवादकः। वृत्रादि बध हेतु भूताद् बलादितोऽस्त्वं प्रख्यातो भवसीत्यर्थः] अपिच "ओजसः" ओजोनाम बल-हेतुः हृदय-गतं धैर्य्यं, तस्मा-

I,II,III ग्राम्यातानि त्रीणि।

(२) 'बलस्य त्वयि दृश्यमानत्वात् कारणानुविधायित्वस्य कार्य्याणामिष्यमाण-त्वात्'-इति वि॰।

अथ सप्तमी।

गौषूक्त्यश्वसूक्तिनौ ऋषी ऋचस्य(१)।

२ ३१र २र  १२३ १ १ २
यज्ञ इन्द्रमवर्द्धयद्भूमिं व्यवर्त्तयत्।
३  १ २ ३ २ ३ २
चक्राण ओपशन्दिवि॥ ७॥ ७

५  ५ २ १र  १  ७
। यज्ञइन्द्रमवर्द्धा६यात्। यद्भूमिम्। व्या। व्यवा-
३ ५ २ ५ ३ ५ १ २ १
२र्त्ता२३४यात्। चा२३४क्रा। णा२३४ओ। पाशन्दिवि।
२ ३र २ १  १ ३ ५र र ३ ५
चक्राणओ२३। पा२शा२३४औहोवा। दी२३४वो॥१७॥ ७

इपि त्वं जातोऽसि(३)। हे "वृषन्" वर्षितः! "मन्" अतः
"त्वम्" "वृषा इत् असि" कामानां वर्षितैव भवसि(४)॥ ६॥ ६

"यज्ञः" यजमानैरनुष्ठीयमानो यागः "इन्द्र" देवम् "अवर्द्ध-

---

(१) --अस्या ऋचः, उत्तरस्या इत्यर्थः। ऋचस्येति म-यकारपाठोऽयुक्तः।

७ उत्तरार्च्चिकस्य ८,१,६,१। ४

। इन्द्राण्याः साम।

(३) --ओजसइति पञ्चम्यन्तं व्याख्यातं विवरणकृता। तथाच 'ओजसः पर कीयस्य बलस्य 'सहसः' अभिभावुकात 'बलात्' 'अधि जातः'-इति वि०।

(४) --'इदिति पाद पूरणः'-इति वि०।

अथ अष्टमी।

१ २ ३ २उ ३ १र २र ३ २ ३ २ ३ २

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्।

३ २ ३ १ २

स्तोता मे गोसखा स्यात्॥ ८॥८

यत्'' [श्रूयते हि—'इन्द्र इदं हविरजुषतावीवृधत महोज्यायो कृतः'-इति] स इन्द्रः "यत्"(१) यस्मात् "भूमिम्" पृथिवीं (नि०१,१,१८) "व्यवर्तयत्" वृष्ट्यादि-प्रदानेन विशेषेण वर्त्तमानामकरोत्। किङ्कुर्वन्? "दिवि" अन्तरिक्षे मेघम् "ओपशं" उपेत्य शयानं(२) "चक्राणः"(३) कुर्वन् [यद्वा आत्मनि समवेतो वीर्यविशेषः ओपशः, तमन्तरिक्षे कुर्वन्॥ ७॥ ७

हे "इन्द्र!" "यथा" "त्वम्" "एकइत्" एकएव केवलः "वस्वः"(१) वसुनः धनस्य ईशिषे, एवम् "अहम्" अपि "यद्" यदि "ईशीय" ऐश्वर्य्य-युक्तः स्याम्!! तदानीं "मे" मम

---

८ उत्तरार्च्चिकस्य ८,२,८,१। ५

(१)—'नपुंसकलिङ्गमिदं पुंलिङ्गस्थाने द्रष्टव्यम्। 'यः' 'भूमिम्' 'पृथिवीम्' 'व्यवर्त्तयत्' विवर्त्तयति विवर्त्तितवान् वा अन्यरूपां करोतीत्यर्थः'-इति वि०।

(२)—'गर्जित-लक्षण शब्दं कुर्वन्'-इति वि०।

(३)—"लिटः कानज्वा (३,२,१०६)"।

(१)—अत्ययेन पुंलिङ्गः (२.४,९८), "जसादिषु छन्दसि वा वचनम् (७.३,१११)" इति कात्यायन-वचनात् गुणाभावश्च।

४ ५ र ४ ५र　४र　५　४　०र
I यदिन्द्राहं यथौ। हौहोवाहाइ। तुवाम्। ई-
१र　२　१　१　२　१　२र १र
शीयवस्वऔ२। ऊवाइ। ऊवाये। काई२त्। स्तोता
रर २　१　१　२　१　१
येगोमखौ२। ऊवाइ। ऊवाये। माया२३त्। हो-
३　५र र　२ १ र २ ३ १ १ १ १
२वा२३४औहोवा। अग्निराऊता२३४५ः॥ १८॥

२ ३र ४ ५　५ र　२ १　१
II आऔहोवाहाइ। यदिन्द्राहाम्। यथा। त्वम्।
२र र ३र २　१ र २　२　२र र ३र २
ऐहोयैहो१। आइशीयवस्वआइकइत्। ऐहोयैहो१।
१　१　२ १　१ ३
आ२इ। स्तोता२माइगो२। सखा२३। मा२या२३-
५र र　२ १ र २ ३ १ १ १ १
४औहोवा। प्रुक्रआऊता२३४५ः॥ १८॥ ८

"स्तोता" "गोमखा स्यात्" गोभिः सहितो भवेत् [ईश्वरस्य तव स्तोता कुतो हेतोर्गो सहितो न भवेत्! अपितु भवेदेवेत्यभि-प्रायः॥ ८॥ ८

I, गोषूक्तम्।
II अश्वसूक्तम्।

अथ नवमी।

मेधातिथिराङ्गिरस ऋषिः।

१२ ३ १२ ३ १ २ ३ १२
पन्यं पन्यमित्सोतार आ धावत मद्याय।
१२ ३२ ३ १२
सोमं वीराय शूराय॥ ८॥ ९

४ ५ ४ ५र ५ १ २ २
। पन्यम्पन्यमित्। सोताइराः। पन्यम्पन्यमित्सो१ता
२ १ २र ३ १ २ ३ ४ ५ १ २र १
इराः। आ। धावत। मदियाया। सोमं वी। रा२३।
३ २ ४
यशूइरा५या६५६॥ २०॥ ९

हे "सोतारः" अभिषोतारोऽध्वर्यवः! "मद्याय" मादयितव्याय "वीराय" विक्रान्ताय "शूराय" शौर्यवते इन्द्राय "पन्यम् पन्यम्(१) इत्" सर्वत्र स्तुत्यमेव "सोमम्" "आ धावत" अभि गमयत प्रयच्छतेत्यर्थः(२)॥ ८॥ ९

९ उत्तरार्चिकस्य ८,२,१,१। ६
। गौरीवीतम्।

(१)—'पनति स्तुत्यर्थः (नि० ३.१४.१६)। 'क्रियासमभिहारे च (८.१.१२)' इति कात्यायनवचनाद् द्विर्वचनम्।

(२)—'नयतेत्यर्थः' इति वि०।

अथ दशमी ।

काण्वः प्रियमेधऋषिः* ।

३१ २ ३२उ ३ २ ३ १ २ ३१ २
इदं वसो सुतमन्धः पिबा सु पूर्णमुदरम् ।
१ २ ३१ २
अनाभयिन् ररिमा ते ॥ १० ॥ १०

५ २१ ० २ १र २ २
I इदंवसाउ । सुतमार३धाः । पिबारसुपू । र्णा-
१ २ ३ २ ३ २ ४ ५ ४
मुदार३रा३४म् । अना३४भया३इन् । ररोवा । मा-
५
पुतोई३वाइ ॥ २१ ॥

हे "वसो" वासयितः ! (१) इन्द्र ! "इदम्" पुरोवर्त्तमानं 'सुतम्" अभिषुतम् "अन्धः" अन्नम्(२) सोमलक्षणम् "पिबा"(३), यथा "उदरम्" त्वदीयं जठरं "सु पूर्णम्" अतिशयेन सम्पूर्णम् भवति तथेत्यर्थः। हे "अनाभयिन्!" [आ समन्तात् बिभेत्याभयी, बिभेतेरौणादिक इनिः, न आभयी अनाभयी तादृश !] हे इन्द्र !

* 'मेधातिथेरार्षम्'-इति त्रि० ।

१० उत्तरार्चिकस्य १,२,८,१ । १

(१)—'प्रशस्तधनवन्' इति वि० ।

(२)—अन्धइति अन्ननामसु प्रथमम् नि० २,७ ।

(३)—'द्व्यचोतः (६.३.१३५)'-इति दीर्घः ।

५ ४ ० २ १र ४ ५ २ १र २ १ २
I I इदा३वसोसुतमन्धाः। पिवासु२३पू३। णमू२दा-

५ १ २ १ ७ २
२३४राम्। आ२३ना। भा२याइन्। ररा२३। हाउ-

१र ३ १ १ १ १
वा३। माते२३४५॥ २२॥

५ र ५ २र ऽर १ ७ २र
I I I इदंवसोसुतमन्धाइ१ए। पिवासुपूर्णामुदरौ। हो-

२ १र र ७ २र २ १ २ २
३वा। पिवासुपूर्णामुदरौ। हो३वा। आनाभा३यीन्।

१ २र १ २ ४ ५ ४
ररीमाता। औ३होवा। हो५इ। डा॥ २३॥ १०

॥ इति तृतीय-दशति ॥

"ते" तुभ्यं त्वदर्थं "ररिमा" (४) उक्तगुणं सोमं दद्मः [रा दाने, छान्दसो लिट् (५)॥ १०॥ १०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य प्रथमः खण्डः॥ १॥

I, II, III गानानि।

(४)—'तिङः (६,१,१३५)'-इति योगविभागाद् दीर्घः।

(५)—'छन्दसि लिट् ३, २, १०५।

अथ द्वितीये खण्डे—

सेयं प्रथमा ।

द्वयोः सूतकक्षः सुतकक्षो वा ऋषिः ।

२उ　३ २　३ १ २　३ १र २र
उद्घेदभि श्रुतामघं वृषभन्नर्यापसम् ।

१ २
अस्तारमेषि सूर्य ॥ १ ॥ ११

४ र ४ ५　१ २ ३　५　२ १ २ १
। उद्घेदभ्योवा । श्रुतामा२३४घाम् । वृषाभन्ना ।

७ ३ ५　१　५ १ २१ १
रियार२पा२३४साम् । आ२स्ता । रा२३मे । षाइस्तूरिया ।

२ ४ ५　४
औ३होवा । होऽ५इ । डा ॥ २४ ॥

अस्मिन् तृचे सूर्यरूपेणेन्द्रस्य स्तुतिः क्रियते —'असौ वा आदित्य इन्द्रः' इति हारिद्रविकम् । हे "सूर्य !" [(१)द्वादशसु भानुषु इन्द्रोऽपि सूर्यात्मना पठितः, तस्मात्] सूर्यात्मक,

---

११ उत्तरार्चिकस्य ६,३,४,१ ।८

।.।। सौपर्णं गरुप्रवेतसं वा ।

(१—ननु 'वायुर्वेन्द्रो वा अन्तरिक्षस्थानः सूर्यो द्युस्थः (७,२,१)' इति नैरुक्तसिद्धान्ते कथमिन्द्रसूर्ययोरैकात्म्यमिति शङ्कां निराकुर्वन्नाह—द्वादशस्वित्यादि । आदित्याश्च द्वादश, तत्र मानम्—'अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः' इत्यादि ताण्ड्य-ब्राह्मणादिकम् २१,२ ।

५ र र ५ ४ ३ ४ ५ १
II उद्वेदभिश्रुतामाईघाम्। वृषभन्नर्या। ऊम्।
२ ५ १ ९ २ र १ २ १ ५
पा२३४साम्। आस्ताउवा। रामाइ। षिह्व२३४वा।
४ ५
रा५योईहाइ॥ २५॥

४ र ५ ४ ५ ४र ५ ४ ५ ४ ५ ४ ३ ४ ५र
III उद्घेदभिश्रुतामघम्। इयइयाहाइ। वृषभन्नर्या।
२ २ १ ५ १ २ २ १ ३
हा३हा३इ। पा२३४माम्। आस्ता३उवा३। रा२मा
५र र २र ७ १ १ १ १
२३४औहोवा। षिह्वरिया२३४५॥ २६॥ ११

सुवीर्य्य, हे इन्द्र! "श्रुतामघम्"(२) सर्व्वदा देयत्वेन विख्यात-धनम्, अतएव "वृषभम्" याचमानानां धन-वर्षितारं "नर्य्यापसम्" [नर-हितं नर्य्यम्] नर-हित-कर्म्माणम् "अस्तारं"(३) दानशौण्डम् औदार्य्यवन्तं एतादृशम् "उदेषि" अभितउदेषि। "इदम्" अवधारणे, त्वमेव तस्य यज्ञे सूर्य्यात्मना उद्गतोऽसि। "घ"-इति प्रसिद्धौ(४)॥ १॥११

III विलम्बसौपर्णं शक्रप्रवेतसं वा।

(२)—"ऋचोऽतः (६.१.१३५)" इति योगभागाद् दीर्घः।

(३)—'अस्तारं, क्षेप्तारं शत्रूणाम्'-इति वि०।

(४)—'घा', 'इत्' द्वावपि पादपूरणौ'-इति वि०।

अथ द्वितीया।

२ ३ १र २र　　३ १ २ ३ १ २

यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य।

३ १ २　３ १ २

सर्वन्तदिन्द्र ते वशे ॥ २ ॥ १२

४　　४　　२ १ र　२ १र　२

। यदद्यका५च्चवृत्रहान्। उदगाअभिद्दरा२३या।

१　१ २ १ २　१　२　५

सार्वा२म्। तादिन्द्रतायेऽ३। ऊम्। वा३४५ओई्हा

इ ॥ २७ ॥ १२

अत्र शौनकः(१)—

"यदद्यकच्चेत्युदिते रवौ स्तुत्वा पुरन्दरम्।
प्रगाननपाहते रिप्रं वश्यं वा कुरुते जगत्"-इति(२) ॥

हे "वृत्रहन्" वृत्रस्य अपामावरकस्य मेघस्य हन्तः! (३) हे

---

। शाकलम् ✝

(१)—आथर्वणशाखाकृत् शौनकः, स्मृतिकारोऽप्यस्ति, शौनकः, स एव स इत्यत्रास्ति संशयः; इह तु कथ्यमानमिदं स्मृतिवचनम्।

(२)—विहितमेतत् सामविधानब्राह्मणे तथाहि "उदिते यदद्यकच्च वृत्रहन्नित्या-कालं स्वस्त्ययनम्"-इति सा० ब्रा० १प्र० ४ख०।

(३ वृत्रइति निघण्टौ प्रथम दशमे मेघनामसु अष्टाविंशतितमम्। 'वृत्रः' वृणोतेराच्छादनार्थात 'स्फायि तञ्चि-सिदि शमिभ्यः रक्' अस्माद् बाहुलकाद् भवति

अथ तृतीया ।

भरद्वाजऋषिः ।

१२　३र　३ १ ३　१ २　३ १ ३ १२
य आ नयत्परावतः सुनीती तुर्वशं यदुम् ।
३ २ ३ २ ३ १ २
इन्द्रः स नो युवा सखा ॥ ३ ॥ १३

"सूर्य्य" सूर्य्यात्मकेन्द्र ! (२) "अद्य" अस्मिन् दिने(३) "यत् कच्च" यत् किञ्चित् पदार्थजातम् "अभि" अभिमुखीकृत्य "उद्गाः" [इण् गतौ उत्पूर्व्वः, तस्य लुङि गादेशः] उदयं प्राप्तवानसि "तत् सर्व्वं" पदार्थजातं "ते" तव "वशे" वशवर्त्ति स्वायत्तमस्ति ॥ २ ॥ १२

"यः" इन्द्रः "तुर्वशं यदुं" च एतत्संज्ञौ राजानौ शत्रुभिः

---

आच्छादयति ह्यसौ कृत्स्नं नभः । वर्त्ततेर्वा गति-कर्मणः, 'स्फायि-तञ्चि' इत्यादिना रक् प्रत्ययः ; गच्छत्यसौ कृत्स्नं नभः । वर्द्धतेर्वा वृद्ध्यर्थात्, बाहुलकात् इति धकारस्य तकारः वर्द्धते हि वर्षासु मेघः । आह्वानोक्ता एवामी वर्गेऽस्यर्थाः' इति देवराजयज्वा । 'अथास्य कर्म - रसानुप्रदानं, वृत्र-वधः' इति नै० ७,२,३ । 'वृत्र-वधो मेघ-वधः'-इति तद्भाष्यम् ।

(२) विवरणमते सूर्य-इति 'सुपां सुलुगित्यादिना (७,१,३९) सोर्लुकि रूपम् । हे 'वृत्रहन्' इन्द्रः ! 'अद्य' 'यत्' 'कच्च' किञ्चित् 'अभि' अभिलक्ष्य 'सूर्य' सूर्यः उद्गाः उद्गच्छति प्रकाशयति 'तत्' 'सर्वम्' 'ते' तव 'वशे' वर्त्तत इति-शेषः-इत्यर्थो वि०-सम्मतः ।

(३)—'अद्य-ग्रहणं चात्र प्रदर्शनार्थम्, सर्वकालमित्यर्थः'-इति वि० ।

I यआहाउ । आनाया२त् । आनाया२३त् । पारा२वा२३४ताः । स्वनीतो२ । स्वनीतो२३ । वर्शाया२३४दूम् । इन्द्रःसाना२ः । इन्द्रःमाना२३ः । यू२वा२३४औहोवा । सा२३४खा ॥ २८ ॥

II यआनयत् । परावाइताः । सुनीतोतुर्वशा१याइदूम् । इन्द्रःमनोयुवा१माइखा । इन्द्रो२३४आइ । इन्द्राऔ२होर२३४ । आइ । आइन्द्रोअ । आ२ । या२३४औहोवा । इ२३४न्द्राः ॥ २९ ॥ १३

दूरदेशं प्रक्षिप्तौ "सूनीतौ"(१) सुनीत्या शोभनेन नयनेन "परावत." तस्माद् दूरदेशात्(२) "आनयत्" आनीतवान् "युवा" तरुणः "सः इन्द्रः" "नः" अस्माकं "सखा" भवतु ॥ ३ ॥१३

---

I,II आभरद्वसवे ।

(१) 'सुपां सुलुगित्यादिना (७,१.३९) पूर्वसवर्णदीर्घः ।

(२) 'परावतः' इति निघण्टु-तृतीय-म....तमं दूर-नामसु पठितम् ।

अथ चतुर्थी।

श्रुतकक्षऋषिः।

१ २ ३ २ २ ३ १ २ ३ १र २र
मा न इन्द्राभ्या३दिशः सूरो अक्तुष्वायमत् *।
३ १ २ ३ २
त्वायुजा वनेम तत् ॥ ४ ॥ १४

५र र र ४ ५ १ र २ १र
। मानइंद्राभियादाइशाः। सूरोअक्तु। षुवाया-
२ ३ २ ३ २ १ २ १
२३मा३४त्। तुवा३४युजा। वनाइमा२३ता३४३त्। ओ
२३४५इ। डा ॥ ३० ॥

हे "इन्द्र!" "आदिशः" आदेष्टा समन्तादायुधान्यतिसृजन् "सूरः" [सृ गतौ (भ्वा०प०] सर्व्वत्र सरणशीलः राक्षसः "अक्तुषु" रात्रिषु(१) "नः" अस्माकम्? "अभ्यायमत्" आ आभिमुख्येन "मा" नियन्ताऽऽगन्ता भवतु। यद्यागन्ता चेत् तदा

* "यमत"-इति मु० ख० पुस्तकयोः पाठः।

(१) अक्तुः इति निघण्टु-प्रथम नवमे रात्रि-नामसु चतुर्थम। 'रात्रि-ग्रहणञ्चात्र प्रदर्शनार्थम् सर्वकालमित्यर्थः' इति वि०।

अथ पञ्चमी।

अस्याः परस्याश्च मधुच्छन्दा ऋषिः।

१ २ ३ २ ३ २ ३ १ २ ३ १ २
एन्द्र सानसिं रयिं सजित्वानं सदासहम्।
१ २ ३ १ २
वर्षिष्ठमूतये भर * ॥ ५ ॥१५

५र ४ २ ४र ५र २ ३ ५
।। मानाइआइइन्द्राभियादिशाः। सुरोआ२३४क्त्।
२ ३ ५ १र र १ २ १
षूआया२३४मात्। त्वायुजावनौ३हो। मतौ२। ऊ
१ २ १ ११११
वाइ। औ३होर३४५वा६५६। ए३। यथू२३४५ः ॥१३॥१४*

"तत्" रक्षः "त्वायुजा" त्वत्सहायेन वयं "वनेम" हन्याम [श्नथ क्रथ हिंसार्थाः, वन चेत्यत्र (भ्वा०प०) पठितत्वाद्धिंसार्थः ॥

'आयमत्' 'आयमन्' इति च पाठौ ॥ ४ ॥१४

---

* "भरा" इति मु० भा० पुस्तकयोः पाठः।

---

।.।। तान्वि इमे।

---

* इति ग्रामे गेय-गाने तृतीयः प्रपाठकः॥

४र ५ ४ २ १ र
I ओम्। एन्द्रसा। नसि९रयिम्। सजित्वान९-
२ १र २ १ २ १ र २ २
सदासा२३हाम्। वा२३र्षा। ष्ठामूतया३१उवाये३।
५
भा२३४रा ॥ १ ॥

४र ५ र ४ २ १ र २ १र
II एन्द्रसानसाइम। रया२इम्। सजित्वान९मदा-
२ १ १ २ १ ५ ४
सा२३हाम्। वार्षो२ष्ठामू२३। तयो२३४वा। भा५रो
५
६हाइ ॥ २ ॥ १५

हे "इन्द्र!" "ऊतये" अस्मद्रक्षार्थम्(१) "रयिम्" धनम् "आभरा"(२) आहर, कीदृशं रयिम्? "सानसिम्"(३) सम्भजनीयम् "सजित्वानम्" समान-शत्रु-जय-शीलम्(४) [धनेन हि शूरान् भृत्यान् सम्पाद्य शत्रवो जीयन्ते] "सदासहम्" सर्व्वदा शत्रूणामभिभवनहेतुम् "वर्षिष्ठम्" अतिशयेन वृद्धम् प्रभूतमित्यर्थः ॥ ५ ॥ १५

---

I, II इन्द्रो विश्वामित्रो वा ऋषिः; रोहिकुलीयं नाम।

(१)—'ऊतये, तर्पणाय'-इति वि०।

(२)—भरा इति "द्व्यचोतस्तिङः (६,३,१३५)"-इत्यन्तदीर्घः।

(३)—वन-षण सम्भक्तौ (भ्वा०प०) इत्यस्येदं रूपम्।

(४)—'सदृभतानां शत्रूणां जेतृ'-इति वि०।

अथ षष्ठी।

१२ ३ १ २ १ २ ३ ३ १ २

इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे।

१२ ३ १ २ ३ १ २

युजं वृत्रेषु वज्रिणम्॥ ६॥ १६

१ ३ १ ३ २

I इन्द्राम्। इन्द्रं वाया २म्। महा। महाधाना२इ।

१ ३ १ ३ २ १

इन्द्राम्। इन्द्रमर्भा २इ। हवा। हवामाहा २इ। युजाम्।

३ १ ३ १

युजं वृत्रा २इ। षुवा। षुवज्रिणा२३४३म्। ओ२३४५इ।

डा॥ २॥

१ ३ २ १ २ २ १ १

II महा। महाधाना२३इ। आ औ३हो। इह।

"वयम्" अनुष्ठातारः "महाधने"(१) प्रभूत-धन-निमित्तम्(२) "इन्द्रम्" "हवामहे"(३) आह्वयामः, "अर्भे" अर्भके स्वल्पे-

I,II इन्द्राण्याः सामनी।

(१)—'महति संग्रामे' इति वि०। 'महाधने इति' निघण्टु तृतीय-पोडशं संग्राम-नामसु उनचत्वारिंशत्तमम् पदम्।

(२)—निमित्त सप्तम्यर्थः, चर्मणि द्वीपिनं हन्तीतिवदित्याशयः।

(३—ह्वः सम्प्रसारणे (६,१,३४) रूपम्।

अथ सप्तमी।

त्रिशोककऋषिः।

१ २ ३ १ २ ३ १ २र ३ १ २
अपिवत् कद्रुवः सुतमिन्द्रः सहस्रबाह्वे।
१ २ ३ १ २
तत्रादद्दिष्ट पौꣳस्यम् ॥ ७ ॥ १७

१ २ ३ ५ १ ७ र
इहिवाला। ओ२३४वा। इन्द्रमभीइ। हवा। हवामा-
१ २ २ १२ १ २ ३
हा२३इ। आ औ३हो। इह। इहिवाला। ओ२३-
५ १ ७ १ २
४वा। युजंवृत्राइ। षुवा। षुवज्रिणा२३म्। आ औ
२ १२ १ २ ३ ५ ३ ५
३हो। इह। इहिवाला। ओ२३४वा। ई२३४हा॥४॥ १६

ऽपि धने निमित्त भूते सति(४) इन्द्रं हवामहे। कीदृशम् इन्द्रम्? "युजं"(५) सहकारिणं [समाहितं वा] "वृत्रेषु" शत्रुषु धन-लाभ-विरोधिषु प्राप्तेषु तन्निवारणाय "वज्रिणं" वज्रोपेतम् [महाधन शब्दो यद्यपि सङ्ग्राम-वाची तथापि महद्धनमत्र विवक्षितम्(६)॥ ६ ॥ १६

(४)—'अर्भकः'-इति निघण्टु तृतीय द्वितीये दशमम्।

(५)—'युज्यते इति युक् सहायः तम् इत्यर्थः'-इति वि०।

(६) इह विनिगमकं चिन्त्यम्।

। अपिबत्काद्रूइवःसुताम् । इन्द्राहो२इ । सहाहो२ । स्रावा१ऊवे२ । तत्रादा२३दी । ष्टपौ२ । हौ२ । ऊवा २इ । ई३या । सियाम् । औ२३होवा । हो५इ । डा ॥ ५ ॥ १७

"इन्द्र." "काद्रुवः" कद्रुनामकस्य ऋषेः सम्बधिनं(१) "सुतम्" अभिषुतं सोमम् "अपिबत्" पीतवान् "सहस्रबाह्वे" सहस्र बाह्वाख्यं शत्रुम्(२) अहन्निति शेषः । "तत्र" तस्मिन्नवसरे(३) "पौंस्यम्" इन्द्रस्य वीर्य्यम् "आ ददिष्ट" आ दीप्यत(४) ॥

'तत्रादिदिष्ट'-इति छन्दोगाः, 'अत्रादिदिष्ट'-इति बह्वृचाः ॥ ७ ॥ १७

---

। इन्द्रऋषिः, सहस्रबाह्ववीयम् ।

(१) —तस्यादित्वात् कपम् । 'कद्रुर्नाम कश्यपस्य भार्य्या, तस्याः स्वभृतम्'-इति वि० ।

(२) —सहस्रमिति बहुनाम (नि० ३.१,११) बाहुशब्देनापि अवयवेन समुदायस्य सम्बन्धात् कर्त्ता उच्यते । सहस्रं बहवः कर्त्तारो यत्र तत् सहस्रबाहु सत्र, तस्मिन् पीतवान् इत्यर्थः'-इति वि० ।

(३) —'तत्र सत्रे'-इति वि० ।

(४) —'अत्यर्थं दृश्यते वर्ण्यत इत्यर्थः, केन ! सामर्थ्यात्मना'-इति वि० ।

अथ अष्टमी।

वसिष्ठऋषिः।

३१ २ १२ १र २र
वयमिन्द्र त्वायवोभि प्र नोनुमो वृषन्।
३ २ ३ १ २
विद्धी त्वा३स्य नो वसो ॥८॥ १८

१ २१ ५ १ १ २ ५र र
। वयमा२३४इन्द्रा। त्वा२३। या२वा२३४औहोवा।
२ १ ५र र ३ २ १ २ ५र
अभिप्रनो२नुमोवृषन्। विद्धाइतुवा३। स्या२ना२३४औ
र २ ५
होवा। वा२३४सो॥ ६॥

५र १ १ र
।। हाउवयमिन्द्रा। त्वा२यावा२ः। अभिप्रनोनुमो२-
१ १ १ १ २
वार्षा२न्। विद्धा२इतूवा२। स्यनो२३। वा२सा२३४
५र र २ १ २र १ २ ३ ११११
औहोवा। अस्मभ्यङ्गातुवित्तमा२३४५म्॥ ७॥

५ १ २ ३ १ र २ २
।।। वयमिन्द्रा। त्वाया३वाः। अभिप्रनोनुमो१वा३-

---

। भृषता मारुतस्य साम।

।। भारद्वाजऋषिः, अदारसृत्।

।।। ऋषहर्षिः, अदारसृत्।

२　　　३　　५　　३　　५　　४　५
र्षान् । विश्वोह२३४वा । उ२३४हाइ । स्यनोवा५मो६
५
हाइ ॥ ८ ॥

५ र ४र ५　४ ५　१ २　२　१ र
IV वयामौहो । इन्द्रा । त्वाया३वा । अभिप्रनो
२ २ २　　र ३　५　१ २ २
नुमो१वा३र्षान् । विश्वोत्वो२३४हाइ । स्यानो३हाइ ।
१　२ ४ ५　४
वसा । औ३होवा । हो५इ । डा ॥ ९ ॥

३ २ ३र ४　५　४ ५　२ ३र ४　५
V वयामौहोवाहाइ । इन्द्रा । त्वाऔहोवाहाइ ।
४ ५　१　२　१　२　१　र　२
यावाः । आ२३भो । प्रा२३नो । ओइनुमोवा२३र्षान् ।
१　२　१　२　१　३　५र र　३
वा२३इशो । नू२३वा३ । स्या२ना२३४औहोवा । वा
५
२३४सो ॥ १० ॥ १८

हे "वृषन्" कामानां वर्षितः ! "इन्द्र !" "त्वायवः" (१) त्वत्कामाः "वयं" वामिष्ठाः त्वाम् "अभि प्र नोनुमः" (२) प्रकर्षेण स्तुमः । हे "वसो" वासयितः इन्द्र ! "अस्य" (३) इदम् "नः"

---

IV, V मारुतस्य भरद्वाजस्य इमे अदारसृतौ ।

(१) त्वां यष्टुमिच्छन्त इति विग्रहे, क्यचि, "न च्छन्दस्यपुत्रस्य (७.४.३५)" इतीत्वाभावे, "क्याच्छन्दसि (३.२.१७०)"-इति उ-प्रत्यये रूपम् ।

(२)—'अभि प्रनोनुमः, अभि प्रेति द्वावपि पाद-पूरणौ, अत्यर्थं नुमः'-इति वि० ।

(३) 'अस्य सुतस्य'-इति वि० ।

अस्मदीयं स्तोत्रं "नु" क्षिप्रं(४) "विद्धी"(५) अवधारय ॥ ८ ॥१८

अथ नवमी ।

द्वयोस्त्रिशोकऋषिः ।

२ ३ २ ३२ ३ १२ ३१ २ ३ १ २ ३ २
आ घा ये अग्निमिन्धते स्तृणन्ति* बर्हिरानुषक् ।
३ २ ३ ३ २ ३ १ २
येषामिन्द्रो युवा सखा ॥ ९ ॥ १९

"ये" ऋषयः "आ घा"(१) आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति "येषां" च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति(२) ते "आनुषक्" आनुपूर्व्येण(३) "बर्हिः" "स्तृणन्ति" ॥ ९ ॥ १९

---

* "स्त्रिणन्ति"-इति ख० ग० पुस्तकयोः पाठः ।
"स्तृणन्ति"-इति ए० पाठः ।

---

१९ उत्तरार्च्चिकस्य ५,२,२१,१ । ९

(४) -क्षिप्रमिति निरुक्त द्वितीय पञ्चदशे प्रथमम् । 'नु इति पादपूरणः'-इति वि० ।

(५) --"द्व्यचोतस्तिङः (६,३,१३५)" इति दीर्घः ।

(१) -'घा'-इति "निपातस्य च (६,३,१३६)"-इति दीर्घः । 'आ इत्येषमर्यादायाम् घ इति पादपूरणः' इति वि० ।

(२)--'स्तुत्य-स्तोतृ-लक्षणेन सम्बन्धेन सखिभूतः, स्तुत-स्तुत्य इत्यर्थः'-इति वि० ।

(३)--आनुषगिति नामानुपूर्व्यस्य'-इत्यादि नैरुक्तम् ६,३,१६ ।

५र　र　४ ५　२ १　र
I आघाये अग्निमिन्धाताइ । स्तृणन्तिबर्हिरानुषाक् ।
२र१र　र　र　१　५　४
येषामिंद्रोयवाइहा । ऊवाइ । ऊवो२३४ । वा । सा५
५
स्वो६हाइ ॥ ११ ॥

५र र ४　२ १　२ २　५
II आघायइहा । ग्निमाइ । धाताओ२३४वा ।
२　५　२　१　२ ३　२　५
ई२३४हा । स्तृणन्तिबर्हीं३रा । नूपाओ२३४वा । ई२३४हा ।
२र १　२ ३　५　३　५　१　१
येषाम् । आइन्द्राओ२३४वा । ई३३४हा । युवा । युवा२
३　३　५
सा२३४५स्वा६५६ । ई२३४हा ॥ १२ ॥

५र र र र　५　२ १　२　३र
III औहोआघायाइ६ए । ग्निमाइन्धाता । औहो३३४
५　२　१ २　३र　५　२र १
वा । स्तृणन्तिबर्हीं३रानूपा । औहो२३४वा । येषामा
२　३र　५　३ २　१　१　५
इन्द्रा । औहो२३४वा । युवा३ । मा२३४स्वा । उहुवा
५
६हाउ । वा ॥ १३ ॥ १९

---

I,II,III ऐध्मवाहानि ऐध्मवाहानि वा ।

अथ दशमी।

२ ३उ ३ २ ३ २ ३ २ ३ १ २ ३ १र २र
भिन्धि विश्वा अप द्विषः परिबाधो जही* मृधः।
१ २ ३ १र २र
वसु स्पार्हन्तदा भर ॥ १० ॥ २०

५ ४ १ २ ३
।भि। ध्योहाइ। वाइश्वाअपा। दाइषाओ२३४
५ १ २ ३ ५ १र र २ ३ ३
वा। पाराओ२३४वा। बाधोजहाइ। माइाओ२३४वा।
१२र १ र २ ३ १ १ १ १
वसुस्पार्हन्तदाभरा२३४५॥ १४ ॥ २०

॥ इति चतुर्थ-दशति ॥

हे "इन्द्र!" "विश्वाः" सर्व्वाः "द्विषः" द्वेष्ट्रीः शत्रु-सेनाः "अप[1] भिन्धि" विदारय "बाधः" हिंसित्रीः "मृधः" सङ्ग्रामान्

* "जहि"-इति क-पाठः।

1 अहिः पैङ्गस्य सामाहिषो वा पैङ्गस्य पैल्वस्य वा।
२०. उत्तरार्च्चिकस्य ४,१,८,१ । १०

(१) 'अपउपसर्गश्रुतेः क्रियापदमध्याह्रियते, अपेत्य अस्मत्तः अपनीयेत्यर्थः'-इति वि०।

[‘स्पृधः’, ‘मृधः’—इति सङ्ग्राम-नामसु पठितत्वात्(२)] “परि जहो”(३) हिंस्याः । ततः तासां “स्पार्हं” स्पृहणीयं “तत्” प्रसिद्धं “वसु” “आ भर” अस्मभ्यम् आ हर ॥ १० ॥ २०

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य द्वितीय-खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

सेयं प्रथमा ।

कण्वो घौर ऋषिः ।

३ १ २　　　　३ २ ३ १ २ ३ १र २र
इहेव श्रृण्व एषां कशा हस्तेषु यद्वदान् ।
१र २र ३ १ २
नियामञ्चित्रमृञ्जते ॥ १ ॥ २१

(२)—निघण्टौ द्वितीय-सप्तदशे ‘स्पृधः’ इति ऊनविंशतितमं पदम्, सप्तपञ्चाशं मृध इति ।

(३)—द्व्यचोत इति (६,३,१३५) दीर्घः ।

अथ द्वितीया।

द्वयोस्त्रिशोकऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः।
३ १ २ ३ १ २ ३ २
पुष्टावन्तो यथा पशुम्॥ २॥ २२

२ १र ४ ५र १ र र २ २ २
। इहेवा२३शृण्वएषाम्। कशाहस्तेषुया१द्वा३दान्।
र ४ २ ३ ५ ५ १र २ १ ० ३
नियामञ्चा३त्रा३म्हञ्जताइ। नियामञ्चाइ। त्रमा२ञ्जा-
५ ३र २ ३र ४र ५ २र १र २र
२३४ताइ। एहिया३४औहोवा। एहियौहोइ। एहि-
१र ५
यौहो२३इ। ए२३४हो॥ १५॥ २१

"एषां" मरुतां "हस्तेषु" स्थिताः "कशाः" स्व-स्व-वाहन-ताडन-हेतवः "यद् वदान्"(१) यद् वदन्ति ध्वनिं कुर्व्वन्ति, तं ध्वनिम् "इहेव" अत्रेव स्थित्वा "शृणु"(२) शृणोमि। स ध्वनिविशेषः "यामम्"(३) सङ्ग्रामे "चित्रं" विविधं शौर्य्यं

[ एषाम्।

(१) -'यत् यदा'-इति वि०। वदान्-इति लेटोरूपम्।

(२) --शृणुते इति वि०।

(३)--'यान्ति येन स यामो रथः. तम्'-इति वि०।

४ ३ ४ र ३ ४ ५ र २ ४ ५ १ र
। इमउत्वाविचक्षते। ए३। सखायाः। इन्द्रसोमा-

२ १ २ १र २ १ २
२३इनाः। होइहोवा। पुष्टावा२३न्ताः। होइहोवा-

२ १ ५ ४ ५
३। यथो२३४वा। पा५शो६हाइ॥ १६॥ २२

"न्यृञ्जते"(४) नितरामलङ्करोति ["ऋञ्जतिः प्रसाधन-कर्मा (६,४,२४)"-इति यास्कः(५)॥ १॥ २१

हे "इन्द्र!" "त्वा" त्वां "सोमिनः" अभिषुत-सोमाः "सखायः इमे उ" खल्वस्मदीया जनाः "पुष्टावन्तः"(१) सम्भृत-पाशाः "यथा पशुम्" पशुमिव "वि चक्षते" वि पश्यन्ति(२)॥ २॥ २२

। पौषम्।

(४) 'नि ऋञ्जते, नियमेन गमयति' इति वि०।

(५) -यदा एषां हस्तेषु कशाः वदन्ति, यदा च एषां चित्तं रथं सारथयो नियमेन गमयन्ति, तदा स शब्दः इहैव स्थित्वा श्रूयते इति विवरणे निष्पन्नोऽर्थः।

(१) मतौ दीर्घः। 'पोषणं पुष्टम्, तद्वन्तः पुष्टावन्तः, पोषणवन्त इत्यर्थः।

(२) -'एतदुक्तम् भवति ग्रामचारिणो घासेन गृहीतेन पशोस्तर्पणाय परमया प्रीत्या युक्तास्तमेव पशुं पश्यन्ति, तद्वदस्मदीया ऋत्विजः सोमवन्तः तेनैव सोमेन गृहीतेन तर्पणार्थं त्वां पश्यन्तीत्यर्थः'-इति वि०।

अथ तृतीया।

वत्सः काण्व ऋषिः।

१२ ३२३ २३ १२ ३१२
समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः।
३ १२३१२
समुद्रायेव सिन्धवः॥ ३॥ २३

१ २ १र २ २
I समस्यामा२। न्यावेविशाः। विश्वानामा२। ता-
१ १ १ १
कृष्टयाः। समुद्राये२। वसिन्धा२३वा३४३ः। ओ२३-
४५इ। डा॥ १०॥ २३

"विशः" निविशन्त्यः(१) "विश्वाः" सर्व्वाः "कृष्टयः" प्रजाः "अस्य" इन्द्रस्य "मन्यवे" क्रोधाय [यद्वा मन्युर्मनन-साधनं स्तोत्रं तदर्थम्] "सं नमन्त" सम्यक् स्वत एव नमन्ति प्रह्वीभवन्ति। तत्र दृष्टान्तः—"समुद्राय इव" यथा समुद्रम् अब्धिम् प्रति "सिन्धवः" स्यन्दन-शीला नद्यः स्वयमेव नमन्ति तद्वत्॥ ३॥२३

I मरुतां संवेशीयम्, सिन्धुषाम वा।

(१) 'यद्यपि विशइति मनुष्य-नाम (नि०) तथापि कृष्टय इत्यनेन पौनरुक्त्य-प्रसङ्गात् क्रिया-निमित्तं द्रष्टव्यम्। विष्लृ व्याप्तौ (जु०उ०) इत्यस्येदं रूपम्, स्तुतिभिर्विविधं व्याप्ताः'-इति वि०।

अथ चतुर्थी ।

कुसीदी काण्वऋषिः ।

१ २ ३　१२　२२३१२　१२　३ २
देवानामिद्वो महत्तदा वृणीमहे वयम् ।

१ २ ३ १ २ ३ १ २
वृष्णामस्मभ्यमूतये ॥ ४ ॥ २४

५२ २　२　३ २　२　५　१ २　३　५
। देवा । नाम । इद्वाओ२३४वा । ओवाओ२३४वा ।
३　५　२ १२　२　३　५　३
मा२३४हात् । तदावृणाइ । माहाओ२३४वा । वा२-
५　२ १२　२　५　३
३४याम् । वृष्णामस्मा । भ्यामाओ२३४वा । ता२३-
५
४ये ॥ १८ ॥

हे देवाः ! "देवानां" स्व-तेजसा सर्व्वतो दीप्यमानानाम् "इत्" एवार्थे(१) युष्माकमेव "महत्" व्याप्तं [मंहनीयं वा] "अवः" पालनं यद् विद्यते "तत्" "वृष्णां" कामानां वर्षितृणां युष्माकं

I.II ह्राविषमति हे ।

(१) इदिति पादपूरणः'-इति वि० ।

५र २र २र र २१र २ १

II हाउदेवानामिद्वोमहद्धाउ। तदावृणाइइ। मा-

१ ३ ५ २ १ २ २

हेवा२३४याम्। ए२हो१आ२३इही। वृष्णामा२स्मा।

१ १ ३ ५र र ११ २११११

भ्यम२३। ता२या२३४औहोवा। हविष्मते२३४५॥१९॥

५र२र र २र र ४५ २१र

III देवानामिद्वोहाउमाहात्। तदावृणाइ। महा

२ १ २ १

इवा२३याम्। वृष्णा२०हो१इ। आ२३स्मा। भ्यम-

१ ३ ५र र २ १२११११

२३। ता२या२३४औहोवा। हविष्कृते२३४५॥२०॥

५र२र र र ४५ १र२र १

IV देवानामिद्वोमाहात्। तादावृणो। महाइवा२३

२ १र २ २ १ ५ ५

याम्। वृष्णामा२३स्मा३। भ्यम२३४वा। ता५यो६

५

हाइ॥२१॥२४

स्वभूतं तद्रक्षणं यजमानाः "वयम्" "आ वृणीमहे" समन्तात् सम्भजामहे(१)। किमर्थम्? "अस्मभ्यम्" "ऊतये" पूर्व्वमस्मभ्यमस्मदर्थमिति साधारण्येनोक्तं तद् विशिनष्टि-ऊतयइति, अस्माकं पालनायेति॥४॥२४

III, IV हाविष्कृते द्वे।

(१) 'आभिमुख्येन प्रार्थयामः'-इति वि०।

अथ पञ्चमी ।

मेधातिथिः ऋषिः ।

३ २ ३ १ २ ३ १ २
सोमानाꣳ स्वरणं कृणुहि ब्रह्मणस्पते ।
३ १ २ ३ १ २ ३ २
कक्षीवन्तं य औशिजः ॥ ५ ॥२५

५र २ ४र ५ २ १ २ १ २ १ २
। सोमाइनाꣳस्वरणाम् । कृणूहि ब्र । ह्मणस्पताये-
२ ३र २ १ २ ३र
३ । ओ३४ । हाहोइ । कक्षाइवा२३न्ताम् । यऔ-
२ ३र १ ५ ४ ५
होइ । औहो२३४वा । शा५इजो६हाइ ॥ २२ ॥ २५

हे "ब्रह्मणस्पते !" एतन्नामक देव !(१) त्वं "सोमानाम्" अभिषवस्य कर्त्तारं माम् अनुष्ठातारं "स्वरणं" देवेषु प्रकाशन-

२५ उत्तरार्चिकस्य ६,३,१०,२। ११

I काक्षीवतम् ।

(१) —ब्रह्मणस्पतिरिति निघण्टौ दैवतकाण्डे परिगणितो नोपलभ्यते, अपि तु तत्र अन्तरीक्ष-स्थान देवतासु वाय्वादिषु ब्रह्मणस्पतिरिति । तस्यैव निर्वचनावसरे 'ब्रह्मणस्पतिः' 'क्षेत्रस्यपतिः' 'वास्तोष्पतिः' 'वाचस्पतिः' 'वमोष्पतिः' एषामपि पञ्चानां सोदाहरणं निर्वचनं प्रदर्शितम्——'ब्रह्मणस्पतिर्ब्रह्मणः पाता पालयिता वा' इत्यादि नै० १०,१,१२ । ब्रह्मणः मन्त्रस्येति तद्भाष्यकारः । 'षष्ठ्याः पति-पुत्र-पार-पद-पय-स्पोषेषु (८,३,५३)'—इति सूत्रम् ।

वन्तम्(२) "कृणुहि"(३) कुरु। तत्र दृष्टान्तः—"कक्षीवन्तम्" एतन्नामकमृषिम् [इव-शब्दोऽत्राध्याहार्य्यः] कक्षीवान् यथा देवेषु प्रसिद्धः तद्वदित्यर्थः "यः" कक्षीवान् "औशिजः" उशिजः पुत्रः तमिवेति पूर्वत्र योजना॥ कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते—"एतं वै परं आट्णारः कक्षीवानौशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत"-इति। ऋगन्तरेऽप्यृषित्व कथनेन अनुष्ठातृत्व-प्रसिद्धिः सूच्यते—"अहं कक्षीवानृषिरस्मि विप्रः"-इति। तस्मादस्यानुष्ठातारं प्रति दृष्टान्तत्वं युक्तम्॥ मन्त्रोऽप्येवं यास्केनैव व्याख्यातः—"सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते! कक्षीवन्तमिव य औशिजः कक्षीवान् कक्षावा*नौशिजः उशिजः पुत्रः, उशिक् वष्टेः कान्तिकर्म्मणोऽपि त्वयं मनुष्यकक्ष्य† एवाभिप्रेतः स्यात्, तं सोमानं सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते! (६,३,१२)"-इति॥ अस्मिन् मन्त्रे सोममिति पदेन ब्रह्मणइति पदेन च सूचितं तात्पर्य्यम् तैत्तिरीया आमनन्ति—"सोमं स्वरणमित्याह—सोमपीथमेवावरुन्धे, कृणुहि ब्रह्मणस्पत इत्याह-ब्रह्मवर्चसमेवावरुन्धे"-इति॥ ५॥ २५

*,†, निरुक्तकार-पाठस्तु—"कक्ष्यावान्", "कक्ष्यएव"—इति स-यकारः।

(२)—'स्वृ शब्दोपतापयोः (भ्वा०प०) इत्येतस्यैतद्रूपम्, शब्दयितारं स्तुतीनाम् उच्चारयितारं स्तोतारं यष्टारमित्यर्थः'-इति वि०।

(३) -विकरण-व्यत्ययेन धातूनामनेकार्थत्वेन वा रूपम्।

अथ षष्ठी ।

श्रुतकक्षऋषिः ।

१ २ ३ १२ ३१ २
बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः ।
३ १२ ३२ ३ १२
शृणोतु शक्र आशिषम् ॥ ६ ॥२६

५र १ १ १२र १ २
। बोधन्मनाः । इदा२स्तूना२ः । वृत्रहाभू । रिया-
२ ५ ३ २ ५ ३ २ १
२सू३२४ओः । शृणा३४औहो । तुशक्रआ । शि ।
४ ५
षाम् । औ२३होवा । हो५इ । डा ॥ २३ ॥२६

अयं परोक्षकृतः([1])। "वृत्रहा" वृत्रस्य हन्ता "भूर्यासुतिः"([2]) बहुषु देशेषु इन्द्रार्थं सोमा आसूयन्ते अभिषूयन्त इति तादृशः [यद्वा, बहूनि सोमादि-हवींषि इन्द्रार्थमासूयन्ते हूयन्तइति तादृशः] "बोधन्मनाः [बुध अवगमने (भ्वा०प०), औणादिको ऽत् प्रत्ययः] यस्य मनः स्तोतृणामभिमतं बुध्यते जानातीति

। औषसम् ।

(१)—उक्तं पुरस्तात्, (१०६ पृ०) 'त्रिविधा ऋचो भवन्ति परोक्षकृताः १, प्रत्यक्षकृताः२, आध्यात्मिक्यश्च ३, इत्यादि । तदिह स्मर्तव्यम् ।

२।—'भूरीति बहु-नामधेयम ३,१,५ (निघ०)।' 'भूरि' शब्दो बहुवचनः 'ता भूमाजा छतामुतो' इति। तथाच नैरि भ्रुभृतिधस्य स भूयासुति बहुरसद्दर्थः इति वि० ।

अथ सप्तमी।

श्यावाश्वऋषिः।

३ १ २ ३ १ २ ३ १ २
अद्य नो देव सवितः प्रजावत् सावीः सौभगम्।

१ २ ३ १ २
परा दुष्वप्नॅ सुव॥ ७॥ २७

तथोक्तः "इद्"(३) अवधारणे "नः" अस्माकं बोधन्मना एव "अस्तु" सर्व्वदास्मदभीप्सितानि जानात्विवेत्यर्थः [यद्वा एतादृश इन्द्रः नोऽस्माकं सम्बन्धि यज्ञे भवत्विति]। किं ततः? "शक्रः" सङ्ग्रामे शत्रु-हनन-समर्थ इन्द्रः "आशिषम्" अस्मदीयां स्तुतिम् [आशासनं वा] "शृणोतु"(४)॥

'बोधन्मना' 'बोधिन्मना'-इति पाठौ॥ ६॥ २६

हे "सवितः(१) देव।" "नः" अस्मभ्यम् "अद्य" अस्मिन् यागदिने "प्रजावत्" पुत्राद्युपेतं "सौभगं" धनं(२) "सावीः"

---

(३) –'इदिति पादपूरणः'-इति वि०।

(४) –'एतदुक्तम् भवति– यदहं प्रार्थयामि, तच्छृणोतु शक्रः, श्रुत्वा च बुद्ध्यतु, बुद्धा च सम्पादयतु' इति वि०।

(१) 'सविता आदित्यः तस्य सम्बोधनम् हे सवितः'-इति वि०। "सविता, सर्वस्य प्रसविता"-इत्यादि नैरुक्तम् १०,३,१,। "आदित्योऽपि सवितोच्यते"-इत्यादि च तत्रैव तदुत्तरखण्डे।

(२) भगमिति धननाम, शोभनं भगं सुभगम्, सुभगमेव सौभगम् स्वार्थिक-तद्धितः। शोभनं धनमित्यर्थः।

५ ४ ५र र		४र ५र ४		२ १
I अद्यनोदेवसवितः । औहोवा । इहश्रुधाइ ।

र		२		र १र		र		१		१
प्रजावा२३त्सा । वोःसौभगाम् । परादू२३ष्वा३ । हो-

२ २ १		१ २ १ १ १ १ १
वा३हा । प्रिय७सू२३४५वा६५६ । इहा३या२३४५ ॥२४॥

२ २		र र ५ र		४ ५		२ र १		२र
II अद्या३४नोदेवसा । विताः । प्रजावत्सा । वोः

१र		२ ४ ५		२ १ २		१
सौभगाम् । पारा३दूष्वा । प्रिय७सुवोवा३ । औ२ ।

१		५र र		२ १ २ र		१ २ २ १ १ १ १
वा२३४ । औहोवा । अस्मभ्यङ्गातुवित्तमा२३४५म ॥२५॥२७

प्रेरय(३) । "दुःष्वप्न्यम्"(४) दुःस्वप्नं दुःस्वप्नवद् दुःखकरं दारिद्र्यं "परासुव"(५) दूरे प्रेरय ॥ ७ ॥ २७

---

I भरद्वाजस्य मौक्षम्, इहणिधनं वा ।

II भरद्वाजस्य मौक्षम् ।

(३)—'सावीः अभ्यनुजानीहि' इति वि० ।

(४)—अनिष्टस्य कस्यचित् सूचकः स्वप्नः, दुःस्वप्नः, तस्मिन् भव दुःष्वप्न्यम् । "पूर्व-पदात् (८,३,१०६)"-इति षत्वम् ।

(५)—'सुवति षु प्रेरणे (भ्वा०प०) इत्यस्येदं रूपम्' इति वि० ।

अथ अष्टमी।

प्रागाथः काण्वऋषिः।

२ १ १२ १र २र ३१ ३ १ २
क्वाऽस्य वृषभो युवा तुविग्रीवो अनानतः।
३ १र २र
ब्रह्मा कस्तꣳ सपर्यति॥ ८॥ २८

१ र ४ २ १ १र
। क्वा२३४वस्यवा५वृषभोयुवा। तुविग्रीवो२। अना-
र २ १
नताः। ब्रह्माका२३स्ताम्। ऐ२होश्आ२३इहो। स-
१ २ १
पर्य्या२३ता३४३इ। ओ२३४५इ। डा॥ २६॥

४ ५ ४ ५ २ १ ७ ऽ २ ३र २
॥ कुवाकुवा। स्यवृषा३भोयुवा३। ओ३४। हाहो
र र १ ७ ऽ २ ३र २
इ। तुविग्रीवोआ३नानता३ः। ओ३४। होहोइ।

"स्यः" सः "वृषभः" वर्षिता "युवा" नित्य-तरुणः "तुविग्रीवः" प्रवृद्ध-ग्रीवः(१) "अनानतः" कदाचिदप्यनवनतः इन्द्रः "क्व?"

(१)—'तुविग्रीवः, पृथुग्रीवः बहुग्रीवइत्यर्थः। कथमिन्द्रोबहुग्रीवः? उच्यते-परमात्मस्वरूपत्वात्। सर्वतः पाणिपादान्तः सर्वतोऽचिशिरोमुखः, सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति'-इति वि०। तुवि-इति बहु-पर्यायः नि० ३,१,१।

अथ नवमी ।

वत्सऋषिः ।

२　१ २ ३ १　१ २ १ २ ३ १ २
उप ह्वरे गिरीणाꣳ सङ्गमे च नदीनाम् ।

१　१　३　५ र र　२　१ १ १ १ १
ब्रह्मा२३ । का२स्ता२३४औहोवा । सपर्य्यती२३४५ ॥२७॥

५ र र र र　र ४　५ र र
।।। एहीयैहो । कस्यवृषभोयुवा । ऐहीयैहो । तु-

र र　र ४　५ र र र र　र　४
विग्रीवोअनानताः । ऐहीयैहो । ब्रह्माकस्तꣳसमर्य्य-

५ र र र र　१　७ २　५ र र
ती । एहियैहो । आ२इ । हिया३४औहोवा ।

७　५
आ२३४इहो ॥ २८ ॥ २८

कुत्र वर्त्तते ?-इति को जानातीत्यर्थः । "कः" "ब्रह्मा" स्तोता "तम्" इन्द्रं "सपर्य्यति"(२) पूजयति ?(३) ॥ ८ ॥ २८

I, II, III भारद्वाजानि आर्षभाणि वा सैन्धुक्षितानि वा ।

(२)—निघण्टौ परिचरण-कर्मसु तृतीयम् ३,५ ।

(३) अस्यामृचि स्वृषभ इति "स्यश्छन्दसि बहुलम्(६,१,१३३)" इति हल्परकतां निमित्तीकृत्य लोपः । तुविग्रीवो अनानत इति "अव्यपरे (६,१,११५) इति प्रकृतिभावः । कः इति "अनुदात्तं प्रश्नान्ताभिपूजितयोः (८,२,१००)" इति प्लुतिरनुदात्तश्च ।

३१ १ १२र
धिया विप्रो अजायत ॥ ८ ॥ २९

१ २ १ १ १र १
I उपह्वराइ। गिरा२इणाम्। सङ्गमेचा। न
१ २ १ २ १
दा२इनाम्। धियाविप्रो। अजायता। अयाम्।
२ १ ५
अया२१उ। वा२३। ऊ३४पा॥ २८॥

३ २ ३ ५ २ १ २ ३ २ २ २ ३
II इदामी२३४दाम्। इदामिदकम्। इदामी२
५ २ र १ २ ३ २ ३ ५
४दाम्। उपह्वरेगी३राइणाम्। इदामी२३४दाम्।
२ १ २ ३ २ ३ २ ३ ५ २ र १
इदामिदकम्। इदामी२३४दाम्। सङ्गमेचना३दाइ
२ ३ २ ३ ५ २ १ २ ३ २ ३ २ ३
नाम्। इदामी२३४दाम्। इदामिदकम्। इदामी२३-
५ २ र र १ २ ३ २
४दाम्। धियाविप्रोआ३जायाता। इदामा५इदा६५
१र २ १र
६म्। गोष्पदे पुट्॥ ३०॥ २९

"गिरीणां" पर्व्वतानाम्(१) "उपह्वरे" उपह्वरसंव्ये प्रान्ते

I, II प्राक्त्य सामनी।

(१) —'गिरीणाम् मेघानाम्'-इति वि०। गिरिरिति मेघ-नामसु दशमम् नि०१,१०।

अथ दशमी ।

इरिमिठऋषिः* ।

२ ३ १ २    ३ १र    २र    ३ १ २ ३ २
**प्र सम्राजञ्चर्षणीनामिन्द्रꣳ स्तोता नव्यं गीर्भिः ।**

१ २ ३ २ ३ १ २
**नरं नृषाहं मꣳहिष्ठम् ॥ १० ॥ ३०**

"नदीनां" सरितां "सङ्गमे" सङ्गमने च ईदृग्विधे देशे क्रियमाणया "धिया" स्तुत्या(२) "विप्रः" मेधावी(३) इन्द्रः "अजायत"(४) प्रादुर्भवति, स्तुतिं श्रोतुमिति शेषः(५) [गिरीणामित्यत्र 'नामन्यतरस्याम्'(६,१.१७७)-इति नाम उदात्तत्वम्(५) ॥

'सङ्गमे'-'सङ्गथे' च इति पाठौ ॥ ८ ॥ २९

"चर्षणीनां" मनुष्याणां मध्ये(१) "सम्राजं" सम्यग् राजमा-

(२)—'धिया प्रज्ञया'-इति वि० । धीरिति प्रज्ञा नामसु सप्तमम् पदम् नि० ३.९ ।

(३) - विप्र इति मेधावि नामसु प्रथमम् नि० ३,१५ ।

(४ —कालसामान्ये प्रत्ययः (१.४.६) । मन्त्रे विप्रोऽजायत इति प्रकृतिभावोऽव्यपरे इति ६,१,११५) ।

(५)- 'एतदुक्तम् भवति - यत्र प्रदेशे बहवो मेघाः, यत्र बहूदकं, तत्र.तेषां चोदकस्य पानार्थम्' इत्यादि वि० ।

(१)—'चर्षणयः'-इति मनुष्य-नामसु नवमम् नि०२,३ ।

५ र १ १ १
I प्रसम्राजाम्। चार्षा२णाइना२म्। ह्याइन्द्रा२ए-
१ १ ३ २र १ १
स्तोता२३। नव्या२ङ्गा२३४इभीः। नारा२मार्षा२३।
४ ५ ४ ५
हम्मोवा। हा५इष्ठो६हाइ॥ ३१॥

४ ५ र ४ १ १ २ १ १
II प्रसम्राजोहाइ। चार्षाणी३नाम्। आइन्द्राएस्तो
२ १ ३ ५ ३ १ ३ ५ र ७ २
इता३। नव्या२ङ्गा२३४इभीः। नारमोइ। नृषाहमो३इ।
४ ४
मएहा५इष्ठाम्। होपुइ। डा॥ ३२॥

नम्(२) [यद्वा मनुष्याणामधीश्वरम्(३] "इन्द्रम्" हे स्तोतारः! "प्र-स्तोत"(४)प्रकर्षेण स्तुत। कीदृशम्? "गीर्भिः" स्तुतिभिः "नव्यं"(५)

---

I,II वार्षम्बरे।

(२)—'राजते' इति ज्वलति-कर्मसु नि० १,१५।

(३)—'राजति'-इति ऐश्वर्य्य-कर्मसु चतुर्थम् नि० २,२२।

(४) गुणभावोबाहुलकात्। ऋचि दीर्घान्तो द्व्यचोत स्तिङ (६,३,१३५,) इति।

(५)—'नव्यं नवतरम्'-इति वि०। इह नवे नौतेरूपम्। नौतीति अर्चति-कर्मसु चतुर्दशम् नि० ३,१४।

२ ५ १र ४ ५　२ २　५　२ १ १

III प्रसम्राजञ्च । षणा३२३४इनाम् । इन्द्राꣳस्तो३-

२　१　२　५　४ ५ ४र ५ ४

ता३ । नव्यारङ्गा२३४इर्भीः । नरंनृषाहम्मा५ꣳहि ।

५　२ १ १ १ १

आ६हाउवा । ष्ठा२३४५म् ॥ ३३ ॥

४ ५ ४र ५　र ४र　५　र र ४　५　५

IV प्रसम्राजञ्चर्षणीनामिन्द्रꣳस्तोतान । व्यङ्गा६इर्भीः ।

१　र र　२　५ ४ ५　४

इन्द्रꣳस्तोतानव्यङ्गा२३इर्भी३४ः । नरन्नृषाहम् । मा५ꣳ-

४　२ र ३र १　३　५र र　२

हिष्ठाम् । सहमँहै३हो२ । या२३४औहोवा । मꣳ-

१ १ १ १ १

हो३ष्ठा२३४५म् ॥ ३४ ॥ ३०*

॥ इति पञ्चम-दशति ॥ **

III,IV कुत्सस्य प्रस्तोकौ ।

** छन्दआर्चिके द्वितीयस्यार्द्धः प्रपाठकः ।

* इति ग्रामे गेय-गाने चतुर्थस्यार्द्धः प्रपाठकः ।

स्तुत्यं "नरं" नेतारं(६) "नृषाहम्"(७) नृणां शत्रु-मनुष्याणाम् अभिभवितारम् "मंहिष्ठम्"(८) दातृतमम् ॥१०॥३०

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य तृतीयःखण्डः ॥ ३ ॥

---

अथ-चतुर्थखण्डे —

सेयं प्रथमा।

श्रुतकक्षऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २

अपादु शिप्र्यन्धसः सुदक्षस्य प्र होषिणः।

२ ३ २ ३ १ २

इन्दोरिन्द्रो यवाशिरः ॥ १ ॥ ३१

"शिप्री"(१) ["शिप्रे हनू नासिके वा(२)"] शोभन-हनुः

---

(६)—'नरं नराकारम्'-इति वि०।

(७)—"छन्दसि सहः (३,२,६३)"-इति ण्वौ "पूर्वपदात् (८,३,१०६)"-इति षत्वे रूपमिदम्।

(८)—मंहत-इति दानकर्मसु पठ्यम्। तस्य तृचि "तुश्छन्दसि (५,३,५६) इती ष्ठनि रूपम्।

(१)—प्रशस्ते शिप्रे यस्य—सुशिप्री।

(२)—इत्येतत् षष्ठाध्यायीय-यास्क-वचनम् (६,४,१९। सृप्त गतौ, स्फायि-तञ्चि वञ्चि

५ र　　२ १　　२　र
। अपादुशो । प्रियन्धसा: । सुदत्ता२३स्या । प्रद्दो-
१　र　२　१र　२　र　१
षिणः । इन्दोरा२३इन्द्राः । यवाशा२३इरा: । ए । हि
१ २　५र र　२　१ २　१ १ १ १
या२इ । हिया३४औहोवा । ए३ । ऊपा३१२३४५ ॥ १ ॥

५ र २ ४ ५　२ १　र　२
।। अपादूशिप्रियन्धसा: । सुदत्तस्यप्रहोषिणाः । इन्दो
१　२　५　र ४ ५
२ । हो२ । ऊवा२३इ । आ३४इन्द्रो । यवाशाइराः ।
२र　१　२　५र र　२　१ २
ए । हा२ए२३ । हिया३४औहोवा । ए३ । ऊपा३१-
१ १ १ १
२३४५ ॥ २ ॥३१

[यद्वा शिप्राः शीर्षण्याः(³), सशिरस्त्राणः] सः "इन्द्रः" एव "प्रहोषिणः"(⁴) प्रकर्षेण देवान् हविभिर्जुह्वतः "सुदत्तस्य" एतन्नामकस्य ऋषेः(⁵) सम्बन्धि "यवाशिरः" [श्रीञ् पाके (क्रया० उ०) आङ्-पूर्व-

1,II औपगवे, सौश्रवसे वा अश्वमथे वा मथाथे वा सौमित्रे वा शैखण्डिने वा ।

शकि-वयि-स्यपि तृपीति-रक्, बाहुलकात् भ शब्दस्य शि भावः, अयं गमनं प्रति वा सृप्तं भवतः'-इति देवराजयज्वा ।

(३) इह मानं यत्न-लभ्यम् भवितु मर्हति ।

(४)-- 'जुहोतेर्दानार्थस्य द रूपम्'-इति वि० ।

(५)—'सुष्ठु उत्साहितस्य त्यर्थः'-इति वि० ।

अथ द्वितीया।

मेधातिथिऋषिः।

३ १ २ ३ १२ २२ ३ १ २

इमा उ त्वा पुरूवसो॰ भि प्र नोनवुर्गिरः।

१ २ ३ २उ ३ १ २

गावो वत्सन्न धेनवः॥ २॥ ३२

कस्य "अपस्पृधेथामानृचुः"-इत्यादिना(६) धातोः शिरादेशः)" यवै-र्ष्टामिश्रितं(७) यवैः सह पक्कम् "इन्दोः" सर्वत्र पात्रेषु चरन्तम् "अन्धसः"(८) सोमलक्षणमन्नम् "अपात्" अपिवत् "यद्वा-सोमस्य भागम् इन्द्रार्थम् परिकल्पितं सोमांशम् अपिवत्। "उ"-इत्यवधारणे॥ १॥ ३१

हे "पुरुवसो!" बहुधन! "यद्वा वसवो यज्ञाः(१) बहुयज्ञ!

॰ "पुरूवसो"-इति ख० ग० ए०पुस्तकानां पाठः।

३२ उत्तरार्चिकस्य ७, ३, १८, १।

(६)- "अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्रात श्रितमाशिरमाशीर्तः" (६,१,३६।

(७)—'यव-शब्देनात्र यव-विकाराः सक्तव उच्यन्ते, तैर्मिश्रण यस्य स यवाशिरः। प्रथमा च षष्ठ्यर्थे द्रष्टव्या। यवमिश्रितस्येत्यर्थः। मन्थी च नाम ग्रहः स सक्तुभिर्ह्ष्यते "मन्थिम सक्तुभिरिति वचनान्तरमवेक्षित्वैतदुच्यते यवाशिरइति'-इति वि०।

(८) 'सोमस्य'-इति वि०।

(१)—इह मानं यत्न-लभ्यम्।

अथ तृतीया।

गोतमऋषिः*।

२३ ३ १ २ ३ २ ३ १ २ क २र
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्।
३ २ ३ १ २ ३ २
इत्था चन्द्रमसो गृहे॥ ३ ॥३३

५ र १ १ १ र १
I इमाउत्वा। पुरू२वासा२उ। अभिप्रनोनवू२र्गा-
३र २ २र र १ १ ४
इरा२ः। औहोइ। गावोवात्सा२३म्। ना२३धे३।
२ १
ना३४५वोई२हाइ॥ ३ ॥ ३२

इन्द्र! "त्वा" त्वाम् "अभि" "इमाः" अस्मदीयाः "गिरः" स्तुतयः "प्रनोनवुः" प्रकर्षेण पुनः पुनः स्तुवन्ति प्राप्नुवन्तीत्यर्थः। नौतिरव व्याप्तिकर्मा"। तत्र दृष्टान्तः-"गावो वत्सं न धेनवः" यथा धेनवः गावः गृहे वर्त्तमानं वत्सं शीघ्रमभिगच्छन्ति तद्वत। यद्वा, अस्मदीया वाचः त्वाम् अभिनोनवुः शब्दयन्ति स्तुवन्ति, यथा गावो वत्समभिलक्ष्य हम्भा-रवं कुर्वन्ति तद्वत्॥ २॥ ३३

*—'गौतमस्यार्षम्' इति वि०।

I त्वाष्ट्री साम।

४ ५ २र १र १ १ र
I आत्रा। हागोरमन्वताउवा२३। होवा२३होइ। ना-
र १ १ १ १र र
मत्वष्टुरपोचियाउवा२३। होवा२३होइ। इत्थाचन्द्रमसो-
१ १ २ ५र र २
गृहाउवा२३। होवा२३होर। वा२३४औहोवा। ऊ२-
५
३४पा॥ ४॥

४ ५ २र १र १
II हावात्रा। हागोरमन्वताउवा२३। होइया२३।
१ र र १
हा२ऊवाइ। नामत्वष्टुरपोचियामियाउवा२३होवा२३-
१ २ १र र १
हा२ईया। इत्थाचन्द्रमसोगृहाउवा२३। होइया२३।
१ २ ५र र २ ५
हा२ऊवा२। या२३४औहोवा। ऊ२३४पा॥५॥२३

"अत्रा(२)ह" अस्मिन्नेव "गोः" गन्तुः(३) "चन्द्रमसः" "गृहे" मण्डले "त्वष्टुः"(४) एतन्नामकस्य आदित्यस्य सम्बन्धि "अपीच्यं"

---

I,II त्वष्टुरातिथ्ये।

(२)—"निपातस्य च (६.३.१३६)"-इति दीर्घः।

(३) -'गो'-शब्देनेह सुषुम्ना नाम आदित्य-रश्मिः, चन्द्रमसं प्रति गतः, अन्यत्वात् चन्द्रमण्डलस्य, रश्मिं प्रति गतः, ततः परावृत्य पृथिव्यां ज्योत्स्नारूपेण दीप्यते सोऽत्र गो-शब्देनोच्यते -इति वि०।

(४) -त्वष्टा इति पृथिवी-स्थान-देवताम्, अन्तरिक्ष-स्थान-देवताम्, द्यु-स्थान-देवताम् च नैघण्टुकाः संस्मरन्ति। नैरुक्ताश्च निष्पत्त्यन्ते. तद्यथा——"त्वष्टा तूर्णमश्नुत इति

रात्रौ अन्तर्हितं स्वकीयं यत् "नाम"(५) तदादित्यरश्मयः "इत्था इत्थम् अनेन प्रकारेण "अमन्वत" अजानन्(७)। उदकमये स्वच्छे चन्द्रविम्बे सूर्य्यकिरणाः प्रतिफलन्ति, तत्र प्रतिफलिताः किरणाः सूर्य्ये यादृशीं सञ्ज्ञां लभन्ते, तादृशीं चन्द्रेऽपि वर्त्तमानां लभन्त इत्यर्थः॥ एतदुक्तम् भवति—यद्रात्रावन्तर्हितं सौरं तेजः तच्चन्द्रमण्डलं प्रविश्याथ नैशं तमो निवार्य्य सर्व्वं प्रकाशयति; ईदृग्भूततेजसा युक्तः सूर्य्य इन्द्रएव, द्वादशस्वादित्येषु इन्द्रस्यापि परिगणितत्वात्। अतोऽहोरात्रयोः प्रकाशक इन्द्रएवेति इन्द्रस्तुतेः प्रतीयमानत्वात् इन्द्रो देवतेत्युपपन्नं भवति, ईदृग्भूतस्य तेजसः तदाश्रयत्वेन चन्द्रमसः प्राधान्य विवक्षया चान्द्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते॥ अत निरुक्तम् "अथाप्यस्यैकोरश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्य आदित्यतोस्य दीप्तिर्भवतीति सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व्व इत्यपि निगमोभवति सोऽपि गौरुच्यते अत्राह गोरमन्वतेति" (२,३,८); अत्र ह गोः समसंमतादित्यरश्मयः स नासापोच्य-

---

नैरुक्ताः, त्विषेर्वा दीप्ति कर्म्मणः, त्वक्षतेर्वा स्यात करोति कर्म्मणः ... आग्निरिति शाकपूणिः"-इत्यादि प्रथमम् (नै० ८,३,१४ १२)। "त्वष्टा व्याख्यातमस्य पा भवति" इत्यादि द्वितीयम् (नै०१०,३,९ १०)। 'त्वष्टा ... त्वष्टा दुहितृवहनं करोतीमानि च सर्वाणि भूतान्यभि समागच्छन्ति यमस्य माता पर्य्युह्यमाना महतो जाया विवस्वतो ननाश रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते"-इति अन्यम् (नै० १०,१,११)। इह चान्य-व्याख्यात एव त्वष्टा ग्टह्यते

(५)—'नाम नमनं प्रह्वीभावम्' इति वि०।

(६)—"प्रत्नप विश्वमात्थाल् छन्दसि (५,३,१११)" इति इदमो विक्तनादिवार्थे विहितोऽपि थाल् व्यत्ययेन प्रक्र.तभूतादिदं-शब्दादपि।

(७)—'अमन्वत, अनुमन्यन्त'-इति वि०।

अथ चतुर्थी ।

भरद्वाजऋषिः ।

२उ ३ १ २ ३ १ २ ३ २ ३ १र २र
यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः ।
१ २ ३ १ २ ३ १ २
तत्र पूषा भुवत्सचा ॥ ४ ॥ ३४

१ ५ र १ १ २ ४ ५
। यदिन्द्रोया । नाया२३त् । उमो३म् । उवा ।
१ र र १ २ ४ ५ १ ०
रितोमहोरापा२३ः । उमो३म् । ओवा । वृषावृषा२ ।
३ २ ५र र १ २र१र२ १ ३१११
तमा३४औहोवा । तत्रपूषाभुवत्सचा२३४५ ॥ ६ ॥

५ र ५ १ र १ र
।। यदिन्द्रोअनयद्रिता६ए । महोरापा२ः । मही-

मपचितमपगतमपहितमन्तर्हितं वा(८) (४,४,२५)"-इति॥३॥ ३३

"यद्" यदि(१) "इन्द्रः" "वृषन्तमः" अतिशयेन वर्षिता इन्द्रः "रितः" गच्छतोः(२) "महोः" महतोः "अपः" वृष्ट्युदकानि "अन-

I,II पौषे ।

(८)—निरुक्तपाठस्तु,—'अमुत्र चन्द्रमसो गृहे'-इत्यंशेनाधिको लक्ष्यते ।

(१)—'यत्, मेघस्थानम्'-इति वि० ।

(२)—'रितः, गतः प्राप्तः सन्'-इति वि० ।

अथ पञ्चमी।

विन्दुः पूतदक्षो* वा ऋषिः।

१ २　३ १ २　३ २ ३ २　३ १ २
गौर्धयति मरुताꣳ श्रवस्युर्माता मघोनाम्।

३ २३　३ १ २
युक्ता वह्नी रथानाम्॥ ५॥ ३५

१ २ ३　५　१　२　१ २
रापार३ः। वार्षतार२३४माः। तत्रापूषा३। पूरषार

५र र　२ १ ३ १ १ १ १
३४औहोवा। भुवत्सचा२३४५॥ ७॥ ३४

५र　५　२　१ २ १　२
। गौर्धया६ए। तिमरुता३म्। श्रवास्युर्मा३। ता

यत्"(३) इमं लोकं प्रापयति। "तत्र" तदानीं(४) "पूषा" पोषको देवः(५) "सचा भुवत्"(६) इन्द्रस्य सहायो भवति॥ ४॥ ३४

---

* 'पूतदक्षगणः'-इति वि० पाठः।

(३)—कालसामान्ये लङ् (३.४.६)।

(४) -'तत्र तत्स्थाने'-इति वि०।

(५) -असौ द्युस्थानदेवतासु दृश्यो देवः, "पोष पुष्यति तत् पूषा भवति"-इत्यादि च नैरुक्तम् (१२.२,१)।

(६) -सचेति सहार्थाव्ययम्, भुवदिति लेटोरूपम्।

२ ५ १ ७ ३ २ १ २
मघो२३४नाम्। युक्तावह्नाइ:। रथा३। ना२मा२३४

५र र ३ ५
औहोवा। ऊ२३४पा॥ ८॥

५र ५ २ १ ऽर १र र ऽर
II गौर्द्धयतिमरुता६मे। अवस्युर्मा२तामघोना२म्।

२ १ २ १र २ १ २
उड़वा२३हाइ। युक्तावा२३न्हो:। उड़वा२३हाइ।

१ २र १ ४ ५ ४
रथानाम्। औ२३होवा। हो५इ। डा॥ ९॥ ३५

"मघोनां" धनवतां "मरुतां"(१)"माता" निर्मात्री "गौः"(२) पृश्निरूपा [पृश्निर्वै पयसो मरुतो जाता इति श्रुतेः; गौर्माध्यमिका वाक्(३), तत्रैव मध्यमस्थाने मरुतामपि वर्त्तनात्(४), तेषां

I,II श्यावाश्वे।

(१) --मरुतो अन्तरीक्ष स्थान-गणविशेषाः। तथा च नैरुक्तम् -"अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति, मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा' इत्यादि ११,२.१ २।

(२) "गौर्व्याख्याता तस्यैषा भवति ॥ वागर्थेषु विधीयते, तस्मान्माध्यमिकां वाचं मन्यन्ते'-इति नैरुक्तम ११.३.६।

(३) 'चतुर्धा हि वाचो वदन्ति परा पश्यन्ती मध्यमा वैखरीति शाब्दिक-सिद्धान्तः तत्र गौरिति माध्यमिक वाचोऽभिधानम्। वाक्पदञ्च अन्तरिक्षभागित्वेन परिगणित निघण्टौ, नैरुक्तञ्च सोदाहरण वर्णितम् तद्यथा --"वागर्थेषु विधीयते, तस्मान्माध्यमिकां वाचं मन्यते, वाग् व्याख्याता तस्या एषा भवति। 'यद्वाग् वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा। चतस्रोनूर्जं दुदुहे पयांसि क्वचिदस्याः परमं जगाम (ऋक्१०,७,१०)"यद् वाग्वदन्त्यविचेतनानि अविज्ञातानि"-इत्यादि ११,३,७। "वागेषा माध्यमिका"-इत्येवमादि च ११,४,८।

(४) 'गौः'-इति निघण्टु दैवतकाण्डे मध्यमस्थानभागिषु उपपठितम् पदम् 'मरुतः'-इति तत्रैव सप्रति पठितम्।

अथ षष्ठी।

द्वयोः श्रुतकक्ष एव सुकक्षो वा ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २
उप नो हरिभिः सुतं याहि मदानांपते।

१ २ ३ १ २ ३ २
उप नो हरिभिः सुतम्॥ ६ ॥३६

२ १ ४ ५ ४ ५ २र १ २ र २ १
I उपनो२३हरिभिःसुतोवा। याहिमदा३नाम्प। ता·

तत् पुत्रत्वमुपचर्य्यते(५), सा] "धयति" सोमं पिबति |पोषयति वा स्व-पुत्रान् मरुतः| किमिच्छन्तो ? "अवस्युः"(६) अन्नं कामयमाना। कीदृशी ? "रथानां" मरुतां(७) "वह्निः" पृषतीभि र्वडवाभिर्वोढ्री संयोजयित्री सा "युक्ता" सर्व्वत्र सम्मता पूज्या भवति॥ ५ ॥ ३५

हे "मदानां पते!" "माद्यन्त्यनेनेति मदः सोमः |'मदोऽनुप-

३६ उत्तरार्च्चिकस्य८,१,१०,१ । १४

(५)—वैदिकाख्यायिकाणु वृत्तान्तान्वाख्यानस्य अयथात्वात कल्पनाबीजत्वाद्वा। तदुक्तम् तर्कपादान्तिमे– 'असद्वृत्तान्तान्वाख्यानम्' इत्यादि शबरस्वामिना भगवता मीमांसाभाष्ये विशेषेण तथान्यान्यैरपि।

(६)—'अवःशब्देन कीर्त्तिरुच्यते तामिच्छति अवस्यति, अवस्यतेः उ प्रत्ययः, (३,२,-१७०) कीर्त्तिकाम इत्यर्थः'-इति वि०।

(७)—'कीदृशानां पुनर्मरुताम् वोढ्री ? उच्यते 'रथानां' रयस्वभावकानामित्यर्थः'-

२३इ। उपनो३। हा३औ२३४वा। रा२३४इभोः। सुताम्। औ२३होवा। हो५इ। डा॥ १२॥

II उपनोहाहोहा। राइभोः। ह२३ताम्। याहि-मदो। नाम्पा२३ताइ। उपानो२३४हा। रा२इभा २३४औहोवा। सुतं रयिष्ठा२३४५ः॥ ११॥ ३६

सर्गे?"-इति करणे अण् प्रत्ययः] सोमानां स्वामिन्! इन्द्र! "हरि-भिः" [अा शतेन हरिभिरित्यादिषु बहूनामश्वानां श्रुतेः अत्रापि शतसहस्र-सङ्ख्याकैः] अश्वैः(१) सह "नः" अस्माकं यज्ञे "सुतम्" अभिषुतम् सोमम् "उप याहि" तत्पानार्थं शीघ्रमागच्छ। पुनः "उप नः" इत्याद्युक्तिरादरार्था॥ ६॥ ३६

I.II प्रजापतेः सुतं रयिष्ठीये सहोरयीष्ठीये वा।

इति वि०। 'रथो रहतेर्गति कर्मणः'-इति नै०९.२,१। तथाच गन्तृणामित्यर्थो निष्पद्यते।

(१) इन्द्राश्वाः हरि-सञ्ज्ञकाः, तथाहि निघण्टुः —'हरिः इन्द्रस्य(१.१५,१)' इति।

अथ सप्तमी।

२ १र　२र　३ १ २　३ १ २　३ २

इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे।

१ २　३ १र　२र

अच्छावभृथमोजसा ॥ ७ ॥ ३७

५ र ४ ५　१ २ ३　५　२ १　७

I इष्टाहोत्राः। आसृक्षा२३४ता। इन्द्रं वृधा। तो

२　५　१ २ ४ ५　३ २　४

२३ध्वा२३४राइ। आच्छा३वाभृ। थमो२जा५सा६५६।

२ २ १ २

ए३। उदधिर्निधी१ः ॥ १२ ॥ ३७

"अध्वरे" अस्मदीये यज्ञे "वृधन्तः" हविर्भिरिन्द्रं वर्द्धयन्तः "इष्टाः" इष्टवन्तः यागं कृतवन्तः सप्तसङ्ख्याकाः "होत्राः" होत्रकाः "अवभृथम्"(१) तुल्याभिप्रसम् "अच्छ" अभि प्रति "ओजसा" स्व-तेजसा सहिताः "इन्द्रम्" "असृक्षत" व्यसृजन्(२)। यावदवभृथ-समाप्ति होत्रका यजन्तीति ॥ ७ ॥ ३७

I इष्टाहोत्रीयम् अप्सरसं वा अपांनिधि र्वा।

(१) प्रधानाकृतिषु कृतासु अवभृथ-सञ्ज्ञं कर्म क्रियते, तत्सित्यर्थः।

(२) 'ऋषिः आत्मीयान् ऋत्विजश्चाह 'इष्टाः प्रियाः 'होत्रा' स्तुत्या इति होत्राः आकृतय इत्यर्थः, ताः 'असृक्षत' विजत इत्यर्थः' इति वि०।

अथाष्टमी।

वत्सः काण्व ऋषिः।

३ २उ ३ १र २र ३ २ ३१२ ३१२
अहमिद्धि पितुस्परि मेधामृतस्य जग्रह।
३ १र २र
अहꣳ सूर्य्यइवाजनि॥ ८॥ ३८

१ ४ ४ २र १र
I अहमिद्धा५इपितुष्पराइ। मेधामृतस्यजग्रहा।
२ १ र ७ ३र २ १
अहꣳसूर्य्याः। इवा२३४। हाहोइ। जनि। होइ।
२र १र २र १र १ १ १ १
होइ। औहोऔहोवा२३४५हाउ। वा॥ १३ ॥३८

"पितुः"(१) पालकस्य "ऋतस्य" सत्यस्यापि तस्येन्द्रस्य "मेधाम्" अनुग्रहात्मिकां बुद्धिम् "अहम् इत्"(२) अहमेव "परिजग्रह" परिगृहीतवानस्मि नान्यः "हि"(३) यस्मात् एवं तस्मात् "अहं" "सूर्य्यः इव अजनि" सूर्य्यो यथा प्रकाशमानः सन् प्रादुर्भवति तथा अहमजनिषम् प्रादुरभूवम्॥ ८॥ ३८

३८ उत्तरार्चिकस्य ७,१,५,१ । १५

I प्रजापतेः निधनकामम् सिन्धुषाम वा।

(१) —'पितुः', कण्वस्य सकाशात्' इति वि०।

(२),(३) 'इत् हि द्वावपि पादपूरणौ'-इति वि०।

अथ नवमी।

शुनःशेप ऋषिः।

३ १ २    ३ २ ३ १    ३ १ २
1 रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः।
३ २ ३ २ ३ १ २
द्युमन्तो याभिर्मदेम ॥ ९ ॥ ३९

५र र   १   ३   ५   १
रेवतीर्नाः। सधा२मा२३४दाइ। इन्द्रा२इमा२
५   २ १   १   २   १   २ १
३४न्। तुविवा२जाः। द्यू२३मा। ता२या। भिर्मा
५   ४   ५
२३४वा। दा५इमो६हाइ ॥ १४ ॥ ३९

"द्युमन्तः"(१) अन्नवन्तः वयं "याभिः" गोभिः "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुते सति "नः" अस्मदीया गावः "रेवतीः"(२) क्षीराज्यादिधनवत्यः "तुविवाजाः" प्रभूतबलाश्च(३) "सन्तु" ॥ ९ ॥ ३९

३९ उत्तरार्चिकस्य ४,१,१४,१ । १६
। रेवत्यः वाजदावर्यौ वा।

(१) द्युरिति अन्ननामसु द्वादशम् (नि० २,७)। विवरणकारेण 'द्यु शब्दे' (अ० प०) इत्यस्येदं रूपम्, 'शब्दवन्तः, कीर्तिवन्तः'-इत्यादि।

(२) 'रयेर्मतौ बहुलम्' (६,१,३४)-इति वचनादिह संप्रसारणाभावः। 'सुपां सुलुक् (७,१,३९)' इति जसः सुः।

(३) 'तुवि'-शब्दो बहुवाची (नि० ३,१,७), वाज शब्द इह बल-वाची (नि० २,९,३)।

अथ दशमी।

शुनःशेपो वामदेवो वा ऋषिः।

१ २ ३१ २ ३ १ २ ३ १
सोमः पूषा च चेततुर्विश्वासाꣳ सुक्षितीनाम्।
३ २ क २र ३ २
देवत्रा रथ्योर्हिता ॥ १० ॥ ४०

। ५र र २ १ २ ३ १ ३ ५ १
। सोमःपूषा। चचाइतनूः। अयायो२३४वा। वा
र २र र १ २२ ३ ५ १ ७
इश्वासाꣳसुक्षिती। नाम्। अयायो२३४वा। दाइव-

"देवत्रा"(१) देवेषु "रथ्यः" रथार्हः "अर्हिता"(२) आरोढा "सोमः"(३) तादृशः "पूषा" सूर्य्यश्च(४) "विश्वासां" सर्व्वासां "सुक्षितीनां" [क्षियन्ति निवसन्तीति क्षितयः प्रजाः] शोभन-

। सौमापौषम् गोश्रश्वीयं वा।

(१) 'देव-मनुष्य पुरुष पुरु-मर्त्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्'- इति त्रा।

(२) 'रथ्यः, अर्हिता'- इति केदम्तु पदग्रन्थ-विरुद्धो विवरणविरुद्धश्च। पदकारस्तु 'रथ्योः, हिता' इत्येवं चिच्छेद। "रथ्योः, रथशब्देनात्र यज्ञ उच्यते', रंहतेर्गतिकर्मणः, रथ्योः रथस्य यज्ञस्य यो वोढारौ तौ पत्नीयजमानावत्र रथ्यावुच्यते, तयोः यज्ञस्य देवान् प्रति प्रापयित्रोः पत्नीयजमानयोः 'हिता द्विवचनस्यायमाकारः हितौ' इति वि०।

(३) अन्तरिक्ष-स्थो देवः, चन्द्रमाः इत्यप्यमतम्नैरुक्तम् (११,१,४)।

(४) द्यु-स्थान देवः, 'पोषं पुष्यति पषा भवति' इत्यादि नै०१२.२,५-७।

२　४　१२ ३२ १ २ ११
त्रारा२३ । थियो३र्वा५इता६५६ । गावो२अस्वा२३-
११
४५ः ॥ १५ ॥ ४०

॥ इति प्रथम-दशति ॥

चितीनां मनुष्याणां सम्बन्धीनि हवींषि इन्द्रार्थं कृतानि "चेततः" जानीतः ॥ १० ॥ ४०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमे खण्डे—

मन्त्रं प्रथमा ।

श्रुतकक्षऋषिः ।

२ ३ १ २ १ २ ३ १ २ ३ १२ ३२
पान्तमावोअन्धसइन्द्रमभिप्रगायत ।
३ १ २ ३ १ २ ३ १ २ ३ २
विश्वासाहᳪशतक्रतुंमᳪहिष्ठञ्चर्षणीनाम् ॥ १ ॥ ४१

हे ऋत्विजः ! "वः" यूयम् "अन्धसः" सोमलक्षणम् । अन्नम्

४१ उत्तरार्चिकस्य १,२,१,१ । १०

४र ५ ४र ५र ४ ५ ४ २ १ ७ १ २
I पान्तमावोअन्धसाः। इन्द्रामभि। प्रगायाता
२ २ १ २ १ २ । १
३। हाइहाइ। विश्वासाहम्। शताक्राहुइम्। हा-
२ १ २ २ २ १ ३
इहाइ। मंहिष्ठचाइ। हाइहा। षणारइ। नार्इ
५र र २ ५
४औहोवा। उइरइ४पा॥ १६॥

"आ पान्तम्" आभिमुख्येन पिबन्तं [पा पाने (भ्वा०प०) छान्दसः शपोलुक्(१)। 'सर्व्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'न लोकाव्यय" (२,३,६९पा०) इति षष्ठी प्रतिषेधाभावः। ततोऽन्यसङ्गत्यर्थ 'कर्त्तृकर्मणोः' (२,३,६५पा०) इति षष्ठी] सोममाभिमुख्येन पिबन्तम् एतादृशम् "इन्द्रम्" "प्र गायत" प्रकर्षेणाभिष्टुत। कीदृशम्? "विश्वासाहम्" सर्व्वेषां शत्रूणामभिभवितारम् "सर्व्वेषां भूतजातानां वा" अतएव "शतक्रतुम्"-(२) बहुविध प्रज्ञानं "बहुविध-कर्माणं वा" "चर्षणीनाम्"(३)

I अध्यर्द्धेड-वैतहव्यम्।

(१) शब्लुकि शितपरकत्वाभावात् पिबादेशाभावः।

(२) 'शतम्' इति बहुनामसु दशमम् नि०३.१। 'क्रतुः' इति प्रज्ञा-नामसु पञ्चमम् (नि०३.९) कर्म्मनामसु च एकादशम् नि०२,१।

(३) 'चर्षणयो मनुष्याः (नि०२.३,९)। षष्ठी-बहुवचनं चतुर्थी-बहुवचनार्थे, यजमान मनुष्येभ्य इत्यर्थः' इति वि०।

४र ५ ४र ५र ४ ५　　४　　२ १　　२ र
II पान्तमावोअन्धसः । इहा । इन्द्रमभाइ । प्रगा

१　　१ २　　१ र र　　१　　२
यता२ । इहा । विश्वासाह९शता२क्रतूम् । इहा ।

१　　२　　१　　२ १ १
म९हा२इष्ठञ्चा । इहा । षणा२इनाम् । इहा२३

१ १
४५ ॥ १७ ॥

३　　४ २ ४ ५　　१
III पाऽ५न्तम् । आ३वो३अन्धमाः । आइन्द्राम-

१　३　५　१　३　५　२
भाइ । प्रगा२या२३४ता । विश्वा२सा२३४हाम् । शा

१ २ २　　१ २ १ २　　१ २　　१ ३
३ताक्रा३तूम् । म९हिष्ठञ्चर्ष । णाये३ । ना२मा२३४-

५र र　　२ १ १ १ १ १
औहोवा । ओ३का२३४५ः ॥ १८ ॥ ४१

मनुष्याणाम् "म९हिष्ठम्" धनस्य दातृतमं यद्वा यजमानानां यष्टव्यत्वेन पूजनीयमिन्द्रं प्र गायतेति समन्वयः ॥ १ ॥ ४१

II इहवद्वामदेव्यम् ।

III ओकोनिधनं वैतहव्यम् ।

अथ द्वितीया।

वसिष्ठऋषिः।

२३१ २३१ २ ३ १ २
प्रवइन्द्रायमादनꣳहर्य्यश्वायगायत।
१ २ ३ १ २
सखायःसोमपाव्ने ॥ २ ॥ ४२

१ ३ २ ३ ५ २ १
I प्रवइन्द्रा२। यमादा२३४नाम्। प्रवा२इन्द्रा।
२ २ ३ ५ २ २ १
औ३हो। या२३४मा। दा३नाम्। हरा२अश्वा।
२ २ ३ ५ २ २ १
औ३हो। या२३४गा। या३ता। सखा२याःसो।
२ २ १ ५ ४ ५
औ३हो३। मापो२३४वा। आपुव्नो६हाइ॥ १८॥

१ १ २ २ ३ ५ २ २
II प्रवा२इन्द्रा। औ३हो। या२३४मा। दा३नाम्।
१ १ २ २ ३ ५ २ २ १
हरा२अश्वा। औ३हो। या२३४गा। या३ता। सखा-

४२ उत्तरार्च्चिकस्य १,२,२,१ । १८

I,II आग्नेये सामनी।

१ २ २ १ ५ ४
२याःसो। औ३होऽ३। मापो२३४वा। आ५वो६

५
हाइ॥२०॥

२ ऽ २ ऽ १ १ र ऽ १ ऽ २ ३
III प्रवई३या। ई३या। इन्द्रोई३या। इ३या। या-

५ २ २ ऽ २ ऽ १ १ र
२३४मा। दा३नाम्। हरई३या। ई३या। आस्वो-

ऽ २ ऽ २ ३ ५ २ १ ऽ २
ई३या। ई३या। या२३४गा। या३ता। सखई३या।

ऽ १ १ र ऽ १ ऽ २ ४ ५ ४
ई३या। याःसोई३या। ई३या३। मापो२३४वा। आ-

५
५वो६हाइ॥२१॥

१ र १ १ र २ ३ ५ १
IV प्रवौहोवा२। इन्द्रौहोवा। या२३४मा। दा३-

२ र १ १ र २ ३ ५
नाम्। हरौहोवा२। आस्वौहोवा। या२३४गा।

१ १ र १ १ र २ १ ५
या३ता। सखौहोवा२। याःसौहोवा३। मापो२३४वा।

४ ५
आ५वो६हाइ॥२२॥

२ र १ २ २ १ र ० २
V प्रवोदा३दा। औ३हो। इन्द्रोददा। औ३हो।

III, IV गौरीविते। V गात्र्यंसाम।

या२३४मा। दा३नाम्। हरिदा३दा। औ३हो। आस्रोददा। औ३हो। या२३४गा। या३ता। सखिदा३दा। औ३हो। याःसोददा। औ३हो३। मापो२३४वा। आ५वो६हाइ॥ २३॥

VI प्रवः। प्रवा। इन्द्रायेन्द्रा। यमादा१ना२म्। हराइहर्यश्वा। यगाया१ता२। सखाया२३ःसो३। मापो२३४वा। आ५वो६हाइ॥ २४॥ ४२

हे "सखायः!" "वः" यूयं "हर्य्यश्वाय"(१) हरि-नामकाश्वाय "सोमपाव्ने"(२) सोमानां पात्रे "इन्द्राय" "मादनं" मदकरं स्तोत्रं "प्र गायत" प्र पठत॥ २॥ ४२

VI गौरीवीतम्। सर्वाणि शाक्त्यसामानि, सर्वाणि वा गौरीवीतानि।

(१) —'हरी हरितवर्णौ अश्वौ यस्य सः, हर्य्यश्वः,' इति वि०। "हरी इन्द्रस्य"-इति नै० १.१५.१।

(२) —'आतो मनिन्क्वनिब्वनिपश्च' (३,२,७४)।

अथ तृतीया ।

मेधातिथिः ऋषिः प्रियमेधश्च ।

३ १ २  ३ १ २ ३  १ २ ३ २ ३ १ २
वयमुत्वातदिदर्था इन्द्रत्वायन्तःसखायः ।
१ २ ३ १ २
कण्वाउक्थेभिर्जरन्ते ॥ ३ ॥ ४३

५ ४ ५  २  ५  २ ३  ५
I वयंवायाम् । ऊ२३४त्वा । ताद्दीदा२३४र्थाः ।
३ ४ ५र ४ ५  २  ५  १ २  र
इन्द्रत्वायन्तः । सखा२३४याः । कण्वा३१२३४ः । उक्थे-
५ र र  ५ ४
भिर्जरन्ते । एहियाइहा । होपुइ । डा ॥ २५ ॥

५ २ ४र  ५ १र  १ र
II वयमूउत्वातदिदर्थाः । ऐहिहा२इ । वयमुत्वातदि-
र र  २ १  १  ३  ५  १
दर्थाइन्द्रत्वायन्तः सखा२३याः । का२३४ण्वाः । उ ।
२ १  ५ २  १ १ १ १ १
क्थाइ । भिर्जा२३४वा । रन्ता३या२३४५ ॥ २६ ॥ ४३

हे "इन्द्र !" "त्वायन्तः" त्वामात्मन इच्छन्तः 'सखायः" समानख्यानाः(१) "वयम्" "तदिदर्थाः" यत् त्वद्विषयं स्तोत्रं

४३ उत्तरार्चिकस्य १,२,३,१ । १८
I,II काण्वे इमे ।

(१) 'समानख्याना इत्यर्थः' इति वि० ।

अथ चतुर्थी।

श्रुतकक्ष ऋषिः॥

१ २ ३ १ २ ३ १र २र ३ १ २

इन्द्रायमद्वनेसुतम्परिष्टोभन्तुनोगिरः।

३ १ २ ३ १ २

अर्कमर्चन्तुकारवः॥ ४ ॥ ४४

१ ४५र ४५४ २ १ र र २ १

१ इन्द्रायमद्वनाइ। सुताम्। इन्द्रायमद्वनेसुताम्।

तदित् तदेवार्थः प्रयोजनं येषां, तादृशाः सन्तः(२) "त्वा" त्वाम् जरामहे(३) स्तुमहे। "उ" इति पाद-पूरणः। "कण्वाः" कण्व-गोत्रोत्पन्नाः अस्मदीयाः पुत्राश्च "उक्थेभिः"(४) उक्थैः शस्त्रैः "जरन्ते"(५) त्वां स्तुवन्ति(६)॥ ३ ॥ ४३

"मद्वने" "माद्यतेः क्वनिप्" मदन-शीलाय "इन्द्राय" तदर्थं "सुतम्" अभिषुतं सोमं "नः" अस्मदीयाः "गिरः" स्तुति-लक्षणा-वाचः(१) "परिष्टोभन्तु" "स्तोभतिः स्तुति-कर्मा (नि०३,१४,४)"

---

४४ उत्तरार्चिकस्य १,२,४,१। २०

(२)- उत्तर-वाक्ये जरन्ते इति दर्शनात् इहापि जरामहे इत्यध्याहारः।

(३)- छान्दसिक-बहुल-वचनात् भिस ऐस्-भावः (७,१,११)।

(४)- 'जरति'-इति अर्चति कर्मसु सप्तम पदम् नि०३,१४।

(५)—विवरण-मते तत्र कण्वाः जरन्ते इत्येकदलं मन्त्र व्याख्यानम्। तथाचोक्तम्— 'कण्वाः' कण्वस्य पुत्राः, मेधातिथि-प्रभृतय-इति।

(१)—'गिरः स्तुतयो गिरो गृणातेः'-इति नै०१.२.१५।

२१ २ १र २ १र
पराइष्टो२३भा। तुनोगिरो। अर्कमा२३र्चा। तुकारा-
२ १
२३वा३४३:। ओ२३४५इ। डा॥२७॥

५ र र १ २ २ १ २र
II इन्द्रायमदनेहाउ। ओइन्द्र३ताम्। परिष्टो।
१ ३ २ १ १ र ३
भा। तुनो२३हाइ। गाइरा२:। परिष्टोभा। तुनो२
२ १ १ १ ३ ५र
३हाइ। गाइरा२:। अर्का२३म। आ२र्चा२३४ओ-
र २ २ १ १११
होवा। ए३। तुका३रवा२३४५:॥२८॥

४५र ४५र ४ ५र ५५ २ १ २
III इन्द्रायमदनेसुतम। इन्द्रायमोवा। हा३नाइन्द्र
२ १ २र १ २ २ ३
३ताम्। परिष्टो। भा२३। हा३हा३। तुनो२गा२३-
५ १ २ २ २ १र २
४इरा:। आर्कमर्चा३। हा३हा। तुकारा२३वा३४३:।
१
ओ२३४५इ। डा॥२९॥४४

परितः सोमं स्तुवन्तु। ततः "कारवः" स्तुतिकारिणः स्तोता-

I,II गौरीवीते द्वमे।
III इदं श्रौतकक्षम्।

अथ पञ्चमी ।

इरिमिठऋषिः ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अयन्तइन्द्रसोमोनिपूतोअधिबर्हिषि ।
१ २ ३ २ ३ ३ १ २
एहीमस्यद्रवापिब ॥ ५ ॥ ४५

१ ५ २ १ र २ १ २ १ र र
I अयन्तआ । द्रसोमो । होवा३होइ । निपूतो-
२ १ २ ३ ५ १ २र १ १
आ३ । धीबर्हा२३४इषी । आइहीमस्या२३ । द्रा२वा
५ र र ३ ५
२३४औहोवा । पी२३४वा ॥ ३० ॥
५ ५ १ र र १ र
II अयन्तइन्द्रसो४माः । निपूतोअधिबार्हाइषीर । ए-

रश्च(२) "अर्कम्"(३) सर्वैरर्चनीयं सोमम् "अर्चन्तु" पूजयन्तु ॥४॥४४

हे "इन्द्र!" "ते" तुभ्यं त्वदर्थम् "अयं सोमः" "बर्हिषि अधि"

४५ उत्तरार्चिकस्य १,२,५,१ । २१
I,II इमे हेसोमिन्ने । .

(२) 'कारुः'-इति स्तोतृनामसु तृतीयम् नि०३.१५ ।

(३) 'अर्कं देव सोमम्' इति वि० । "अर्को देवो भवति, यदेनमर्चन्त्यर्को मन्त्रो भवति, यदेतेनार्चन्त्यर्कमन्नम भवत्यर्चति भूतान्यर्को वृक्षो भवति स-वृतः कटुकिम्ना"-इत्यादि नै० ५.१,५-६ ।

१ २ र १ १ र २
चो२इमास्या। इवापाइवा२। आइहीमस्याद्रवा३१उवा

५
२३। पी२३४वा ॥ ३१ ॥

४ ३ ४ ३ ५ १ र ५र ४ ५ ४
III अयन्तइन्द्रमो४मः। ना२३४इ। पूतोअधिबर्हि

५ १ र र २ १ २ र १ २ १र
षी। निपूतोअधिबर्हा२३इषी। एहोइमा२३स्या। द्रवा

६ ५
पा२३४५इबा६५६। ई२३४हा ॥ ३२ ॥ ४५

वेद्यामास्तीर्णे दर्भे(१) "निपूतः" नितरां दशापवित्रेण शोधितः अभिषवादि-संस्कारैः संस्कृतः इत्यर्थः "इम्" इदानीम्(२) "अस्य"(३) इमं सोमं प्रति "एहि" आगच्छ, आगत्य च यत्र रसात्मकः सोमो ह्रयते तं देशं प्रति "द्रव"(४) शीघ्रं गच्छ, तदनन्तरं तं सोमं "पिब" ॥ ५ ॥ ४५

III इन्द्रवद्दैवोदासम्।

(१ 'अधिबर्हिषि बर्हिषः उपरि' इति वि०।

(२) 'ईम्'-इति पदपूरणः इति वि०। निरुक्तकारोऽप्याह 'पदपूरणास्मिताचरेष्वनर्थकाः कमीमिद्विति' १,३,१४।

(३)—'अस्य सोमस्य षष्ठी-निर्देशात् स्वाद्वम्' इति वि०।

(४)—'एहि, द्रव-इति द्वावपि गत्यर्थौ, अन्यासे च भूयांसोऽर्थाः प्रतीयन्ते' इति वि०।

अथ षष्ठी।

मधुच्छन्दा ऋषिः।

३ २ ३ १ २ ३ १ २ ३ १ २
सुरूपकृत्नुमूतयेसुदुघामिवगोदुहे।
२ २ ३ १ २
जुहूमसिद्यविद्यवि॥ ६ ॥ ४६

१ ४ ५ २ १ र २ १ २ १ २र १
॥ सूरू। पकृत्नुमूतयाइ। सुदुघाम्। इवगो२।
१ २ २ ५ २ १र २ १ २
दुहया३१उवा२३। ऊ३४पा। जुहूमा२३सी। द्यविद्यविया३१
२ ५
उवा२३। ऊ३२३४पा॥ ३३ ॥

"सु-रूप-कृत्नम्" शोभन-रूपोपेतस्य कर्म्मणः कर्त्तारम् इन्द्रम् "ऊतये" अस्मद्रक्षार्थं "द्यविद्यवि" प्रतिदिनं "जुहूमसि"(१) आह्वयामः। आह्वाने दृष्टान्तः "गोदुहे" गो-धुगर्थं "सुदुघाम् इव" सुष्ठु दोग्ध्रीं गामिव, यथा लोके गोर्यो दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत्(२)॥ वस्तोरित्यादिषु

४६ उत्तरार्च्चिकस्य ४,१,१५,१ । २२

I शाक्करवर्णम्।

(१) मसदागमे (७,१,४६म०) रूपम्।

(२) 'एतदुक्तं भवति, -यथा गो-दोह-कर्मार्थं तस्या एव गोर्दोहनार्थम् आह्वयति, तद्वत्'-इति वि०।

५ र र　　२१　　१　　१ २र
II सुरूहाहाउ । पक्रत्नुमू२ताया२इ । सुदुघाम् ।

१　　१२र　　र र १र३र २　　२　　१
इवगो२ । दुहे । ऐहोयैहो१ । जुहौ२ । ऊवा२इ ।

१　　१　　२र र ३र २
मासो२ । द्यविद्यवि । ऐहोयैहो१ ॥ ३४ ॥

२ र　　१　　५　　१　　र　　२
III सुरूपकृत्नू३मूता२३४याइ । ओइसुरूपकृत्नूमू१जा-

१　　र　　२　　१ र
या२इ । ओइसुदुघामिवागो१दुहा२इ । जुहूममा२इ ।

३ २ ३　　५　　४ ५　　१　　१　　१
द्यविद्या२३४वी । ऐही । जूहू२मामो२ । द्यविद्या ।

४ ५र　　५र ५र　　५　　२　　२
वोवो२३ । आऔहोइ । आऔहोइवा । ए३ । द्यवो३-

१ १ १ १ १
ई२३४५ ॥ ३५ ॥

४ ५र ४　　१　　१　　१ १ र २　　१ २
IV सुरूपकृ । त्नूमू२तयाइ । सुदुघामो३ । वागो-

नामसु द्यविद्यवीति द्वादशाहर्नामानीति पठितम्(१) ॥ ६ ॥४६

---

II, त्रोङ्कम् । III,IV इ:गवे वेगवं वा औढले ।

(१) अहर्नामानि द्वादश इति ग्रन्थे कृत परिगणन 'वागोः' इत्यादिषु द्वादशसु नामसु तदनुगतं 'द्यविद्यवि' इति निघण्टौ पठितम इत्यर्थः । तथा च संकरम. 'अहर्नामान्युत्तराणि द्वादश अहः कस्मात्? उपाहरन्त्यस्मिन् कर्माणि' इत्यादि ५,३,२८ ।

अथ सप्तमी।

त्रिशोकऋषिः*।

३ १ २ ३ २ ३ १ २ ३ १ २
अभित्वावृषभासुतेसुतꣳसृजामिपीतये।
३ १ २ ३ १ २
तृम्पाव्यश्नुहीमदम्॥ ७॥ ४७

२ ४ ४५ २ ४ १ १ २१२
दू२३४हाइ। सुदुघामा। वागो२दुहाइ। जुहूमा२३-
२ १ ४ २ ५
सी३। द्या२३वी३। द्या३४५वौ६हाइ॥ ३६॥* ४६

हे "वृषभ!"(१) कामानां वर्षितरिन्द्र! "त्वा" त्वाम्(२)

* 'तृशोक'-इति त्रि०-पाठः।

४७ उत्तरार्च्चिकस्य १,२,७,१। २३

"वस्तोः१ धः२ भानुः३ वासरम्४ स्वसराणि५ ६ घर्मः७ घृणिः८ दिनम् दिवि१० दिवे-दिवे११ द्यविद्यवि१२" इति नि०१.९।

(१) ऋचि वृषभा इति 'सुपां सुलुगिति (७,१,३९) आत्वे रूपम्।

(२ -'द्वितीयैकवचनमिदं चतुर्थ्येकवचनस्यार्थे द्रष्टव्यम्' इति वि०। तथाच "चतुर्थ्यर्थे बहुलं छन्दसि (२,३,६२)"-इति हि स्मरणम्।

* इति ग्रामे गेय गाने चतुर्थः प्रपाठकः॥४॥

५ ४ ५र र ४ १ २ र १
I ओम्। अभित्वावृषभासुताइ। सुतꣳसृजा। मिपाइ-
२ १ २ २
ता१या२इ। त्वम्पावा१या२ऽ२। अन्धा३१उवाये३। मा२-
५
३४दाम॥ १॥

५ र र र र २र १ २
II अभित्वावृषभासुतेअभ्याहाउ। त्वावृ३षाभा१सू-
१ २ र १ २ ३ २ १
ता२इ। सुतꣳसृजा। मिपाइता१या२इ। त्वम्पा३हो-
३ २ १ २ १र २ १
इ। विया३हो। अन्धोमा२३दा३४३म्। ओ२३४५इ।
डा॥ २॥

५ ४ ५र र ४र ५ ४ ५ २ र १
III अभित्वावृषभासुते। सुतꣳसृजोवा। मिपीता-
१ २र १र २ १ २
या२इ। सुतꣳसृजामि। पीता२३याइ। त्वा२३म्पा३।
१ २ ५र र २ र १ ३ १ १ १ १
वा२या२३४औहोवा। अन्धोमदा२३४५म्॥ ३॥ ४७

"सुते" सोमेऽभिषुते सति तं "सुतम्" अभिषुतं स.सं "पीतये" (१)

I,II,III आर्षभाणि त्रीणि सम्भुक्तितानि वा बाभ्राभ्राणि वा।

(१)—"स्वामापापत्रोभावं (३,३,९५," इति क्रमि कपम।

अथ अष्टमी।

कुसीदऋषिः ※।

१ २ ३ १र २र३ १ २ ३ २
यद्इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः।
१र २र३ १ २
पिबेदस्य त्वमीशिषे ॥ ४ ॥ ४८

१ ३ २ १ ४ ५ ४र र ५ १र २ १र २र
I याद्ईन्द्रा२३। चमसेषुवाईया। सोमश्चमूषु ते सु-
१ २र १ २ १ २ २ १
तः। सोमश्चमू। षुनाइस्ह२३ताः। पाइबे३द्वाइ। आ-
२ २ १र २ १
स्या३स्याइ। त्वमीशा२३इषा३४३इ। ओ२३४इ। डा॥

॥ ४ ॥

५ र ५र १र र २ २ २ र
II यद्इंद्रचामा६सेषुवा। सोमश्चमूषुता१इस्ह३ताः। सो

मनाय "अभिसत्नामि"(३) "तृम्प"(४) तृप्य "मदं" मदकरं सोमं "व्यश्नुहि"(५) विशेषेण प्राप्नुहि॥ ७ ॥४७

※ 'कुसीदी' इति वि०।

I, II कौत्से, प्राश्ववाजे वा दाशवाजे वा।

(३)—'आभिमुख्येन ददामीत्यर्थः' इति वि०।

(४)—ऋचि तृम्पा इति 'द्व्यचः (६,३,१३५)' इति दीर्घः।

(५)—ऋचि व्यश्नुही इति दीर्घश्छान्दसः।

अथ नवमी।

शुनःशेप ऋषिः।

१ २ ३ १ २ ३ १ २
योगेयोगेतवस्तरंवाजेवाजेहवामहे।
१ २ ३ १ २ ३ १ २
सखायइन्द्रमूतये॥ ८ ॥ ४९

२ १ १ २ १ २ ४
मश्चमू२। षूइताइह्व३ता:। आऽ२इ। पिबेदस्यो२३
५ ३ १ ४
४हाइ। त्वमाइइशाषुइषाइ५६इ ॥ ५ ॥ ४८

हे "इन्द्र!" "ते" त्वदर्थं "सुतः" अभिषुतो यः "सोमः" "चमसेषु"(१) एतन्नामकेषु पात्रेषु तथा "चमूषु" [चमन्ति(२) भक्षयन्त्यत्रेति] चम्बोग्रहाः तेषु च "आ" सर्व्वतः अस्ति। "अस्य"(३) तमेतं सोमं "त्वम्" "पिब इत्" [इदवधारणे] पिबैव। कथं मम सोम-पान-योग्यता? तत्राह—हे इन्द्र! त्वम् "ईशिषे" तस्य त्वमीश्वरो भवसि खलु; यत एवं ततः पिबेति समन्वयः [ईश ऐश्वर्ये (अ०आ०) लटि "ईशः से (७,२,७७)" इति इडागमः॥ ८ ॥४८

"योगे योगे" प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे(१) "वाजे वाजे"

४९ उत्तरार्चिकस्य १,२,११,१। २४

(१)—'बहुवचनं, बहुयज्ञापेक्षम्, बहुषु यज्ञेषु, अभिषवण-फलकेषु,' इति वि०।

(२) चम,छम, जमु, अदने भ्वा० प०।

(३) 'अस्य सोमस्य, षष्ठी निर्द्देशात् एकदेशमात्र वाक्यशेषः' इति वि०।

(१)—'योग नियोग व्यापारः कर्म इत्यनर्थान्तरम्, तस्मिन् सर्वस्मिन्'-इति वि०।

४र ५र र र ४ ५ ४ १र र २र र र र
योगेयोगेतवस्तराम् । वाजेवाजेहवामहे । स-
१र २ २ १ ५ ४ ५
खाया२३ई३ । इन्द्र२३४वा । ता५यो६हाइ ॥ ६ ॥

४र ५र र र ५ १र २र र २र १ २र
II योगेयोगेतवस्ता६राम् । वाजे२वाजे२हवा२महे२ ।
१ २ २ १ १ १ २ २ १
होवा३हाइ । साखा२याई२३ । होवा३हाइ । इन्द्र२३ ।
१ २ ५र र २ ५
ता२या२३४औहोवा । ऊ२३४पा ॥ ७ ॥

५र र र र र र ४ ५ १र र २र र
III योगेयोगेतवाहाउस्ताराम् । वाजेवाजे । हवा-
१ २ ५ १ २र १
२माहाइ । ऊवाइ । औ३हो२३४वा । साखायई ।
१ २ ५ ३ र २ १
इन्द्र२तायाइ । हुवाइ । औ३हो२३४वा । सखायआ ।
२ २ १ १११५
ऊवा२इ । औ३हो२३४५वा६५६ । इन्द्र३तये२३४५ ॥८॥४९

कर्म-विघातिनि तस्मिन् तस्मिन् सङ्ग्रामे(२) "तवस्तरम्" अति-

I,II,III सौमेधानि, पूर्वतिथानि वा पौर्वातिथानि वा ।

(२) 'अन्ने अन्ने हविर्लक्षणे उपकल्पिते' इति वि०। 'वाज'-इति निघण्टौ सङ्ग्राम-नामसु चत्वारिंशत्तमं पदम् (२.१७)। 'वाज'-इति निघण्टौ अन्न-नामसु द्वितीयं पदञ्च २.७)।

अथ दशमी ।

मधुच्छन्दा ऋषिः ।

२उ　३　१ २　३१ २　३ १र　२र
आत्वेतानिषीदतेन्द्रमभिप्रगायत ।
१ २　३　१　२
सखायःस्तोमवाहसः ॥ १० ॥५०

॥ इति द्वितीय-दशति ॥

I आतू३४ । एतानि । षीदा६ता । इन्द्रमभाइ ।
प्रगायता । साखायःस्तोम । वा । औ३हो । ववार्हा

शयेन बलिनम्(३) "इन्द्रम्" "ऊतये" रक्षार्थं "सखायः(४) सखि
वत् प्रिया वयं "हवामहे" आह्वयामः ॥ ८ ॥ ४९

[नु शब्दः क्षिप्रार्थो निपातः] 'आ नु आ इत'(१) । इति

५० उत्तरार्चिकस्य १,२,१०,१ । २५

I दैवातिथं मैधातिथं वा ।

(३)—'तवः'-इति निघण्टौ बल-नामसु पञ्चम पदम् (२.९) ।

(४)—'हे 'सखायः' ऋत्विजः'-इति वि० ।

(१)- इता इति ऋचि निपात-लक्षणो दीर्घः (६.३,१३६) ।

५ २ १ २र १र २ २
२३४माः। हयाइ। साखायःस्तोम। वा। औ३हो।
१ २ ५
ऊम्मा२३। हा३४५सोइहाइ ॥ ८ ॥ ५०

द्वाभ्यामाङ्भ्यां मन्त्रे तु इत-शब्दोऽभ्यसनीयः](१) हे "सखायः" ऋत्विजः! चिप्रमस्मिन् कर्मणि आगच्छतागच्छत [आदरार्थोऽभ्यासः] आगत्य च "निषीदत" उपविशत "इन्द्रम्" "अभिप्रगायत" सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः? "स्तोमवाहसः" त्रिवृत्-पञ्चदशादि-स्तोमान्(२) अस्मिन् कर्मणि वहन्ति प्रापयन्ति ॥ १० ॥ ५०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

(१) उपसर्गानुरोधात् क्रियाया आवर्त्तनमित्यर्थः। विवरणे तु एक एवार्थः स्वीकृतः।

(२) त्रिधा वर्त्तते इति त्रिवृत्। एवं पञ्चदशादयश्च स्तोमाः। ते च "तिसृभ्यो हिङ्करोति स प्रथमया, तिसृभ्यो हिङ्करोति स मध्यमया, तिसृभ्यो हिङ्करोति स उत्तमया उद्यती त्रिवृतो विष्टुतिः" इत्यादि ताण्ड्याद्यनुशासनादभिगन्तव्याः। ताण्ड्ये हि आद्वितीयाध्यायारम्भतृतीय ध्यायान्तं समस्तमेतद्वृत्तेष्वेव नियुक्तं श्रुतम्। तत्र च त्रिवृत्१ पञ्चदशः२ सप्तदशः३ एकविंशः४ त्रिणवः५ त्रयस्त्रिंशः६—इति पृष्ठ्यषडहस्य षट् स्तोमाः क्रमेण विहिताः। अनन्तरं छन्दोमानां चतुर्विंशः१ चत्वारिंशः२ अष्टचत्वारिंशः३ - इति त्रयस्तोमाः व्यवस्थिताः। इत्थं सङ्कलनया नवस्तोमाः, तथा चात्र आदिपदात् सप्तदशादेर्ग्रहः।

अथ षष्ठे खण्डे—

सेयं प्रथमा ।

विश्वामित्र ऋषिः ।

१ १र  २र  ३ १  २
इदꣳह्यन्वोजसासुतꣳराधानाम्पते ।
३ २ १ २
पिबात्वा३स्यगिर्वणः ॥ १ ॥ ५१

५  ५  २  १२  १ २ १ २
I इदा६म । ह्यिया३नूओ१जासा२ । सुतꣳराधा ।
१ २  १ र  २  ३ २  ३ २
नाम्पा१ता२इ । पिबातुवस्यागिर्वाणा२३४ः । पिबा३४तुवा३ ।
१  २  ५र र  ३  ५
स्या२गा२३४औहोवा । वा२३४णाः ॥ १० ॥

हे "राधानां" धनानां (१) "पते" ! "गिर्वणः" (२) गीर्भिः स्तुतिभिर्वननीय ! इन्द्र ! "ओजसा" बलेनोपहितस्त्वं "इदम्(३)

५१ उत्तरार्चिकस्य १,२,८,१ । २६
I आङ्गिरसं माधुच्छन्दसं वा ।

(१)—'राधः' इति निघण्टौ धन नामसु अष्टादश पदम् (२.१०)।

(२)—गिर्वणस् इति सान्तः शब्दः। "गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति। 'जुष्टं गिर्वणसे बृहत्'-इत्यपि निगमो भवति" इति नैरुक्तम्, ६.३,१४।

(३)—'नपुंसकलिङ्ग व्यत्ययेन' इति वि०, तथाच इदम् इममित्यर्थः; सायण-मते त्वयं 'सुपां सुलुगित्यादिना तृतीयाया लुकि रूपम्'

५ ५ ९ २ ३ ५ १ २
II इद्र७ह्यिया४औहो। नूऽओजा२३४सा। सुत७-
१ २ ५ ३ ५ १ र ४
राधा। ना३२म्। पा२३४ताइ। पिबातुवस्या२३। ग।
५ १ ५र ५ ४
वाहाइ। वा२३४णाः। एह्यिया६हा। होप्रइ।
डा॥ ११ ॥
५ ५र २ १ २ १ २र
III इद७ह्मनूइओजसा। सुत७राधा। नाम्यातौ।
र १ १ २ १ २र र २
होवा३हाइ। पिबातुव। स्यगाइर्वाणो। होवा३हाइ।
१ र २ १र १ ३ ५र
पिबातुवौ। होवा३हा। स्यगायेः। वा२ना२३४औ-
र २ ६ २ १ १ १ १
होवा। घृतश्चुता२३४५॥ १२ ॥ ५१

अनु" अनेनानुक्रमेणेत्यर्थः "ओजसा" बलेन ग्रावभिः(४) "सुतम्" अभिषुतं "अस्य"(५) इमं सोमं "तु" क्षिप्रं "पिब(६) हि"(७) ॥ १ ॥ ५१

---

II आङ्गिरसं क्रौञ्चं वा।

III आङ्गिरसं घृतश्चुन्निधनम् प्राजापत्यं माधुच्छन्दसं वा।

(४) पावविशेषैरित्यर्थः। इह निरुक्तम् "ग्रावाणो हन्तेर्वा गृणातेर्वा गृह्णातेर्वा" इत्यादि तदत्र गृह्णातेरेवोपयोगः।

(५) —'अस्य षष्ठीनिर्देशात् एकदेशमित्यर्थः'—इति वि०।

(६) –ऋचि पिबा इति द्व्यचः इति दीर्घः।

(७) —'हि' अत्र द्वावपि पादपूरणौ।

अथ द्वितीया ।

मधुच्छन्दा ऋषिः ।

३ १र  २र ३ १ २  ३ १ २  ३ १ २
महाꣳ इन्द्र पुरश्चनो॰ महित्वमस्तुवज्रिणे ।
१र  २र ३ १र  २र
द्यौर्न्नप्रथिनाशवः ॥ २ ॥ ५२

I महाꣳ इन्द्राः । पुरश्चनो । मा१हो२त्वामा२ ।
स्तुव । ज्रिणाइ । द्यौ२र्नाप्रा२ । थिनाशा२३वा३४३ः ।
ओ२३४५इ । डा ॥ १३ ॥

II माहाहाइन्द्राः । पु३राश्चा३नो । महा२इत्वा२
३४मा । स्तुवी३हो३ । हवा५ज्रिणाइ । द्यौर्नप्र ।

अयम् "इन्द्रः" "महान्" शरीरेण प्रौढः "परश्च" गुणैः

---

॰ "पुरश्चनो"-इति पाठः क॰ ख॰ ए॰ क॰ ग॰ ख॰ घ॰
इति षट्स, विवरणसम्मतश्च । "परश्च नु" इति भाष्यसम्मतः
पाठः, नान्यत्र क्वचिदपि ।

२ १ ७ ५ ० ३९ २ ४ ५
थिनाश्रवा२३:। द्यौ२र्ना२३४प्रा। थिनौ३चौ३। हवोवा।

४ ५
श्रा५वो६हाइ॥ १४॥

४ र ४ ३ २ २
III महा इन्द्रा५ पुरश्चनाः। माहित्वा३२३२३मा।

८ २ १५ २ र २ १र ७ २
स्तुवज्रा३२३२३इणाइ। द्यौर्ना३२३२३प्रा। थिनाश्रवा-

१
३२३४३:। ओ२३४५इ। डा॥ १५॥ ५२

नूत्कृष्टः, किञ्च "वज्रिणे" वज्रयुक्ताय "महित्वं" पूर्वोक्तं त्रिविधमा-धिक्यम् सर्वदा "अस्तु" [स्वभाव-सिद्धस्यापि भक्त्या प्रार्थन-मेतत्] किञ्च "द्यौर्न" द्युलोक इव "शवः" बलम् (१) इन्द्रस्य सेनारूपं "प्रथिना" पृथुत्वेन पुत्यताम्--इति शेषः (२) [यथा द्यु-लोकः प्रभूतः एवमस्य सेना प्रभूतास्तु]। "नु"-शब्दो यद्यपि

I, II, III वास्त्राणि, प्रेयमिधानि वा वैयश्वानि वा आश्वानि वा उद्वात्दमनानि वा।

(१) 'शवः'-इति निघण्टौ बलनामसु चतुर्थम् २.९।

(२) 'अधिकत्वमनुषज्यते' इति वि०।

अथ तृतीया।

कुसीदी काण्व ऋषिः।

१र  २र   ३ १ २ ३ १ ३ १र  २र
आतूनइन्द्रक्षुमन्तञ्चित्रं ग्राभꣳसंगृभाय।
३   १र  २र
महाहस्तीदक्षिणेन॥ ३ ॥ ५३

चित्र-नामसु(३) नु-मक्षित्यादिषु पठितः(४) तथापि तदर्थत्वासम्भवात् समुच्चयार्थोऽत्र गृहीतः(५)॥ न शब्दो लोके प्रतिषेधार्थ एव, स्वाध्याये तु प्रतिषेधार्थ उपमार्थश्चेति द्विविधः; यत्र पदे नान्वीयते, तस्मात् पूर्वं प्रयुज्यमानः प्रतिषेधार्थः, उपरिष्टात् प्रयुज्यमान उपमार्थः; तथाच यास्क उदाहरति "उभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति, दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते(१,२,६,)" इति। अत्रोपमा वाचिनो द्यु-शब्दस्योपरि-प्रयुक्तत्वादुपमार्थः स्वीकृतः॥ २ ॥ ५२

५३ उत्तरार्चिकस्य १,२,६,१ । ७१

(३) "चित्रनामान्युत्तराणि षड्विंशतिः चित्रं कस्मात् 'मह्रञ्चित्तो विकर्षं' इति नैरुक्तम् ३,२,१०।

(४) निघण्टोर्द्वितीयाध्यायीय चतुर्दशखण्डादवगन्तव्यम्।

(५) आश्चर्य्यमेतत्? कास्मिन् मन्त्रे 'नु' इति। विवरणकृता तु यथार्थतया 'नः' इत्यस्य विवरणं पादपूरणार्थमित्युक्तम्। पद ग्रन्थे खलु नः मा इत्येव छेदः श्रूयते, तथाच नः महित्वम् अस्तु इत्येतादृशोऽर्थः कोवा वादः इत्यपि न गम्यते।

५र र २१ २ १ २र १
। आतूनआ। इन्नुमार३न्ताम्। चाइत्वंग्राभार३ए-
२ १ १ १र ३ ५ १
हाइ। संगृरभाया। महाहस्तोर३४हाइ। दक्षार३इ-
१ १ ३ ५र र १ २
णाइना। माहार३। हारस्तोर३४औहोवा। दक्षिणे
इनार३४५॥ १६॥

५र र ४ ५ १ ३ ५
।। आतूनइंद्रक्षुमान्ताम्। चित्रार३ग्रा२३४भाम्।
३ ३ ५ १ २ १ ३ ५र र
सङ्गृभार३४या। मा३हा३। हारस्तार३४औहोवा।
१ २ र ३ १ १ १ १
दक्षिणेनार३४५॥ १७॥

हे "इन्द्र"। "महाहस्तो"(१) महाहस्तवान् त्वम् "तु"(२) तदानीमेव "नः" अस्मभ्यं दातुं "क्षुमन्तं" शब्दवन्तं स्तुत्यमि-

।,।। गौरोविते।

(१) -महांश्चासौ हस्तश्च महाहस्तः, तस्मादिदं तृतीयैकवचनम्, तस्य "इयाडियाजिकाराणामुपसङ्ख्यानम् (७,१,३९)"-इतीकारादेशः महता हस्तेनेत्यर्थः।

(२) ऋचि तु इति "ऋचि तुनुघमक्षु-तङ्कुत्रोरुष्याणाम् (६,३,१३३)"-अनेन दीर्घः।

४र र५४ ५ ५ २ १र
III आतूनइ । द्रतुमा६न्ताम् । चित्रंग्राभꣳमङ्गभा२
१ २ १र २ २ ३ ५ २र१
या । चित्रंग्राभꣳसम् । गृ । औ३होइ । भा२३४या । ऐहोइ ।
र र १ २र १ ३र ५ ४
महाहस्तोदचा२३होइ । औहो । वाहो२३४वा । णा५इनो
५
६हाइ ॥ १८ ॥

५र र ५ २ १र र
II आतूनइन्द्रत्नुमा६न्ताम् । चित्रंग्राभꣳसङ्गभाया ।
२ १र २ ५ ३ ५
चित्रङ्ग्राभꣳसम । गृ२३ । ई३४हा । भा२३४या ।
२र१ र र २र १ ३१
ऐहोइ । महाहस्तोदचा२३हाइ । औहो । वाहो२३-
५ ४ ४ ५
४वा । णा५इनो६हाइ ॥ १८ ॥ ५३

त्यर्थः "चित्रं" चायनीयं "ग्राभं"(३) ग्राहकं [ग्रहणार्हं वा] धनं "दक्षिणेन" हस्तेन "आ सङ्गभाय"(४) आभिमुख्येन सङ्गृहाण ॥ ३ ॥ ५३

III,IV आपाल्ये गार्वे, वैगार्वे वा आपाले वा आकूपारे वा पारवे वा ।

(३) – हृप्रहोरिति भस्य रूपम् । अभिषवादिभिः संस्कारैः संस्कृतमित्यर्थः ।
(४) – छन्दसि शायजपि (३,१,८४) इति शायच । हृप्रहोरिति भत्वम् ।

अथ चतुर्थी।

प्रियमेध ऋषिः।

३ १र २र ३ १ २ ३ १ २ ३ १
अभिप्रगोपतिङ्गिरेन्द्रमर्चयथाविदे।

३ २ ३ २ ३ १ २
सूनुꣳसत्यस्यसत्पतिम्॥ ४॥ ५४

४ ५ ४ ५ २ र ३ १र २ १ २
I अभो अभो। प्रगो३पातिङ्गिरा२। इन्द्रमर्चयाथा

२र र १ ३ ५ १ २
१विदा२इ। सूनू३ꣳ२हाइ। सात्या२३४हा। स्या२मा

५र र २ १ १ १ १ १
२३४औहोवा। पतो३मे२३४५॥ २०॥

४ ५ ४ ५ २ १ २ ३ १
II अभो अभो। प्रगो। पतिङ्गिरा। इन्द्राम्।

"गोपतिं" गवां(१) स्वामिनम् "इन्द्रम्" "अभि अर्च(२)"

---

५४ उत्तरार्चिकस्य ७,१,१,१। २८

I, II धुरोः सामनी।

(१ 'गोशब्देनात्र सोम उच्यते' इति वि०।

(२) 'मध्यम पुरुषैकवचनमिदमुत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम्, लोट् लडर्थे।
'अभ्यर्च' आभिमुख्येन स्तौमीत्यर्थः' इति वि०।

२ २ २ ५ १ ऽ २ १ ४ ऽ ३
अर्चायार२३४था । ऊं३ऊ३म । आर२३४इविदाइ । स्नन्
४ ३ ४ ५ १ ऽ २ १ ५ ४
मत्यस्यसा । ऊं३ऊ३म । ओर२३४वा । पा५ । तोई
५
हाइ ॥ ३१ ॥

५ ३ २ ४ ५ १ २
III अभि । प्रगोः । पतिं गिरा । इन्द्रमर्चयथावि-
१ ४ १
दा२३ई । स्नन्‌सत्या३१२३ । स्यमा५त्पतायिम । स्नन्
२ ४ ५ ४ ५
सत्या३१२३ । स्य सावा । पा५ । तोईहाइ ॥ ३२ ॥ ५४

"गिरा" स्तुत्या प्रकर्षेण पूजय "यथा विदे"(३) स यथा स्वात्मानं स्तुत प्रकारं जानाति, यथा वा यागं प्रति गन्तव्यमिति जानाति तथाऽर्चेति । कीदृशमिन्द्रम् ? "गव्यस्य" यज्ञस्य "सूनुम्" पुत्रं(४) [तत्रानुरक्तत्वात् सूनुरित्युपचर्यते] "सत्पतिं" सतां यजमानानां पालकम् ॥ ४ ॥ ५४

III महागौरीवितम् गौरीवितं वा ।

(३) 'कथं पुनः स्तौमि ?' 'यथाविदे' यथा जानामीत्यर्थः' इति वि० ।

(४) कथम्पुनः सत्यस्यपुत्र ? उच्यते वैविध्य लक्षण अस्य सत्य तत्र अस्य-नामकत्व

अथ पञ्चमी।

वामदेव ऋषिः।

१ २ ३ १र २र ३ २ ३ १ ३ ३ १ २
कयानश्चित्रआभुवदूतीसदावृधःसखा।
३ १ २ ३ २
कयाशचिष्ठयावृता॥ ५॥ ५५

५ र २ १ २ २ र १ २ १
I कयानश्चो। त्र्आभूइवात्। ऊताइम। दा।
० ३ ५ १ २ २ १ ४ २
वाद्धः मा२३४खा। कयाशा३चो३। ष्ठा२३या३। वा
५
३४५र्त्तो६हाइ॥ २२॥

५र २ २ १र २ २ १ २ २ ५र २
II हावोइ। होवाइकयानश्चित्रआभूउवा३४त्। होवाइ।

"सदावृधः" सर्वदा वर्द्धमानः "चित्रः" चायनीयः(१) "सखा"

५५ उत्तरार्चिकस्य १,१,१२,१। २८
I,II वाचः सामनी।

ऋत्विजा यानि हवींषि हूयन्ते तैर्जन्यते यस्मात्, तस्मात् मत्यस्य सूनुः। अथव सत्यमन्नं हविर्लक्षणं तेन मज्ञायते आप्याय्यते वा, तस्मात् मत्यस्य सूनुः'-इति वि०।

(१) 'चित्रः विचित्रः पूज्यो वा' इति वि०।

होवाऊतीसदा। वृधाः साइखाइ४। होवाइ। होवाइ। कयाश्चाइ। ष्ठया। वा२र्त्ता२३४औहोवा। ऊ२३-४पा॥ २४॥

III काऽ५या। नस्रा३इत्राइआभुवात्। ऊ। तीसदावृ-धःस। खा। औ३ हो हाइ। कया२३श्चाइ। ष्ठयौ होइ। ऊम्मा२। वाऽ२। र्त्तो३५हाइ॥ २५॥ ५५

मित्रभूतः इन्द्रः "कया" "ऊती"(२) ऊत्या तर्पणेन "नः" अस्मान् "आ भुवत्"(३) आभिमुख्येन भवेत् "शचिष्ठया" प्रज्ञावत्तमया(४) प्रज्ञासहित मनुष्ठीयमानेन "कया वृता" केन वर्त्तनेन कर्मणा च अभिमुखो भवेत्॥ ५॥ ५५

III महावामदेव्यं वामदेव्यं वा।

(२) "सुपां सुलुगित्यादिना ७.१.३९ पूर्वसवर्णः दीर्घः।
(३) लेटो रूपम।
(४) "शची" इति निघण्टौ प्रज्ञानामसु अष्टमम् पदम ३.९। 'शचीति कर्म नाम

अथ षष्ठी ।

श्रुतकक्ष ऋषिः ।

१ २ ३ १ ३ १ २ ३ १ २

त्यमुवः सत्रासाहं विश्वासु गीर्ष्वायतम् ।

१ २ ३ १ २

आच्यावयस्यूतये ॥ ६ ॥ ५६

५ २ र १ १ र र २

I त्यमुवाः । सत्रासाहा२म् । विश्वासुगीर्षू आ१या-

१र १ ३ ५र र २

ता२म् । आच्या२३ । वा२या२३४औ । होवा । सि-

१ १ १ १ १

यू३त । ये२३४५ ॥ २६ ॥

यजमानः स्तोतारं सम्बोध्याह(१)—हे स्तोतः ! "सत्रासाहं" [सत्रा शब्दो बहु-वाची(२)] बहूनामभिभवितारं [यद्वा शत्रून् स्व-

---

५६ उत्तरार्च्चिकस्य ८, १, १०, १—ऋग्वेदस्य ६, ६. १६, २—ऊहगानस्य १२, २, ४ ।

(नि० २, १, २२) अतिशयेन शचौ. शचिष्ठा, तया शचिष्ठया, अतिशय-कर्मवत्या याग-क्रिययेत्यर्थः'-इति वि० ।

(१)—'श्रुतकक्षः पुत्रपौत्रमाह'-इति वि० ।

(२)—निघण्टौ द्वादश पदानि बहुवाचकानि पठितानि (३, १) । न तत्र सत्रेत्युपलभ्यते ।

२ ५ र ४र ५ ५ १ र
II त्या३४म। उवःसत्रासाहम। ओ६वा। विश्वा-

र र १ १ २ १ ५ २र
सुगोर्षीया२नाम। आ२च्या। वा२३या। मियौ३हो।

१र २ १ ५ ५
वाहा३४३इ। ता२३४यो६हाइ ॥ २७ ॥ ५६

बलेन सङ्गत्य जेतारं(३)] "वः" युष्मदीयेषु "विश्वासु गीर्षु"(४) सर्वेषु स्तोत्रेषु "आयतं"(५) विस्तृतं [सर्वत्रेन्द्र एव स्तूयते तस्मात् तेषु विततम्] "त्वम् उ" ['उ'-इत्यवधारणे] तमेवेन्द्रम् "ऊतये" अस्मद्रक्षणाय "आच्यावयसि" [च्युङ्, प्रुङ्, प्लुङ्-गतौ (भ्वा० आ०)] त्वदीयैः स्तोत्रैः यज्ञं प्रति आभिमुख्येन गमय ॥ ६ ॥५६

I,II इन्द्रस्य सत्रामाहीये, अजितस्य आजित्तो वा ।

(३)—'सत्रा शब्दः सत्य-वचनः (नि० ३,१०,३ महा शब्दपर्य्यायो वा। सहि अभिभव मर्षणे च (भ्वा० आ०), अत्र सहि अभिभवार्थः। सत्येन सर्वदा वा शत्रूणामभि भवितारम्'-इति वि०।

(४)—'सप्तमी-बहुवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम्। विश्वाभि गीर्भि सर्वाभिः ऋग्यजुःसाम-लक्षणाभि र्वाग्भिरित्यर्थ'—इति वि०

(५)—'आयत निबद्धं स्तुतमित्यर्थः' इति वि०

अथ सप्तमी

मेधातिथि ऋषिः।

१ २ ३ २ ३ १ २ ३ १र २र ३ १ २
सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम्।
३ २ ३ १ २
सनिंमेधामयासिषम्॥ ७॥ ५७

४ ५ १ ३ २ ३ ५ ५ २ ३
[ सादा। सस्पताइमद्भुता। ओ२३४वा। प्रायाओ-
५ १ १ २ २ २ १ र
२३४वा। आइन्द्रा। स्याकामा२३४५याई५६म्। सनिम्मे-
३ १र २र ३ १ १ १ १
२धामयासिषा२३४५म्॥ २८॥ ५७

"मेधां" लब्धुं "सदसस्पतिं"(१) एतन्नामकं देवम्(२) "अया-सिषम्" प्राप्तवानस्मि। कीदृशम्? "अद्भुतम्" आश्चर्यकरम् "इन्द्रस्य प्रियम्" [सोम पाने सहचारित्वात्] "काम्यम्" कम-नीयं "सनिं"(३) धनस्य दातारम्(४)॥ ७॥ ५७

५७ ऋग्वेदस्य १.१.३५.१।

। वामदेव्यम्।

(१) "षष्ठ्याः पतिपुत्रेत्यादिना (८.३.५३) सत्वम्।

(२) नैघण्टुक दैवत-काण्डे च परिगणितम्।

(३) "कर्मणि वनेत्यादिना (३.२.२७) इन्।

(४) 'सदसस्पतिं' सदोनाम-यज्ञगृह-स्वामिनम् 'अद्भुतं' महान्तम् 'काम्यं' कमनीय

अथाष्टमी।

वामदेव ऋषिः ।

२ ३ १ २ ३ २ ३ २३ क २र ३ १ २
येतेपन्थाअधोदिवोयेभिर्व्यश्व*मैरयः ।
३ १ २ ३ १ २
उतश्रोषन्तुनोभुवः ॥ ८ ॥ ५८

I हाउ । आप्सुदा२३४त्वाः । आप्सदा२३४त्वाः ।
येतेपन्थाआ३धोदिवा२३४५: । हाउ । आप्सूदा२३४श्वाः ।
येभिर्व्यश्वा३माइरया२३४५: । हाउ । उताश्रो२३४षा ।
तुनो२३ । भूरवा२३४औहोवा । ई२३४ता ॥ २८ ॥ ५८

हे इन्द्र ! "दिवः" द्युलोकस्य "अधः" अधस्तात् "ये"

* "विश्वम्" एष पाठो भाष्य मात्र सम्मतः । "व्यश्वम्"-
इति पाठस्तु सङ्गृहीत-समस्त पुस्तकानाम् ।

विवरणकारस्य सम्मतश्च स एव, तथाच -"व्यश्वम् वेगितान्न्य श्रोध मित्यर्थः" इति तद्-विवरणम् ।

I अश्विनोः साम ।

'प्रिय' यष्टृणाम, इन्द्रः, 'मनि गो', 'मेधां' प्रज्ञाम 'श्वयामिषम' याचे—एषोऽर्थो विवरण-सम्मत. ।

अथ नवमी ।

श्रुतकक्ष ऋषिः* ।

२ १ २ ३ २ ३ २ ३ १ २
भद्रम्भद्रन्न आभरेषमूर्ज्ज्ँ शतक्रतो ।

१ २ ३ १ २
यदिन्द्रमृडयासिनः ॥ ९ ॥ ५९

"पन्थाः"(१) पन्थानः मार्गाः सन्ति, "येभिः"(२) यैर्मार्गैः "विश्वं" सर्वं जगत् "ऐरयः" प्राप्तवानसि, ते मार्गाः यजमानैः स्तूयन्तामिति शेषः । "उत" अपिच "नः" अस्मदीयाः "भुवः"(३) भूमीः निवास-स्थानानि "श्रोषन्तु"(४) यजमानाः त्वदनुग्रहाच्छृण्वन्तु(५) ॥ ८ ॥ ५८

* 'सुकक्षस्यार्षम्'-इति वि० ।

५९ ऋग्वेदस्य ६,६,२६,३ ।

(१) -'एकवचनमिदं बहुवचनार्थे भवति'-इति वि० ।

(२) -भिसऐसादेशश्छन्दसि बाहुल्येन भवति (७,१,१०) ।

(३) -"छन्दस्युभयथा (६,४,८६)" इत्युवङ् ।

(४) लेटि सिप्पत्ते (३,४,३४) रूपम् ।

(५)-'ये' 'ते' तव स्वमताः 'पन्थाः' पन्थानः 'दिवः अधः' अन्तरीक्ष-लोके 'येभिः' यैः पथिभिः 'व्यश्वं' शीघ्रम् 'ऐरयः' आगतवानसि । 'उत' अपिच तैः एत्य 'भुवः' अवयवे वेद्याख्य-प्रदेशे 'नः' अस्माकं स्तुतोः 'श्रोषन्तु' शृणोतु भवान्—इत्ययमर्थो विवरणसम्मतः ।

५　४　५　२　१र　२　४　५　४　५
I भद्रम्भाद्राम् । नआभार२३रा३ । आइषामूर्जाम् ।
२　१　२　४　५　४　५　१　३　५र　र
शतक्रा२३ता३उ । यादिन्द्रामृ । डा२या२३४औहोवा ।
३　५
सी२३४नाः ॥ १० ॥ ५९

हे "शतक्रतो" शत-विध-कर्मन् ! [शत प्रज्ञ ! वा] "इन्द्र" ! "भद्रं भद्रं" कल्याणतमं(१) [सुखोत्पादकं वा] धनं "नः" अस्मभ्यम् "आभर"(२) सम्पादय देहि, तथा "इषम् ऊर्जम्"(३) अन्नरसं [यद्वा बलवदन्नं(४) देहि], "नः" अस्मान् "यद्"(५) यदि "मृडयासि" सुखयसि तर्हि धनादिकं देहीति [मृड सुखने (क्र्या० प०)] तस्य लेटि अङ्गस्याडागमः(६) ॥ ८ ॥ ५९

I गौतमस्य भद्रम् ।

(१)—अभ्यासेनातिशय्य लक्ष्यते ।

(२)—हरतेर्भले रूपम् आहरेत्यर्थः ।

(३)—'इषम्', 'ऊर्जम्' इं अपीते अन्ननामनी (नि० २.७.११-१८), अतः पौनरुक्त्य-प्रसङ्गात् ऊर्जशब्दोऽत्र रस-वचनो द्रष्टव्यः अन्नञ्च रसञ्च त्यर्थः इति वि०।

(४)—'ऊर्ग'-इति निघण्टौ बल-नामसु एकविंशतितमम् २,९ ।

(५)—'यत' तृतीयाया अत्र लुक्, येन अन्नेन रसेन च 'मृडयासि' सर्वदा सुखयसि, जीवयसीत्यर्थः —इति वि० ।

(६)—"लेटोऽडाटौ (३.४.९४)" ।

अथ दशमी।

बिन्दु ऋषिः*।

२ ३ १ २ ३२ ३१र २र ३१२
अस्तिसोमोअयꣳसुतःपिबन्त्यस्यमरुतः।
३ २ ३ १ २ ३ १ २
उतस्वराजोअश्विना॥ १०॥ ६०

॥ इति तृतीय-दशति॥

३ ४ ३र ४र ३ ४३ ४ ५ ३र ४र
I अस्तिसोमोअयꣳसुतः। अ। स्त्येआस्तो। सोमो-
३ ४३ ४५ ३ ५ ४ ४
अयꣳसुतःपिबन्त्यस्यम। रुतोर३४हाइ। उतस्वरा५जो-
५ ४ ५
वा। स्वा५इनो६हाइ॥ ३१॥ ६०

"अयं" पुरोवर्त्ती "सोमः" "सुतः" मरुदर्थमस्माभि रभिषुतः "अस्ति" विद्यते, तस्मात् "अस्य" अन्वादेशे एनं सुतं सोमं "स्वराजः" स्वयं दीप्यमानाः स्व-तेजसा नान्यदीयेनेत्यर्थः, तादृशाः

* 'पूतदक्षस्य सुदक्षस्य वा इदमार्षम्'-इति वि०।

६० उत्तरार्चिकस्य ८,१,८,१—ऋग्वेदस्य ६,६,२८,४।

I अश्विनोःसाम, साम साम वा।

"मरुतः" प्रातः(१) "पिबन्ति"(२); "उत" अपिच "अश्विना"(३) अश्विनौ च सोमं प्रातः सवने पिबतः ॥ १० ॥ ६०

इति सायणाचार्य्य विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तमे खण्डे--

सैषा प्रथमा ।

इन्द्रमातरो देवजामय ऋषिकाः ।

३ १ २ ३ २ ३ १ २ ३ १ २र

ईङ्खयन्तीरपस्युव इन्द्रञ्जातमुपासते ।

३ १ २ ३ १ २

वन्वानासः सुवीर्यम् ॥ १ ॥ ६१

६१ ऋग्वेदस्य ८,८,११,१ ।

(१)—प्रातरिति न जाने कुतोलब्धः ।

(२) —'लडर्थे लोडर्थे इत्यन्यः. पिबन्तु ।' इति वि० ।

(३)—"अथातो द्युस्थाना देवता तासामश्विनौ प्रथमागामिनौ ... द्यावापृथिव्यावित्येके अहोरात्रावित्येके, सूर्याचन्द्रमसावित्येके, राजानौ पुण्यकृतावित्यैतिहासिकाः" इत्यादि नैरुक्तम् १२.१.१--२ ।

५र २ १ १ २र
I ईङ्खयन्तीः। अपा२स्युवा२ः। आइन्द्रञ्जातम्।
१ २ १र २ १ २
ऊपा१साता२इ। वन्वाना२३साः। सुवीरिया३१उवा२३।
२
वृधे१॥ ३२ ॥ ६१

"ईङ्खयन्तीः"(१) गच्छन्त्यः स्तुत्यादिभिः इन्द्रं प्राप्नुवन्त्यः "अपस्युवः" अपः कर्मात्मन इच्छन्त्यः इन्द्रमातरः अस्य सूक्तस्य द्रष्ट्र्यः(२) "जातं" प्रादुर्भूतं तम् "इन्द्रम्" "उपासते"(३) परिचरन्ति, "सुवीर्य्यं" शोभन-वीर्योपेतं धनं च "वन्वानासः"(४) तस्मात् इन्द्रात् सम्भक्तवत्यो भवन्ति॥

"वन्वानासः"-"भेजानासः"-इति पाठौ॥ १ ॥ ६१

I त्वाष्ट्रसाम। "त्वाष्ट्री"-इति च पाठः।

(१) 'इङ्खते' इति गतिकर्मसु अशीतितमम् नि०२,१४।

(२) 'स्तुतयः'-इति वि०।

(३) 'उपगम्य इन्द्रं तस्यैव समीपं अवतिष्ठन्त इत्यर्थः'-इति वि०।

(४) 'वनु, याचने इत्यस्येद रूपम। याचमाना उच्यन्ते। किं याचमानाः? उच्यते—तस्यैवेन्द्रस्य शोभनं वीर्य्यम्'-इति वि०।

अथ द्वितीया ।

गोधा ऋषिः ।

१ २　　३ १र　२र
नकिर्देवा*इनीमसिनक्या†योपयामसि ।
३　१ २
मन्त्रश्रुत्यं‡चरामसि ॥ २ ॥ ६२

५ र　२ १　२　१ ५ २
I नकिर्देवाः । इनाइ । इनोमामा३इ । मासो३या ।
५ र　२ १　२　१ ५ २　५
नकियायो । पया । पयामामा३इ । मासो३या । मन्त्र-
२ १　२　१ ५ २
श्रुत्याम् । चरा । चरामामा३इ । मामी३या ॥ ३३ ॥ ६२

हे "देवाः" इन्द्रादयः । युष्मद् विषये "न कि(१) इनोमसि" न किमपि हिंस्मः(२) [मीङ् हिंसायां, क्र्यादिकः "मीनाति

---

६२ ऋग्वेदस्य ८,७,२२,७ ।

* "नकिर्देवा"-इति, † "नकिरायो" इतिच ऋग्वेद-पाठः ।

‡ "मन्त्रश्रुत्यम्" इति आद्यनुदात्त अन्तोदात्तय ऋग्वेद-पाठः ।

I गोधासाम ।

(१)— 'नेति प्रतिषेध, कीति निपातोऽनर्थकः' इति वि० ।

(२) —'हे देवाः न इनीमसि, प्राणि-वध कर्म पश्वादि याग न कुर्म इत्यर्थः' -इति वि० ।

अथ तृतीया।

दध्यङ्ङाथर्वण ऋषिः*।

३ १र २र ३ १ २ ३ १
दोषोआगाद्बृहद्गायद्युमद्गामन्नाथर्वण।
३ २३ १ २ ३ १ २
स्तुहिदेवꣳसवितारम्॥ ३॥ ६३

४र ५र र ४ २ १ र २ १र
I दोषोआगात्। बृहद्गाया। द्युमद्गार३मान्। आथ-

निगमे (७,३,८१पा०)" इति ह्रस्वः, "इदन्तोमसि (७,१,४६ पा०)" मकार-लोपश्छान्दसः। आकारः समुच्चये।] "न कि" न च "योपयामसि" योपयामः(३) अननुष्ठानेन [अन्यथानुष्ठानेन वा] मोहयामः [युप विमोहने (चु०प०)]। किन्तर्हि? "मन्त्रश्रुत्यं" मन्त्रेण स्मार्यं श्रुतौ विधिवाक्य-प्रतिपाद्यं यद् युष्मद्विषयं कर्म(४) तत् "चरामसि" आचरामः(५) अनुतिष्ठामः॥

"दूनीमसि" "मिनीमसि"-इति च पाठौ॥ २॥ ६२

* 'वामदेवस्यार्षम्'-इति वि०-पाठः।

I सवितुः साम।

(३)--'इह निखननार्थे द्रष्टव्यः; यूप-निखननमपि न कुर्मः, इत्यौषध्यादि-हिंसामपि न कुर्मः'-इति वि०।

(४)--'जपाख्यम्'-इति वि०।

(५) --'प्राणि बध न कुर्मः, जपमेव कुर्म इत्यर्थः। उक्तञ्च--"जप्येनैव तु संसिद्ध्ये द

२ १　　२ १　　ऽ २　　ऽर २　　४ ५
वंणा३। स्तुहि। औ३हो३४इ। देवा३म्। सवोवा।
४　　५
तापुरोऽहाइ॥ ३४॥ ६३

हे "बृहद्गाय"(१) बृहदाख्यस्य साम्नो गातः! "द्युमद्गामन्"(२) दीप्त-गमन! "आथर्वण"(३) अथर्वऋषेरपत्य!(४) [ऋषिः स्वात्मानमेवामन्त्रयते] त्वं "दोषः"(५) ऋत्विग्यजमानापराधेन यः कश्चिद् दोषः "आगात्" आगच्छति तत्परिहारार्थं "सवितारं"(६) प्रेरकम् एतन्नामकं "देवं" "स्तुहि"। [यद्वा "दोषः" दूषयति नाशयति तमांसीति, दुनोति उपतपति रक्षांसीति वा दोषः, सः सविता "आगात्", अतो हे "आथर्वण!" "बृहत्" स्तोत्रं "गाय"। तथा "गामन्" गायतीति गामा हे एवं विध! स्वात्मन्! "द्युमत्" दीप्तिमदन्यत् स्तोत्रम् उप गाय। शिष्टं(७) पुनरादरार्थम्॥ ३॥ ६३

ब्राह्मणो नात्र संशयः। कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते (मनु०२अ०)" -इति'-इति वि०।

(१)—'गाय उच्चारय'-इति वि०।

(२)—'द्युमतां स्वर-सौष्ठव-युक्तानां साम्नां गामन गातः,-इत्यर्थो वि० सम्मत।

(३)—थर्वति गत्यर्थः, थर्वा गन्ता, न थर्वा अथर्वेत्युच्यते, तस्यायं स्तोता स्वभतः तेन स आथर्वणः, तस्य सम्बोधनं हे आथर्वण! मम वामदेवस्य स्वभत! इत्यर्थः' इति वि०।

(४)—"अथर्वाणोऽथनवन्तस्थर्वतिश्चरतिकर्म्मा तस्य प्रतिषेधः" इत्यादि नै०११, १८।

(५) 'दोषा रात्रिः, उ इति पदपूरणः'-इति वि०। पदकारस्त्वत्र मन्त्र विच्छेद- 'दोषा. उ'-इति।

(६)—'सविता सर्वस्य प्रसविता'-इत्यादि नै०१०३१। 'सवितृदैवत्यमेतत्' -इति वि०-ध्वनिः।

(७)—शेषमर्द्धर्चम्।

अथ चतुर्थी ।

प्रस्कण्व ऋषिः ।

३ २ ३ १र २र क २र ३ २ ३ २
एषोउषाअपूर्व्याव्युच्छतिप्रियादिवः ।

३ १ २ ३ २
स्तुषेवामश्विनाबृहत् ॥ ४ ॥* ६४

I

४रर १ र२ र १ २ १ २ २
I एषोउषाः । आपूर्विया । व्युच्छति । होवा३हाइ ।

१र २ ३ २ ३र २ २ १ ५
प्रियादा२३इवा३४ः । स्तुषा३४इवामा३ । श्विनो२३४वा ।

४ ५
बृ५हो६हाइ ॥ ३५ ॥

"एषः"(१) एषैव अस्माभिः परिदृश्यमाना "प्रिया" सर्वेषां प्रीतिहेतुः "अपूर्व्या"(२) पूर्वेषु मध्यरात्रादिकालेषु विद्यमाना न

---

६४ उत्तरार्चिकस्य ८,३,७,१—ऋग्वेदस्य १,३,३३,१ ।

I उषस साम ।

(१) 'एषा, उ, उषाः' इति पदकारः । विवरणकारेण च तथैव व्याख्यातः 'उकारः पादपूरणः' इति ।

(२) 'यतः पूर्वं नास्ति सा अपूर्वा, अपूर्वा एव अपूर्व्या, स्वार्थिकस्तद्धितः, प्रथमेत्यर्थः'-इति वि० ।

---

*॥ इति ग्रामे गेये पञ्चमस्यार्द्धः प्रपाठकः ॥

अथ पञ्चमी।

गोतम ऋषिः।

१ २   ३ २ ३ १ २ ३ १र   ३र
इन्द्रोदधीचोअस्थभिर्वृत्राण्यप्रतिष्कुतः।
३ १ २  ३ १र २र
जघाननवतीर्नव ॥ ५ ॥ ६५

भवति किञ्चिदानीन्तना "उषा"(३) उषो देवता "दिवः" द्युलोकस्य सकाशात् आगत्य "व्युच्छति" तमो वर्जयति(४)। हे "अश्विना" अश्विनौ! (५) "वां" युवां "बृहत्" प्रभूतं यथा भवति तथा "स्तुषे" स्तौमि ॥ ४ ॥ ६४

---

६५ उत्तरार्चिकस्य ३,१,८,१—ऋग्वेदस्य १,६,७,४।

(३)—'उषाः, कस्मात्? उच्छतीति सत्या रात्रेरपरः कालस्तस्या एषा भवति' इत्यादि नैगम-काण्डीयं नैरुक्तम् (२,१८) पदकृन्मतेऽवलम्बनीयम्। सायण मते तु 'उषा, वष्टेः कान्ति-कर्मणः, उच्छतेरितरा माध्यमिका, तस्या एषा भवति' इत्यादि दैवत-काण्डीयं नैरुक्तम् (१ ५--६) द्रष्टव्यम्।

(४—'व्युच्छति, उच्छि विवासे, विवासयति--किम्? सामर्थ्यात् तमांसि, शक्नोति विवासयितुम् अतो विवासनेनात्र उदितत्वं लक्ष्यते. उदितेत्यर्थः' इति वि०।

(५)-'अथातो द्युस्थाना देवताः। तासामश्विनौ प्रथमागामिनौ भवतः। अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः। तयोः कालः ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनु तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यः। तयोरेषा भवति' इत्यादि नैरुक्तम् १२, १।

I ओम्। इन्द्रोदधीचोअस्थभिरिया २ई३या। वृत्राण्य-
प्रतिष्कुतइया २ई३या। जघाननवतीर्नवइया २। इ२।
या२३४। औहोवा। ऊ२३४पा॥ १॥

II इन्द्रोदधाइ। चोअस्था२३४भोः। वृत्राणिया।

अत्र शाट्यायनिन इतिहासमाचक्षते –'आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः पराबभूवुः। अथ तस्मिन् स्वर्गते, असुरैः पूर्णा पृथिव्यभवत्। अथेन्द्रस्तैरसुरैः सह योद्धु मशक्नुवंस्त मृषि मन्विच्छन्, स्वर्गं गत इति शुश्राव। अथ पप्रच्छ तत्रत्यान्—इह किमस्य किञ्चित् परिशिष्टमङ्गमस्ति ? इति, तस्मा अवोचन्— अस्त्येतदाश्वं शीर्षं, येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत्, तत्त न विद्मः तद्यत्राभवदिति ; पुनरिन्द्रोऽब्रवीत्—तदन्विच्छ-तेति। तद्वा अन्वेषिषुः। तच्छर्यणावत्यनुविद्या जह्रुः, (शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते)। तस्य शिरसोऽस्थिभिरिन्द्रो ऽसुरान् जघानेति'(१)॥

---

I,II त्वष्टुरातिथ्ये द्वे।

(१)—विवरणकारस्त्वं नमितिहासमन्यथाचष्टे। तथाहि–'कालखञ्जा नाम असुराः। रसुरैर्बाध्यमाना देवा ब्रह्माणमुपगम्योक्तवन्तः—भगवन्' कालखञ्जै रसुरैर्बाध्यामहे,

२र १　　　१ १र　　२　　१ र २ १　　२　४ ५
प्रातिष्कुताः । जघानार३ना । वतीर्नवा । औ३होवा ।
४
होपुइ । डा ॥ २ ॥ ६५

"अप्रतिष्कुतः"(२) परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहितः "इन्द्रः" आथर्वणस्य "दधीचः" (३) एतत्संज्ञकस्य ऋषेः "अस्थभिः" पार्श्व-शिरः-सम्बन्धिभिरस्थिभिः "नवतीर्नव" नव-सङ्ख्याका नवतीः, दशोत्तरा अष्टशत-सङ्ख्याकाः [८१०] [तथाहि—लोक-त्रय-वर्त्तिनो देवान् जेतुम् आदावासुरी माया त्रिधा सम्पद्यते, त्रिविधा सा अतीतानागत-वर्त्तमान-काल-भेदेन तत्काल-वर्त्तिनो जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति, एवं नव सम्पद्यन्ते, पुनरपि उत्साहादि-शक्ति-त्रय-रूपेण(४) त्रैगुण्ये सति

तेषां मारणोपायं विधत्स्वेति । तच्छ्रुत्वा स तानुवाच दधीचिं नाम ऋषिमुपगम्य ब्रूत, स मारणोपायं विधास्यति । ते तच्छ्रुत्वा तथेत्यङ्गीकृत्य तं दधीचमुपगम्य उक्तवन्तः- भगवन् ! अस्मदीयान्यस्त्राणि शुक्रस्तेषां पुरोधा अपहरति, तानि रक्षस्व । ततः स ऋषिस्तानुवाच—मम मुखे प्रक्षिपध्वम् । तत इन्द्रादिभिर्देवैः स मरुद्गणैस्तस्य मुखे प्रक्षिप्तानि । पुनः कालेन देवासुर-सङ्ग्रामे पर्य्युपस्थिते एत्य देवा ऊचुः भगवन् ! तान्यस्त्राणि प्रयच्छास्माकम् । ततस्तेनोक्तम् -तानि मे जीर्णानि, न तानि पुनः प्राप्तुं शक्यानि । ततः प्रजापति-मुख्या देवा ऊचुः -भगवन् ! प्राण-त्यागं कुरुष्व । इति श्रुत्वा पुनः कृतश्च तेन प्राण-त्यागः । तस्य दधीचः स्वभूतैरस्थिभिरिन्द्रो वृत्राणि जघान -इति ।

(२)—'अप्रतिस्खलितः'-इति वि० ।

(३)—"यामथर्वा मनुष्पिता दध्यङ् धियमत्नत" इति (१,१०,७,१९ ऋग्वेदीय-मन्त्रार्थः परिद्रष्टव्यः ।

(४)—प्रभावोत्साहमन्त्रजाः शक्तयस्तिस्रः ।

अथ षष्ठी।

मधुच्छन्दा ऋषिः।

२उ ३ १र २र ३ १ २ २ १ १

इन्द्रेहिमत्स्यन्धसोविश्वेभिःसोमपर्वभिः।

२ १ २ ३ १र २र

महाँ२ऽअभिष्टिरोजसा ॥ ६ ॥ ६६

५ र र २ १ २ २ १ २र

। इन्द्रेहिमाहाउ। त्सोइआन्धाइसाः। वाइश्वेभिः

सप्तविंशतिः सम्पद्यते, पुनः सात्विकादि-गुण-त्रय-भेदेन त्रैगुण्ये सति एकोत्तरा अशीतिः सम्पद्यते, एवं चतुर्भिस्त्रिकै र्गुणिताया मायाया दशसु दिक्षु प्रत्येक मवस्थाने सति नव नवतयः सम्पद्यन्ते; एवं विधं मायारूपाणि] "वृत्राणि" (४) आवरकाणि असुर-जातानि "जघान" हतवान् ॥ ५ ॥ ६५

हे "इन्द्र!" "एहि" अस्मिन् कर्मणि आगच्छ, आगत्य च "विश्वेभिः" सर्वैः "सोमपर्वभिः"(१) सोमरसरूपैः "अन्धसः"

---

६६ ऋग्वेदस्य १,१,१७,१—यजुर्वेदस्य ३१,२५।

I पौषम्।

(४)- नपुंसकलिङ्गमिदं व्यत्ययेन (३,१,८५)—वृत्रानिति।

(१)—'पर्वाणि अवयवाः, सोमस्य पर्वाणि, तैः सोमपर्वभिः, तदर्थमभिषुतैः सोमावयवैः' इति वि०।

अथ सप्तमी।

वामदेव ऋषिः।

१र २र ३ २ ३ २ ३ १ २
आ त्वन इन्द्र वृत्रहन्नस्माकमर्द्ध* मागहि।
३ २ ३ १ २ ३ १ २
महान्महीभिरूतिभिः॥ ७॥ ६७

१ २ १ २ ३ ५ १ १ २
सो२३हा३। मापर्वा२३४भीः। महा॒२३। आ२भा२३
५२ २ २ १र २ १ १ १ १
४औहोवा। ष्टिरोजसा२३४५॥ ३॥ ६६

अन्धोभिः अन्नैः(२) "मत्सि" माद्य हृष्टो भव, तत ऊर्द्ध्वम् "ओजसा" बलेन महान् भूत्वा "अभीष्टिः"(३) शत्रुणामभिभविता भवेति शेषः [अष्टाविंशति(४)-सङ्ख्याकेषु बल नामसु 'ओजः' 'पाजः' -इति (नि० २,८) पठितम्॥ ६॥ ६६

---

* 'अर्धम्'-इति ऋग्वेद-पाठः।

६७ ऋग्वेदस्य ३,६,२७,१—आरण्यगाने ४,२।

(२)—"अन्ध इत्यन्न नाम"-इति नि० ५,१।

(३)—'आभिमुख्येन यष्टव्यो वा'-इति वि०।

(४)—'बल-नामान्युत्तराण्यष्टाविंशतिः'-इति नि० ३८।

अथाष्टमी।

वत्स ऋषिः।

३ १ २ ३ २३ ३ १ २
ओजस्तदस्यतित्विषउभेयत्समवर्त्तयत्।

३ १ २ ३ १ २
इन्द्रश्चर्मेवरोदसी॥ ८॥ ६८

३र २र३र ५र ३र २र ३र ५र २ १ २ १ ५
I आतूऔहो। आतूऔहो। नइन्द्रवृत्रा२३४हान्।

२ १र २ १ २ १र २ १ १
अस्माकमर्द्धम्। आगा२३हो। गाहो२। माहो२म्मा

२ १ ५ ४ ५
हो२३। भिरू२३४वा। ता५इभोई२हाइ॥ ४॥ ६७

हे "वृत्रहन्!"(१) वृत्राणां शत्रूणां हिंसक! इन्द्र! त्वं "नः" अस्मान्(२) प्रति "तु"(३) क्षिप्रम् आगच्छ, हे "इन्द्र!" "महान्" प्रभूतः त्वम् "महीभिः" महतीभिः "ऊतिभिः" रक्षाभिः सह "अस्माकम्" "अर्द्धं" समीपम् "आ गहि" आगच्छ॥ ७॥ ६७

---

६८ उत्तरार्च्चिकस्य ८,१,१३,३।

I इन्द्रस्य माया।

(१)- 'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्' इत्यादि नैरुक्तम् ७,१,१०। 'वृत्रवधो मेघ-वधः'-इति तद्भाष्यम्।

(२)—'अस्माकम्'-इति वि०।

(३)—'ऋचि तु, 'तू'-इति दीर्घः श्रूयते। तत्र सूत्रम्—"ऋचि तु-नु-घ-मक्षु-तङ्-कु-त्रोरुष्याणाम् (६,३,१३३)"-इति।

५ २ १र २ ३ ५

I हा। हाउवा३। ओजस्तदस्यतित्विषे२३४। हा।

२ १र २ ३ ५ ३ १

हाउवा। उभेयत्समवर्त्तया२३४त्। हा। हाउवा३। इन्द्र-

ऽर १र ३ १ १ १ १ १

श्चर्मे२वरोदसी२३४५॥ ५॥ ६८

४र ४ २ १र २

II ओजस्तदा५स्यतित्विषाइ। उभेयत्समवर्त्तयादा१

१ ३ ५र र २१र ३ १ १ १ १

इन्द्रा२३:। चा२र्मा२३४औहोवा। वरोदसी२३४५॥६॥६८

"अस्य" इन्द्रस्य "तत्" "ओजः" बलं "तित्विषे" दिदीपे [त्विष दीप्तौ (दि०प०] "यत्" येन ओजसा अयम् "इन्द्रः" "उभे" "रोदसी" द्यावापृथिव्यौ "चर्मेव"(१) "समवर्त्तयत्" सम्यग् वर्त्तयति। यथा कश्चित् किञ्चित् चर्म कदाचिद् विस्तारयति कदाचित् सङ्कोचयति, एवं तदधीने अभूता-मित्यर्थः(२)॥ ८॥ ६८

I,II इन्द्रस्य संवर्त्तस्य वा मांवर्त्ते।

(१)—"चर्म चरतेर्वोच्चृत्तं भवतीति वा" इति नै०७,५।

(२)—"यथा कश्चित् चर्म वेष्टयति, तद्वदित्यर्थः" इति वि०।

अथ नवमी।

शुनःशेप* ऋषिः।

३ १२३१२ ३१२ ३२
अयमुतेसमतसिकपोतइवगर्भधिम्।
३१२
वचस्तच्चिन्नओहसे॥ ९॥ ६९

१ ४ २ ४ २ ४र ५ १ र २
I अयाऽ५मु। ता३इसा३मानसाइ। कापोतइ।
१ २ १ १ २ १ ५
वगार्भा१धी२म्। वाचा२स्ताच्चोर३त्। नओ२३४वा।
४ ५
हा५मो६हाइ॥ ७॥ ६९

हे इन्द्र! "अयम् उ" अयमपि(१) दृश्यमानः सोमः "ते" त्वदर्थं सम्पादितः यं सोमं "समतसि" सम्यक् सातत्येन प्राप्नोषि। तत्र दृष्टान्तः—"कपोत इव" यथा कपोताख्यः पक्षी

* 'शुनः शेफ' इति वि०-पाठः।

६९ उत्तरार्चिकस्य ७,३,१५,१—ऋग्वेदस्य१,२,२८,४।
I आङ्गिरसस्य शौनःशेपम् च्यावनं वा।

(१) इत्त सायण मते उ अप्यर्थः। विवरण मते नु प द-पूरणाय।

अथ दशमी।

वातायन उल्ल ऋषिः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २

वातआवातुभेषजꣳशम्भुमयोभुनोहृदे।

२ १ २

प्रनआयूꣳषि* तारिषत्॥ १० ॥ ७०

॥ इति चतुर्थ-दशति ॥

४२ ५ ४२ ५२ ५ ४ १ २ १

I वातआवातु। भा५इ्षजाम्। शाम्भूमयः। भुनो

७ ३२ २ १ २ २ २ १

हृदा२३४इ। हाहोइ। प्रनआयूꣳषो३ता। रिषात।

४ ५ ४ ५

औ२३होवा। इडा॥ ८॥ ७०

"गर्भधीं"(२) गर्भधारिणीं कपोतीं प्राप्नोति तद्वत्. "तच्चित्(३) तस्मादेव कारणात् "नः"(४) अस्मदीयं "वचः" "आहमि" प्राप्नोषि॥ ८॥ ६९

* 'प्रणआयूꣳषि'-इति ऋग्वेदीय पाठः।

७० उत्तरार्चिकस्य ८,३,११,१—ऋग्वेदस्य ८,८,४४,१।

I प्रतीचीनेड़ं काशीतम्।

(२)—गर्भा धीयन्ते यस्यां सा गर्भधिः, ताम।

(३)—'तत्मम स्वमृतं वच.'-इति, 'चिदिति पादपूरणः इति च वि०।

(४) –'बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् इति वि०।

"वात:"(१) वायु:(२) "न:" अस्माकं "हृदे" हृदयाय(३)"भेषजम्"(४) औषधम् [उदकं वा] "आ वातु" आ गमयतु, कीदृग्भूतम्? "शम्भु" रोग-शमनस्य भावयितृ(५) "मयोभु" मयस: सुखस्य च भावयितृ,(६) अपि च "न:" अस्माकम् "आयूंषि" "प्रतारिषत्" प्रवर्द्धयतु(७) ॥ १० ॥७०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

(१)—'वातो वातीति सत:'-इत्यादि नै० द० १०,३४।

(२)—अन्तरिक्षस्थो देव:। तथाहि—'वायुर्वेन्द्रोवान्तरिक्षस्थान:'-इति नै० दै० ७,५। 'अथातो मध्यस्थाना देवता:, तासां वायु: प्रथमागामी भवति'-इति नै० दै० १०,१।

(३)—'हृदयस्य'-इति वि०। एतन्मते 'षष्ठ्यर्थे चतुर्थी (२,३,६२)' इति वचनादिह चतुर्थी।

(४)—'पथ्यमित्यर्थ:'-इति वि० भेषज मित्युदक नाम स्वूनचत्वारिंशत्तमम् पदम् नि०१,१,१२।

(५)—'शम्भु सुखस्य भावयितृ, इदानीं सुखकरमित्यर्थ:-इति वि०।

(६)—'कालान्तरे सुखस्य भावयितृ, अथवा मयो बलं तस्य भावयितृ'-इति वि०। शमिति बल-नामसु (नि०३,६) ऊनविंशतितमं पदम्, मयइति तु नयोदशमिति एकार्थयोरुभयो: कालभेदेन व्याख्यान विवरण-सम्मतम्।

(७)—'वात आवातु भैषज्यानि शम्भु मयोभु च नो हृदयाय प्रवर्द्धयतु च न आयु:'-इति नैरुक्त व्याख्यानम् दै० १०,३५।

अथाष्टमे खण्डे—

सैषा प्रथमा।

काण्व ऋषिः।

१र २र ३१२ ३ २ ३ १ २
यꣳरक्षन्तिप्रचेतसोवरुणोमित्रोअर्यमा॥

३ १२ ३१२
न किः* सदभ्यतेजनः॥ १॥ ७१

५ ५ ५ ५र ५ १ र र २ १
I यꣳरक्षन्तिप्रचेतसाः। वरुणोमित्रोअर्यार३मा। न।

२ १ २ १ ७ ५र र
काइःसार३दा। हुम्मायेइ। भ्या२ता२३४ओहोवा।

३ ५
जा२३४नाः॥ ८॥ ७१

"प्रचेतसः"(१) प्रकृष्टज्ञानयुक्ताः वरुणादयो देवाः "यं" यजमानं "रक्षन्ति" "स" यजमानः "न कि दभ्यते:" केनापि न हिंस्यते॥ १॥ ७१

* 'नूचित्'-इति ऋग्वेदीय-पाठः।

७१ ऋग्वेदस्य १,३,२२,१।

I सौमित्रम्।

(१)—'प्रष्टज्ञानाः—वरुणः मित्रः, अर्यमा न' इति वि०।

अथ द्वितीया।

वत्स ऋषिः।

२३ ३ १२ ३२ ३१२२२२२

गव्योषुणोयथापुराश्वयोतरथया।

३ २ ३१ २

वरिवस्या*मघोनाम्† ॥ २ ॥ ७२

५४ र ५र ४ ५र ४५ २ र १ १ २ १

I। गव्योषुणोयथापुरा। अश्वयोतरथा। यावरिवस्या।

२ १र र २ ५र र ३ ५

म। घो मा२३। घोना३४औहोवा। उ२३४पा ॥ १० ॥

५ र र ५ २

II। गव्योषुणोयथापुरा६ए। अश्वयो१त। रथा२।

१ २१ १ २१र ३ ५र र

या। वरिवा२स्या। मघो। मघो२ना२३४औहोवा।

३१ १११

ई२३४५ ॥ ११ ॥ ७२

हे "इन्द्र"! "गव्योषु"(१) गव्या उ सु(२) इति निपात-द्वय-

* 'वरिवस्य महामह'-इति ऋग्वेदीय-पाठः।

† 'मघोनाम्'-इति वि० पाठः।

७२ ऋग्वेदस्य ६,४,२,५।

I,II श्यावाश्वे।

(१)—'सुअषः'(८,३,१०७)-इति लम्।

(२)—'उ' 'सु' द्वावपि पादपूरणौ'-इति वि०। सायण-मते तु उ अप्यर्थ, सुष्ठु-त्यर्थे वरिवस्येति क्रियान्वितश्च।

समुदायस्य एकवद्भावेन निपातवद्भावात्(३) प्रकृतिवद्भावाभावः(४) "नः"(५) अस्माकं गवामिच्छया अस्माकं गां दातुं "यथा पुरा" पूर्वम् अस्माकं सम्बन्धि-यागे गवादि-दानाय(६) वरिवस्यसि तद्वदद्यापि सुष्ठु "वरिवस्य"(७) परिचर(८) आगच्छेत्यर्थः। न केवलं गविच्छया किन्तु "अश्वया"(९) अश्व-प्रदानेच्छया "उत" अपिच "रथया" रथेच्छया "महोनां"(१०) धनानां [कर्मणि षष्ठी],(११) महान्ति पूजाकराणि धनानि दानाय वरिवस्य परिचर देहीत्यर्थः ॥ २ ॥ ७२

(३)—समुदाय एवैक इति स्वीकारादिति भावः, यथा तथा चेत्यादि।

(४)—'निपात एकाजनाङ् (१,१,१४)-इति प्राप्तः एकाजत्वाभावान्न भवति इत्यर्थः।

(५)—'नः—द्वितीयाबहुवचनमिदं प्रथमाबहुवचनार्थे द्रष्टव्यम्। वयं त्वां स्तुम इति वाक्य-शेषः'-इति वि०।

(६)—गोषु इच्छा, गव्या ; तस्मात् तृतीयैकवचनं, तस्य 'सुपां सुलुगिति' पूर्वसवर्णदीर्घः। गव्या, गव्यया गविच्छयेत्यर्थः।

(७)—ऋचि 'वरिवस्या'-इति निपातस्य चेति (६,३,१३६) दीर्घः।

(८)—वरिवस्यतिः परिचरणीयः, तस्मात् सम्बुद्ध्येक वचनम्, तस्य स्थाने सुपां सुलुगिति आकारः, वरिवस्य! परिचरणीयेत्यर्थः-इति वि०।

(९)—अश्वशब्दात् "छन्दसि परेच्छायामपि क्यच् (३,१,८)" इति वचनात् क्यचि, "न छन्दस्यपुत्रस्य (७,४,३५)"-इति ईत्वदीर्घयोरभावे रूपम्।

(१०)—'मघं धनं हविर्लक्षणं तद्येषां सन्ति ते मघवानः हविष्मन्तो यजमानाः, तेषामित्यर्थः'-इति वि०।

(११)—व्यत्ययेनेति(३,१,८५) बोध्यम्।

अथ तृतीया ।

वत्स ऋषिः ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इमास्तइन्द्रपृश्नयोघृतन्दुहतआशिरम् ।
३२ ३ १ २ ३ १ २
एनामृतस्यपिप्युषीः ॥ ३ ॥ ७३

१ २ २ १ २ १ २ ३२ १ २
I इमास्तई । द्रपृश्नयोघृतन्दूहा । औहोइहाइ ।
२ १ ३ ५ ३ १ २ ३ २ २ १
हाइइ । तास्रारशारइ४इराम् । एनाइ४मृताइ । स्यपो
५ ४ ५
२३४वा । प्यूषोइहाइ ॥ १२ ॥ ७३

हे "इन्द्र"! "ते" त्वदीयाः "इमाः" "पृश्नयः"(१) प्राष्ट वर्णा(२) गावः(३) "घृतं" क्षरण-शीलम्(४) "एनाम्" "आशि

७३ ऋग्वेदस्य ५,८,१२,४ ।

I शैखण्डिनम् ।

(१) –'पृश्नयः स्तनयः'-इति वि० ।

(२) –नाना वर्णा इत्यर्थः । उत्तरार्चिक द्वितीय-प्रपाठक द्वितीयार्द्ध-पञ्चदश सूक्तीय द्वितीयर्चं व्याख्याने सायणेनैवानेन स्पष्टाभिहितत्वात् ।

(३) –निघण्टौ तु 'पृश्निः'-इति दिव आदित्यस्य च साधारणं नाम (नि०१,४,२) । निरुक्तेऽपि तथैव । तथाहि—'पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्प्रष्टा रसान् संस्प्रष्टा भासं ज्योतिषां संस्प्रष्टो भासेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च'-इति २,१८ ।

(४)- घृतमिति निघण्टौ प्रथम द्वादशे उदक नामसु दशमम् ।

अथ चतुर्थी।

श्रुतकक्ष* ऋषिः।

३ २ ३ १ २ ३ १ १ २र
अयाधियाचगव्ययापुरुणामन्पुरुष्टुत।
१र २र ३ १ २
यत्सोमेसोमआभुवः ॥ ४ ॥ ७४

५ र र ५ १ २ २ २ ५
। अयाधियाचगव्या६या। पुरुणा३। मन्यू२३४ह्न।

रम्''(५) आग्रयण-द्रव्यं पयः(६) ''दुह्रते'' दुहन्ति चारयन्ति। कोदृश्यः पृश्नयः? ''ऋतस्य'' सत्यस्य अवितथस्य(७) इन्द्रस्य [यज्ञस्य वा(८)] ''पिप्युषोः''(९) वर्धयित्र्यः ॥ ३ ॥ ७३

---

* 'सुकक्ष'-इति वि० पाठः।

७४ ऋग्वेदस्य ६,८,२४,२।
। वैतहव्यम्।

(५)—''अपस्य प्रयामानुचरानुश्रयिष्यु'' नित्याजश्रानाश्रितमाश्रीरामीरं (६,१,७४) इति श्रोञ् पाके इत्यस्य निष्ठायां रूपम। ''आशिरायणादाग्रपणाद्वा'' इति च नैरुक्तम् ६,८।

(६)—'सोममिश्रं यद् दधि.तत् आशिरम्'-इति वि०।

(७)—'निघण्टु तृतीय-दशम-खण्डमिह मानम।

(८)—निघण्टु प्रथम-द्वादश खण्डमिह मानम्।

(९) 'द्वितीया प्रथमैकवचनार्थे'-इति वि०।

२ १ २ ३र २र ३ २ १ २ ३र १र
ष्टुतौ। वा३२। यशोमे३सोमआ। या२मोमे२सो।

२ १ ५ ४ ५
मओ२३४वा। भूपूवो६हाइ॥ १२॥ ७४

हे "पुरुणामन्"(१)बहुविध-शक्र-वृत्रहादि नामोपेत(२)! [यद्वा बहु-स्तुतिमन्! नमयति स्तुत्यं देवं वशं नयतीति नाम स्तोत्रम्] अत एव "पुरुष्टुत" बहुभिरभिष्टुतेन्द्र! "सोमे सोमे" मदीयेषु सर्वेषु सोमेषु त्वं "यद्" यदा(३) "आभवः"(४) तेषां पानार्थं समन्तादभवः तदा वयं "अया" अनया(५) ईदृश्या "गव्यया" गा आत्मन इच्छन्त्या(६) "धिया"(७) बुध्या युक्ता भवेम। त्वयि सोमं पिबति सति वयं गवादियुक्ता भवेमेत्यर्थः॥

"आभुवः"-"आभवः"-इति च पाठौ॥ ४॥ ७४

(१) पुरुशब्दो बहुवचनः निघण्टु-तृतीय-प्रथम-खण्डे तृतीय इति दर्शनात् 'पूर्वपदादिति (८,४,३) णत्वम्।

(२) -'पुरुणामन्। बहूनां शत्रूणां प्रह्वीकर्त्तः! इत्यर्थः। अथवा बहवो यजमानाः प्रह्वीभूताः' इति वि०।

(३)—'यत्—पञ्चम्या अत्र लुक्, यस्मात्'-इति वि०।

(४)—'आभिमुख्येन भवसि'-इति वि०।

(५) -"'अया'—अनया, 'धिया'—धीरिति प्रज्ञानाम, प्रज्ञया त्वां स्तुम इति वाक्यशेषः। अथवा धीरिति कर्मनाम, अनेन यागाख्येन कर्मणा; त्वां यजामह इति वाक्यशेषः"-इति वि०।

(६)—'किमर्थं पुनः स्तुमः? उच्यते—गव्यया गविच्छया'-इति वि०।

(७) -धीरिति प्रज्ञा-नामसु सप्तमम्(नि०३,९)कर्म-नामसु एकविंशतिमम्(नि०२,१)।

अथ पञ्चमी ।

मधुच्छन्दा ऋषिः ।

३ २ ३ १२ ३१२ ३ १२
पावकानःसरस्वतीवाजेभिर्वाजिनोवती ।
३ १२ ३ १ २
यज्ञंवष्टुधियावसुः ॥ ५ ॥ ७५

५र र ४५ २ १ २ १ र २ र
I पावकानईया । सरास्वा१ती२ । वाजेभिर्वा । जि-
१ २ १ १ ३ ५र र २ १र
नाइवा१ती२ । यज्ञा२३म् । वा२ष्ट्र२३४औहोवा । धिया-
३ १ १ १ १
वसु२३४५ः ॥ १४ ॥ ७५

"सरस्वती"(१) देवी "वाजेभिः" हविर्लक्षणैः अन्नै र्निमित्त भूतैः [यद्वा यजमानेभ्यो दातव्यै रन्नै र्निमित्तभूतैः] "नः" अस्मदीयं "यज्ञं" "वष्टु" कामयताम् [कामयित्वा च निर्वहत्वि- त्यर्थः। तथाचैतरेयारण्यकाण्डे श्रुत्यैव व्याख्यातम् 'यज्ञं वष्टिति

---

७५ ऋग्वेदस्य १,१,६,३ ।

I भारद्वाजम् ।

(१)—'सरस्वती'-इति निघण्टु-प्रथमस्य त्रयोदशे नदी नामसु एकादशे वाङ्नामसु च दृश्यते। इह च नैरुक्तम्—'सरस्वती त्वेतस्य नदीवद् देवतावच्च निगमा भवन्ति (२,२३)'-इत्यादि, 'सरस्वती माध्यमिका वाक्' इति वि०। 'वागर्थेषु विधीयते, तस्मात् माध्यमिकां वाचं मन्यन्ते'-इति नैरुक्तं (११,२७) मतम् ।

अथ षष्ठी।

वामदेव ऋषिः।

२ ३ १र २र ३ २उ ३ १ २
कदूमन्नाऊपीषादिन्द्र ऽसोमस्यतर्पयात्।

२ २ २ ३ १ २
मनोवसून्याभरात्॥ ६ ॥ ७६

यदाह, यज्ञं वहत्वित्येव तदाहेति'] कीदृशी सरस्वती? "पावका"(२) शोधयित्री "वाजिनीवती" अन्नवत्-क्रियावती "धिया वसुः" कर्म-प्राप्य-धन निमित्त-भूता [वाग्देवतायास्तथा-विध धन-निमित्तत्वमैतरेयारण्यकाण्डे श्रुत्या व्याख्यातम्—'यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुरिति]। 'श्येनः, 'सोमः'-इत्यादिषु पञ्चविंशति-संख्याकेषु देवता-विशेष-वाचिषु पदेषु "सरमा,' 'सरस्वती'-इति पठितम्(३)॥ एतामृचं यास्क एवं व्याचष्ट (ने०११,२६)—'पावकानः सरस्वती यज्ञं वष्टु धियावसुः कर्म्मवसुरिति'॥ ५ ॥ ७५

---

(२)—"पावकादीनां छन्दसि (६,३,१९)" इति वचनादिह ह्रस्वाभावः।

(३)—निघण्टौ दैवतकाण्डे चतुर्थखण्डानन्तरं श्येन इत्यादीनि पञ्चविंशपदानि पठितानि, तत्र सरमेति सप्तदशं सरस्वतीति द्वादशम्। तानि च पदानि अन्तरिक्षस्थ देवता-वाचकानि, तथाहि नैरुक्तम्—'अथातो मध्यस्थाना देवताः'-इत्यादि -'सचा मरुद्भिः मरुरोदसी'-इत्यन्तम् (१०,१ -११,५०)।

अथ सप्तमी ।

इरिमिठ* ऋषिः ।

१ २　　　३ २३　३ २ ३ २ ३　१ २ ३ २
आयाहिसुषुमाहितइन्द्रसोमपिबाइमम् ।

४ ५ ४　　५ ४　५　२र　१　२　　१
। कइमम् । उद्भवाहाइ । नाहुश्षाइषू१वा२। आ-
र २　　१ २　　　१ ५र १२र　　१ २
इन्द्र१सोम । स्यतापाऽ१या२त् । सनोरवक्षा नियाभा-
१ र ५१२र　　१　　　२　　१र
१रा२त् । सानोरवक्षनि । आ२३ । भराउवा । आ
२ १र　　२
गहियेहिताइमे१ ॥ १५ ॥ ७६

"नाहुषोषु" [नहुषइति मनुष्यनाम नि० २, ३, ८] नहुष-सम्बन्धिनोषु प्रजासु,[१] "कः" "इमम् इन्द्रम्" "सोमस्य" सोमेन "तर्पयात्" तर्पयति प्रीणाति ([२]), "सः" नाहुषीभिस्तर्पयित मशक्य इन्द्रः "नः" अस्माकं सम्बन्धि-यज्ञे तप्तः सन् "वसूनि" धनानि "आभरत्" आहरत् आहरत्वित्यर्थः ॥ ६ ॥ ७६

---

* 'इरिमिरि' इति वि० पाठः ।

I अरुणस्य वैतहव्यस्य साम सौभरं वा ।

१ - नहुष इति मनुष्यनाम, तत्र भवा ज्योतिष्टोमाद्याः क्रियाः नाहुष्यः । तासु नाहुषोषु ज्योतिष्टोमादिषु क्रियास्वित्यर्थः ।

(२ —'क मा मुक्ता अन्यः तपयति अहमेव तर्पयामि इत्यभिप्रायः' इति वि० ।

१ ३ २ १ २ ३ १ २
एदंबर्हिःसदोमम॥ ७ ॥ ७७

५ र र २ १ २ १ २
I आयाहि। सुमाहा१इते२। सुमाहा१इते२।

१ २ १ २ १ २
आइन्द्रसोमम्। पिबाइमम्। पिबाआ१इमा२म्।

३र २ १ २ १र २ १
एदम्बर्हाइः। सदोमा२३मा३४३। ओ२३४५इडा॥१६॥७७

हे "इन्द्र"! त्वम् "आयाहि" आगच्छ, वयं "ते" त्वदर्थं "सुषुमा हि"(१) सोममभिषुतवन्तः खलु, तम् "इमम्" अभिषुतं "सोमं" त्वं "पिब," तदर्थं "मम" मदीयम् "इदम्" "बर्हिः"(२) वेद्यामास्तीर्णं दर्भम् "आ(३) सदः" आसीद अभि निषीद॥७॥७७

७७ उत्तरार्चिकस्य १,२,६,१—ऋग्वेदस्य ६,१,२२,१।
I सौभरम्।

(१)—'सुषुमा'-इति षुञोरूपं छान्दसम् अभिषुणुम इत्यर्थः। हि शब्दो हेतौ. यस्मात् षुणुमः तस्मादागच्छेति वि० सम्मतो।श०।

(२)—"इदं', 'बर्हिः' द्वे अप्येते सप्तम्येकवचनान्ते द्रष्टव्ये। अस्मिन् बर्हिषि। क पुनर्थत् बर्हिः? उच्यते 'सदः' इत्यपि सप्तम्येकवचनान्तं, इदमम् सदसि मम स्व भूते वेद्याख्ये स्थाने इत्यर्थः' इति वि०।

(३) -विवरण-मथ आ इत्ययं सुषुमेत्यनेनसम्बध्यते

अथाष्टमी ।

वारुणिः सत्यधृति ऋषिः ।

१ ० ३ १र २र ३ १ ३ १ २ ३ २
महित्रीणामवरस्तु* द्युक्षंमित्रस्यार्यम्णः ।
३ २ ३ १ २
दुराधर्षवरुणस्य ॥ ८ ॥ ७८

२ २ ३ ५ १ १ ३ २ ३
I महाइत्रा२३४इणाम् । अवा२रस्तु । द्युक्षम्मा२३
५ १ ३ २ ३ ५ २ १र
४इत्रा । स्या२र्यम्णः । दुराधा२३४र्षाम् । वरौहो२३४ ।
५ ४ ५
वा । णा५स्योहाइ ॥ १७ ॥

५ र र ५ २ १ र २ १र
II महित्रीणामवरस्तूहुए । द्युक्षम्मित्रस्यार्यम्णः । दुरा
२ १ १ १
धा२३र्षाम् । वरौहो२ । हम्मा२ । णा । स्यो२ ।
३ ५र र २र १ २ १ ३ १ १ १ १
या२३४औहोवा । हाओवा । ओवा२३४५ ॥ १८ ॥ ७८

* 'अवोऽस्तु'-इति ऋग्वेदीयः पाठः ।

---

७८ ऋग्वेदस्य ८,८,४४,१—यजुर्वेदस्य ३,३१—
आरण्यगानस्य ३,२,१,२ ।

I,II इमे द्वे पाष्ठौहे ।

अथ नवमी।

वत्स ऋषिः।

१ २ ३ १ २

त्वावतःपुरूवसोवयमिन्द्रप्रणेतः।

१र २ ५ २ र२ २५ २

। त्वावतो३। चौ३चो३१इ। पुरूवसो३। चौ३चो-

२ १ २ २५ २ र २ २५

३१इ। वयमिन्द्रा३। चौ३चो३१इ। प्रणेता३ः। चौ३-

"त्रीणां"* त्रयाणां "मित्रस्य" 'अर्यम्णः' "वरुणस्य" च "द्युक्षं" दीप्तम्(१) अतएव "दुराधर्षम्" अन्यै र्धर्षितुं बाधितुमशक्य "महि" महत् "अवर्" अवः रक्षणम् अस्माकम् "अस्तु" [अवस् इत्यत्र अवः शब्दस्य विसर्जनीयस्य रेफादेशश्छान्दसः। "अवर्"-"अवः"-इति च पाठौ॥ ८॥ ७८

हे "पुरूवसो" बहुधन! इन्द्र! "प्रणेतः" कर्मणां पारं प्रकर्षेण नेतः(२)! "इन्द्र"! "त्वत्सदृशस्य [इन्द्रसमानस्यान्यस्या-

* 'त्रणाम्' इति वि०पाठः।

I साकमश्वं धुरां साम वा।

(१) 'द्यु' इति अहर्नाम निघण्टु-प्रथम-नवमे द्वितीयत्वेन दर्शनात्। द्यु-शब्दो दीप्ति वचनश्च 'द्योतन इति सतः' इति नैरुक्त-वचनात् (१.६)। 'क्षि' निवास-गत्योः। तस्मिन् यत् क्षियति तत् द्युक्षम्। सुतरामागतं दीप्तिमिति।

(२) --'प्रणेतः** अथवा प्रकर्षेण नेतः शत्रूणाम्'-इति वि०।

१ २
स्मसिस्थातर्हरीणाम् ॥ ८ ॥ ७९

॥ इति पञ्चम दशतिः* ॥

२ २र ५२ २ र २
द्दो३१इ। स्मसिस्थाता३ः। दौ३द्दो३१इ। हरीणा३म्।
५२ २
दौ३द्दो३१२३४५इ। डा ॥ १८ ॥ ७९

भावात् तथेत्यर्थः(१) | तव स्वभूताः "वयम्" "स्मसि"(३) स्मः। हे "हरीणाम्" एतत् सञ्ज्ञकानामश्वानां(४) "स्थातः" अधिष्ठातः! ॥ ८ ॥ ७९

इति सायणाचार्य विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

७९ ऋग्वेदस्य ६,४,१,१ ।

(१)--त्वमिवइति त्वावान्। "युष्मदस्मदोः सादृश्ये वतुब्वाच्यः" इति (५,१,६१) वचनाद् वतुपि, "प्रत्ययोत्तरपदयोश्चेति" त्वादेशे, "आ च सर्वनाम्नः"-इत्यात्वं रूपम्। तस्य त्वावतः।

(२)--'एतदुक्तं भवति - त्वत्सदृशस्यापि वयं स्तोतारो भवामः, किम्पुनस्त्वं-वेति'--इति वि०।

(३)- "इदन्तोमसि (७,१,४६)" इति मसइगागमः।

(४)--'हरी इन्द्रस्य'-इति नि०१,१५.१। 'अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा" इत्यादि नै०२,२७।

*॥ इति द्वितीयः प्रपाठकः ॥ २ ॥

अथ नवमे खण्डे—

सैषा प्रथमा।

प्रगाथ ऋषिः।

१ २ ३ १ २ ३ १ २ २ १
उत्वामदन्तु सोमाः* कृणुष्वराधोअद्रिवः।
१ २ ३ १ २
अवब्रह्मद्विषोजहि॥ १॥ ८०

५ २ २ ४ ५ २ १२ २ १२
I उत्वामन्दन्तुसोहोमाः। कृणौहो। ष्वरौहो।
२२ १ २ १ २ १
धाअद्रिवाः। अ। वब्रा२३ह्मा। द्विषा२ः। हा२इ।
५ २ २ १ ३ ५२ २ २ १ १
औ३हो३१ये३। जा२हा२३४औहोवा। ए३। ययू२-
१ १ १
३४५ः॥ २०॥ ८०

हे इन्द्र! "त्वा" त्वाम् "सोमाः" "उत्"(१) उत्कृष्टं "मदन्तु"

* 'स्तोमाः'-इति ऋग्वेदीयः पाठः, उत्तरार्चिक-व्याख्यायां सायणाचार्य्य-धृत-पाठश्च।

८० उत्तरार्चिकस्य ६,१,३,१—ऋग्वेदस्य ६,४,४३,१।

I यामम्।

(१)—'उदिति पादपूरणः'-इति वि०। इव निगमम् "प्रसमुपोदः पादपूरणे (८,१,६)" इति पाणिनि सूत्रम्।

अथ द्वितीया ।

विश्वामित्र ऋषिः ।

१ २　३ १ २ ३ १ ३ ३ १ २
गिर्वणःपाहिनःसुतंमधोर्धाराभिरज्यसे ।
३ १ २ ३ १ २ २र
इन्द्रत्वादातमिद्यशः ॥ २ ॥ ८१

४ ५　र ४ ५　४　५　८　१
। गिर्वणः पाहिनः सुतम् । गिर्वणःपा । हिनःसु-
१ र र २ १ र　१　२
तारम् । मधोर्धाराभिराचो२ । ज्यासे२३ । हाउवा ।
१　२　२ १　१ २　५र र
इन्द्रात्वा२३दा । तमायेश्त् । या२शा२३४औहोवा ।
२　१ १ १ १ १
हरो३श्रो२३४५ः ॥ २१ ॥ ८१

मादयन्तु हे "अद्रिवः"(२) वज्रवन् ! इन्द्र ! त्वमस्मभ्यं "राधः" धनं(३) "कृणुष्व"(४) कुरु प्रयच्छ । किञ्च "ब्रह्मद्विषः" ब्राह्मण-द्वेष्टॄन् "अव जहि" विदारयेत्यर्थः(५)॥ १ ॥ ८०

८१ ऋग्वेदस्य ३,३,२,१ ।

I आङ्गिरसम् हरिश्रीनिधनम् ।

(२) "मतुवसोरुसम्बुद्धौ (८,३,१)" इति रुत्वं रूपम

(३) -राधइति निघण्टु-द्वितीय-दशमे धननामसु सप्तदशम । "राध इति धन नाम, राध्नुवन्त्य नेन"-इति नै०४.४ ।

(४) क्रिया-सामान्य वचनो दानार्थो दशमः, देहि धनमित्यर्थः ।

(५) 'जहाति च हन्तेर्गत्यर्थस्येद रूपम । अवजहि अधोगमय, नरक नयेत्यथः' इति वि० ।

अथ तृतीया।

वामदेव ऋषिः।

१ २ ३२ ३१२ ३२ ३ १ २ २र ३ ७

सदावइन्द्रश्चर्कृषदाउपोनुससपर्यन्।

३ २ ३ २३ ३१ २

नदेवोवृतःशूरइन्द्रः ॥ ३ ॥ ८२

"गिर्वणः"(१) गीर्भिः वाग्भिः स्तुतिभिः वननीय! [तथा च यास्कः—'गिर्वणा देवो भवति गीर्भिरेनं वनयन्तीति' (नै० ६, १४)] तादृश! हे इन्द्र! "नः"(२) अस्मदीयं "सुतम्"(३) अभिषुतम् इमं सोमं "पाहि" पिब,(४) यतः "मधोः" मदकरस्य सोमस्य "धाराभिः" "अज्यसे" सिच्यसे। हे "इन्द्र! "त्वादातम् इत्"(५) त्वया शोधितं विशदीकृतमेव "यशः" अन्नम्(६) अस्मासु भवति ॥ २ ॥ ८१

(१) –गिर्वणः इति सान्तः। गिरः स्तुतिलक्षणावाचः (नि० १, ११), ताभिः या वन्यते सम्भज्यते स गिर्वणाः, तस्य सम्बोधनम्—हे गिर्वणः!।

(२), (३)- सुतमिति षष्ठ्यर्थे द्वितीया, विशेषणञ्च मधोरित्यस्य वि०-सम्मतम्।

(४) –'नः'-अस्मान् 'पाहि रक्ष'-इति च वि०।

(५)– 'इदिति पदपूरणः'-इति वि०। "अथ ये प्रवृत्तेऽर्थे ऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरण आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः - कमीमिद्विति" इति नि०१,९।

(६)–'यशः'-इति निघण्टौ प्रथम-द्वादशे उदकनामसु पञ्चपञ्चाशत्तमम्पदम्, द्वितीय सप्तमे अन्ननामसु अष्टमम्—द्वितीय दशमे धन नामसु त्रयोविंशतितमञ्च।

४ ५ २ २ ३ ४ ५ २ र
I सादा। वइन्द्राइः। चर्क्षषादा। उपोनुसाइः।
१ २ १ २ २र १ २ २ २ ४
सापर्यन्यनदेवा२३ः। वृता३४३ः। शू३४३। रा३न्त्रा५
यिन्द्रा६५६ः॥ २२॥ ८२

हे ऋत्विग्यजमानाः(१)! "इन्द्रः" "सदा" सर्वदा "वः" युष्मान् "आ चर्कृषत्" यज्ञानुष्ठानार्थम् आकृषत् कर्त्तुमिच्छति। किं कुर्वन्? "उपान्" युष्माकं समीप एव "समपर्ययन्" पुनः पुनः भृशं वा सपर्यां कुर्वन् [हविर्भोक्तुं मामाह्वयध्वमिति प्रार्थयमान इत्यर्थः, अतएव श्रुत्यन्तरे देवानां यजमान-प्रदत्त हवि-रुपजीवित्वं श्रूयते-'इतो दानाद्धि देवा उपजीवन्तीति'] अतः अस्मत्सपर्या-कर्त्तृत्वात् "इन्द्रः देवः" "नः" "शूरः" यजमानानां बाधक इत्यर्थः(२) ॥ ३ ॥ ८२

I वैरूपम्।

(१)—'आत्मीयं पवपौवमाह'-इति वि०।

(२)—'सदा' सर्वदा. 'वः' युष्माकम्. 'इन्द्रः' 'चर्षणम्' अत्यर्थं करोतु पुनः पुनश्च करोतु बलं पुष्टिं धनं चिरञ्च दीर्घञ्च जीवितम्। 'आ,' 'उप', 'उ', 'नु'-चत्वारो-ऽप्येते पदपूरणाः। 'स' शब्दो यच्छब्दमन्तरेण न निराकाङ्क्षितां प्रतिपद्यते अतोऽत्रार्थ-सम्बन्धो यच्छब्दोऽध्याहर्त्तव्यः। य अधस्तादुक्तगुणः स कथं बलपुष्टा-दीन् करोति? उच्यते—'सपर्यन्' सपर्य्यतिः परिचरणकर्म्मा 'सप्तदः उपरिष्टादुप-मार्गीय' यथा कश्चित् परिचरन् प्रीतिमुत्पादयति तद्वत् प्रीतिमुत्पाद-

अथ चतुर्थी ।

श्रुतकक्ष ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २
आत्वाविशन्त्विन्दवःसमुद्रमिवसिन्धवः ।
२उ ३ १ २
नत्वामिन्द्रातिरिच्यते ॥ ४ ॥ ८३

। आत्वाविशन्त्विन्दा६वाः । समुद्रमिवसिन्धवः । स-
मुद्रमि । वसिन्धा२३वाः । नत्वामिन्द्रातिरिच्यते । न
त्वामा२३यिन्द्रा । तिरिच्या२३ता३४३यि । ओ२३४५ई ।
डा ॥ २३ ॥ ८३

हे इन्द्र ! "इन्दवः" स्रवन्तः अस्माभि र्दीयमानाः सोमाः(१)

८३ उत्तरार्चिकस्य ८,२.२,१—ऋग्वेदस्य ६,६,१८,२—
ऊहगानेऽपि १४,२—१८—१साम ।
। आसितं सिन्धुषाम वा ।

यतीत्यर्थः। 'देवः' दानादि गुण-युक्तः, 'हतः' अभ्यर्थितः, 'शूरः' विक्रान्तः, 'इन्द्रः' ईश्वर इत्यर्थः इति वि० ।

(१)—इन्दुरिति निघण्टौ उदक नामसु १.१२। यज्ञ नामसु ३,१७ च दृश्यते ।

अथ पञ्चमी ।

मधुच्छन्दा ऋषिः ।

७ २ ३ १ २७र१ र१३१२ ७र १
इन्द्रमिद्गाथिनोबृहदिन्द्रमर्कैभिरर्किणः ।
३ १ २
इन्द्रवाणीरनूषत ॥ ५ ॥ ८४

५ ३ २र ३ ४र ५ २ १ २ १ २
I इन्द्रमिद्गाथिनोबृहात् । इन्द्रामर्काइ । भिर-

"त्वा" त्वाम् "आविशन्तु" । तत्र दृष्टान्तः "समुद्रम् इव सिन्धवः" स्यन्दनशीला नद्यो(२) यथा समुद्रं जलाशयं सर्वतः प्रविशन्ति तद्वत् । यत एवं तस्मात् हे "इन्द्र" ! त्वां कश्चिदपि देवः धनेन बलेन वा "न अतिरिच्यते" नातिरिक्तोऽस्ति | सामर्थ्यवान् त्वत्तोधिको नास्तीत्यर्थः ॥ ४ ॥ ८३

---

८४ उत्तरार्चिकस्य २,१,८,१—ऋग्वेदस्य १,१,१३,१—
आरण्यगानेऽपि ३,११ ।
I यमस्य इन्द्रस्य वा अर्कः ।

नैरुक्ते देवत-काण्डेऽपि व्याख्यातः, तथाहि 'इन्द्रस्त्रिमिकनर्मर्वा' इत्यादि, 'इतीमानि सप्तविंशति-देवता-नामधेयान्यनुक्रान्तानि । सूक्तभाञ्जि हविर्भाञ्जि । तेषा मेतान्य हविर्भाञ्जि वेनोऽसुनीति ऋतरन्द्र:'-इत्यन्तम १०,४२ । इह तु उदकवत् सरण शील सोमो गृह्यते ।

(२) –'सिन्धवः'-इति निघण्टौ नदी-नामसु एकविंशतितमम् पदम् १,१३ ।

१ १ २ २ २ ४
किंणाः। इन्द्रवाणीऽ३। हाऽ३हायि। अनूऽ५षता।

४
होऽ५यि। डा ॥ २४ ॥ ८४

"गाथिनः"(१) गीयमान-साम-युक्ता उद्गातारः "इन्द्रम् इत्" इन्द्रमेव "बृहत्" बृहता 'त्वामिद्धिहवामहे'-इत्यस्या मृच्युत्पन्नेन बृहन्नामकेन साम्ना(२) "अनूषत" स्तुवन्ति। "अर्किणः" अर्चन-हेतु-मन्त्रोपेता होतारः "अर्केभिः" उक्थरूपै र्मन्त्रै रनूषत। ये त्ववशिष्टा अध्वर्यवः ते "वाणीः" वाग्भि र्यजूरूपाभि "इन्द्रम्" अनूषत। अर्क-शब्दस्य मन्त्र-परत्वं यास्केनोक्तम्(५,४) 'अर्को मन्त्रो भवति यदनेनार्चन्तीति(३) ॥ ५ ॥ ८४

---

(१)—गाथाइति वाङ्नामसु दृष्टम् नि०१,११। 'गाथानि सामानि'-इति वि०।

(२)—इन्द्रार्चिकस्यास्य तृतीय-प्रथम पञ्चमस्य द्वितीया 'त्वामिद्धिहवामहे'-इति। अस्यामुत्पन्नानि एकादश सामानि। तत्र गेयगानस्य चतुर्थ-प्रथमे श्रुते द्वे (२८—२९) आरण्यगानस्य प्रथमे एकम् (२०), द्वितीये एकम् (२२)—ऊहगानस्य द्वाविंशतितमे त्रयोदश सप्तदशञ्चेति—ऊह्यगानस्य प्रथमे पञ्चमम्, तृतीये षष्ठम्, तृतीय-द्वितीये पञ्चमम्, पञ्चमे षोडशं सप्तदशञ्चेति सङ्कलनया पञ्च। तत्र आरण्य-गानस्य प्रथमाध्यायीयमेव बृहदिति व्यपदिश्यते। मानमस्यार्षेयकं ब्राह्मणम्।

(३)—"अर्को देवो भवति यदेनमर्चन्ति। अर्को मन्त्रो भवति यदनेनार्चन्ति। अर्कमन्नम् भवत्यर्चति भूतानि। अर्को वृक्षो भवति संवृतः कटुकिम्ना"-इति नि०५,४।

अथ षष्ठी ।

श्रुतकक्ष* ऋषिः ।

१ २ ३ १ २　　३ २ २ ३ २　३ २
इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम् ।
३ १ २　३ १ २
वाजी ददातु वाजिनम् ॥ ६ ॥ ८५

४ ५ ४२ ५ २　　४　　२　　१
I इन्द्र इषे ददातुनः । ओहायि । ऋभु । क्षणा-
३ २ ३　५　२२ २　३ २　२२ १२
२म् । ऋभु ँ रार३४याम् । वाजीददातुवा३ । वाजी-
२२ १　५　४　५
ददा । तुवो२३४वा । जा५यिनो६हायि ॥ २५ ॥

५　२ २　५ २ १ २
II इन्द्र इषे ददातुना६ए । ऋभुक्षणमृ । भू२१२३म् ।
२　.१ २　४ ५ ४
रपो३४३म् । वा२३जा । ददा२उ२३ । तुवोवा । जा
५
५यिनो६हायि ॥ २६ ॥ ८५

* 'सुकक्ष'-इति वि०-पाठः ।

८५ ऋग्वेदस्य ६,६,२७,४— ऊहगानस्य ५,२,२५ २६ ।
I,II सौमित्रे ।

"इन्द्रः" एवमस्माभिः स्तुतः हृष्टः सन् "ऋभुक्षणम्"(४) ["वाषपूर्वस्य(६,४,९ पा०) इति दीर्घाभावः] यागादि-कर्म-करणेन महान्तम् [सर्वेषां भ्रातॄणां श्रेष्ठं सौधन्वनं वा(६)। अथवा तृतीय-सवने प्रजापति-सवित्रोर्मध्ये सोमपानेन महान्तं रयिं(३) दातारं(१)] "ऋभुम्"(२) [सोम-पानेन मर्त्यत्वं विहाय देवत्वं प्राप्तं तादृशम्(५)] एतन्नामकं देवं "नः" अस्मभ्यम् "इषे"(८)

(४) -'ऋभुक्षा' इति महन्नामसु दशमम् नि०३,३।

(६) "ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्राः बभूवुः। तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति, न मध्यमेन'-इति नै०११,१६।

(७) ऋभुरिति मेधावि-नामसु अष्टमं पदम् नि०३,१५। दैवतकाण्डेऽपि निघण्टोरन्तरिक्षस्थानदेवतास्वन्तरे श्येनादिषु दशमम् पदम्, तच्च बहुवचनान्तम्। तत्र चास्ति नैरुक्तम्-"ऋभवउरुभान्तीति वर्त्तेन भान्तीति यर्त्तेन भवन्तीति वा"-इत्यादि-"तदेतद्भोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति"-इत्यपि-"आदित्य रश्मयोऽप्यभवउच्यन्ते"-इति च ११,१६।

(३) -'पुत्र लक्षणं धनम्' इति वि०। "रयिरिति धन-नाम, रातेर्दान-कर्मणः"-इति नै ४,१७।

(१) -एषएवार्थो वि०-सम्मतः।

(२) -'ऋभुम् मेधाविनम्' इति रयिमित्यस्य विशेषणञ्च वि०।

(५) -तदिदमानम्वेदीयो मन्त्रोऽयम्-"विष्ट्वी शमी तरणित्वेन वाघतो मर्त्तासः सन्तो अमृतत्वमानशुः। सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः। (१,१०,४,५)" इति। यास्केनेयमेवं व्याख्याता 'कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्त्तासः सन्तो ऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः' इति।

(८) -'चतुर्थ्येक-वचनं द्वितीयार्थे द्रष्टव्यम् एषणम्'-इति वि०।

अथ सप्तमी ।

गृत्समद ऋषिः(१) ।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र
इन्द्रोअङ्गमहद्भयमभीषदपचुच्यवत् ।
२उ ३ १र २र
सहिस्थिरोविचर्षणिः ॥ ७ ॥ ८६

अत्रार्थं(९) "ददातु" प्रयच्छतु । तथा "वाजी" बलवान्(१०) इन्द्रः "वाजिनं" बलवन्तं(११) [वाज-नामानं(१२) कनीयांसं वा भ्रातरं सौधन्वनम्] अस्माकमन्नलाभाय ददातु ॥ ६ ॥ ८५

"इन्द्रः" "महत्" अधिकम् "भयं" साध्वसं [भय कारणं

८६ ऋग्वेदस्य २,८,८,३ ।

(९) इषमित्यन्न नामसु चतुर्दशम नि०२,७ ।

(१०)—'वाजी वेगवान्' इति वि० । वाजी इति निघण्टौ अश्व नामसु चतुर्थम्, १४ । "अपि स वाजी वेजनवान् वेपणमनु तूर्णमश्नुते,ध्वानम् इति तत्र नैरुक्तम् २,२८ ।

(११)—'वाजिनमश्वमिति वि० । वाजइत्यदन्तोऽन्ननामसु ( नि०२,७ ) सङ्ग्राम नामसु च ( नि०२,१७ ) दृश्यते । वाजिन इति नान्तोऽश्वनामसु ( नि०१,१४ ) — वेगवत्सु ( नै०२,२८ बृहद्रते । वाजिन इति नोपधोऽदन्तः पुनश्च देवतानामसु च उपान्त्यम् पदम्, तत्र च नैरुक्तम्—"वाजिन" इत्यादि "देवाश्वा इति वा" इत्यन्तम् १२,४४ ।

(१२)—अस्मिन् पक्षे वाजइति नाम विद्यतेऽस्येति विग्रहः पर नाय रुचिरतमम् ।

(१)—'गृत्समदोबहूनुत्पातान् दृष्ट्वा इन्द्रमनया ऋचा स्तौति' इति वि० ।

अथाष्टमी।

भरद्वाज ऋषिः*।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इमाउत्वासुतेसुतेनक्षन्तेगिर्वणोगिरः।

१ २ ३ २उ ३ १ २
गावोवत्सन्नधेनवः ॥ ८ ॥ ८७

I ५ ८ २ १ २ १ र २ १
I इन्द्रोअङ्गा। महद्भा२३याम्। अभीषद्। पच्-

२ १ २ १ २ ४ ५ ४
च्या२३वा३४त्। सहा३४यिस्थिरा३ः। विचोवा। षा५-

५
णो६हायि ॥ २७ ॥ ८६

वा] "अङ्ग" क्षिप्रम् "अभीषत्" अभिभवति,(१) "अपचुच्युवत्" अपच्यावयति च [यद्वा अभीषद् अभिभवद् भय-कारणम् अपच्यावयेत्] "हि" यस्मात् कारणात् "स स्थिरः" केनापि चालयितुमशक्यः "विचर्षणिः"(३) विश्वस्य द्रष्टा ॥ ७ ॥ ८६

* 'संयोरार्षम्'-इति वि०।

I इन्द्रस्य अभयङ्करम्।

(२)—'आभिमुख्येन सोढ़त, पर्य्युपस्थितम्'-इति वि०।

(३) -एतत् पदं विचर्षणिरित्यादिश्वष्टसु पश्यतिकर्मसु पठ्यते नि०३,११।

अथ नवमी।

भरद्वाज ऋषिः।

२ ३ २ ३ २ २ ३ २ ३ २ २ ३ १ २
इन्द्रानुपूषणावय सख्याय स्वस्तये।
३ २ ३ १ २
हुवेमवाजसातये॥ ९॥ ८८

५ २ २ १ २
I इमाउत्वा। सुतायिसुतायि। नक्षन्ता२३यिगी
५ २ २ १२ २ २ २ १
३४:। वनः। गा३यिराः। गावोवा३त्सा३म्। नधो
५ ५ ५
२३४वा। ना५वो६हायि॥ २८॥ ८७

हे "गिर्वणः" गीर्भिर्वननीयेन्द्र। "सुतेसुते" सोमे ऽभिषुते सति "इमाः" अस्मदीयाः "गिरः" स्तुतयः "त्वा" त्वां "नक्षन्ते"(१) व्याप्नुवन्ति। "धेनवः"(२) दोग्ध्र्यः "गावः न" गाव इव, वत्सं यथा गोष्ठं(३) व्याप्नुवन्ति तद्वत्(४)॥ ८॥ ८७

८८ ऋग्वेदस्य ४,८,२३,१।

I त्वाष्ट्रीसाम।

(१) 'नक्षति'-इति 'नक्षन्त' इति वा आग्निकमत्र द्वितीय पदम्...।

(२) -'धेनवः प्रस्नवाः' इति वि०।

(३) - विवरणमते तु 'गावः इष्टान्त' गावोनति।

(४) अस्मासुचि 'उ' इति पदपाठे सायणसम्मतम्।

५ र २ १र २ १ र २ २ १
I इन्द्रानुपू। षणावा२३याम्। साख्याय। सुव-
२ १ १ २ १ ५ ४
स्ता२३यायि। ह्वे२मावा२३। जसा२३४वा। तापू-
५
योइहायि॥ २६॥ ८८

( इतरेतरयोगादिन्द्रपूषशब्दयोरुभयत्र द्विवचनम् ) "इन्द्रापूषणा"(१) देवौ(२) "नु"(३)अद्य च(४)"वयम्" "स्वस्तये सख्याय" शोभनाय सखित्वाय "वाजसातये"(५) वाजस्यान्नस्य (बलस्य वा) सातये सम्भजनाय च "हुवेम"(६) आह्वयामः (स्तवामो-वा(७) ॥ ६ ॥ ८८

I पौषम्।

(१)—"देवताद्वन्द्वे च (६,३,२६)"-इति आनङि "सुपां सुलुगित्यादिना (७,१,३९) द्विवचनस्यात्वे रूपम्।

(२)—इह नैरुक्तम्—"अथास्य मन्त्रविकादेवाः अग्निः सोमो वरुणः पूषा बृहस्पति ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः" इति १,१० ।

(३)—'नु क्षिप्रम्'-इति वि०। निघण्टु द्वितीय पञ्चदश-खण्डोऽत्र नियामकः।

(४)—"नच पुराच सदनं रयीणाम्" इत्येतद्व्याख्यानमाह यास्कः 'अद्य च पुरा च सदनं रयीणाम्' इति ४,१७। तत्र नू इति दीर्घत्वं "ऋचि तु नु-घ-मक्षु तङ् कुत्रोरुष्याणाम् (६,३,१३३)"-इति। इदमेव यास्कव्याख्यानमिह नियामकम्।—नु इति तु बह्वर्थो निपातः। तथा च नैरुक्तम् -"नु इत्येषोऽनेककर्मा। न करिष्यतीति हेत्वपदेशे। कथं नु करिष्यतीत्यनुपृष्टे। नन्वेतदकार्षीदिति च। अथाप्युपमार्थे भवति"इत्यादि ।१.४॥

(५)—वाजसातिरिति सङ्ग्रामार्थो रूढः (नि०,१७)। वाजमन्नं बलं वा तस्य सातिर्लाभः एषोऽर्थो यौगिकः। सातीति षणु दाने इत्यस्य रूपम् "ऊतियूती"त्यादिना (३,३,९७) क्तिनि सिद्धम्।

(६)—सम्प्रसारणं छान्दसम् (६,१,३४)।

(७)—हूयते, हुयति वा अर्चति कर्मस्वपि पठ्यते नि०३,१४।

अथ दशमी।

वामदेव ऋषिः।

१ २ ३ १र २र ३ १ २र
नकिइन्द्र*त्वदुत्तर†।नज्यायो‡अस्तिवृत्रहन्।

२ ३ २उ ३ २
नक्येव** यथात्वम्॥ १० ॥ ८९

॥ इति प्रथमा-दशति ॥

I न। क्येनाकी। आयिन्द्रत्वदुत्तराम्। नज्यायोर।

अस्तार४यिवृ। ऊ३ऊम्। त्रा२३४हान्। नक्ये।

वंयार३था। ऊ३ऊ३४३म्। त्व३४५वो६हायि ॥२०॥ ८९

हे "वृत्रहन्" वृत्रस्य नाशक! "इन्द्र"! इन्द्रलोकेऽपीति

---

* "नकिरिन्द्र"-इति, † "रो"-इति, ‡ "ज्याया"-इति,

** "नकिरेवम्"-इति च ऋग्वेदीयपाठः।

---

८९ ऋग्वेदस्य ३,६,१८,१।

I इन्द्राण्याः साम।

श्रेष्ठः "त्वत्" त्वत्तः "उत्तरः" उत्कृष्टतरः "नकि(१) अस्ति" न भवति त्वत्तो "ज्यायान्" प्रशस्ततर(२) एकोऽपि नास्ति। हे इन्द्र! "त्वं" लोके "यथा"(३) प्रसिद्धो भवसि तथाविध एकोऽपि "नकिरेवास्ति" नैव भवति (कश्चिदपि लोके इन्द्रसदृशो नास्तीत्यर्थः॥ १०॥ ८९

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य नवमः खण्डः॥ ९॥

---

अथ दशमे खण्डे

सैषा प्रथमा।

त्रिशोक* ऋषिः।

३ १ २ ३ १ २ ३ १२ २१ २ १ २
तरणिंवोजनानान्त्रदंवाजस्यगोमतः।

* 'विरूपस्यार्षम्'-इति वि०।

(१)—'न कि'-इति हि कमित्यादिषु पठितम् नि०१.१२। तत्र च नैरुक्तम्—"नवोत्तराणि पदानि सर्वपदसमाम्नानाय"-इति। नै०१,१३।

(२)—'इद्धतरो वा'-इति वि०।

(३)—"यथेति कर्मोपमा"-इति नै०३,१५। तथाच 'न कश्चित् एवं सर्वोपकार प्रवृत्तः'-इति विवरणकृद्व्याख्यानं साधुतरं मन्यते।

३　२ ३ १ २
समानमुप्रशꣳसिषम् ॥ १ ॥ ९०

५　　४　　२　　२ १ र २　२
I तरणिंवाः । जनार३नाम । त्रदंवाजा३स्वा३ ।
१ २ ३　५　२ १र　२　४
स्यागोमार३४ताः । समानार३मू । प्रशा५ꣳमिषाम ।
४　५
द्दो५इडा ॥ ३१ ॥ ९०

हे अस्मदीयाजनाः ! "वः" युष्माकं "जनानां" पुत्रपौत्रादीनां "तरणिं"(१) तारकम् "त्रदं" शत्रूणां तर्द यितारं "गोमतः" पशुमतः "वाजस्य" अन्नस्य दातारं च इन्द्रम् "समानम् उ" साधारणमेव "प्रशंसिषम्"(२) प्रकर्षेण स्तौमि ॥ १ ॥ ९०

---

९० ऋग्वेदस्य ६,३,४७,३ ।
I श्यावाश्वं तारणं वा ।

(१)—'तरणिं' क्षिप्रम् दातारं वा वि० मतम् । तरणिरिति निघण्टौ क्षिप्रनामसु उपान्त्यं पदम् २,१५ ।

(२) निघण्टु तृतीय-चतुर्दशे 'शंसति' इति अर्च्चतिकर्मसु पश्चयि शतितमम ।

अथ द्वितीया।

मधुच्छन्दा ऋषिः।

१ २ ३ २ ३ २ ३ १र २र
अश्वग्रमिन्द्रतेगिरःप्रतित्वामुदहासत।

३ १ २ ३ १र २र
सजोषा* वृषभम्पतिम्॥ ७॥ ९१

५ र ५र १ १ २र
I अश्वग्रमाइन्द्राईतेगिराः। प्रातो२त्वामू२त्। अहा।

१ २ १ २ १ २ १
सता। मा१जो२षावा२। षभा२म्पतिम्। ओ२३४५

५
इ। डा॥ ३२॥ ९१

हे "इन्द्र! "ते गिरः" त्वदीयाः स्तुतीः "असृग्रं" सृष्टवानस्मि। ता गिरः स्वर्गेऽवस्थितं "त्वां प्रति" "उदहासत"(१) उद्गत्य प्राप्नुवन्। तादृशीर्गिरस्त्वं "सजोषाः"(२) सेवितवानसि।

---

* "अजोषा"-इति ऋग्वेदीयः पाठः।

---

९१ ऋग्वेदस्य १,१,१७,४।
I वैरूपम्।

(१)—'ओहाङ् गतावित्यस्य रूपम्'-इति वि०।
(२)—'जुषी प्रीति-सेवनयोरित्यस्येदं रूपम्'-इति वि०।

अथ तृतीया ।

वत्स ऋषिः ।

३ १ ३ २उ३ ३ २३ २ ३ १ २ ३ २
सुनीथोघा समर्त्त्यो यंमरुतोयमर्यमा ।
३ २उ ३ १ २
मित्रास्पा*न्त्यद्रुहः ॥ ३ ॥ ९२

४ र र ४ १ र ५ १ २ १र २
I सुनीथोघा५समर्त्तियाः । यम्मरुतोरयमर्यमा । मि
१र र २ १ २ १ १ २र १ २
त्रास्पान्त्यद्रुहः । ऊ । ऊ । वाहा३१उवा२ । अति-
१ ३ १ १ १ १
द्विषा२३४५ः ॥ ३३ ॥ ९२

कीदृशं त्वाम् ? "वृषभं" कामानां वर्षितारं "पतिं" सोमस्य पातारं, यजमानानां पालयितारं वा, "पाता वा पालयिता वेति" (१०,११) यास्केनोक्तत्वात् ॥ २ ॥ ९१

"सः" "मर्त्यः" मनुष्यः यजमानः "सुनीथः" सुयज्ञः(१)

* "मित्रःपा" इति ऋग्वेदीयः पाठः ।

९२ ऋग्वेदस्य ६,४,१४ ।
I मोमित्रम् कौत्सं वा ।

(१) 'सुनीथः सुप्रणय.' इति वि० । सुनीथ इति निघण्टौ प्रशस्तनामसु पठ्यते ३,८ ।

अथ चतुर्थी ।

त्रिशोक* ऋषि ।

२ ३ १ २ ३ २ ३ १र २र ३ १ २
यद्वीड़ाविन्द्रयत्स्थिरेयत्परिशाने पराभृशम् ।

(सुनयनो वा) भवति "घ"-इति प्रसिद्धौ(२) । सइत्युक्तं कमित्याह—"यं" यजमानं "मरुतः" देवाः(३) "पान्ति" रक्षन्ति "अद्रुहः"(४) अद्रोग्धारोमरुतः । तथा "अयम् अर्यमा"(५) पाति । "यं" "मित्रः"(६) पाति स एवं भवतीति ॥ ३ ॥ ९२

* "त्रशोक"-इति वि० पाठः ।

(२)—'घ इति पाद-पूरणः'-इति वि० ।

(३)—मरुत् शब्दोबह्वर्थः । हिरण्यार्थः (१,२)—रूपार्थः(३,७) ऋत्विग्वाचकश्च (३,१८) । अथ च अन्तरीक्ष-देवगणेष्वपि मरुतः समर्थ्यन्ते—तथाहि नैरुक्तम् "अथातो मध्यस्थाना देवगणाः । तेषां मरुतः प्रथमागामिनो भवन्ति । मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा"-इत्यादि ।

(४)—अद्रुह इति विशेषणं पदम् । उत्तरार्चिकस्य सप्तम-द्वितीय-त्रयोदशैकं अग्निविशेषणत्वेन श्रुतम्—तस्यैव षष्ठ-तृतीयैकादश-द्वितीये मित्र विशेषणत्वेन एतस्यैवार्चिकस्य षष्ठद्वितीयैकषष्ठे—उत्तरार्चिकस्य तृतीयैक चतुर्दश-द्वितीये तृतीयैक षोड़श-तृतीये-तृतीय-द्वितीयोनविंश द्वितीये च मात-विशेषणत्वेन—अस्यामृचि तु मरुद्विशेषणेनेति ।

(५)—अहोरात्रस्य विभागकर्त्ता आदित्यविशेषः (नै० १२,३६-भाष्ये स्पष्टम्) ।

(६)—अहरभिमानीदेवः अयमप्यादित्यविशेषः (नै० १२,३६-भाष्ये स्पष्टम्) ।

वसुस्पार्हन्तदाभर ॥ ४ ॥ ९३

I औहोवाऔहोऽ३४वा। ओऽ६हा। यदीडावी३द्रा३यस्थिराइ। औहोवाऔहोऽ३४वा। ओऽ६हा। यत्पर्शाने३पा३राभृतम्। औहोवाऔहोऽ३४वा। ओऽ६हा। वसुस्पार्हा३न्ता३दाभर। औहोवाऔहोऽ३४वा। ओऽ६हा। होऽ५इ। डा ॥ ३४ ॥ ९३

हे "इन्द्र"। त्वया च "वीडौ" दृढे परैः कम्पयितुमशक्ये "यत्" धनं "पराभृतं" विन्यस्तं(१) "यत्" च "स्थिरे" स्वयमचले(२) पराभृतं. "यत्" च अपि "पर्शाने"(३) विमर्शक्षमे(४)

---

९३ उत्तरार्चिकस्य ४,१,८,३ — ऋग्वेदस्य ६,३,४८,५।

I तोभम्।

(१ —'परामृतम मध्यतम मस्थापितमित्यर्थः' इति वि०।

(२) 'पर्वतादौ' इति वि०।

(३) —'परिशाने' इति इकारमध्यपाठम्, प्रातिशाख्यानुशासनात् कौथुमेषु।

(४ —'कूपादौ' इति वि०। पर्शान इति तु मेघनामसु पठ्यते (नि०१,१०)।

५६क,

अथ पञ्चमी।

सुकक्ष ऋषिः।

३ १ २ ३ १ २ ३ १र २र ३ २
अ॒तंवो॒वृत्र॒हन्त॒मंप्रश॒र्द्धंच॒र्षणी॒नाम्।

३ २ ३ १ २ ३ २
आ॒शिंषे॒राध॑से॒ मह॑े ॥ ५ ॥९४

५ ४ १र २ १
I अ॒ताम्। वोवृत्रहन्तमम्। प्रशर्द्धंचर्षणा२३इ-

२ र १ २ ३ र २ १ २ ४ ५
नाम्। आशाइषा२३इरा। धसेमहा। औ३होवा।

४
होऽ५इ। डा ॥ ३५ ॥* ९४

पराभृतं, यद् "वसु" 'स्पार्ह'' स्पृहणीयं "तत्" धनम् "आ-भर" आहर ॥ ४ ॥ ९३

* "आघृषे"-इति ऋग्वेदीयः पाठः।

९४ ऋग्वेदस्य ६,६,२४,१ ।
I औतम्।

* इति ग्रामे गेये पञ्चमः प्रपाठकः॥

अथ षष्ठी।

वामदेव ऋषिः।

१ २　　३ १ २　३ १ २　३ १ २
अरन्तइन्द्रश्रवसेगमेमशूरत्वावतः।
१ २　३ १ २
अरᳪशक्रपरेमणि॥ ६ ॥९५

५　　　　२　　　२ १　　२र १र २
I अरन्तइन्द्रश्रवसेए। ए। गमाइमशूरत्वावताइः।

"श्रुतं" विख्यातम् "वृत्रहन्तमम्" अतिशयेन वृत्रस्य हन्ता रं(१) शर्द्ध" बलभूतं [वेगवत्तरं वा(२)] एतादृशमिन्द्रं "चर्षणीनां" मनुष्याणां "वः" युष्माकम् "आशिषे" [अश्नाते लेटि(३) उत्तम "आशिषे" आशुषे"-इति च पाठौ॥ ५ ॥ ९४

I आभोषवम्।

(१)—"हवो मेघ इति नैरुक्ताः। त्वाष्ट्रोऽसुर इत्यैतिहासिकाः। अपां च ज्योतिषश्च मिश्रीभावकर्मणे वर्ष-कर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" इति यास्कः२,१६।

(२)—'उत्साहित बलवत्तरम्'-इति वि०। शर्द्ध इति निघण्टौ बलनामसु पाठ्यम्(२.९)।

(३) "लिङर्थे लेट (३,४,७) पा०।

१ २ २ १ २ १ २ २ १
होवा३हाइ। अरा ऽ याा१श्कार२३। होवा३हाइ। परा

२ १
इमार२३णा३४३इ। ओ२३४५इ। डा॥ १ ॥९५

इटि सिप् प्रत्ययः,(४)'छन्दस्यपि दृश्यते'-(६,४,७,३,पा०) इत्याडा-गमः; तमिन्द्रं स्तुतिभिः प्रीणयित्वा युष्मभ्यं प्रकर्षेण अश्वं वै प्रयच्छतीत्यर्थः] किमर्थम्? "महे" महते "राधसे" धनाय धनं युष्मभ्यं दातम्॥

हे "शूर" वीर! "इन्द्र"! "ते" तव "श्रवसे"(१) श्रवणीयां त्वदीयां कीर्त्तिं श्रोतुम् "अरम्" अलं पर्याप्तं यथा भवति तथा "गमेम"(२) प्रवृत्ता भवेम। हे "शक्र" शक्तियुक्तेन्द्र! "त्वावतः" त्वत्सदृशस्य(३) "परेमणि"(४) परत्वे उत्कर्षनिमित्तम् "अरं" गमेम [त्वत्कीर्त्तिवदन्यस्यापि त्वत्सदृशस्य देवस्य कीर्त्तिं गच्छे-मेत्यर्थः॥ ६ ॥९५

(४)-"सिब् बहुलं लेटि (३,१,३४) पा०।

(१)--'चतुर्थ्येकवचनमिदं द्वितीयैकवचनस्यार्थे द्रष्टव्यम। श्रवः अन्नं सोमलक्षण-मित्यर्थः'-इति वि०। श्रव इत्यन्ननामसु चतुर्थम् नि०२,७।

(२)--'गमेम गमयेम दद्यामित्याशास्महे'-इति वि०।

(३)-'त्वत्सदृशस्यापि श्रवो गमेम किम्पुनस्तवैवेत्यभिप्रायः' इति वि०।

(४) 'कापुनर्द्धाम? उच्यते--'परेमणि'-परमुत्कृष्टं स्वर्गाख्यं स्थानं, तत्र गम्यते येन सः परमा यज्ञः ज्योतिष्टोमादिः तत्रेत्यर्थः' इति वि०।

अथ सप्तमी।

विश्वामित्र(१) ऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ १ २
धानावन्तंकरम्भिणमपूपवन्तमुक्थिनम्।
१ २ ३ १ २
इन्द्रप्रातर्जुषस्वनः॥ ७ ॥९६

५ र र ३ २ ३ ४ ५ १ र २ २ २
I धानावन्तङ्करम्भिणाम्। अपूपवन्तमू१क्थो३नाम्।
२ ५ ३ ५ ६ ५ ४
इन्द्राप्रा२३४ताः। ओ२३४हाइ। जुषोवा। स्वा५नो
५
ईहाइ॥ २ ॥९६

यजमानो ब्रूते—हे "इन्द्र"! "धानावन्तं" धाना भृष्टयवाः तद्वन्तं "करम्भिणं" करम्भो दधि मिश्राः सक्तवः तद्वन्तम् "अपूप-

---

९६ ऋग्वेदस्य ३,३,१७,१।

I पौषम्।

(१)—"तत्र तिहासमाचक्षत—विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव। विश्वामित्रः सर्वमित्रः। सर्वं संहृत सुदाः कल्याणदानः। पैजवनः पिजवनस्य पुत्रः पिजवनः पुनः स्पर्द्धनीय जवो वा मिश्रीभाव गति र्वा" इत्यादि। "मित्रे चर्षौ(६,३.१३०)" इति दीर्घत्वं रूपम्। इह "सञ्ज्ञायां मित्राजिनयोः" (६,२.१६५)" इति प्राप्तोऽन्तोदात्तः "ऋषि प्रतिषेधो मित्रे (६,२.१६५)" इति वचनात् तदभावश्च।

अथाष्टमी।

गोषूक्त्यश्वसूक्तिनावृषी*।

३ १र २र ३ १ २ ३ १ २ ३ १ २
अपाम्फेनेननमुचेःशिरइन्द्रोदवर्त्तयः।
३ १र २र १ १ २
विश्वायदजयस्पृधः॥ ८ ॥९७

४ ४र २ ५र ४ ५ ४ १ २ १ ७ ३
I अपाम्फेनेननमुचेः। शिरइ। द्रोन्। अवा२र्त्ता
५ १ १ २ ५र २ २
२३४याः। वाइश्वा२३ः। या२दा२३४औहोवा। जय
१ ३ १ १ १ १
स्पृधा२३४५ः॥ ३ ॥९७

वन्त" सवनीय-पुरोडाशोपेतम् "उक्थिनं" स्तोत्रिणं "नः" अस्मदीयमिमं सोमं "प्रातः" सवने "जुषस्व" सेवस्व। करम्भशब्दात् तदस्यास्तीत्यत इनिः तस्य प्रत्ययस्वरः(१)। प्रातः-स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः(२)॥ ७॥ ९६

पुरा किलेन्द्रोऽसुरान् जित्वा नमुचिमसुरं ग्रहीतुं न शशाक

* 'गोषूक्ती वाश्वसूक्ती वा'-इति वि०।

९७ ऋग्वेदस्य ६,१.१९,३।

I इन्द्रस्य क्षुरपवि।

(१) -"आद्युदात्तश्च(३.१.३)"-इत्याद्युदात्त इत्यर्थः।
(२) -"स्वरादिनिपातमव्ययम्(१.१,३७)" इति सूत्रोक्त-स्वरादिगणे 'स्वर्'-'अन्तर्'

अथ नवमी ।

वामदेव ऋषिः ।

३ १ २　२ १ २　३ २　३ २ ३ १ २
इमेतइन्द्रसोमाःसुतासोयेचसोत्वाः ।
१ २
तेषांमत्स्वप्रभूवसो ॥ ८ ॥९८

५ र　२ १र　२ १ २ १र र २
I इमेतआ । द्रसोमाः । होवाइहोइ । सुतासोयेइ ।

स च युध्यमान स्तेनासुरेण जग्टहे, स च गृहीतमिन्द्रमेवमवोचत् ‘त्वां विसृजामि रात्रावह्नि च शुष्केणार्द्रेण वायुधेन यदि मां मा हिंसीरिति, स इन्द्रस्तेन विसृष्टः सन् अहोरात्रयोः सन्धौ शुष्कार्द्र-विलक्षणेन फेनेन तस्य शिर श्छिच्छेद; अयमर्थोऽस्यां प्रतिपाद्यते ।—। “इन्द्रः” त्वम् “अपां फेनेन” वज्रीभूतेन “नमुचेः” असुरस्य “शिरः” “उदवर्त्तयः” शरीरादुद्गतमवर्त्तयः अच्छैत्सीरित्यर्थः । कदेति चेत्-“यद्” यदा “विश्वाः” सर्वाः “स्पृधः” स्पर्द्धमानाः आसुरीः सेनाः “अजयः” जितवानसि । “इन्द्रो वृत्रहन्ता असुरान् पराभ्य नमुचि मसुरं नालभत”-इत्यादिकमध्वर्युब्राह्मणमनुसन्धेयम् ॥ ८ ॥ ९७

I सौमित्रम् ।

‘प्रातर्’-इति प्रातः शब्दस्य शौचः सप्त प्रकृति रवात्योदात्तः । तत्र तथा विभक्तपाठ एव नियामकः ।

अथ दशमी।

श्रुतकक्ष ऋषिः।

१ २ ३ २ ३ १ २ ३ १ ३ १ २
तुभ्यꣳ सुतासः सोमा* स्तीर्णं बर्हिर्विभावसो।
३ १ २
स्तोतृभ्य इन्द्रमृडय †॥ १० ॥ ९९

१ २ ३ ५ ३ ५२ २ २ १ २१
चासीतूर२३४वाः। ते४षाम्। हाउहाइ। मात्स्वप्रभूर२३-
५ ४ ५
३४वा। वा५सो६हाइ॥ ४ ॥ ९८

हे "इन्द्र"! "ते" त्वदर्थम् "इमे" पुरतो दृश्यमानाः "सोमाः" "सुतासः" अभिषुताः "ये च" अन्ये सोमाः "सोत्वाः" इत ऊर्द्ध्वमभिषोतव्याः हे "प्रभूवसो"[1] प्रभूतधनवन्निन्द्र! "तेषाम्" अभिषुतानाम् अभिषोतव्यानामर्थे "मत्स्व" हृष्टो भव॥ ८॥ ९८

---

* "तुभ्य सोमाः सुता इमे"-इति, † "मावह"-इति च ऋग्वेदीयः पाठः।

---

९९ ऋग्वेदस्य ६,६,२५,५।

(१) 'प्रभुः बहु, वसु धनं, यस्य स प्रभुवसुः। छान्दसं दीर्घत्वम् (६,५,१२७पा०) तस्य सम्बोधनम् हे प्रभूवसो! प्रभूत धन! इत्यर्थः।

४ ५ २ १र र र र ५
I तुभ्य२हाउ। सुतासःसोमाः। स्तीर्णावा२३र्हीः।
१ २ १ २ २ १
विभा२वोा१इ। वा२३साउ। स्तोता३उवा३। भ्यत्रा-
३ २ ५र र ३ ५
२इ। इम्डृ३४औहोवा। डा२३४याः॥ ५ ॥ ६६

॥ इति द्वितीय-दशति ॥ ५

हे "विभावसो"(१) दीप्ति धन ! [दीप्ति-व्यापक ! वा(२)] इन्द्र ! "तुभ्य" त्वदर्थं "सोमाः" "सुतासः" अभिषुताः तथा "बर्हिः" "स्तीर्णं" प्रसारितम्(३)। अत हे "इन्द्र" ! त्वं बर्हिषि निषद्य सोमान् पीत्वा "स्तोतृभ्यः" अस्मभ्यं "मृडय" उप दयां कुरु [यद्वा अस्मान्(४)सुखय]। 'क्रिया ग्रहणं कर्त्तव्यम्' इति चतुर्थी॥ १० ॥ ६६

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थ प्रकाशे छन्दोग्याख्याने द्वितीयाध्यायस्य दशमखण्डः ॥ १० ॥

---

I सो.मत्रम्।

(१)—'विविध भांति दीप्यते वसु यस्य स विभावसुस्तस्य सम्बोधनम् हे विभावसो ! दीप्त धन ! इत्यर्थः' इति वि०।

(२ —'वसु'-इति निघण्टौ द्वितीय दशमे धन नामसु षोड़शम, प्रथम पञ्चमे रश्मि नामसु 'वसवः' इति दशमञ्च।

(३)—'वेद्या अ प्रदेशे'-इति वि०।

(४)—अतएव माधवेनोक्तम् 'चतुर्थी -बहुवचनमिद द्वितीयैकवचनस्थाने' इति।

अथैकादशे-खण्डे—

सेयं प्रथमा ।

शुनःशेप* ऋषिः ।

२ ३२ ३ २ ३ १ २ ३ १ २ ३ १ २
आवइन्द्रंक्रविं* यथावाजयन्तःशतक्रतुम् ।
१ २ ३ १ २
मꣳहिष्ठꣳसिञ्चइन्दुभिः ॥ १ ॥ १००

५र २ १ र २
I आवइन्द्राम् । क्रविंयथा । वाजया२३न्ताः ।
१ २ १ ऽ २
शताक्रतुम् । मꣳहिष्टा२३ꣳसो । चाया३उवा३इ । दू२
५
३४भोः ॥ ६ ॥ १००

"वाजयन्तः" अन्नमिच्छन्तो(१) वयं शुनःशेपाः हे ऋत्विग्यजमानाः! "वः" युष्माकं सम्बन्धिनम् "इन्द्रम्" "इन्दुभिः"

---

* 'शुनशेफ'-इति वि-पाठः ।

* 'क्रिविं'—इति क-पाठः, ऋग्वेदीय-पाठश्च ।

---

१०० ऋग्वेदस्य १,२,२८,१ ।

I कौत्सम् ।

(१)—पूजयन्तो वा वि० मतम् । वाजमित्यन्ननामसु द्वितीयम् (नि०२,७) ।

अथ द्वितीया ।

श्रुतकक्ष ऋषिः ।

१ २ ३ १२ २२ ३ १ २
अतश्चिदिन्द्रनउपायाहिशतवाजया ।
१ २ ३ १ २
इषासहस्रवाजया ॥ २ ॥ १०१

५ ५ १ २ २ १२
I अतश्चिदिद्रन्नउपाइ२ए । आयाहिश । तवाजा२३

सोमैः(१) "आसिञ्चे" [वचन-व्यत्ययः (३,१,८५पा०)] सर्व्वतः सिञ्चामहे सपर्यामः । कीदृशं ? "शतक्रतु" शत-सङ्ख्याक-कर्मोपेतम्(२) "मंहिष्ठम्" अतिशयेन महान्तम्(३)। सेचने दृष्टान्तः "क्रविं यथा"(४) [कृतीच्छेदने, कृत्यते छिद्यते खन्यते इति] क्रविः कूपः तां जलेन पूरयन्ति तद्वत् ॥ १ ॥ १००

१०१ ऋग्वेदस्य ६,६,१६,५ ।
I कौत्सम् ।

(२)—'शतमिति बहु-नाम (नि०३,१,१) । क्रतुरित्यपि कर्म-नाम (नि०२,१,११) यज्ञ-नाम वा । बहु-कर्माणं बहु-यज्ञं वेत्यर्थः'-इति वि० । क्रतुरिति निघण्टौ तृतीय-नवमे प्रज्ञा-नामस्वपि दृश्यते ।

(३)—'अतिशयेन दातारम्, अथवा पूजनीयतमम्'-इति वि० । मंहते-इति दान-कर्मसु पठितं पदम् (३,२०नि०)—महयति-इति अर्चति-कर्मसु पठितं प्रसन्नम् । अनयोरन्यतरयोः तृजन्तयोः "तुश्छन्दसि (५,३,५९)"-इतीष्ठनि रूपम् विवरण-कारस्य । सायणमते तु महत्त्वस्य ।

(४)—'क्रविरिति कूप-नाम (नि०३,२३,८) तस्मात्पीयात् आवाबकोपि क्रविव

अथ तृतीया ।

त्रिशोकः* ऋषिः ।

२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आबुन्दंवृत्रहादददेजातः पृच्छाद्वि*मातरम् ।

२ ३ २ ३ २ २ १ ५ ४ ५
या३४। इषा३४मह्वा३। स्तवो२३४वा। जा५योई्हा-
इ ॥ ७ ॥ १०१

हे "इन्द्र"। "अतश्चित्" अस्मात् द्युलोकादेव [यद्वा । अस्मा-च्छत्र-स्थानात्] "शतवाजया"(१) शत-सङ्ख्या का-बलयुक्तेन तथा "सहस्रवाजया" [वाजोऽन्नम् (नि०२,७)] सहस्र-सङ्ख्याकान्नवता बहुलान्नेन "इषा"(२) अन्न-रसेन युक्तः सन् "नः" अस्मान् "उपायाहि"(३) अधिकमाभिमुख्येनागच्छ ॥ २ ॥ १०१

* 'त्रिशोक' इति वि० पाठः ।

* "पृच्छद्वि"-इति ऋग्वेदीयः पाठः ।

च्यते । यथा-शब्द उपमा वाची (नि०३.१३,२) । ग्रावाहकमिव । * * । एतदुक्तं-भवति-यथा कश्चित्, ग्रावाहकमद्केन सिञ्चति बिभर्ति, तद्वत् त्वां हे इन्द्र ! सोमेन सिञ्चाम इत्येतदाशास्महे इति वि० ।

(१) 'शतमिति बहुनाम (नि०३,१,९) वाजः वेगः (नै० २,२८) । बहुवेगो यस्याः सा शतवाजा, तया बहु-वेगया शीघ्रया गत्या'-इति वि० ।

(२) 'इषम्' इत्यन्न नामसु चतुर्दशम् नि० २.७ ।

(३) 'समीपमागच्छ'-इति वि० ।

३ १र  २र
कउग्राः केहशृण्विरे ॥ ३ ॥ १०२

५र  २ १र  २
I आबुन्दम्वृ। त्रहाद। दाइ। जातःपृच्छाइत्।
१ ३ ५ २ १ २ १ २ र १
विमाऽरता२३४राम्। कउग्रार२३:के। हाशृण्विरोइडा
२ १
२३भा३४३। ओ२३४५इ। डा ॥ ८ ॥ १०२

"जातः" उत्पन्नः(१) "वृत्रहा" इन्द्रः "बुन्दम्" इषुं। तथा च यास्कः—'बुन्द इषुर्भवतीति'(२)। "आददे" आदाय चेषुम् "उग्राः" उद्गूर्ण-बलाः(३) "के" के च "शृण्विरे" वीर्येण विश्रुताः?—इति स्वीयां "मातरं"(४) "वि पृच्छात्" अप्राक्षीत्(५) ॥ ३ ॥ १०२

---

१०२ ऋग्वेदस्य ६,३,४२,४।

I औषमम्।

(१)—'जातमात्रएवं' ति वि० व्याख्याने किञ्चिदविशेषोऽर्थः।

(२)—"बुन्द इषुर्भवति, बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा"-इत्यादि नै० ६,३२,३३।

(३)—'अप्रमृष्याः' इति वि०।

(४)—'जनयित्रीम् अदितिम्' इति वि०। "अदितिरदीना देवमाता" इति नै० ४,२२। "अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्"-इति ऋ० १,६,१६,४।

(५)—'इन्द्रः जात एव इषु आदाय मातरं पृष्टवान् के उग्राः'? के च शृण्वन्ति यागादि कर्मसु विश्रुताः? इषु क्षिप्तयोः परिचर्यामिति यावत् इत्येतदर्थोऽस्या विवरणमस्मत्।

अथ चतुर्थी।

मेधातिथिर्ऋषिः।

३ १ २ २ १ २ ३ १ २
बृबदुक्थ ँ हवामहे सृप्रकरस्नमूतये।
१ २ ३ २ ३ १ २
साध * कृण्वन्तमवसे ॥ ४ ॥ १०३

१ ५ ५र १ १ र
I बृबदुक्थ ँ हाइवामहाइ। साप्रा रेकारा र। स्नमू।
१ २ १ २१ ५ ४
तयाइ। सा१धा रे काण्वा र३। तमो र३४वा। वा५-
५
सोइहाइ ॥ ८ ॥ १०३

"ऊतये"(१) लोकस्य रक्षणाय "सृप्रकरस्नं"(२) प्रसृत-बाहुं

* "साधु"-इति ऋग्वेदीयः पाठः।

१०३ ऋग्वेदस्य ६,३,२,५।
I भारद्वाजम्।

(१)—"ऊतिरवनात्"-इति (नै० ५,१,)। "ऊतियूतीत्यादिना (३,३,९७पा०) सिद्धम्।

(२)—'करस्नू बाहू; सृप्रौ गतौ। प्रलम्बौ बाहू यस्य स सुप्रकरस्नुः। उकारस्याकारापत्याकृपम्। तं सुप्रकरस्नम् प्रलम्बबाहुमित्यर्थः'-इति वि०। इह चिन्त्यमेतत्—अस्ति हि निघण्टौ द्वितीय चतुर्थे बाहु-पर्याये करस्नौ इति सप्तमम्पदम्, तथा च

अथ पञ्चमी।

गौतमऋषिः*।

१ २३१२ ३१२ ३२
ऋजुनीतीनोवरुणोमित्रोनयतिविद्वान्।
३ २ ३१२ ३१२
अर्यमादेवैः सजोषाः ॥ ५॥ १०४

['करस्नौ बाहू कर्मणां प्रस्नातारौ(६,१७) इति यास्क वचनात्(३) "अवसे" लोकस्य पालनाय "साधः" साधकं धनं "कृण्वन्तं" कुर्वन्तं प्रयच्छन्तं "हवदुकथं"(४) महदुकथम् इन्द्रम् "हवामहे" आह्वयामः। [तथाच यास्कः—'हवदुकथो महदुकथो वक्तव्य मस्मा उकथमिति वा (६,४)'-इति ॥ ४ ॥१०३

---

* 'शौनकस्यार्षम्'-इति वि०।

---

१०४ ऋग्वेदस्य १,६,१७,१।

करस्नशब्दोऽदन्त एवेति किम्पुनस्तकारस्याकारापत्तिकथनेनेति. किञ्च चलि सर्पति गतिकर्मा (२,१४,७ नि०) तस्य सृप्रं निरूपं तकारस्य रेफत्वं कथमिव संगतमिति।

(३)—तत्रैव सृप्र शब्दोऽपि व्याख्यातः। तथाहि —"सृप्रः सर्पणात्"-इत्यादि (६, १७)।

(४)—हवच्छब्द-तकारस्य दकारापत्त्या रूपम्। उकथ-शब्दः स्तोत्र-वचनः। हवत् उकथं यस्य स हवदुकथः तं हवदुकथम्'-इति वि०।

अथ षष्ठी।

कण्वातिथि ऋषिः।

३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
दूरादिहेवयत्सतोरुणप्सुरश्विनत्।

५ र ४र ५र ४५ ४ २ १र २ १
I ऋजुनीतीनोवरुणः। इहा। मित्रोनयतिविद्वा-

२ १ २ १र २ १ २ १ २
२३ँस्राः। इहा। अर्यमादा२३इवाइ। इहा। सजोषा३

२ २ ५
उवा३। ई३४हा॥ १०॥ १०४

अहरभिमानी देवः "मित्रः", "वरुणः" रात्रभिमानी, मित्रश्च वरुणश्च "विद्वान्" नेतव्यमुत्तमं स्थानं जानन् "नः" अस्मान् "ऋजुनीती"(१) ऋजुनीत्या ऋजु-नयनेन कौटिल्य-रहितेन गमनेन "नयति" अभिमतं फलं प्रापयति। तथा "देवैः" अन्यैः इन्द्रादिभिः "सजोषाः" समान-प्रीतिः "अर्य्यमा" अहोरात्र-विभागस्य कर्त्ता सूर्य्यश्च अस्मानृजु-गमनेनाभिमतं स्थानं प्रापयतु। 'नयति'-"नयतु"-इति च पाठौ॥ ५॥ १०४

---

I कौत्सम्।

(१)—"ऋजुरित्यप्रस्य भवति"-इत्यादि (नै० ६.२१)।

३ २ ३ १ २
विभानुं विश्वथातनत् ॥ ६ ॥ १०५

२र १र　४र ५　२ १ २ १　२
I दूरादो२३हेवयत्सताः । अरुण प्सुरश्मिश्वा२३इतात् ।

१र २　१ र २　१ २　१
विभानू२३वी । श्वाथातनत् । इडा२३भा३४३ । ओ२३-

४५इ । डा ॥ ११ ॥ १०५

"दूरात्" दूरतएव विप्रकृष्टे एव नभसः प्राक् प्रदेशे वर्त्त-माना "इह"(१) "सतः"(२) सती इह समीपे विद्यमाना "इव" समीपे विद्यमानेव "अरुणप्सुः"(३) आरोचमानरूपा ईदृशी उषा(४) "यत्" यदा "अशिश्वितत्" अश्वैतयत् [श्विता वर्णे,

* "विश्वथा", विश्वधा" इति च पाठौ ।

---

१०५ ऋग्वेदस्य ५,८,१,१ ।
] औषसम् ।

(१) -‘पृथिव्याम’-इति वि० ।

(२ -‘प्रशस्तान यजम नान’-इति वि० ।

(३)—‘अरुणरूपा’ इति वि० ‘रुपः’-इति रूपनामसु पठितम् (नि० ३,७) एतदेव विवरण व्याख्याने नियामकम् ।

(४)—सूर्यलक्षणयः । "रात्रेरपरः कालः" इति नै० २ १८ तत्स्तोत्रिकम् गर्भ

अस्मात् ण्यन्तात्(५) लुङि चङि रूपम् 'यद्वृत्तान् नित्यम् (८,१,६६पा०)' इति निघात-प्रतिषेधः] तदा "भानु" दीप्तिं "विश्वथा"(६) विश्वधा बहुविधां(७) "व्यतनत्" विस्तारयति [तनोतेर्व्यत्ययेन शप् (३,१,८५पा०]। प्रातरनुवाके उषस्येन काण्डेन (१,२४,२) उषाः स्तुता सती प्रादुर्बभूव, हे अश्विनौ! शंसिष्यमाणम् आश्विनं क्रतुं श्रोतुं युवामपि प्रादुर्भवत-इत्यध्याहारेण वाक्यं पूरणीयम्(८)॥

"सतः"-"सती"-इति पाठौ॥ ६॥ १०५

---

धारण-शीलत्वात्। तथाहि —"इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा। यथा प्रसूता सवितुः सवाय एवा रात्र्युषसे योनिमारैक्" इति ऋ० १,१६,८, १। "इदं श्रेष्ठं ज्योतिषां ज्योतिरागमच्चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमम् यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत् स्थानम्" -इति यास्क-कृत तद्व्याख्यानम्। "स्त्री-योनिरभियुत एनां गर्भः"-इति च नैरुक्तम् २,१९। 'रुशद्वत्सा रुशती"१,१६,८,२)-इत्यादि चोषसः स्त्रीत्वे लिङ्गम्।

(५)—'नपुंसकलिङ्गमिदं व्यत्ययेन, या उषा' इति। 'पुरस्ताद् यच्छब्द-श्रुतेर्योग्यार्थसम्बन्धस्तच्छब्दोऽध्याहर्तव्यः' इति च वि०।

(६)—"प्रत्न पूर्व विश्व मात थाल् छन्दसि ५,३,१११)" इति थालि रूपम्।

(७)—मृदु-मन्द-तीव्र-लक्षणामित्यर्थः।

(८)- तथाच श्रूयते —"प्रातर्युजा विबोधयाश्विना वेह गच्छताम्। अस्य सोमस्य पीतये (१,५,२,१)"-इत्यादि "प्रातर्योगिनौ विबोधयाश्विना विहागच्छता मस्य सोमस्य पानाय"-इत्यादि च यास्क-कृतं तद् व्याख्यानम्। "अश्विनौ यद् व्यश्नुवते सर्वं रसेनान्यो ज्योतिषान्यः **तत्कावश्विनौ द्यावापृथिव्या वित्येके ऽहोरात्रा वित्येके सूर्याचन्द्रमसा वित्येके राजानौ पुण्यकृता वित्यैतिहासिकाः"-इत्यादि नै० १२,१।

अथ सप्तमी।

विश्वामित्रो जमदग्निर्वा ऋषिः।

१ २ ३ १र २र
आनोमित्रावरुणाघृतैर्गव्यूति मुक्षतम्।
२ १ २
मध्वारजाᳲसिसुक्रतू ॥ ७ ॥ १०६

३र ४र ५ र २ २र १ ३र
I आनोमित्रा। वरुणा३। औहोवा२३४। घृतै
४ ५ २ ३र १ १ २र १ ५र
गव्यूतिमु। क्षता३म्। औहोवा२। माध्वारजाराᳲ
२र १ र १ २ १
सिसू३। औहोवा२। क्रतू। इडा२३भा३४३। ओ२३
४५इ। डा ॥ १२ ॥ १०६

"सुक्रतू" शोभन-कर्म्माणौ हे "मित्रावरुणौ!" "नः" अस्माकं "गव्यूतिं"(१) गवां मार्गं गो-निवास-स्थानं "घृतैः"(२) क्षरण-

१०६ उत्तरार्चिकस्य १,१,५,१—ऋग्वेदस्य ३,४,११,५।

I मित्रावरुणयोः संयोजनम्।

(१)—'गावो यत्र चरन्ति स गव्यूतिरुच्यते'-इति वि०।

(२)—घृतमिति घृणाते रूपम्। तथाहि फणिभाष्ये—(७,१,९५) "घृणातेस्तोऽपि रूपाणि लोके, घृतं घर्म घृणा" इति 'उदकेऽपिलक्षणैः',इति वि०। निघण्टौ चोदक-नामसु दृशमम् १.१२।

अथाष्टमी ।

प्रस्कण्व(१)ऋषिः* ।

२ ३ २ २ ३ २ १ २ ३ १ २ ३ १ २
उदुत्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत* ।
३ १ २ ३ १ २ २ २
वाश्रा अभिज्ञु यातवे ॥ ८ ॥ १०७

'साधनैः पयोभिः(३) "आ उक्षतम्" आ समन्तात् सिञ्चतम्, अस्मभ्यं दोग्ध्रीः गाः प्रयच्छतामिति भावः। रजांसि"(३) पारलौकिकान्यस्मदावासस्थानानि "मध्वा"(४) मधुरेण दुग्ध-रसेन सिञ्चतम् [गव्यूतिम्-'गोर्यूतौ छन्दसि(६,१,१२३पा०]-इत्यवादेशः, मध्वा-सर्वविधीनां छन्दसि विकल्पितत्वादत्रनुमभावः ॥ ७ ॥ १०६

* 'हिरण्यस्तूपस्यार्षम्'-इति वि०। "हिरण्यस्तूपो हिरण्मय-स्तूपोऽस्येति वा। स्तूपः स्त्यायतेः सङ्घातः"। इति नै० ४,३२।

* "अज्मेष्वत्नत"-इति ऋग्वेदीयः पाठः।

१०७ ऋग्वेदस्य १,३,१३,५।

(१) "प्रस्कण्वः कण्वस्य पुत्रः, कण्व-प्रभवो यथा प्राग्रम्"-इति नै० ३,१७।

(३)—'द्यूनपि लोकान्'-इति वि०।

(४) 'उदकेन'-इति वि०। मधु-इत्युदक-नामसु एकादशम् १,१२।

(५)—"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति (३,१,८५) कात्यायन-वचनात् लिङ्गव्यत्यये "जसादिषु छन्दसि वा वचनम् प्राङ्णौ चङ्युपधायाः"-इति (७,३,१०९) कात्यायनीयेन घि-संज्ञाभावे रूपमिति भावः।

५ र र ५र १ २ १ १
I उदुत्येसूनाइवोगिराः। काष्ठाय। ज्ञाइ। षुवा
३ ५ २र १र ३ १ ४ २
२त्ना२३४ता। वाश्राश्रा२३भो३। ज्ञू२३या३। ता३४-
५
५वोई३हाइ॥ १३॥ १०७

"त्ये" ते प्रसिद्धाः "गिरः सूनवः" वाच उत्पादकाः(१) मरुतः(२) [वायवो हि ताल्वोष्ठादिषु सञ्चरन्तो वाचमुत्पादयन्तो(३) "यज्ञेषु" स्वकीयेषु यागेषु वर्त्तमानेषु सत्सु "काष्ठाः" अपः ["आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति" (२,१५) यास्कः(४)] "उत् उ" उत्कर्षेणैव "अत्नत" अतनिषवन्तः विस्तारितवन्तः। उदकं विस्तार्य्य तत्पानार्थं "वाश्राः"(५)

I ऋतुषाम।

(१)—सुनवः-इत्यस्यैवार्थः उत्पादक इति। अत्र च सुनोतेः सूनुरित्येव बीजम्।

(२)—इयञ्च मारुती ऋक् इति प्रसिद्धा।

(३)—तथाहि शिक्षावचनम्—"आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्"-इत्यादि।

(४)—काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति। काष्ठा दिशो भवन्ति, क्रान्त्वा स्थिता भवन्ति। काष्ठा उपदिशो भवन्ति, इतरेतरं क्रान्त्वा स्थिता भवन्ति। आदित्योऽपि काष्ठोच्यते, क्रान्त्वा स्थितो भवति। आज्यन्तोऽपि काष्ठोच्यते, क्रान्त्वा स्थितो भवति। आपोऽपि काष्ठा उच्यन्ते, क्रान्त्वा स्थिता भवन्तीति स्थावराणाम्"-इति नै० २,१५।

(५)—"स्फायितञ्चिवञ्चि (उ०,द्वि०)" इत्यादिना शब्दार्थाद् वाशेः रकि सिद्धम्।

अथ नवमी।

मेधातिथिर्ऋषिः।

२ ३उ ३ १ २ ३ १र २र ३ २

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।

१ २ ३ २

समूढमस्य पांसुले* ॥ ९ ॥ १०८

॥ इति तृतीय-दशति ॥

५ ५ १ ३ २ ३ ५ १

I इदाइमे। विष्णूरः। विचक्रा२३४माइ। त्राइ-

हुङ्कारवोपेताः गाः "अभिद्यु"(६) जान्वभिमुखं यथा भवति तथा "यातवे"(७) गन्तुं प्रेरितवन्त इति शेषः(८)॥ ८ ॥ १०७

* "पांशुरे"-इति ऋग्वेदीयो यजुर्वेदीयश्च पाठः। "स्वाहा"-इत्यन्तेनाधिकश्च यजुर्वेदे।

१०८ उत्तरार्चिकस्य ८,२,५,१ = ऋग्वेदस्य १,२,७,२ = यजुर्वेदस्य ५,१५ = अथर्व-ब्राह्मणस्य १,१७ = ऊहगानस्य १४,७।

I विष्णोः साम।

(६) -जानुभोज्ञः (४,४.१ ३०)।

(७) -"तुमर्थे से सन् (३,४,९)"-इत्यादिना तवेङ्।

(८) -'त्ये' ते 'सूनवः' रुद्रस्य अपत्यभूता 'मरुतः 'गिरः' गर्जितलक्षणा वाचः 'काष्ठाय' इंहि लक्षणा अपः 'यज्ञेषु' निमित्त-भूतेषु 'उदत्नत' ऊर्द्धं विस्तारयन्ति। कीदृशा मरुत? 'वाश्राः' वासन-स्वभावकाः। कथं क्षिपन्ति? 'अभिद्यु' अभिनिपात्य-जानुनो मरुतो दात्यर्थः। किमर्थम्? 'यातवे' पृथिवीं प्रति गमनाय। इत्यर्थो विवरण निष्पन्नः।

र २ १ २ १
धानि। दधाइपा१दा२म्। समू२ढो१। ढा२३मा३।
१ ३ ४र र २ २
स्या२पा२३४औहोवा। ए३। सुले१॥ १४॥ १०८

'विष्णुः" त्रिविक्रमावतारधारी "इदं" प्रतीयमानं सर्वं जगत् उद्दिश्य "त्रेधा" त्रिभिः प्रकारैः "पदं निदधे" स्वकीयं पादं प्रक्षिप्तवान्। "अस्य" विष्णोः "पांसुले" पांसुरे धूलियुक्ते पादस्थाने "समूढम्" इदं जगत् सम्यगन्तर्भूतम्(१)। सेयमृग् यास्केनैवं व्याख्याता—"* * विष्णुर्विशतेर्वा व्यश्नोतेर्वा * * * यदिदं किञ्च तद्विक्रमते विष्णुः, त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। समूढमस्य पांसुरेऽप्यायनेऽन्तरिक्षे पदं न दृश्यते। अपिवोपमार्थे स्यात् पांसुल इव पदं न दृश्यत इति। पांसवः पादैः सूयन्त इति वा। पन्नाः शेरत इति वा। पंसनीया भवन्तीति वा"(१२,१८—१९)" इति॥ ९॥ १०८

इति सायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोग्रन्थाख्याने द्वितीयाध्यायस्यैकादशखण्डः॥ ११॥

(१) "तत्र पादत्रयमपि "समूढमस्य" वर्त्तते इदं रूपं सम्यक् स्थापितम्। "पांसुरे" लुप्तोपममेतत् द्रष्टव्यम्, पांसुर इव देशे। १। अथवा पांसुलत्वयोगात् पांसुलशब्देन पृथिव्युच्यते। तेषां त्रयाणां पृथिव्यां यत् पदं तत् समूढम्। २। अथवा विष्णुरादित्यः। स इदं विचक्रमे। त्रेधा निदधे पदम्—उदयगिरौ, मध्यं नभसः, अस्तङ्गिरौ च। ३। अथवा त्रेधा निदधे पदम्—पृथिव्यामग्न्यात्मना, अन्तरिक्षे वैद्युतात्मना, दिवि आदित्यात्मना, तत्र पदत्रयमस्य समूढम् पांसुर इव देशे। ४। अथवा समूढमिति मूढे मोहनार्थस्य रूपम्। समूढं संक्षिप्तं यदस्य वैद्युतात्मना पदम् तत् समूढं संक्षिप्तम्॥" इति वि०।

* * "अथ यद्विषितो भवति तद्विष्णुर्भवति" इत्यादिभागेनाधिकमत्र।

* * * इहैव तत्र मन्त्रस्वरूपः पठितः।

अथ द्वादशखण्डे—

सैषा प्रथमा।

मेधातिथि ऋषिः।

१ २ ३ १ २ ३ २ ३ १र २र
अतोहिमन्युषाविणꣳसुषुवाꣳसमुपेरय*।

३ २ ३ २ ३ १ २
अस्यरातौ†सुतम्पिब॥ १ ॥ १०९

५ र २ १ १
। अतोह्रिमा। न्युषा२वाइणा२म्। सुषुवाꣳसा

हे इन्द्र! "मन्युषाविणं" क्रोधेन सोमं सुन्वन्तम्(१) "अतीहि" अतिगच्छ, तथास्मिन् देशे "सुषुवांसं" सोमं सुन्वन्तम्(२)

---

* "सुमुपारणे"-इति, † "इमं रातम्"-इति च ऋग्वेदीय पाठः।

१०९ ऋग्वेदस्य ६,३,५.१।

I कौत्सम्।

(१)—दीप्तस्य सोमस्य अभिषोतारम् मेधातिथिं माम् प्रति'-इति वि०। 'मन्यु' -इति क्रोध नामसु उपान्त्यं पदम् २.१३ नि०। 'मन्यते' इति कान्ति-कर्मसु त्रयोदशम् २.६ नि०।

(२)-'अग्नि'प्रभृतिमन्यमृषिम्'-इति वि०।

अथ द्वितीया।

वामदेव ऋषिः।

२ ३ १ २ ३ १र २र ३ १ २ २
कदुप्रचेतसेमहेवचोदेवायशस्यते।
१र २र ३ १ २
तदिध्यस्यवर्द्धनम् ॥ २ ॥ ११०

१ २ ३ २र ५ १
२म्। चोइ। उपैश्रायार। अस्यरातार२३उ। सूर-
३ ५र र २ ५
तार२३४औहोवा। पोर२३४वा ॥ १५ ॥ १०९

३ ४ ३ ४र५ र ३ २ १ ५ ५र र
I कदुप्रचेतसे। महाइ। वार२३४चो। देवाहाउ।
४ ५र २ १ २ ३ २ २ २ १ १
वचोदेवा। यशस्यार२३ता३४इ। तदा३४इध्दिया३। स्यवो
५ ४ ५
२३४वा। धापूनो६हाइ ॥ १६ ॥ ११०

"उपेरय" समीपे प्रेरय। "अस्य" यजमानस्य "रातौ" यज्ञाख्ये दाने "सुतम्" अभिषुतं सोमं "पिब" ॥ १ ॥ १०९

"महे" महते "प्रचेतसे"(१) प्रकृष्ट-ज्ञानाय "देवाय" द्योत-

---

I काश्यपम् आप्सरसं वा।

(१)—"चेतः" इति प्रज्ञा-नामसु तृतीयम् ३,९ नि०। "प्रचेताः प्रवृद्ध चेताः" इति नै० ८,५।

अथ तृतीया।

मेधातिथि-प्रियमेधावृषी*।

३ २ ३२३ १२ ३१ २ ३१र २र
उक्थञ्चनशस्यमानंनागोरयिराचिकेत।
१ २ ३ २ ३ १ २
नगायत्रङ्गीयमानम्॥ ३ ॥ १११

५ ४ ५ ४ २ र र र २
I उक्थञ्चनोहाइ। शस्यमानम्। नागोरार३योः।

नादि-गुण युक्तायेन्द्राय "कद्"(२) कुत्सितम् अस्मदीयं "वचः" स्तोत्र-रूपं सत् "शस्यते" यथा प्रशस्तं भवति(३) देव स्तथानुगृह्णातीत्यर्थः। "तदित्" तदेव "अस्य" यजमानस्य 'वर्द्धनं हि'(४) प्रवृत्ति-साधनं खलु॥ २ ॥ ११०

* 'मेधातिथेरार्षम्-इत्येव वि०।

१११ उत्तरार्चिकस्य ८,१,१५,२ = ऋग्वेदस्य ५,७,१८,४।
I वार्हदुक्थम्।

(२)- 'कत्, किम उत्तरस्याः पञ्चम्या अत् आदेशः, कस्मात् कारणात्'। 'उ' इति पाद-पूरणः, इति वि०।

(३)--'शस्यते उच्चार्यते इत्यर्थः'-इति वि०। 'शसति'-इति अर्चति कर्मसु पठ्यते ३,१४ नि०।

(४)--'हि' यस्मात् 'मत्' उच्चारितम् वचनम् 'अस्य' देवस्य 'वर्द्धनम्' वृद्धिकरम् तस्मादुच्चारयेति वि०-सम्मतोऽर्थः। स्तूयमाना हि देवता वीर्येण वर्द्धते इति तत्त्वि-ज्ञाम्नः।

१र  र    २ १र  १   र   १  ३
आचिकेता। नगायार२३त्राम्। गी। यमा२ना२३४

५र र   ३  ५
औहोवा। ऊ२३४पा॥ १७॥ १११

गायते गौः(१) "अगोः"(२) अस्तोतुः(३) "अयिः" अरिः [व्यत्ययेन यकारः(३, १, ८५पा०)] शत्रुः इन्द्रः "शस्यमानं" होत्रा पठ्यमानम् "उक्थं च" शस्त्रमपि "आ चिकेत" अभिजानाति [कितज्ञाने, छान्दसो लिट् (३, ४, ७पा०)। नेति सम्प्रत्यर्थे। "न" सम्प्रति प्रस्तोत्रादिभि र्गीयमानं "गायत्रम्" गातव्यं साम(४) [यद्वा गायत्राख्यम्(५)] आचिकेतीत्येव। अतः कारणात् वयमपि तमिन्द्रं स्तुम इत्यर्थः॥

"नागोः"-"अगोः" इति, "रयिः"-"अरिः"-इति च पाठौ॥ ३॥ १११

(१)—तथाहि-"गातेर्वाकारो नाम करणः" इति नै० २, ५। गौरिति निघण्टावपि स्तोतृ नामसु दृश्यते ३, १६।

(२)—'अगोः'-इति पाठस्तु, ऋग्वेदोपलब्धोऽत्र न युक्तः, इह पुनर्नागोरिति प्रतीकमुद्धृतं दृश्यते।

(३)—'नागोः' कुङ्गङ् अव्यक्ते शब्दे, गुः अव्यक्तभाषी, न गुः - अगुः = व्यक्तभाषी, न अगुः=न व्यक्त-भाषी = नागुः। तस्य नागोः अव्यक्त-भाषिण इत्यर्थः' इति वि०।

(४) "गायत्रं गायतेः स्तुति कर्मणः" इति नै० १, ८।

(५)—तच्च सामं चतुर्षु गान-ग्रन्थेषु नोपलभ्यते, परमध्ययनारम्भे गुरुमुखादनु-
        १      र  र     र र    र       १र र
श्रूयते। तदिदम्—"तत्सवितुर्वरेणियोम्। भार्गोदेवस्य धीमाहो रे। धियोयोनः प्र।
२            १         १       २ १११
चो २५१२५२। ऊम्। वा रे। दायो। वा२३५॥ १॥" अस्या मूलमृक् तु उत्तरार्चिकस्य षष्ठ तृतीय-दशम सूक्ते प्रथमेति पठ्यते॥

अथ चतुर्थी।

विश्वामित्र ऋषिः*।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रउक्थेभिर्मन्दिष्ठोवाजानाञ्चवाजपतिः।
१ २ ३ २ ३ १ २
हरिवान्त्सुतानाꣳसखा॥ ४ ॥ ११२

५ २ १ २ १ २ ३
I इन्द्रउक्थाइ। भिर्मान्दाइष्ठो३। वाजाना२३४-
५ १र २ १ ३ ५ १र ३र १
ञ्चा। वाजपतिः। हरा२इवा२३४न्त्सु। ताना२ꣳस।
२ ४ ५ ४
खा। औ३होवा। हो५इ। डा॥ १८ ॥ ११२

"वाजानाम्"(१) अन्नानां मध्ये "वाजपतिः" उत्कृष्टान्न-पतिः "हरिवान्" हरि-नामकाश्ववान् "इन्द्रः" "उक्थेभिः" होतृ-प्रयुक्तैः (उक्थ-नामकैर्वा शस्त्रैः) "मन्दिष्ठः" अतिशयेन हृष्टः सन् "सुतानाम्" अभिषुतानां सोमानां "सखा" सखिवत् प्रीति-करः सोमैः प्रीयत इत्यर्थः(२) ॥ ४ ॥ ११२

* 'वामदेवस्यार्षम्'-इति वि०।

I वार्हदुक्थम्।

(१)—'दातेति वाक्यशेषः'-इति वि०।

(२)—अत्रापि च-शब्दः पाद-पूरणः सर्व-सम्मतः।

अथ पञ्चमी ।

मेधातिथि-प्रियमेधावृषी* ।

१ १ २  ३ १र २र ३ १ २

आयाह्युपनः* सुतंवाजेभिर्माहृणीयथा ।

३ १  २ ३ १ २

महाँ इवयुवजानिः ॥ ५ ॥ ११३

४र ५र ४  १ २ १  २ २  १र र

I आयाहो । उपनःसुतम् । होवा३हाइ । वाजे

१ १र ५र  १ २ २  १र २ १ १ २

२भिर्माहृणीयथा३ःहोवा३हाइ । महाँ इवयुवा२३ । होवा-

२ १ ३ ५र र २ ५

३हा३इ । जा२ना२३४औहोवा । ऊ३२३४पा ॥ १८ ॥ ११३

हे इन्द्र! "नः" अस्मदीयं "सुतम्" अभिषुतं सोमम् "उप याहि" प्रत्यागच्छ, किञ्च "वाजेभिः" अन्यदीयैर्हविरूपैरन्नैः "मा हृणीयथाः" मा क्रियस्व(१)। तत्र दृष्टान्तः "युवजानिः" यौवनोपेता जाया यस्यासौ युवजानिः ['जायाया निङ्(५,४,१३४ पा०)'-इति समासान्तः] "महान् इव" प्रभुरिव ; यथा रूपवद्-

---

* 'सुतकक्षस्यार्षम्'-इति वि० ।

* "आयाह्यद्रिभिः"-इति स-पाठः ।

---

I कौत्सम् ।

(१)—'एतच लोकेनापराधेन 'मा हृणीयथाः' मा क्रोधक्रमः, मा गर्वीरित्यर्थः'-इति वि० । निघण्टौ क्रुध्यति-कर्मसु 'हृणीयते'-इति चतुर्थं पदमीक्ष्यते १,१२ ।

अथ षष्ठी।

कौत्सो दुर्मित्र ऋषिः*।

३ १ २ ३ १२ २१ ३ १२ २१ ३ १ २ ३ २
कदावसोस्तोत्रं हर्यतआअवश्मशा*रुधद्वाः।
३ २ ३ २ ३ १ २
दीर्घं सुतंवाताप्याय ॥ ६ ॥ ११४

२१ ३ ५१ १ २ २ ३
I औ२होइ। कदावसो। स्तोत्रा३म्। हर्य्य-
४ ५ ३ २ ३ ५१ ३ १ ३ ५
ताआ। औ२होइ। अवश्मशा। रुधाद्व२३४वाः।

भार्यापेतः प्रभुः अन्याभि र्नोपक्रियते किन्तु तामेव युवतिं प्रत्या-
गच्छति तद्वत्(२) ॥ ५ ॥ ११३

हे "वसो" वासयितः(१)! इन्द्र! "स्तोत्रम्" अस्मत्कर्त्तृकं

* 'दुर्मित्रस्य सुमितस्य वार्षम्' इति वि०।
* "हर्यतआवश्मशा" इति ऋग्वेदीयः पाठः।

११४ ऋग्वेदस्य ८,५,२६,१।

(२) विवरणकारस्त्विदेव दृष्टान्तं घटयति—'स यथा तरुणा भार्यायाः स्तोकेऽप-राधे स्त्रि न वध्यति, तद्वन्मा रोषोरित्यर्थः' इति।

(१)—'प्रशस्तधनवन्'—इति वि०।

३र २　३ ५　३र २　१ ४
औ२होो१इ। दीर्घं॰सुतम्। वाता३४३। पो३या५या
३१११११
६५६। ई२३४५॥ २०॥

७ २　३र ४र ५　१　२　२ ३ ४
II कदा३४औहोवा। वसो। स्तोत्रा३म्। हर्यता
५　१ २　३र ४र ५　१　२ १ ३
आ। अवा३४। औहोवा। श्मशा२। रुधाद्२३४
५　३र १　३र ४र ५　१　र २
वाः। दीर्घा३४औहोवा। सुता२३म्। वाता३४३।
२ ४
पो३या५या६५६॥ २१॥ ११४

"हर्यते" कामयमानाय(२) कामयमानं त्वां [क्रिया-ग्रहणं कर्त्त-व्यम्' कर्मणः सम्प्रदानत्वात्चतुर्थी] "कदा" कस्मिन् काले "अवारुधत्" अवरोत्स्यति, अवरुध्य च कदा "वाः" वारयिष्यति, तादृशः कालः कदास्माकं सम्भविष्यतीत्याशास्ते। तत्र दृष्टान्तः—अश्नुते क्षेत्रमिति "श्मशा"(३) कुल्या [लुप्तोपममेतत्] यथा कुल्या तत उदकान्यवरुणद्धि अवरुध्य च वारयति तथेत्यर्थः। किमुद्दिश्यावरोध इति तत्राह—"दीर्घं" सवन-त्रय रूपेणायतं "सुतम्" अभिषुतं सोमं प्रति। किमर्थमिति तदाह "वाता-

I,II इमे द्वे कौत्से।

(२)—'हर्यति'-इति कान्ति-कर्मसु पाठात् नि० २,६।

(३)—"श्मशा शु अश्नुत इति वा श्मा अश्नुत इति वा"-इत्यादि नै० ५,१२।

अथ सप्तमी।

मेधातिथि ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २ ३ १र २र
ब्राह्मणादिन्द्रराधसःपिबासोममृतूॅरनु।
३ २ ३ १र २र
तवेदॅसख्य*मस्तृतम् ॥ ७ ॥ ११५

१ ५र र २ र १ २ र १ र
I ब्राह्मणादी। द्रराधसाः। पिबासोमा२म्। ऋतू-
१ २ र १ १ ४ १
ॅरनू। तवेदाॅसा२३। ख्या२३मा३। स्ता३४५तों-
५
६हाइ ॥ २२ ॥ ११५

प्याय" [वातेनाप्यते अधस्तान्निपात्यत इति] वाताप्य मुदकं तस्य प्रदानायेत्यर्थः ॥ ६ ॥ ११४

हे "इन्द्र"! "ब्राह्मणात्" शंसिसम्बन्धात् "राधसः" धन-भूतात् पात्रात् "सोमं" "पिब"। किं कृत्वा? "ऋतूंरनु"(१)

* "तवेद्धिसख्य"-इति ऋग्वेदीयः पाठः।

११५ ऋग्वेदस्य १,१,२८,५।

I अर्केसद्मनम्।

(१)—"दीर्घादटि समान-पदे (८,३,९)"-नकारस्य रुत्वे साम्प्रतिक-रुडागमे च (७,१,८) रूपम्।

अथाष्टमी :

मेधातिथि ऋषिः।

३ १ २ ३ १ २ ३ १ २
वयंघातेअपिस्मसि*स्तोतारइन्द्रगिर्वणः।
१ २
त्वन्नोजिन्वसोमपाः॥ ८॥ ११६

५ ४ ५ र र ४ ५ ४ २र १र
I वयंघातेअपिस्मसाइ। स्तोतारइन्द्रगिर्वणाः। ववा
१ ७ १ १ २ १ १
२३वोइ। तूवन्नोजो२। ववा२३वो। न्वसो२३। मा
५र र २ १ १ १ १ १ १
२पा२३४औहोवा। ए३। उपा२३४५॥ २३॥ ११६

देवाननुसृत्य ऋतवोऽपि(१) पिबन्त्वित्यर्थः। यस्मात् "तव इदं सख्यम् अस्तृतम्" ऋतूना मविच्छिन्नं तस्मादृतुभिः पानं युक्तम्(१)॥ ७॥ ११५

हे "गिर्वणः" गीर्भिर्वननीय! "इन्द्र"! "ते" तवापि "वयं घ"

*"अपिस्मसि"-इति ऋग्वेदीयः पाठः।

११६ ऋग्वेदस्य ६,३,२,२।
I अर्कसद्मनम्।

(१)—'यस्मात् 'तवेदं सख्य' यष्टृ-यष्टव्य-लक्षणम् 'अस्तृतम्' अविच्छिन्नम्। यस्मात् त्वं सर्वदा यष्टव्यः तस्मात् पिबेत्यर्थः'-इति वि०।

४ ५ ४ ५ ३ ४ ५ र र १
इ। शाइत्वाणोआ। स्माइन पुरुहृतया। मानोर२३४-
५ ४ ५ ४ ५ २ १ ५ ४ ५
हाइ।. जीवाज्योती:। अशो२३४वा। मापुहोइहाइ॥

॥२५॥ २७

हे "इन्द्र!" "नः" अस्मभ्यं "क्रतुं" कर्म वा प्रज्ञानं वा "आभर" आहर। अपिच। "यथा पिता पुत्रेभ्यः" धनं प्रयच्छति तथा "नः" अस्मभ्यं "शिक्ष" धनं देहि। हे "पुरुहूत!" बहुभिराहूतेन्द्र! "यामनि" यज्ञे(१) "जीवा" वयं(२) "ज्योतिः" सूर्यम्(३) "अशीमहि" प्रतिदिनं प्राप्नुयामः। [यद्वा। हे इन्द्र! भूतानि प्रकाशयितरिन्द्र! तथाच यास्कः—"इन्द्र इरां दृणातीति वेरां ददातीति, वेरां दधातीति, वेरां दारयत इति, वेरां धारयतइति वेन्दवे द्रवतीति, वेन्दौ रमत इति, वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते"(१०,८)-इति(४)। एवं गुण-विशिष्ट! परमात्मन्! त्वं क्रतुं कर्म्म स्व-विषय-ज्ञानं वा नः अस्मभ्यम् आभ-

(१)—यान्ति देवा यस्मिन् स यमो यज्ञः

(२)— जीवा जीवन्तो वयम् इति वि०।

(३) ज्योतिः ज्ञानम्-इति वि०।

४।—"इदं करणादित्याग्रयणः। इदं दर्शनादित्यौपमन्यवः। इन्दतेर्वैश्वर्य-कर्मणः। इन्दञ्छत्रूणां दारयिता वा. द्रावयिता वा. दरयिता च यज्वनाम्"-इति च नै० दै० ४,८

अथाष्टम

रेभऋषिः।

१ २ ३१ २ ३ १ २ ३१ २
मानइन्द्रपरावृणक्भवानःसधमाद्ये।
१ २ ३ २३ ३ २ ३ १ २ ३१२
त्वन्नऊतीत्वमिन्नआप्यंमानइन्द्रपरावृणक्॥ ८॥ २८

५र १ २ २ १र २
I मानइन्द्रा। परावा३र्णाक्। भवानः सधमा१द्री-
२ १ रर २ २ १र र २
३याइ। त्वन्नऊतीत्वमिआपि३याम्। मानइन्द्रपरावृ-
२ ५
णा३१उवा२३। ऊ३४पा॥ २६॥

३र ४५ ४५र ३ २ ३र ४५ २१र
II मानइन्द्रपरा। वृणाक्। मानइन्द्रा। परावा-

राहरप्रयच्छेत्यर्थः। तत्र दृष्टान्तः—पिता पुत्रेभ्यो यथा लोके विद्यां धनं वा प्रयच्छति तथा नोऽस्मभ्यं शिक्ष विद्यां प्रयच्छ। हे पुरुहूत! बहुभिराहूतेन्द्र! यामनि सर्वैः प्राप्तव्ये अस्मिन् प्रकृते ब्रह्मणि जीवा वयं ज्योतिः परं ज्योति रशीमहि सेवेमहि॥ ७॥ २७

---

२८ ऋग्वेदस्य ६,६,३७,२।

I,II आङ्गिरसस्य, अङ्गिरसस्य वा सामनी द्वे।

२३र्णाक्। भवा२नः साधमादा२३याइ। त्वन्नऊती२।
त्वमिन्ना२आपियाम्। मानाआ२३इन्द्रा। परावा२३
र्णा३४३क्। ओ२३४५इ। डा॥ २७॥ २८

हे "इन्द्र"! "नः" हविषां प्रदातॄन् अस्मान् "मा पराहणक्" मा परित्याक्षीः (वृजी वर्जने रौधादिकः। लङि रूपं) तदेवाह त्वं नोऽस्माकं "सधमाद्ये" सह मादन-हेतुभूते यज्ञे सोम-पानाय भव। किञ्च। हे "इन्द्र"! नोऽस्मान् त्वमेव "ऊती" ऊत्या स्थापय। यद्वा। ऊती। व्यत्ययेन कर्त्तरि क्तिचा निपातितः त्वमेवास्माकं रक्षिता खलु। तथा "त्वमित्" (इदवधारणे) त्वमेव नोऽस्माकम् "आप्यं"(१) ज्ञातेयं त्वमेव बन्धुरित्यर्थः। अतएव मा न इन्द्रः पराहणगिति गतार्थः॥

"सधमाद्ये"-"सधमाद्यः"-इति च पाठौ॥ ८॥ २८

(१)---"आप्यम ज्ञातव्यमित्यर्थः -इति वि०।

अथ नवमी ।

मेधातिथिर्ऋषिः ।

३ १ २  ३ १ २ ३ १  ३ २ ३ १ २
वयन्त्वासुतावन्तआपोनवृक्तबर्हिषः ।
३ १ २  ३ १ २  ३ १ २ ३  १ २
पवित्रस्यप्रस्रवणेषुवृत्रहन्परिस्तोतारआसते ॥९॥ २९

५ २ ४र ५र ४ ५  १ र २  १
I वयन्त्वा३त्वासुतावन्ताः । आपोनवृ । क्तवार३र्हि-
२  १  १ १ २ १  २ २१  २१
षाउ । वार३ । पवित्रस्या । प्रस्रवणाइ । षुवृत्रार३४-
५ ४  १  १र र २  १र
हान् । पा२३री । स्तोतारः । आसार३४५ताइ५ईइ ।
३ १११ १
आ२३४५ष् ॥ २८ ॥

४र ५र ४  ५ ४ ५ र  र४ ५  ४र ५र ४  १र
II औहोवा । वयन्त्वासुतावन्तः । औहोवा । औ
र र  २ २  १ र
होइ । आपोनवृक्तबर्हिषः । पवाइत्रा३स्या । प्रस्रवणे-

---

२९ उत्तरार्चिकस्य २,२,१२,१ = ऋग्वेदस्य ६,३,७,१ ऊहे हि०१८—च०८—न०६—उन०हि०१ ।

I आष्-कार-णिधनं काण्वम् ।

II महावैष्टम्भम् ।

१ २ २ र १र र र
षुवा१त्रा२हान्। औहोऽ३इ। औहोइ। परिस्तोता

र र २ २ ३र २१ २ ४ ५
रआमते। पराइस्तो२ता। रआमता। औ३होवा।

४
होपुइ। डा ॥ २९ ॥

५र ४ ५ ४ ५ ४ ५ ३
III औहोहोहाइ। आइही। वायाम्। घा२३४-

५ २ ३ ३ २ ३ ५ २र १
त्वा। सुतावा२३४ताः। आपीना२३४वृ। क्तावर्हिषाः।

२र १ ३ ५ २ ३ ५ २ ३
ऐहोइ। आ२३४इही। पावित्रा२३४स्या। प्रास्रावा-

५ २र १ २र १ ३ ५ २
२३४णे। षुवृत्रहान्। ऐहोइ। आ२३४इहो। पा-

३ ५ ३ २ ४ १ २ ३ ५
रिस्तो२३४तां। रआ३सा५ता६५६इ। आ२३४भी ॥ ३० ॥

५ ४ ५ ४ ५ र ४ ५ १ र २
IV वयङ्खोहाइ। सुतावन्तोवा। आपीनत्र। क्ता-

१ २ १ २ २ १ २ १ २र
वार्ही१इषा२३ः। होवा३हाइ। पवित्रस्यप्रस्रवणे। पु-

I,II आभि-निधनं काण्वम्।

IV महावैष्टभम्।

अथ दशमी।

भरद्वाजऋषिः*।

१ २ ३१ २ ३ १र ९र ३ १ २ ३ १ २
यदिन्द्रनाऊषोषाओजो†नृम्णञ्चक्रष्टिषु।

१ २ १ २ २ १ २ १
वा२ईा१हा२३न्। होवा३हाइ। पराइस्तो१त्ता२३। हो-

२ २ १ १ २ ५र र २
वा३हा। रआ२३। सा२ता२३४औहोवा। दी२३४-

५
शाः॥३१॥ २९

हे "वृत्रहन्" "त्वा" त्वां वयं "घ" खलु "सुतवन्तः"(१) सोममभिषुतवन्तः "आपोन" आपइव प्रवण मभिगच्छामः(२)। "पवित्रस्य" सोमस्य प्रस्रवणेषु "वृक्तबर्हिषः" स्तीर्ण-बर्हिषः स्तोतारश्च त्वां पर्य्युपासते॥८॥ २९

* 'संयुराह'-इति वि०।

† "आ७ ओजो"-इति ऋक्पाठः।

(१)—ऋचि सुतावन्त इति दीर्घः श्रूयते।

(२) "एतदुक्तम् भवति। यथा आपः नदीनिर्झरेण स्थानेषु द्वीपं परिवार्य्य व्यवतिष्ठन्ते तद्वद् वयं स्तोतारश्च त्वां परिवार्य्य व्यवतिष्ठाम इत्यर्थः"-इति वि०।

३१२ ३२ ३ १र २र ३१र २र ३१२
यद्वापञ्चक्षितीनांद्युम्नमाभरसत्राविश्वानिपौᳪस्या ॥१०॥३०

॥ इति द्वितीय-दशति ॥

५र र ४ ५ ४र ५ र ५ १
I औहोइ। यदिन्द्रना। हुषीषुवा। ओजो२-
१
नाम्णा२म्। चक्रुष्टि। षु। ए२हौ१आइहो२। हा-
१ २ १ र १
२ऊऊवाइ। या१द्वा२पाञ्चा२। क्षितीनाम्। ए२हौ-
१ ३१र२ १
१आइहो२। हा२ऊऊवाइ। द्युम्नमाभ। रा। ए२-

हे "इन्द्र"! नाहुषीषु [नहुषइति मनुष्यनाम नि०२,३,९] तत्सम्बन्धिनीषु[१] "कृष्टिषु"[२] प्रजासु (आकारः समुच्चये) यच्च "ओजो" बलं "नृम्णं" धनं च विद्यते। "यद्वा" यच्च "पञ्च" पञ्चानां "क्षितीनां"[३] निषादपञ्चमाश्चत्वारो वर्णाः पञ्च

३० ऋग्वेदस्य ४,७,२८,२।

I औष्ठोगवम्।

(१)—'नहुषइति मनुष्यनाम नि० २,३,९, तत्र भवो नाहुष्यः, मनुष्य जातीया मायावान्तर-जातीयाभिप्रेता, ते यक्षरक्षोगन्धर्वादयः, तासु, इति वि०।

(२)—'कृष्टिषु मनुष्येषु च' (नि० २,३,१) इति वि०।

(३)—'क्षितय इत्यपि मनुष्यनाम (नि० २,३,६)। पञ्च च ते क्षितयश्च। कतमे पुनस्ते? चत्वारो वर्णाः, निषादः पञ्चमः।

 १ २ १
द्दौ१आइद्दौ२। द्दा२ऊऊवाइ। सा१त्रा२वाइस्त्रा२।
१र १
निपौंॅसि। या। ए२द्दौ१आइद्दौ२। द्दा२ऊऊवा
३ ५र र ३ ५
२। या२३४औद्दोवा। ऊ२३४पा॥३२॥ ३०

चितय. तथा स्वभूतम् "द्युम्नं" द्योतमानमन्नं तत्सर्वं मस्मभ्यम् "आभर" आहर प्रयच्छ। तथा "सत्रा"(४) महान्ति "विश्वानि" सर्वाणि "पौंस्या" पौंस्यानि बलानि(५) चास्मभ्य माहर॥ १०॥ ३०

इति श्रीमायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य तृतीय· खण्डः॥ ३॥

---

अथ चतुर्थे खण्डे—

सैषा प्रथमा।

मेधातिथिर्ऋषिः।

३ २ ३ १र २र३ १२ ३ २
सत्यमित्थावृषेदसिवृषजूतिर्न्नोविता।

(४) -'यद्यपि सत्राशब्दः सत्य नामसु पठितः, तथापीह सर्वदा-शब्द-प्रयोगे द्रष्टव्यः। तथाच सर्वदा इत्यर्थः।

(५)—'पौंस्यानि'-इति निघण्टौ बल नामसु चतुर्विंशतितम् पदम् (२,९)। सुपां-सुलुगित्यादिना त्राले च पौंस्या इति।

क २१ ३ १ २ ३१ ३१२ ३ १ २ ३२
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ १ ॥ ३१

५ ४ ५ ४र ४ १ र र
I सत्यमित्थाव्। षापूइदसाइ। वृषजूतिर्नोविता-

१र ० र १
र। वृषाह्युग्राश्शृण्विषा२इ। परावताइ। वृषो२३-

२ १ १ १
र्वा। वताइश्रू२३ता३४३ः। ओ२३४५इ। डा ॥३२॥ ३१ *

हे "उग्र" उद्गूर्णेन्द्र ! त्वं "सत्यम्" "इत्था" इत्थं "वृषेत्" कामानां वर्षक एवासि। "वृषजूतिः"(१) वृषभिः सेक्तृभिः सोम-रसस्य सोतृभिराहूतो "नः" अस्मान् "अविता" रक्षिता भवसि। "वृषा हि" सेचक एव "शृण्विषे" श्रूयसे। "परावति" दूरेऽपि(२) "वृषेव" कामानां सेचक एवासि। "अर्वावति" समीपेऽपि "वृषा" सेचक एव "श्रुतः" अश्रूयत ॥
"अविता" "अवृतः"-"इति च पाठौ ॥ १ ॥ ३१

३१ ऋग्वेदस्य ६,२,८,६ = आरण्यके च०द्द०१८।

I इन्द्रस्य; वृषकम्।

(१)—'वृषजूतिः—जूतिर्गमनं; (जवति गत्यर्थः) वृषस्येव गमनं यस्य स वृषजूतिः'-इति वि०।

(२)—निघण्टौ 'परावतं'-इति दूरनामसु पञ्चमं पदम्। ३,२६।

*॥ इति ग्रामे गेय-गाने षष्ठस्यार्द्ध-प्रपाठकः ॥

अथ द्वितीया।

रेभऋषिः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २
यच्छक्रासिपरावतियदर्वावतिवृत्रहन्। अतस्त्वा-
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
गीर्भिर्द्युगदिन्द्रकेशिभिःसुतावाँ आविवासति॥२॥ ३२

५ २ ४ ५ ४ र ५ १ २र १ २
I ओम्। यच्छक्रा३सीपरावती। यादर्वाव। तिवार्त्रा-
३ २ ५ २ २ १र र
१हा२न्। अता३ः। औ३हो३वा। त्वागीर्भिर्द्युग-
२ १ १ ३ ५र र
दिन्द्राके१शिभि२ः। सुता२३। वाँ२आ२३४औहो-
२ १ र ५ १ ३ १ १ १ १
वा। ए३। विवा२सती२३४५॥ १॥

४ ५ ४ र ५ र ४ ५ ४ २र १ ०
II यच्छक्रासिपरावतियदोहाइ। र्वावा३ताइवृत्राहा

---

३२ ऋग्वेदस्य ६,६,२६,४=आरण्यके ८०१—२इति हे।

I,II द्योते, हैगते वा।

३ २　३र २　१ २　१ २
२३४न् । अता३४स्वागाइ । भाइद्यगदि । द्राके१-
१　१ ३　५र र　१ र१
शिभा २ः । सुतार३ । वा०२आ२३४औहोवा । विवा-
१ १ १ १ १ १
२सति२३४५ ॥ २ ॥ ३२

हे "शक्र" शत्रु-हनन-समर्थेन्द्र ! "यद्" यदा "परावति" विप्रकृष्टे दूरे द्युलोक-देशे "असि" विद्यसे । हे "वृत्रहन्" वृत्रस्य हन्तरिन्द्र ! "यद्" यदि वा "अर्वावति" अर्वाचोने तस्मादधस्तात् स्थिते तदपेक्षया समीपे देशेऽन्तरिक्षे भवसि तस्मादपि । "अतः" अस्माद्लोकाद्वा हे "इन्द्र" ! "द्युगत्"(१) (गम्लृ, सृपृ, गतौ । क्विपि "गमः क्वौ" विति अनुनासिक-लोपः । तुक् । "सुपां सुलुगिति" भिसो लुक् । द्युलोकं प्रति गच्छद्भिः स्वभासा-सर्वतोगच्छद्भिः "केशिभिः" केशवद्भिः हरिभिरिवस्थिताभिः "गोभिः" "त्वा" त्वां "सुतवान्" अभिषुत-सोम-वान् यजमानः "आविवासति" आत्मीयं यज्ञं प्रति आगमयति । त्वामेतैः स्तोत्रैः परिचरति वा(२) ॥ २ ॥ ३२

---

(१)—'द्युगत् क्षिप्रम्'-इति वि० । 'द्युगत्'-इति निघण्टौ क्षिप्रनामसु वर्योविंशतितमम् पदम् (२, १५ ।

(२)—'त्वमेवात्मानमेव परोक्षरूपेण प्रतिनिर्दिशति । त्वमेनामायस्यापि परिचरतीत्यर्थः'-इति वि० ।

अथ तृतीया।

वत्सऋषिः *।

३ १ २ ३ १र २र ३ १ २ ३ २ ३ १र ३र
अभिवोवीरमन्धसोमदेषुगायगिरामहाविचेतसम्।
३ २ ३ १ २ ३ २ ३ २ ३ १ २
इन्द्रनामश्रुत्यꣳशाकिनंवचोयथा ॥ ३ ॥ ३३

५ ४ ५र र ४ ५ ४ २र १ १
I अभिवोवीरमन्धसाः। मदेषूइगाया२। गिरा-
३ १ २ ३ २ ४ ५ र ४ १ १र
माहा३। वोचेता२३४साम्। इन्द्रनामा। श्रुत्यꣳशा-
१ ३ ५र र २र १ ३ १ १ १ १
कार३। ना२३४औहोवा। वचोउपा२३४५ ॥ ३ ॥ ३३

इयं पिपीलिकमध्या(२) बृहतीति बह्वृचाः आद्यन्तौ पादौ त्रयोदशाक्षरौ, मध्यमोऽष्टाक्षरइति त्रिपदा। [हि उद्गातादयः! "वः" यूयम् (अथवा हे यजमानाः वो युष्माकं) "हिताय" "अन्धसः"

* 'वसुर्नाम ऋषिः'-इति वि०।

३३ ऋग्वेदस्य ६,४,२,४।

I कार्त्तयशं, कार्त्तवेशं वा।

(२)—'पिपीलिकमध्येत्यौपमिकम्. पिपीलिका पेलते र्गतिकर्मण'-इति यास्कः दै० १, ११।

अथ चतुर्थी ।

भरद्वाजऋषिः* ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तये† ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥४॥३४

४ ४ २ १ र २ १
I इन्द्र त्रिधा ५ तु शरणाम् । त्रिवरूथं सुवस्तयाइ ।

सोमस्य "मदेषु" उत्पाद्यमानेषु सत्सु "वीरं" शत्रूणां वीरयितारं । "नाम" शत्रूणां नामकं । "विचेतसं" विशिष्ट-प्रज्ञं "श्रुत्यं" सर्वत्र श्रोतव्यं स्तुत्यं(३) । "शाकिनं" शक्तिमन्तम्(४) ईदृशम् "इन्द्र" ! "मह्ना"(५) महत्या "गिरा" स्तुत्या "वचो" वाक्यस-

* 'संयुराह'-इति वि० ।

† "स्वस्तिमत्"-इति ऋग्वेद पाठः ।

३४ ऋग्वेदस्य ४,७,१८,४ ।

I इन्द्रस्य शरणम् ।

(३)—विवरणकारस्त्वेवं व्याचष्टे- कमिव स्तुति ? उच्यते- 'श्रुत्यं वचो यथा' श्रुतौ भवं श्रुत्यं, वचः वचनम् । यथा कश्चित् श्रुतौ भव वचनं, भत्यार्थं न स्तौति] तद्वत् स्तुत्यर्थः ।

(४)—शकनं शाकः शक्तिः, सा यस्यास्ति, तम् ।

(५) -'मह्नः' इति निघण्टौ महन्नामसु प्रथमं पदम् ३, ३. सुपां सुलुगित्यात्वं रूपम् ।

२ १ २ १ ७ २ २
छर्दिर्या२३च्छा। माघवङ्गः। चामह्या२३ह्या। या-

१ २ १ १ २ ४ ५ ४
वया२३दी। द्यू मे२भिया। ओ३होवा। होऽ५इ।

डा॥ ४ ॥ ३४

दीया "यथा" येन प्रकारेण प्रवर्त्तते गायत्र्या त्रिष्टुभा वा तथा "गाय" गायत स्तुतिं कुरुत ॥ ३ ॥ ३३

हे "इन्द्र"! "त्रिधातु" त्रिप्रकारं त्रिभूमिकं(२)। "त्रिवरूथं" त्रयाणां शीतातपवर्षाणां वारकं(३)। "स्वस्तये" अविनाशाय "छर्दिः" छर्दिष्मत् आच्छादन-युक्तम्। एवं-गुण-विशिष्टं "शरणं" गृहं(४)। "मघवद्भ्यः" मघं हविर्लक्षणं धनं तद्वद्भ्यस्मदीयेभ्यो यजमानेभ्यः "मह्यं" भरद्वाजाय "च" "प्रयच्छ" देहि। अपिच। "एभ्यः" सकाशात् "दिद्युं" शत्रु-प्रेरितं द्योतमान मायुधं(५) "यवय" पृथक्कुरु ॥ ४ ॥ ३४

(२)—'धातुशब्देन रसा उच्यन्ते। त्रयो रसाः, देव पितृ मनुष्योपभोग्याः। अथवा धातवः, काम-क्रोध लोभादय स्तैर्विमुक्तम्। अथवा सुवर्ण-रजत-माणिक्यैः त्रिभिः धातुभिः युक्तं यत् त्रिधातु-शरणं गृहम्'-इति वि०।

(३)—तच्च पोषवया-इमल्लपुच इनागुरुकुङ्कुमादिरूपम् विवरण-सम्मतम्।

(४)—'छर्दिरिति यद्यपि गृहनामसु (नि० ३,४,१८) पठितम्, तथापि शरणमित्यनेन पौनरुक्त्य-प्रसङ्गात् क्रियानामत्वं द्रष्टव्यम्। छर्दिर्दीप्तिदेवनयो रित्येतस्य दीप्त्यर्थस्येदं रूपम्। समृद्ध्या दीप्तमित्यर्थः'-इति वि०।

(५)—'दिद्युम्'-इति वज्र नामसु प्रथमं पदम् (नि०२, २०)। 'दिद्युं देय सम्भ्यम्'-इति वि०।

अथ पञ्चमी ।

नृमेधऋषिः* ।

१ २ ३ २ ३ १२ २र
आयन्तइव सूर्यं विश्वेदिन्द्रस्यभक्षत ।
१ २ ३ १२ २र ३ १ २ ३ १ २ ३ १र २र
वसूनिजातोजनिमान्योजसाप्रतिभागन्नदीधिमः† ॥५॥३५

५र ५र ५ १
I आयन्तीयम् । आयन्तइवसू४रायाम् । विश्वार-

हे अस्मदीयाजनाः ! "आयन्तइव सूर्यं" यथा समाश्रिता रश्मयः "सूर्यं" भजन्ते तथा "इन्द्रस्य" "विश्वेत्" विश्वान्येव धनानि "भक्षत" भजत । स च यानि "वसूनि" धनानि "जाते" उत्पन्ने "जनिमानि" जायमाने जनिष्यमाणे च "ओजसा" बलेन करोति अतो "भागं न" पित्र्यं भागमिव तानि धनानि "प्रति-दीधिमः" प्रतिधारयेमेति [यद्वा । 'आयन्तइव सूर्यं' यथा समा-

* 'नृमेधस्यार्षम्'-इति वि० ।
† "दीधिम"-इत्यपि पाठः क्वचिदृग्वेदीय-पुस्तके दृश्यते ।

३५ उत्तरार्चिकस्य ५,२,१४,१ = ऋग्वेदस्य ६,७,३,२ = जहे प० द्वि०८—१४द्र०द्वि०२=जह्य द्वि०१६—१८—द्व० द्वि०७ ।

I आयन्तीयम् ।

१ १ १ र २ र १र २र
इदिन्द्रा२। स्यभा२त्तात। वासूनिजातोजनिमा।

१ २ १ २र १ ऽर १ २
नियोजा१सा२। प्रतिभागन्नदो१धिमः। प्रा२३ती।

२ २ २ १र ७२ १ ५ ३११
भागान्ना३दा। ऊम्। धिमा३ः। ओ२३४वा। हे२३-

११
४५॥ ५॥ ३५

श्रिता रश्मयः सूर्यमुपतिष्ठन्ते तथा "इन्द्रस्य" "विश्वा" विश्वानि धनानि विभक्तुमिच्छन्तः समाश्रिता मरुतः इन्द्रमुपतिष्ठत इति शेषः। उपस्थाय च मरुतो 'वसूनि' उदक-लक्षणानि धनानि "जाते" जायमानाय "जनिमानि" जनिष्यमाणाय(१) मनुष्याय "ओजसा" बलेन "भक्षत(२)" विभजन्ते। तत्र चास्माकं यो भागः तं "भागं" (नेति सम्प्रत्यर्थे) प्रतोत्येषः अनुदत्येतस्य स्थाने। "अनुदोधिमः' वयमनुध्यायेम(३)। [तथाच यास्कः—(नै०६,८) "समाश्रिताः सूर्यमुपतिष्ठन्तेऽपिवोपमार्थे स्यात्सूर्यमिवेन्द्र मुपतिष्ठन्त

(१)—'जाते'-'जनिमानि' इत्येते प्रथमैकवचने चतुर्थ्येकवचनस्य स्थाने द्रष्टव्ये। जाताय, जनिष्यमाणाय च भूतग्रामस्यार्थाय इति वि०।

(२)—धातोऽयं भक्षि वि-पूर्वो द्रष्टव्यः।

(३)—'यथा कश्चित् पित्रास्य चार्थस्य साधारणस्य भागं ध्यायति, तद्वद्वयं तानि विभज्यमानानि उदकानि अनुध्यायामः'-इति वि०।

अथ षष्ठी।

पुरुहन्मा ऋषिः।

३ १ २ ३ १र २र ३ १ २
नसीमदेवआपतदिषन्दीर्घायोमर्त्यः।

१ २ ३ १र २र ३ १ २ ३ २ ३ १ २ ३ १ २
एतग्वाचिद्यएतशोयुयोजतइन्द्रोहरी॰युयोजते ॥६॥३६

३ ४र ३ ४र ५ र २ २ १
I नसीमदेवआ। हाइहाउइ। पा२३४। तत्पतो-

५ १ १र १ ७
वा। इषऽहो२इ। दीर्घाहो२। योमर्त्ताया२ः।

इति सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः स यथा धनानि विभ-जति जाते जनिष्यमाणे च तं वयं भागमनुध्यायामोजसा बले-नेति॥

"जनिमानि" "जनिमानः" इति च पाठौ ॥ ५ ॥ ३५

---

* "हरीइन्द्र"-इति व्यतिक्रमपाठश्च ऋग्वेदीयः।

---

३६ ऋग्वेदस्य ६,५,८,२।

I वाम्रम्, आचोलं वा।

१ २र १ २ॱ ३ ३ २
आइतग्वाचित्। यआइताशो। युपाउवा३। ऊ३४-

५ १ १ १ १ १
पा। जना२३। आइन्द्रो२हारी२। युयो२३। जा-

५र र २ॱ ५
२३४औहोवा। ऊ२३४पा॥ ६॥ ३६

हे "दीर्घायो"! नित्येन्द्र! सः "अदेवः" इन्द्राख्य-देव-रहितः "मर्त्यः" मरण-धर्मा मनुष्यः "मों" सर्व(१) "इषम्" अन्नं "नापतत्" न प्राप्नोति। "योमर्त्यः" यस्येन्द्रस्य "एतग्वाचित्" एतवर्णाविवाश्वौ भवतोऽभिमत-देश-गमनाय सः "एतशः" एतशौ(२) "युजोजते" योजयति रथे, यज्ञं गन्तुम्। (यश्चेन्द्रो हरी युजोजते न स्तौति स न प्राप्नोतीति समन्वयः।

"आपतत्"-"आपद्"इति च पाठौ। "एतशः"-"एतशाः"-इति पाठौ॥ ६॥ ३६

(१) 'मोमिति पदपूरणः'-इति वि०।

(२) 'इषमिति निघण्टौ अन्ननामसु चतुर्दशम् पदम् (२, ७)।

(३) 'एतग्वा'-इति निघण्टावश्वनामसु नवमम् पदम्; 'एतश'-इति च दशमम्।

अथ सप्तमी ।

नृमेध-पुरुमेधावृषी ।

२ ३ १२ ३२३ १२ ३१२
आनोविश्वासुहव्यमिन्द्रꣳ*समत्सुभूषत ।

४र ५ ४ ५ २१ १
I आनः । एविश्वा । सुहाव्या २म् । आइन्द्रꣳ
२ १२ २ ३ ५ २ २ १२र
सम । त्सुभू१षाता । ऊ२३४पा । हा३हाइ । ब्रह्मा-
२ २र ३ २१ २१ २ १२
णिसवना । निवृत्रहान् । परमा२३ज्याः । आर्चा३-
२ १ २ ४५ ४
हाइ । षमा । औ३होवा । हो५इ । डा ॥ ७ ॥

५र र र र४ ५ १ र र
II आनोविश्वासुहाहाव्याम् । इन्द्रꣳसमत्सुभूपतो ।
२ २१ २१ २१ १
पब्रा२३ह्मा । णिसवना । निवृत्रहान् । परमा२३ज्याः ।
१२ ३ १ २ ४ ५ ४
आर्चा३हाइ । षमा । औ३होवा । हो५इ । डा ॥ ८ ॥

५र र र ४ ५ २ र
III आनोविश्वासुहाव्याम् । इन्द्राम् । समत्सुभूपत ।

* "हव्यइन्द्र"-इति च ऋग्वेदीयः पाठः ।

I,II,III शाकाणि वा, वामिष्ठानि वा, वैगव्वानि वा, आ-

२ १ २ ३ १ २ ३ १ २
उपब्रह्माणिसवनानिवृत्रहन्परमज्याऋचीषम॥ ॥३७

१ २ २ ४ १ २
उपाब्रा१ह्मा२। णिसवनानिवृत्रहन्। परामा१ज्या२:।
१र २ १
ऋचीषार३मा३४३। ओ२३४५इ। डा॥८॥ ३७

हे स्तोतारः! "विश्वासु" सर्वासु असुर-युद्धेषु "हव्यं" सर्वैर्देवै रात्म-रक्षार्थं माह्वातव्यम्। एतादृशम् "इन्द्रम्" उद्दिश्य "नः" अस्माकं यज्ञे "ब्रह्माणि" स्तोत्राणि हवीरूपाण्यन्नानि वा "उपभूषत" अलङ्कुरुत प्रेरयत। हे "वृत्रहन्" वृत्रस्यासुरस्य पापस्य वा हन्तः! "परमज्याः" युद्धेषु शत्रु-हननार्थं परमा अविनश्वरा ज्या मौर्वी यस्य तथोक्तः। यद्वा परमान् बलेन प्रकृष्टान् शत्रून् जिनाति हिनस्तीति परमज्याः हे "ऋचीषम"(१)! स्तुतिभि रभिमुखीकरणीयेन्द्र! एतादृशस्त्वं सवनानि प्रातः सवनादीनि त्रीणि "ब्रह्माणि" स्तोत्राणि च "उपभूषत" अलङ्कुरुत।

"भूशतः"-"भूशतु"-इति पाठौ। "वृत्रहन्"-"वृत्रहः" इति च॥७॥ ३७

* "ऋचीषमः"-इत्युत्तरार्च्चिक-व्याख्यायां सायणाचार्य्यः।

---

३७ उत्तरार्च्चिकस्य ७,१,२,१=ऋग्वेदस्य ६,६,१३,१= ऊहे ८०२—ह्रा०२०।

श्वानि वा, शौल्कानि वा, सुम्नानि वा, द्युम्नानि वा, पृष्ठानि वा, यौक्ताश्वानि वा, सोमसामानि वा इमानि त्रीणि।

(१)—ऋचीषम इति चि ऋच स्तुतावित्यस्य रूपम्।

अथाष्टमी।

वसिष्ठ ऋषिः*।

१र २र ३ १ २ ३ २
तवेदिन्द्रावमंवसुत्वंपुष्यसिमध्यमम्।
३ १र २र ३ १ २ ३ १ २ ३ १ २
सत्राविश्वस्यपरमस्यराजसिनकिष्टागोषुवृण्वते ॥८॥३८

४ र ४ १ २ १ २
I तवेदिन्द्रा५वमंवसु। त्वंपुष्यसिमध्यमम्। सात्रा-
३ ५ १ २ १ २ र १ २ ३ ५
वा२३४इश्वा। स्यापरमस्यराजसि। नकिष्टा२३४गो।
१ ७ २ १ २ १ २र
वृवृण्वा२३ताइ। होवा३होइ। हो। वाहा३१उवा-
१ १ १ १
२३४५ ॥ १० ॥ ३८

हे "इन्द्र"! "अवमम्" अधमं तपु सोमादिकं "वसु" धनं। यद्वा। भौमं वसु अवमं "तवेत्" तवैव। "त्वं" त्वमेव "मध्यमं"

* 'प्रगाथः इन्द्रमाह'-इति वि०।

३८ ऋग्वेदस्य ५, ३, २०१ = आरण्यके प्र० २० —२१—द्वि० ४—५।

I प्रजापतेः, निधनकामम्।

अथ नवमी।

मेधातिथिर्मेध्यातिथिश्च ऋषिः।

१२र ३ १ २ ३ २ ३ २ ३ १ २

कोयथकोदसिपुरूत्राचिद्धितेमनः।

१ २ ३ १ २ ३ १ २

अलर्षियृध्णखजकृत पुरन्दरप्रगायत्राअगासिषुः ॥९॥३९

५र २ र १ १ १र

I कोयथा। कुवेदसा२इ। औहो२। औहोइ।

२ ५ २ १र २ र १ १

औ३हो२३४वा। पुरूत्राचाइत्। हितेमना२ः। औहो-

१र २ ५ २ १ २र १

२। औहोइ। औ३हो२३४वा। अलर्षियृ। धृष्णख-

१ १र २ ५

जकृ२त्। औहो२। औहोइ। औ३हो२३४वा।

वसु रजतहिरण्यादिकम् आन्तरिक्षं वा "पुष्यसि"। "विश्वस्य" सर्वस्य परमस्योत्तमस्यापि रत्नादे दिव्यस्य वा वसुनो "राजसि" ईशिषे "सत्रा" सत्यमेव(१)। अपिच। "त्वा" त्वां "गोषु" निमित्तेषु "न किर्ह्रणवते" केऽपि न वारयन्ति॥ ८॥ ३८

३९ ऋग्वेदस्य ५,७,११,२।

I इन्द्रस्य।

(१)—'सत्रा'-इति निघण्टौ सत्यनामसु ततीयं पदम् (३,१०)। 'सत्रा सर्वदा'-इति वि०।

पुरन्दरा । प्रगायात्रा२ः । औहो२ । औहोइ । औ-
३हो२३४वा । अगा३ । सा२इपू२३४औहोवा । सुश९-
सा२३४५ः ॥ ११ ॥

II कुवाकुवा । यथा । कुवेद्माइ । ऊवाइ । औ३-
हो२३४५ । पुरुत्राचाइत् । छितेमनाः । ऊवाइ । औ-
३हो२३४५ । अलर्षियू । धाखजकृत् । ऊवाइ । औ-
३हा२३४५ । पुरन्दरा । प्रगायात्राः । ऊवाइ । औ-
३हो२३४५ । अगा३ । मा२इपू२३४औहोवा । सुशा-
३९सा२३४५ः ॥ १२ ॥

III क्व यथकू३वाइदा२३४मी । पुरुत्राचित् । छिता-

---

II,III वसिष्ठस्य वा ; प्रियाणि त्रीणि ।

अथ दशमी।

कलिर्ऋषिः।

२१२ ३ १र २र ३२३१२
वयमेनमिदा ह्योपीपेमेह वज्रिणम्।

२ १ २ १ २ २
इमा२३नाः। आलर्षि। युध्माखजकृ३त्। हाउवा।

१ २ र १ १ १ ३
पुरन्दा२३रा। प्रगायात्रा२ः। अगा२३। सा२इषूर-

५र र ३ १ १ १ १
३४औहोवा। सुर३४५॥ १३॥ ३९

हे "इन्द्र"! "क्व" कुत्र देशे "इयथ" गतवानसि पुरा? "क्वेत्" कुत्र वा "असि" भवसि इदानीं वर्त्तसे? "पुरुत्राचिद्धि" बहुषु हि "ते" त्वदीयं "मनः" सञ्चरति। हे "युध्मकृत्" युद्ध-कुशल!। "खजकृत्" युद्धस्य कर्त्तः(१) हे "पुरन्दर" असुराणां पुरां दारयितर्हे इन्द्र! "अलर्षि" आगच्छ(२)। "गायत्राः"(३) गान-कुशला अस्मदीयाः स्तोतारः "प्रगासिषुः" प्रगायन्ति स्तुवन्ति। (अलर्षीत्येतत् दाधर्त्यादौ(४)निपात्यते॥ ८॥ ३९

(१)—'खजे'-इति निघण्टौ सङ्ग्रामनामसु ऊनचत्वारिंशत् पदम् (२,१७)।

(२)—'अलर्षति'-इति निघण्टौ गति-कर्मसु दृश्यते (२,१४)।

(३)—'मन्त्राः'-इति वि०।

(४—दाधर्त्ति दर्धर्त्ति दर्धर्षि बोभूतु तेतिक्ते ऽलर्ष्या ऽऽपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतो दविद्युतत् तरित्रतः सरीसृपतं वरीवृजत् मर्मृज्यागनीगन्तीति च (पा० ७।४।६५॥

१ २ ३ १र २र ३ २ ३ २ ३ १ २ ३ २
तस्माउअद्यसवनेसुतं*भरानूनंभूषतश्रुते ॥ १० ॥ ४०

॥ इति तृतीय-दशति ॥ ३ ॥

५ र १ ३ ५र र ३
I वयमेनाम् । आ२इदा२३४औहोवा । हो२३४
५ १र २र र १ १ १
याः । अपोपेमेह्वज्रिणम् । तास्मा२उवा२ । द्यसव-
७ र १र २ १ १र १
नाइ । सूतम्भारा२ । आनूना२३भू । षातश्रुते । इ-
२ १
डा२३भा३४३ । ओ२३४५इ । डा ॥ १४ ॥

५ र १ १ २ १र २र
II वयमेनाम् । इदा२ह्याः । अपौहोइ । पे-
१र ३ २र १ २ र १ २र १
मौहोइ । इ । ह्वावज्रिणाम् । तस्माउवा । द्यासव-

"वयं" यजमानाः "एनं" वज्रिणं वज्रयुक्तमिन्द्रं "इदा" इदानीं । "ह्यः" श्वः अतीतेऽह्नि । "इह" यज्ञाहर्गणे "अपीपेम"

---

* "ममनासुतम्"-इति ऋग्वेदीयः पाठः ।

४० उत्तरार्चिकस्य ८,२,१३,१=ऋग्वेदस्य ४,४८(३१), २=ऊहे षो० हि०५ ।

I,II इन्द्रस्य, वसिष्ठस्य वा वैरूपे ।

२र १ २र १र २ १र २र १ २
नाइ। सूतम्भरा। आनौहो। नम्भौहो। षातश्रुता-

२ ५
३१उवा२३। ऊ३४पा ॥ १५ ॥

४ ३ ४र ५ र ३ २ १ ५ ४ ५
III वयमेनमिदा। ह्यिय। ओ२३४वा। इयाह्याइ।

२ १ १ र र र ० १ र
ऊवेहो२इ। अपीपेमेहावजि्णा२म्। तस्माउअद्य-

७ ६ १ र १र ५
सवनाइ। सूतम्भारा२। ई३या। आनूना२३४भू।

२ १ २ १ १ १ १ १
षताश्रू२३४५ता६५६इ। अवा३सा२३४५इ ॥ १६ ॥ ४०

आप्ययाम(१) सोमेन। "तस्माउ" तस्मादेव "अद्य" अत्र "सवने" "सुतम्" अभिषुतं सोमं "भर" हर हे अध्वर्यो!। "नूनम्" इदानीं "श्रुते"(२) सति "आभूषत" अलङ्कुरुत ॥ १० ॥ ४०

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

III इन्द्रस्येन्द्रस्य वसिष्ठस्य वा वैरूपम्।

(१)—प्यायी श्रो प्यायो इहा वित्यस्य रूपम्।

(२)—'श्रुते सप्तम्येकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यं, श्रुताय विख्याताये त्यर्थः'-इति वि०।

अथ पञ्चमी खण्डे—

सैषा प्रथमा ।

पुरुहन्मा ऋषिः* ।

१र २र ३ १२३ १ १ २ १ १ २
योराजाचर्षणीनांयातारथेभिरध्रिगुः ।
१ २ ३१र २र ३ २ ३१२३२ ३२
विश्वासान्तरुतापृतनानांज्येष्ठंयोवृत्रहागृणे ॥ १ ॥ ४१

२५र २ ४ ४ ५ १ र ०र १ २
I योराजा३चर्षणाइनाम् । यातारथे । भिराध्रा-
१ १ २ १ २
१इगू २ः । ध्राइगू २ः । वाइश्वासा३म् । तरुता३ ।
१ २ १ २ ३ ४ १ २ र १
तरुता३ । पात्तीना२३४नाम् । ज्याइन्द्रयोवा । त्रा-
२ ३ ५ ४ ४
हागा२३४र्णाइ । त्रहापृगणाइ । हो५इ । डा ॥ १७ ॥

* 'पुरुहन्मन आर्षम्'-इति वि० ।

† "ज्येष्ठो"-इति ऋग्वेदीयः पाठः ।

४१ उत्तरार्चिकस्य ३,१,१५,१ = ऋग्वेदस्य ६,५,८,१ — जहे द्वि० द्वि०१४—स०द्वि०७—अष्टा०द्वि०१३ ।

I पौरुहन्मनम् ।

अथ द्वितीया।

भर्गऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
यतइन्द्रभयामहेततोनोअभयंकृधि।

१र र ४र ५ ३ १ ५ १र र र २ १
II योराजाच। षणा३२३४इनाम्। यातारथेभिर-

२ १ र र र र २ १
ध्रा२३इगुः। विश्वासान्तरुतापृतना२३नाम्। ज्या२३इ-

२ १ २ १ २ १ ५ ४ ५
ष्ठाम्। योवृत्रहोवा२ओ२३४वा। गापृणाईहाइ॥१८॥४१

"विश्वासां" सर्वासां "पृतनानां" सेनानां "तरुता"(१) तारकः। यश्च ज्येष्ठः गुणैर्गरीयान्। "यः" च "वृत्रहा" वृत्रं हतवान्। तं "ज्येष्ठं" सर्वै रतिशयेन प्रशस्यम् अधिकं वृद्धं वा महाभागमिन्द्रं "गृणे" स्तौमि॥१॥४१

II प्राकर्षम्।

(१) – "ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरुत्री-रुज्ज्वलिति-क्षरिति-क्षमिति-वमित्यमिति च (पा०७।२।१४)"-इति सिद्धम्।

१ २ ३ २उ ३ १ २ ३ २ ३ २उ ३ १र २र
मघवञ्छग्धितवतंनऊतये*विद्विषोविमृधोजहि ॥२॥४२

५ २ ५ ५ ४र ५ १र र २
I यतआ३इन्द्राभयामहाइ। ततोनोअभयङ्का२३ह्यी।
१ २ १र २ १ २ १
मघवंछग्धितवतन्नऊता२३याइ। विद्वाइषो२३वो। मा
र २ १ २ १
ह्वोजहि। इडा२३भा३४३। ओ२३४५इ। डा ॥१८॥४२

हे "इन्द्र"! "यतः" हिंसकात् "भयामहे" वयं "ततः" "नः" अस्मभ्यम् "अभय" "कृधि" कुरु। हे "मघवन्"! "शग्धि"(१) शक्तो भवसि "नः" अस्मभ्यमभयं कर्त्तुं। "तव" "ऊतये" रक्षणाय "विजहि" "द्विषः" अस्मद्द्वेष्टॄन्। "मृधः" अस्मद्विंसकान्(२) "वि" जहि(३) ॥ २ ॥ ४२

---

* "ऊतिभिः"-इति ऋग्वेदीयः पाठः। उत्तरार्च्चिकभाष्ये सायण-सम्मतश्च।

---

४२ उत्तरार्च्चिकस्य ५,२,१५,१ = ऋग्वेदस्य ६,१,२४,४ = ऊहे प० हि०१०।

I इन्द्रस्य; अभयङ्करम्।

(१)—'शग्धि याचामहे तव स्वभूतं तत अभयम्'-इति वि०। 'शग्धि'-इति निघण्टौ याच्ञाकर्मसु पञ्चमं पदम् (३,१९)।

(२)—मृध इति सङ्ग्राम-नाम (नि०२,१७,९)। मृधं करोति, "तत करोति"-इति णिच्, मृधयति-एयन्तात् क्विपि रूपं माध्यम्।

(३)—वीत्युपसर्गश्च तेजहीत्याख्यातनाभ्याम।

अथ तृतीया।

इरिमिठऋषिः*।

१ २ ३ १र २र ३ १ २
वास्तोष्पते ध्रुवा स्थूणा ऽ सत्र ऽ सोम्यानाम्।
३ १ ३ २ ३ १र २र ३ २ ३ १ २ ३ १ २
द्रप्सः पुरां भेत्ता† शश्वतीनामिन्द्रो मुनीना ऽ सखा॥ ३॥४३

५र र २ १ २ ३ ५ १
I वास्तोष्पताइ। ध्रुवा। स्थूणाओ२३४वा। अ ऽ-
२ र १र ५र १ र र र २
सत्र ऽ सोम्याना२म्। द्रप्सः पुराम्भेत्ताशश्वता२३इनाम्।
३ ५ १र५र
आ२३४इन्द्राः। मुनी२। ना३१उवा२३। सा२३४
५
खा॥ ३०॥

३र ४र ५र र २र २ १ ५ र
II वास्तोष्पतेध्रुवा। स्थुणा३। आ२३४। सत्र ऽ सो।

---

* "इरिमिरि"-इति वि०-पाठः।
† "भेत्तापुरां"-इति व्यतिक्रमेण पाठः ऋग्वेदीयः।

---

४३ ऋग्वेदस्य ६,१,२४,३।

I,II कावषे द्वे।

४र ५　　२ १ र र र　　२　१
म्यानाम्। द्रप्सःपुराम्भेत्ताशश्वतार३इनाम्। आर३-

२　१ २र　१　५　२　५
इन्द्राः। मुनीर। नोर३४वा। सार३४खा॥ २१॥ ४३

हे "वास्तोष्पते"(१) गृहपते! "स्थूणा" गृहाधारभूतस्तम्भः "ध्रुवा"(२) स्थिरा भवतु। "सोम्यानां" सोमार्हाणां सोम-सम्पादिनां वास्माकम् "अंसत्रम्"(३) अंसत्राणं अंसोपलक्षितस्य कृत्स्नस्य शरीरस्य त्रायकं बलं भवतु। अपिच। "द्रप्सः" द्रवण-शीलः सोमः तद्वान् [अर्शआदित्वादच् प्रत्ययः(४)] "शश्वतीनां"(५) बह्वीनां "पुराम्" असुर-पुराणां "भेत्ता" विदारयिता एवम्भूतः "इन्द्रः" "मुनीनाम्" ऋषीणामस्माकं "सखा" मित्रभूतो भवतु॥ ३॥ ४३

---

(१)—'वास्तोष्पतिः वास्तुर्वसतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा'-इति नि०दै०१०,१६।

(२)—'ध्रुवा स्थूणा' लुप्तोपममेतत् द्रष्टव्यम्। ध्रुवा स्थूणा इव यथा गृहस्य ध्रुवा स्थूणा आश्रयभूता तद्वत् त्वमाश्रयभूत इत्यर्थः'-इति वि०।

(३)—'अंसत्रम्' एतदपि लुप्तोपमम्। अंसत्रमिव अंसत्रं धनुः कवचं वा। यथा शत्रूणां जेतृ पालयितृ वा तद्वत् त्वं जेता पालयिता चेत्यर्थः'-इति वि०।

(४)—"अर्शआदिभ्य अच् (५,२,१२७)'-इति पा०।

(५)—'शश्वत्'-इति निघण्टौ बहुनामसु पञ्चमम् पदम् (३,१)।

अथ चतुर्थी।

जमदग्निर्ऋषिः।

३ १ २ ३ १ २ ३ १ २
बण्महाꣳ असि सूर्य्य बडादित्य महाꣳ असि।
३ १ २ ३ १ २ ३ १ २ २ ३ १ २ ३ १ २
महस्ते सतो महिमा पनिष्टम मह्ना* देव महाꣳ असि॥४॥४४

५ २ ४ ५र १ र २ १ २
I बण्महाꣳ ३ असि सूर्या। बाडादित्य। महाꣳ आ-
३ ४र ३र ४ ३र ४ ५ २ २
१सा२३४इ। महस्तेसतोमहिमापनि। ष्टा३मा। म-
१ २ २ १ ५ ४ ५
ह्नादा२३इवा३। महो२३४वा। आ५सो६हाइ॥२२॥४४

(अत्र शौनकः—"बण्महामिति दृष्ट्वार्कमुपतिष्ठेदृचो जपन्। वदन्नप्यनृतां वाणीमनृतेन स लिप्यते"-इति) हे "सूर्य्य"! ([1])प्रेर-

* "अद्धा"-इति च ऋग्वेदीयः पाठः।

४४ उत्तरार्चिकस्य ८,१,८,१ = ऋग्वेदस्य ६,७,८,१ = आरण्यके द्वि०१२ = ऊहे एका० ट० ५ — तयो० ट०६ = ऊह्ये द्वि०१४।

I सूर्य्यसाम।

(१) —"सूर्यः सर्त्ते र्वा सुवते र्वा स्वीर्यते र्वा"-इति नि०दै०१२,१४। 'सुष्ठु ईरयिता नाशयिता प्रजानां सूर्यः'-इति वि०।

अथ पञ्चमी ।

देवातिथिर्ऋषिः ।

३ २ ३ १ २ ३ १ २ ३ २ १ २ ३ १ २

अश्वीरथीसुरूपइद्गोमा२ँ*यदिन्द्रतेसखा ।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २ २

श्वात्रभाजावयसासचतेसदाचन्द्रै†र्यातिसभामुप ॥५॥ ४५

केन्द्र! त्वं "महान्" तेजसाधिको "असि" । "बट्" सत्यं(१) । नै तन्मिथ्येत्यर्थः । हे "आदित्य" अदितेः पुत्र ! (२)त्वं "महान्" बले नाप्यधिकः "असि" "वट्" सत्यमेव । "मह्नो" महतः "सतो" भवतः "ते" तव "महिमा" महत्वं "पनिष्टम" पनस्यते(३) स्तोतृभिः स्तूयते । हे "देव" द्योतनादि-गुण युक्त ! सूर्य ! त्वं "मह्ना" महत्वेन वीर्येणाप्यधिको "असि" भवसि न संशय इत्यर्थः ।

"पनिष्टम"-"पनस्पते"-इति पाठौ ॥ ४ ॥ ४४

* "गोमा२ँइदिन्द्र" इति, † "चन्द्रो" इति च ऋग्वेदीयः पाठः ।

---

४५ ऋग्वेदस्य ५,७,३१,४ ।

(१) 'वट्'-इति सत्यनामसु प्रथमं पदम् नै० ३.१० ।

(२) 'आदित्यः कस्मादादत्ते रसानादत्ते भासं ज्योतिषां मादीप्तो भासेति वादितेः पुत्र इति वा । अल्प-प्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् सूर्यमादितेयमदितेः पुत्रम् । एव मन्यासामपि देवतानामादित्य-प्रवादाः स्तुतयो भवन्ति तद् यथा"- इत्यादि वि० ।

(३)-'पनस्यति'-इति वि० . पणते पनते वा तत्रैवार्चति कर्मसु द्वात्रिंशत्तमं पदम् ।

४ ५ ४ ५ २र १ २ १ र २
I अश्वीअश्वी। रथीसू३रूपा१ई२रत्। गोमा२ऽयदिं।
१ २ १ १ १ र २१र
द्राते१साखा२। श्वात्रा२भाजा२। वयसासचतेसा२३-
२ १ २ २ १ ४ २
दा। चन्द्राइर्या३ती३। सा२३भा३म्। ऊ३४५पो६-
५
हाइ॥ २३॥

५र र र ५ १र र र
II अश्वीरथीसुरूपा६ईत्। गोमा२ऽयदिन्द्रतेसखाउ-
१ १ २र १र र र र र
वा२३होवा२३हा२ईया। श्वात्राभाजावयसासचतेसदा-
१ १ २ १ र
उवा२३होवा२३हा२ईया। चन्द्राइर्या१ती२। साभा-
२ १ २ १
मुप। इडा२३भा३४३। ओ२३४५इ। डा॥ २४॥ ४५

हे "इन्द्र"! "ते" तव "सखा" मित्रभूतः पुरुषः अश्वादि-गुण-विशिष्टएव भवति (इच्छब्दः प्रत्येक मभिसम्बध्यते) "अश्वी-इत्" बहुभिरश्वैरुपेतएव भवति न कदाचिदश्वैर्वियुज्यते। "रथी" रथवान् भवति। "सुरूपः" शोभन-रूपः शोभनावयवएव स

---

I,II वैश्वदेवे, आनूपे, वाध्र्यश्वे वा इमे हे।

अथ षष्ठी ।

पुरुहन्मा ऋषिः ।

१२　२२　　३ २　३ १२　२२ ३ २
यद्यावद्इन्द्रतेशतᳪशतंभमोरुतस्यूः ।

भवति । "गोमानित्" बह्वीभिर्गोभिर्युक्तएव स भवति न कदाचिदेतैर्व्युज्यतइत्यर्थः । अपिच "श्वात्रभाजा" (श्वात्रमिति धननाम(१) शु(२) आत्रम् अतनीयं शीघ्रं प्राप्तव्यं शोभनं धनं सम्भजता ईदृग्धन संयुक्तेन "वयसा" (अन्ननामैतत्(३) । अन्नेन सदा सर्वदा "सचते" समवैति सङ्गच्छते । अतएव "चन्द्रैः" सर्वेषामाल्हादकैः(४) स्तोत्रै र्युक्तः सन् "सभां" जन-संसदम् "उपयाति" उपगच्छति ॥ ५ ॥ ४५

---

(१)—श्वात्रमिति निघण्टौ धन-नामसु षष्ठं पदम् (२,१०) । 'श्वात्रति'-इति गति कर्मसु च पठ्यते (२,१४) । 'श्वात्रमिति क्षिप्रनाम । क्षिप्रं यत् सम्भजते तत् श्वात्रभाक्, तेन श्वात्रभाजा, क्षिप्रं सम्भजतेत्यर्थः-इति वि० । एतच्च वयसेत्यस्य विशेषणम् ।

(२)—'शु'-इति क्षिप्रनामसु पञ्चदशम् ( नि०२,१५ ) ।

(३)—निघण्टौ अन्ननामसु 'वयः', 'सुतः', 'सुतम्'-इति पदत्रयं पाठभेदेन सप्तमम् पदम् (२,७) ।

(४)—'चन्द्रश्चन्दतेः कान्तिकर्मणश्चन्दनमित्यस्य भवति । चारुद्रमति, चिरं रमति, चमेर्वा पूर्वम् । चारुरुचेर्विपरीतस्य'-इति (नै० दै०११,५) ।

१ २ ३ २ ३ २ ३ २ ३ १ २ १ २ ३ १ २
न त्वावज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी ॥ ६॥४६

२ १र ४ ५र २ १ र २ १
। यद्यावार३इन्द्रतेशताम्। शतंभूमीरुतस्यू२ः। न-

र रर १ १ २ १
त्वावज्रिन्त्सहस्रꣳ सूर्या अनू२। नाजा२तामा२३। ष्टरो-

५ । ४ ५
२३४वा। दा५सो६हाइ॥ २५ ॥ ४६

हे "इन्द्र"! "ते" तव प्रतिमानार्थं "यद्" यदि "द्यावः" द्युलोकाः "शतं" शत-सङ्ख्याकाः स्युः तथापि नाश्नुवन्ति(१)। "उत" अपिच "भूमी" भूम्यः तव मूर्त्ति-प्रतिबिम्बाय शतं स्युः तथापि नाश्नुवन्ति। हे "वज्रिन्"! "त्वा" त्वां "सहस्रम्" अगणिता अपि सूर्याः नानुभवन्ति न प्रकाशयन्तीत्यर्थः (न तत्र सूर्यो भातीति श्रुतेः) किं बहुना "जातम्" पूर्वमुत्पन्नं किञ्चिदनु "न अष्ट"(२) नाश्नुते। तथा "रोदसी" द्यावापृथिव्यौ" नाश्नुवाते त्वं सर्वेभ्योऽतिरिच्यतइत्यर्थः ("ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवोज्यायानेभ्योलोकेभ्यः"-इति श्रुतेः॥ ६ ॥ ४६

---

४६ उत्तरार्च्चिकस्य २,२,११,१ = ऋग्वेदस्य ६,५,८,५— आरण्यके प्र०,१—२—३—६—५—६—७—८=ऊहे द्वावि० १८=प्र०७—प०१८—प०द्वि०१—१८।

I वैरूपम्।

(१)—अनुपदमेव व्याख्यास्यमानाष्टेति पदं नेति पदस्य सनस्थानीयोच्यते नाश्नुवन्तीति।

(२)—'आष्ट', 'अष्ट', 'आष्टः', 'आष्टः'-इति पदचतुष्टयमेव निघण्टौ व्याप्तिकर्मसु पठ्यमिति पाठभेदेन पठ्यते (२,१८)। अतएव विवरणे 'नाष्ट' न व्याप्नुवन्तीत्युक्तम्।

अथ सप्तमी।

देवातिथिर्ऋषिः।

१ २ ३ १२ ३  ३ २क २र  ३ १२ ३ १ २
यदिंद्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः।
१ २ ३ १र २र  ३ २ ३ १ २  ३ १
सिमा पुरू नृषूतो अस्यानवेसि प्रशर्द्ध तुर्वशे ॥ ७ ॥ ४७

४ ५ ४र  १  र र १ १र
I यदिंद्रप्रागपाक। उदाक। न्यग्वाहूयसनृभा२इः।
१ र र र र  २ १ ७  १ १
सिमापुरूनृषूतोअ। सियानवा२इ। आसी२प्राशा२।
१ २ १ ५ ४ ५
धतोवा३ओ२३४वा। र्वा५शोई२हाइ ॥ २६ ॥

५ र र ५ १ २र र १
II यदिंद्रप्रागपागुदा६गे। नायग्वाहू। यसाइनृ-

हे "इन्द्र"! "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः (सप्तम्यन्ताद्दिक्शब्दाद्विहितस्य अस्तातेरञ्चेर्लुगिति लुक्। यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः। यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः (न्यधीचेति नेः प्रकृति-स्वरत्वम्। उदात्त-स्वरितयोर्यणइति पर-

---

४७ उत्तरार्चिकस्य ५,१,१३,१ = ऋग्वेदस्य ५,७,३०,१ = ऊहे ४.२,१५।

I,II नैपातिथे द्वे।

अथाष्टमी।

वसिष्ठऋषिः।

कस्तमिन्द्रत्वावसु*वामर्त्योदधर्षति।

भी३:। हा। औहो२३४हा। सिमा२पुरून् षुतो३अ। सियानवे२३। हा। औहो२३४हा। असाइप्राप्ना३। हा। औहो२३४हा। धा२तू२३४औहोवा। वा२३ ४शे॥ २७॥ ४७

स्यानुदात्तस्य स्वरितत्वम्। एवं भूतैः "नृभिः" स्तोतृभिस्त्वं "ह्वयसे" स्व-स्व-कार्यायाह्वयसे ("हसिम श्रेष्ठे हसिमइति वै श्रेष्ठमाचक्षत्-इति" वाजसनेयकम्)। यद्यप्येवं बाहुभिराह्वयसे तथापि "आनवे" अनु-नाम-राजा(१) तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृषूतः" नृभिस्तदीयैः स्तोतृभिः प्रेरितः "असि" भवसि। राज्ञो हित-करणे त्वां स्तोतारः प्रेरयन्तीत्यर्थः (षू प्रेरणे। अस्मात्कर्मणि निष्ठा। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वम्।) अपि हे "प्रमर्द्ध!" प्रकर्षेण मर्द्दयितरभिभवितरिन्द्र! "तुर्वशे" एतत्सञ्ज्ञे च राजनि "नृषूतः" नृभिः प्रेरितो भवसि॥ ७॥ ३७

* "त्वावसु"-इति ऋग्वेदीयः पाठः।

(१)—'अनवः' इति मनुष्यनामसु उर्मविंशं पदम् (नि० २,३)।

२ १र　२र　३ १ २ ३ २ ३ १र　२र
श्रद्धाहित्ते*मघवान्पार्यदिविवाजीवाजꣳसिषासति॥८॥१८

५　१　१र　र
I कस्तमिन्द्रा। त्वा२वासा२उ। आमर्त्योदधर्ष-

२ र १　१ २ १र　२
ताइ। श्रद्धाहाइते२। माघवन्पा। रियाइदा१इवी-

१र १र १　१　१　५र र
२। वाजावाजा२म्। सिषा२३। सा२ता२३४औहो-

२　५
वा। ऊ२३४पा॥२८॥

३ ४ ५ र　३ २　१　५र
II कस्तमिन्द्रत्वा। वसा३ऊ। आ२३४। मर्त्योदध।

४ ५　२ र १　१ २ १र　२
षताइ। श्रद्धाहाइते२। माघवन्पा। रियाइ। दाइवा-

---

* "श्रद्धाइत्ते"-इति च ऋग्वेदीयः पाठः।

---

४८ उत्तरार्चिकस्य ८,२,८,१ = ऋग्वेदस्य ५,३,१८,४ = ऊहे १५,१८।

I,II बृहतः कौमुदस्य सामनी द्वे।

अथ नवमी।

भारद्वाज*ऋषिः।

१ २ ३ २ ३१र २र ३१२
इन्द्राग्नी अपादियं पूर्व्वागात्पद्वतीभ्यः।
३ १र २र ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
हित्वा शिरो जिह्वया रारपच्चरत्त्रिंशत्पदान्यक्रमीत् ॥९॥४९

३ ५ ३ ५ ३र २र १ १
ओ२३४वा। ऊ२३४पा। वाजीवाजा२म्। सिषा२३।
१ ३ ४र र ३ ५
सा२ता२३४औहोवा। ऊ२३४पा॥ ॥२९॥४८

हे "वसो" वासक! व्यापक! वा हे "इन्द्र"! तं प्रसिद्धं "त्वा" त्वां "कः" मर्त्यः "आदधर्षति आधर्षयेत्(१)। हे "मघवन्,, "ते" त्वदर्थं यः "श्रद्धा" श्रद्धया युक्तः सन् "वाजी" हविष्मान् यजमानो भवेत्। "पार्य्ये दिवि" सौत्येऽहनि सः "वाजं"(२) हविर्लक्षणमन्नं "सिषासति" दातुमिच्छति(३) ॥ ८ ॥ ४८

* "भरद्वाज"-इति वि०-पाठः।

४९ ऋग्वेदस्य ४,८,२६,१।

(१)--"कः तं यजमानं हे इन्द्र! त्वावसो' त्वमेव वसु धनं यस्य स त्वावसुः, त्वद्धन मित्यर्थः। आदृत्ययं दधर्षतीत्याख्यातेन सम्बन्धयितव्यः। मर्त्यः मनुष्यः शत्रु रित्यर्थः। आदधर्षति, अभिभवति। न कश्चित् तमभिभवतीत्यर्थः"-इति वि०।

(२)—'वाजः'-इति अन्ननामसु द्वितीयम् पदम् ( नि० २,७)।

(३)—'वाजं अन्नं सोमयागं करोतीत्यर्थः'-इति वि०।

I इन्द्राग्नी अपादियाईमे । पूर्वागा२त् । पद्वतीइभा१या२ः । हित्वाशिरो२जिह्वयारा । रापच्चारा२त् । त्रिंशत्पदा । निया२३ । क्रा२मा२३४औहोवा । ऊ२३४पा ॥ ३० ॥ ४९

हे "इन्द्राग्नी"(१) "अपात्" पाद-रहिता "इयम्" उषाः(२) "पद्वतिभ्यः" पाद-युक्ताभ्यः "सुप्ताभ्यः" प्रजाभ्यः "पूर्वा" प्रथम-भाविनी सती "आगात्" आगच्छति । तथा प्राणिनां "शिरो" "हित्वा"(३) त्यक्त्वा स्वयं मशिरस्कापि "जिह्वया" प्राणिस्थया तदीयेन वागिन्द्रियेण(४) "रारपत्" भृशं शब्दं कुर्वती(५) "चरत्" एवं चरन्ती(६) उषाः त्रिंशत्पदानि अवयव-भूतान् त्रिंशन्मुहू-

I वाचःसाम ।

(१) इन्द्रो वायुः स च ततमहचरितो वैद्युतोऽग्निश्च इन्द्राग्नी, तथाहि 'वायुर्वेन्द्रो-वान्तरिक्षस्थानः (नै० दै० १.५)' इति "अथैतानीन्द्रभक्तीनि * * * अथास्य कर्म * * * अथास्य संस्तविका देवाः अग्निः सोमो वरुणः (नै० दै० १, १०) इत्यादि च ।

(२) "उषाः कस्मादुच्छतीति सत्या रात्रेरपरः कालः (नै० नै० २,१८)" इति ।

(३)—'शिरः आदित्यं विना, आदित्यादपि पूर्वमुदेतीत्यर्थः' इति वि० ।

(४)—'जिह्वेति वाङ्नाम (नि० १, ११) तथा, जिह्वया वाचेत्यर्थः' इति वि० ।

(५)—'यदग्रे उषसः उदयवेलायां पक्षिणः शब्दं कुर्वन्ति तदुषस्युपचर्य्यते' इति वि० ।

(६)—'चरत्, इदमपि लौकिकं प्रति दृश्यम्, चरन्ती आदित्योदयं प्रति गच्छन्तीत्यर्थः' इति वि० ।

अथ दशमी।

बालखिल्या ऋषयः*।

२३१२३१२ ३१२ ३१२

इन्द्रनेदीयएदिहिमितमेधाभिरूतिभिः।

४ ५ ४२५२ ४२५ ४ ५ ४५२ २ २१२

1 इन्द्रनेदीयएदि। हाइ। मितमे। धा। भिरू-

२ २ १ २ २१ २

तिभिः। आशन्ता२३मा। शन्तमाभिरभिष्टिभिः। आस्वा

२ १ २ ४ २ ३

२३पे। स्वाऔ३हो३। पिभिरो२३४५इ। डा॥ ३१॥

र्त्तान् "न्यक्रमीत्" एकेन दिवसेनातिक्रामति (एतच्च युवयोः कर्मेति स्तुतिः),

"छित्वा शिरो", "छित्वा शिरः" इति पाठौ। "रारपत्", "वावदद्"-इति च॥ ८॥ ४८

हे "इन्द्र!" "नेदीयः" "अन्तिकतममस्माकं यज्ञस्थानं "एदिहि" आगच्छैव। काभिः साकमिति? उच्यते। "मितमेधाभिः" परिमित-प्रज्ञाभिः(१) "ऊतिभिः" रक्षाभिः। यद्वा। निमित-यज्ञाभिर्मरुद्भिः सह। हे "शन्तम" सुखतम! "शन्तमाभिः"

* 'मेधातिथेरार्षम्'—इति वि०।

1, 11 वाम्ने, आग्नेये वा इमे हे।

(१ "मित" प्रक्षिप्तो मेधो यज्ञो यासु ऊतिषु ताः मितमेधाः, ताभिः यज्ञप्रक्षिप्तैः पालनैर्मिमितभूतैः, यज्ञान् पालनानि च अस्माकं सम्पादयितुमित्यर्थः—इति वि०।

१ २ ३१ २ ३१ २३ १ २ ३ १ २
आशन्तमशन्तमाभिरभिष्टिभिरास्वापेस्वापिभिः॥ १० ॥५०

॥ इति चतुर्थ दशति ॥

॥ इन्द्रन द्योयणदि। ह्वाइ। मितमे। धा। भिरूति
भाइः। आशन्तमशन्तमा २भाइः। आभिष्टिभिः। आ
स्वा २पाइस्वा२३। ह्वा३। पिभिरो२३४५इ। डा॥ ३२ ॥५०

सुखतमाभिः "अभिष्टिभिः" प्राप्तिभिः अभिमताभिर्वा(१) आगच्छेति शेषः (उपसर्गश्रुते र्योग्य-क्रियाध्याहारः) तथा हे "स्वापे"! अस्माकं बन्धु-भूत-सुखस्य आपयितर्वा। "स्वापिभिः" बन्धुभूताभिः सुखस्य प्रापयित्रिभिः "अभिष्टिभिः" आगच्छेति शेषः॥ १० ॥ ५०

इति सायणाचार्य्य विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोआर्च्चिके तृतीयाध्यायस्य पञ्चमः खण्डः॥ ५ ॥

५० ऋग्वेदस्य. ६,४,२३,१।

(१)—आभिमुख्येन इच्छन्ते यासु इतताभ्यो अभिष्टयः इष्टय इत्यर्थ, ताभिश्च निमित्तभूताभिः ताश्च सम्पादयितु मित्यर्थः इति वि०

अथ षष्ठे खण्डे—

सैषा प्रथमा।

नृमेधऋषिः।

३२ ३१ २३ १२ ३२३१२
इतऊतीवोअजरं प्रहेतारमप्रहितम्।
३ १र २र ३ १ २ ३१२३१२ ३ १२
आभुञ्जेतारꣳहोतारꣳरथीतममतूर्त्तन्तुग्रियावृधम्*॥१॥१५

५ र २ १२२ ५ २ २ र
I इतऊती। वो३ओजा३राम्। औ३हो३वा। प्रहे-
र १ २ २ ५ २ २ र र र
तारमप्राही३ताम्। औ३हो३वा। आभुञ्जेतारा३ꣳ-
१ २ २ ५ २ २ १ र ५
होइता३राम्। औ२हो३वा। रथाइतममतूर्त्ता२३४न्तू।
३ २ १ २ ५र र २
ग्रिया३। वा२र्द्धा२३४औहोवा। स्तुषे१॥ २३॥

५ र र र ५ २र१र
II इतऊतीवोअजा६राम्। प्रहेतारमप्रहितमुहूवार३-

* 'तुग्र्यावृधम्'-इति ऋ० पाठः।

५१ ऋग्वेदस्य ६,७,३,७।

I,II गौरीवीतेः प्रहितौ द्वौ। वासुक्रे वा इमे द्वे।

अथ द्वितीया ।

वसिष्ठऋषिः ।

मोषुत्वावाघतश्चनारे अस्मन्निरीरमन् ।

होइ । आशुञ्जेतारꣳहाइतारमुहुवा२३हो । रथी । त

मा२म । अतूर्त्ता२३४न्तू । ग्रिया३ । वा२र्द्धा२३४औहो

वा । स्तौ३षा२३४५इ ॥ ३४ ॥ ५१

हे अस्मदीया जनाः ! "वो" यूयम् "अजरं" जरा-रहितं "प्रहेतारं" शत्रूणां प्रेरकं "अप्रहितं" केनाप्यप्रेषितं "आशुं" वेगवन्तं "जेतारं" शत्रूणां । "होतारं" गन्तारं । "रथीतमं" रथिनां श्रेष्ठं "अतूर्त्तं" केनाप्यहिंसितं । "तुग्र्यावृधं" उदकस्य(१) वर्धयितारमिन्द्रम् "ऊती" ऊत्यै रक्षणाय "इतः" कुरुत पुरस्कुतेति यावत् ॥ १ ॥ ५१

(१)--तुग्र्या इति उदकनामसु एकादशमितम नैघण्टुकम ( १.१२ ) ऋग्वेदपाठ स्वरूपमनुसृत्यात्र प्रतीकमुद्धाहृतम, सामवेदीयपाठे तु तुग्रिया इति ध्येयम् ।

आरात्ताद्दामधमादन्नआगहोहवामन्नपश्रुधि ॥ २ ॥५२

। मोषुत्वावा। घाता२३४५ः। चा२३४ना। आरेअ-स्मन्निरो२रमन्। आरा१त्ताद्दा२। साधमादा२म्। ना-आगहि। आइ्हवामा२न्। ऊपश्रुधि। इडा२३भा३-४३। ओ२३४५इ। डा ॥ ३५ ॥

II मोषुत्वावाघतश्चनाइए। आरेअस्मन्निरोरमा२न्। हा२ऊऊवा२इ। ऊ। आरात्ताद्दासधमादा२म्। हा

हे इन्द्र! "त्वा" त्वां "वाघतश्चन" यजमाना(१) अपि "अस्मद्" अस्मत्तः "आरे" दूरे(२) "मो निरीरमत्" नितरां मा रमयन्तु।

---

५२ उत्तरार्चिकस्य ८,२,६,१ = ऋग्वेदस्य ५,३,१७,१ = ऊहे१५,१८।

I.II आवे हे ।

(१) वाघत इति मेधाविनामसु ऋत्विङ्नाम नैघण्टुकम् ३,१५

(२) आरे अदूर इति नि ।

अथ तृतीया

नमिध ऋषिः ।

२ १ २ ३ १ ३ २ ३ १ २ ३ १ २
सुनोतसोममपावनेसोममिन्द्रायवज्रिणे ।
१ २ ३ १२ ३२ ३ २३ ३ १२ ३१ ३ १२ ३२
पचतापक्तीरवसे कृणुध्वमित् पृणन्नित् पृणते मयः ॥३॥५३

१ १ ५ ५ १
२ऊऊवा२इ । ऊ२ । नआगा२३४ही । आइह ।
२ ३ ५ २ १ १ १
वासौवाओ२३४वा । उपश्रू२३धा३४३इ । ओ२३४५इ ।
डा ॥३६॥ ५२

अतस्त्वम् "आरात्तात्" दूरेऽपि वर्त्तमानः "नः" अस्मदीयं "सधमादं" यज्ञम्(ऽ, "आगहि" आगच्छ । "इह वा" यत्रापि वा "सन्" विद्यमानः "उपश्रुधि" अस्मदीयं स्तोत्र मुपशृणु ॥

"आरात्तात्", "आरात्ताच्चित्" इति च पाठौ ॥ २ ॥ ५२

५३ ऋग्वेदस्य ५,३,१८,३ ।

(ऽ,—'मद मादयन्ति यत्र देवताः स सधमादो यज्ञः तं प्रति' इति वि० ।

* इति ग्रामे गेये सप्तमः प्रपाठकः ॥

५ र र र ५ १र १ २
। ओं सुनोतसोमपाव्नाइए। सोममिन्द्रा२३। ह्वोवा

२ १ २ १ २र १ २र १ २
३हा। यवज्रा२३इणाइ। पचतापक्ताइरवसेक्त। णू। ध्वा

२ १ २ २ १
१मी२३ह्वाइ। पु। णान्। आइत्पृ३हा। णताइमा-

२ १
२३या३४३ः। ओ२३४५इ। डा॥ १॥

४ ३र ४ ५र र ३र २र २ ५ ४ ५
॥ सुनोतसोमपा। आव्नाओ२३४वा। इयाहाइ।

१र १ १ १ २
सोममिन्द्रा२। ऊव२। ऊवे२हो। यावज्रिणा२इ।

१ र २र १ २ २
पचतापक्ताइरवसेक्त। णू। ध्वा१मी२३ह्वाइ। पृ।

१ २ २ १ २ १
णान्। आइत्पृ३हा। णताइमा२३या३४३ः। ओ२३४५इ।

डा॥ २॥ ५३

हे मदीयाः पुरुषाः! "वज्रिणे" वज्रवते "सोमपाव्ने" सोमस्य पात्रे "इन्द्राय" "सोमं" "सुनोत" अभिषुणुत। "अवसे"-इन्द्र-

।.॥ गौरीवीतिहे।

अथ चतुर्थी।

भरद्वाजऋषिः।

१ २ ३ १र २र ३ २ ३ १ २ ३ २
यः सत्राहाविचर्षणिरिन्द्रन्तꣳहूमहेवयम्।
१ २ ३ १ २ ३ १ २ ३ २
सहस्रमन्योतुविनृम्णसत्पतेभवासमत्सुनोवृधे ॥ ४ ॥ ५४

३ ४ र ५र ४ ५ २ ४र ५ ४र ५
I यःसत्राहाविचर्षणिः। इन्द्रंता३ꣳहूमहेवयाम्।

न्तर्पयितुं "पक्तोः" पक्तव्यान् पुरोडाशादीन् पचति। "कृण्वन्निमित्" इन्द्रप्रियकराणि कर्माणि च कुरुतैव। इन्द्रो हि "मयः" सुखं(१) "पृणन्नित्" यजमानाय प्रयच्छत्येव "पृणते" हवींषीति-शेषः ॥ ३ ॥ ५३

यः इन्द्रोह "सत्राहा" महतां शत्रूणां हन्ता। "विचर्षणिः" विशेषेण सर्वस्य द्रष्टा तमिन्द्रं वयं "हूमहे" स्तुति-पदैः राह्वयामः (उत्तरार्धः प्रत्यक्ष-कृतः(१) हे "सहस्रमन्यो" बहुविधं शत्रु-

५४ ऋग्वेदस्य ४,७,२७,३।

I वामदेव्यम्।

(१)—मयइति सुखनामसु'सप्तमं नैघण्टुकम् ३,६।

(१)—"तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्च। तत्र परोक्ष-कृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य * * * अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना ** ' अथापि प्रत्यक्षकृताःस्तोतारो

अथ पञ्चमी।

परुच्छेप* ऋषिः।

१ २ ३ २ ३ १ २
शचीभिर्नः शचीवसू दिवानक्तन्दिशस्यतम्।

१ २ ३ १ २ २ १ २ २ १
इन्द्रं तं हुमहे वा२३याम्। सहस्रमन्योतुविनृम्णसत्पा२३-

२ १२ २ १ २ २ २ १ २
ताइ। भवासा२३मा। त्सूनोवृधे। इडा२३भा२३४३।

१
ओ२३४५इ। डा॥ ३॥ ५४

नाशार्थ सहस्र-सङ्ख्याक-कोप-युक्त! यद्वा। मन्युः क्रतुः, सहस्र-सङ्ख्याकैः क्रतुभिः पूज्येन्द्र!। हे "तुविनृम्ण" बहु-धन(२)! "सत्पते" सतां पालयितरिन्द्र! "समत्सु" सङ्ग्रामेषु(३) "नः" अस्माकं "वृधे" वर्द्धनाय "भव"॥

"सहस्रमन्यो", "सहस्रमुष्क"-इति च पाठौ॥ ४॥ ५४

* 'पुरुच्छेप'-इति वि०पाठः।

भवन्ति परोक्षकृतानि स्तोतव्यानि * * * अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना"-इत्यादि नै० दै०१.१--३।

(२)--'तुविनृमण' बहुधन इति वि०-सम्मतोऽर्थः। तुवीति बहुनामसु द्वितीयं पदम्। नि०३,१।

(३)—'समत्सु'-इति सङ्ग्रामनामसु द्वाविंशतितमम् पदम् (नि०२,१७)।

१ २ ३ १ २र ३ १ ३ २उ ३ २ ३ २ ३ १
मावाऽऽरातिरुपदसत्कदाचनास्मद्रातिःकदाचन ॥५॥ ५५

४ र र ४ १ र २ १
I शचीभिर्नाः५ शचीवसू। दिवानक्तन्दिशस्यताम्।

र १ २ १र
मावा२म्। रातिरुपदसत्कदाचना। आस्मा२त्।

१ २ १ ५ ४ ५
रातिःकदो२३४वा। चा५नो६हाइ ॥ ४ ॥ ५५

हे "शचीवसू" ! ( शचीति कर्म-नाम(१) अस्मदनुष्ठितज्योतिष्टोमादि-कर्म-धनौ ! (२) युवां "शचीभिः" अस्मदीयैः कर्मभिर्यागादिभिर्निमित्तभूतैः "दिवानक्तम्" अहनि रात्रौ च "दिशस्यतं" विसृजतं अभिमतं दत्तमित्यर्थः(३)। अस्मद्दत्तं हविः सर्वदा भक्षयन्तं वा। "वां" युवयोः "रातिः" दानं "कदाचन" सर्वदा याग-कालेऽपि अ-याग-कालेऽपि "मोपदसत्" मोपक्षीणं भूत् (दसु उपक्षये। लुङि पुषादि-द्युतादीति च्लेरङ्) न केवलं युष्मदीयम्, अपितु "अस्मद्" अस्माकमपि "राति" दानं हविरादि-

---

५५ ऋग्वेदस्य २,२,३,५।

I अश्विनोः साम।

(१)—'शची' इति कर्मनामसु द्वाविंशतितमं पदम् (नि०२,१)।

(२)—'अश्विनौ' इति वि०।

(३)—'दाशति' इति दानकर्मसु द्वितीयं पदम् (नि०३,२०)। तस्यैतद्रूपम् दिशस्यतमिति।

अथ षष्ठो।

वामदेवऋषिः।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
यदाकदाचमीढ़षेस्तोताजरेतमर्त्यः।

१र २र ३ १ २ ३ १ ३ १ ३ २ ३ १ २
आदिद्वन्देतवरुणंविपागिराधर्त्तारंविव्रतानाम्॥ ६ ॥ ५६

५ र १ २ ५र र ३ ५ २र
I यदाकदा। चा२मा२३४औहोवा। दू२३४षे। स्तो-

१र २र १ २ १ २ १ ० ३
ताजरेतमर्त्तियाः३। आदिद्वन्दे। तावरुणा२३४म्। वि-

२ ३ २ १ २र १ १ ३ ५र र
पा३४गिरा। धार्त्तारांवी२३। व्रा२ता२३४औहोवा।

३ १ १ ११
ना२३४५म्॥ ५॥

प्रदानं सर्व-विषयं दानं वा, अर्थिभ्यः "कदाचन" सर्व्वावस्थाया-मपि "मोपदसत्" उपक्षीणं माभूत् सर्वदा वर्त्ततताम्। अहमपि-सर्वदा युष्मानुद्दिश्य दद्याम्। युवामपि मदभिमतं सर्वदादत्त-मित्यर्थः।

"दिशस्यत", दशस्यतम्"-इति च पाठौ॥ ५॥ ५५

---

*"मीढ़ुषे"-इति ऋग्वे दीर्घोच्चारणम्।

---

I,II,III वसिष्ठस्य वासिष्ठस्यवा सफस्यवा, पाजस्यवा, पज्र-स्यवा ; पज्राणि त्रीणि।

II यदाकदाचमाह्वाउ। ढूषा२इस्तोता२। जराइ। तमर्त्तियः। आदिद्वन्दा। औहोइ्हा३। हा३इ। तावा२रू२३४णाम्। विपागिरा। धर्त्तारंव्या। औहो३हा३। हाइ। व्रातानाम्। इडा२३भा३४३। ओ२३४५इ। डा॥ ६॥

III यदा४क। दा४चमी। ढूषा३इ। स्तोता। जराइ। तमार्त्तिया३ः। आदाइद्वन्दा३इ। तावा२रू२३४णाम्। विपा। गिरौवाओ२३४वा। धर्त्ता। रंव्यौ वाओ२३४वा। व्रता५नाम्। हो५इ। डा॥ ७॥ ५६

"यदा कदा च" यस्मिन् काले "मीढ़ुषे" मेढ़े हविः-प्रदात्रे यजमानाय तस्य यागार्थं "मर्त्यो" मरण-धर्मा "स्तोता" स्तुति

अथ सप्तमी ।

मेध्यातिथि ऋषिः* ।

३ १र   २१ ३ २ ३ १ २
पाहिगा अन्धसोमद इन्द्राय मेध्यातिथे ।

कर्त्तोद्गाता "जरेत" स्तूयात् । "आदित्" अनन्तरमेव तस्मिन्-काले इत्यर्थः । "वरुणं" पापस्य वारकं[१] "विव्रतानां" विविधानां कर्मणां[२] "धर्त्तारं" धारकं वरुण-नामानं देवं "विपा" विशेषेण रचिकया "गिरा" स्तुत्या "वन्देत" स्तूयात् । यदा यजमानार्थ मुद्गाता स्तौति तदा वरुणमेव स्तौतीत्यर्थः । अथवा "मीढ्षे" अभिमत-वर्षित्रे वरुणाय तत् प्रीतये "यदा कदा च" यस्मिन् कस्मिंश्चित् काले स्तुत्यर्हं "मर्त्यः" स्तोतोद्गाता "जरेत" स्तूयात्[३] । "आदिदनन्तरमेव" यजमानोऽपि उक्त-लक्षणं स्वयमपि "विपा गिरा" "वन्देत" नमस्कुर्य्यात् स्तूयाद्वा ॥ ६ ॥ ५६

* 'वत्सइन्द्रमाह'-इति वि० ।

(१) 'वरुणः वृणोतीति सतः' इत्यादि नै० १०, ३ ।

(२)—'व्रतम्' इति कर्म नामसु सप्तमं पदम् (नि०२,१) ।

(३)—'जरते' इति अर्चति कर्मसु सप्तम पदम् (नि०३,१४) ।

१र　२र ३　२ ३　१　२ ३　२३ १ २　३ १　२ ३ १ २
य:सम्मिश्लोहर्योर्याहिरण्ययइन्द्रोवज्रोहिरण्ययः ॥ ७ ॥५७

४र ५ र ४　२१र　१　१ र २ र
I पाहिगाअ। धसोमा२३दाइ। आइन्द्रायमे।

१र　१　१　१र १ १र १　७
धियाता२३इयाइ। य:सम्मिश्लोहरियोर्यः। हाइरण्या-

१　२　२　२ १　५　४
या२ः। आइन्द्रोवा३ज्रो३। हिरो२३४वा। ण्याप्-

५
योर्ईहाइ ॥ ८ ॥

५र　४　५　१र　१र　२　१　र
II पा। ह्यपाही। गाअन्धसोमा२३दाइ। आइन्द्रा-

२र　१र　२　१　५र　१　र
यमे। धियाता२३इयाइ। य:सम्मिश्लो२हरियोर्यः।

इन्द्रायेति चतुर्थ्येकवचन मिदं सम्बुद्ध्येकवचनस्य स्थाने द्रष्टव्यम्। हे "इन्द्र"! "मेध्यातिथे"! मेधो यज्ञः तस्मिन् भवो मेध्यः मेध्यश्चासौ अतिथिश्चेति मेध्यातिथिः, तस्य सम्बोधनं हे मेध्यातिथे! यज्ञे भव अतिथि-भूत इन्द्र! "अन्धसः" पीतस्य

---

५७ ऋग्वेदस्य ६,३,७,४।

I,II सौभरे द्वे।

अथाष्टमी।

भर्गऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १र ३र
उभयꣳशृणवच्चनइन्द्रोअर्वागिदंवचः।
३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
सत्राच्यामघवात्सोमपीतयेधियाशविष्ठआगमत्॥ ८॥ ५८

१ ७ १ २ २ २ १ ५
हाइरख्याया २ः। आइन्द्रोवा३ज्री३। हिरो२३४वा।
४ ५
एयापूयोइहाइ॥ ८॥ ५७

सोमस्य "मदे" सति त्वमस्मदीयाः "प्रजाः" "पाहि" रक्ष। "यः" इन्द्रः "हर्योः" अश्वयोः(१) "संमिश्लः" स्व-रथे संमिश्रयिता "इन्द्रो वज्री हिरण्ययः" हित-रमणीयः यस्य रथो हिरण्ययो हिरण्मयः।

"हर्यो र्यो हिरण्यय इन्द्रो वज्री हिरण्ययः"-इति छन्दोगाः। "हर्योर्यः सुते सचा वज्री रथो हिरण्ययः"-इति बह्वृचाः॥ ७॥ ५७

---

५८ उत्तरार्चिकस्य ५,१,१४,१ = ऋग्वेदस्य६,४,३५(१८)१ = ऊहे४,२,१६—१८,२,७।

(१)—'हरी इन्द्रस्य'-इति नि०१,१५,१।

। उभयꣳशृणवच्चनाꣳइए। आइन्द्रो२अर्वागिदंवचा२३ः। होवा३हाइ। सत्राचियामघवा२न्। सो। मा पा३हाइ। ता२३४याइ। धियाशविष्ठआ२३होइ। गमात्। औ२३होवा। ह्वो५इ। डा॥१०॥ ५८

"उभयं" स्तोत्रात्मकं शस्त्रात्मकं चोभय-विधम्(१) "इदं वचो" "अर्वाग्" अस्मदभिमुखं "इन्द्रः" "शृणवत्" शृणोतु। श्रुत्वा च "सत्राच्या" अस्माकं यज्ञं पूजयन्त्या(२) "धिया" युक्तः सन् "मघवान्" धनवानिन्द्रः "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोम-पानाय "आगमत्" आगच्छतु॥

"मघवान्", "मघवा" इति च पाठौ॥८॥ ५८

। इन्द्रस्य वैयश्वम्।

१। "उभयं स्तुति प्रार्थनात्मं" इति वि०।

(२) "गदागत्या" इति वि

अथ नवमी।

अस्याः परस्याश्च मेधातिथि-मेध्यातिथी ऋषी*।

३ २ ३ १ २ २ १ २ ३ १ २
महेचनत्वाद्रि†वःपराशुल्कायदीयसे‡।

२ ३ १ २ ३ १र २र ३ २ ३ १ २
नसहस्रायनायुतायवज्रिवोनशतायशतामघ॥ ८॥ ५८

५ र ४ ५ २ ३ ५ १ र र
I महेचनोवा। त्वाअद्रा२३४इवाः। पराशुल्का।

१ ० ४ ५ ३ २ १ र २ र १
या३दायासा३इ। नस। हस्रा३। यानायुता। यवा-

२ ४ ५ १र २ १ ४ २
ज्रा इवो३। नश। ताया३। शा२३ता३। मा३४५घो-

५
६हाइ॥ ११॥

५ र २ ४ ५र ४ ५ १ र २ र १ २
II महेचा३नत्वाअद्रिवाः। पाराशुल्का। यदाया१

* 'प्रगाथइन्द्रमाह'-इति वि०।

†"त्वामद्रि"-इति, "त्वाअद्रि"-इति,‡"देयाम्"-इति च ऋग्वेदीयः।

५८ ऋग्वेदस्य५,७,१०,५।

I,II सहस्रयुतीये; प्रजापतेः महोविश्रीये वा।

१ १ २ २ ० १
सा२इ। नसहस्रा२। यनायुतायावज्रिवा२ः। नशा-

२ १ १ ३ ५२ २ २ १२
तार३या। शता२३। मा२घा२३४औहोवा। मघो-

२
विशे१॥ १२ ॥ ५९

हे "अद्रिवः"(१) वज्रवन्निन्द्र! (च नेति निपात-द्दय-समुदायो विभज्य योजनीयः) "महे च" महतेऽपि "शुल्काय" मूल्याय नाहं त्वां "परादीयसे" न विक्रीणामि (ददातेरुत्तम-पुरुषस्य कर्त्तर्येव व्यत्ययेन रूपम्।

"परा शुल्काय देयाम्"-इति बह्वृचा आमनन्ति।

हे "वज्रिवः"(२) वज्रहस्तेन्द्र! "सहस्राय" सहस्र-सङ्ख्याकाय धनाय "च न" "परादीयसे" "अयुताय" दशसहस्राय शुल्काय न परादीयसे। हे "शतामघव" बहुधनेन्द्र! "शताय" (बहुनामैतत्) अपरिमिताय धनाय च न परादीयसे न विक्रीणामि। उक्त-सङ्ख्याकाद्धनादपि त्वां न परित्यजामि। किन्तु बहुभिर्हविर्भिः परिचरामीत्यर्थः॥ ८॥ ५९

(१)—'अद्रिवः'।
(२)—'वज्रिवः' इति च "मतुवसोरुःसम्बुद्धौ बलं रूपम्।

अथ दशमी।

१ २ ३ १ ३ २३ ३ १ २
वस्याꣳइन्द्रासिमेपितुरुतभ्रातुरभुञ्जतः।

३ १ २ ३ १ २ ३ २ ३ १ २
माताचमेछदयथःसमावसोवसुत्वनायराधसे॥ १० ॥ ६०

॥ इति पञ्चम-दशति॥*

४ ५र २ २ ४ ५ ३ २ ३ ५
I वस्याꣳइन्द्रासिमे। हाउपितूः। उताभ्रा२३४तूः।

२ १ २ ३ ५ २र १ २ ३
अभूञ्जातौ। वाओ२३४वा। माताचामौ। वाओ२३४

५ २ १ २ ३ ५ २ १
वा। छदयथः। सा३मावासौ। वाओ२३४वा। वसू-

हे "इन्द्र"! त्वं "मे" मदीयात् "पितुः" जनकादपि "वस्यान्" वसीयान् वसुमत्तरोऽसि। "उत" अपिच अभुञ्जतः" अपालयतो मम "भ्रातुः" अपि त्वं वसीयानधिकोऽसि। हे "वसो"! वासकेन्द्र "मे" मदीया "माता च" त्वं च "समासमौ" समानौ सन्तौ (पुमान् स्त्रियेति पुंसः शेषः) "छदयथः"

---

६० ऋग्वेदस्य ५,७,११,१।

I इन्द्राख्याः साम।

---

* ॥ इति तृतीयः प्रपाठकः॥

२　　३　५　२ १　५　४
त्वानौ । वाऔ२३४वा । यरो२३४वा । धा५सोई-
५
व्हाइ ॥ १२ ॥६०

(अर्चतिकर्मायं)(१) मां पूजितं कुरुथः । किमर्थं ? "वसुत्वनाय" व्यापनाय "राधसे"(२) धनाय च उभयोर्लाभायेत्यर्थः ॥ १० ॥ ६०

इति श्रीसायणाचार्य्य विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तमे खण्डे—

मेषा प्रथमा ।

वसिष्ठऋषिः ।

१२र　२र　　३१ २ ३१ २
इमइन्द्रायसुन्विरेसोमासोदध्याशिरः ।
१र　२र　३२३१२　३२३२
ताᳬआमदायवज्रहस्तपीतयेहरिभ्यांयाह्योकआ ॥१॥६१

---

६१ ऋग्वेदस्य ५,२,१०,४ ।

(१)—'अर्चयति', 'अर्चयते' वा अर्चतिकर्मसु एकविंशतितमं पदम् नि० ३.१४ ।

(२)—चतुर्थ्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम् इति वि० ।

अथ द्वितीया।

वामदेवऋषिः।

३ १र ३ १ २ ३ १ २ ३ १ २
इमइन्द्रमदायतेसोमाश्चिकित्रतुक्थिनः।
१ २ ३ १र २र३ १ २ ३ १ २ ३ १ २
मधोःपपानउपनोगिरःशृणुरास्वस्तोत्रायगिर्वणः॥२॥ ६२

३ २ ५र ५ १र र
I इमा३४इ। इमइ। द्रायसुन्वा६इरादि। सोमा-
र र २र १र र र
सोदध्याशिराः। ता७आमदायवज्रहस्तपीतायाइ। ह-
१ र १ २ १ १ ३ ५र
रा२३हो। भ्यांया२३हो। हियो२३। का२आ२३४औ-
र ३ ५
होवा। ऊ२३४पा॥ १४॥ ६१॥

४ र ४ १र र
II इमइन्द्रा५मदायताइ। सोमाश्चिकित्रउक्थिनाः।

हे "वज्रहस्त"! "दध्याशिरः" दधि-मिश्रणाः "इमे" "सोमासः" सोमाः "इन्द्राय" तुभ्यं "सुन्विरे" सुताबभूवुः। "तान्" सोमान् "मदाय" मदार्थं "पीतये" पानाय "ओको" यज्ञ-सदनम् "आ" अभि "हरिभ्याम्" अश्वाभ्याम् "आयाहि" आगच्छ॥ १ ॥ ६१

---

I. सौभरम्। II गर्त्तमदम्।

अथ तृतीया।

मेधातिथि-मेध्यातिथी ऋषी*।

एके विश्वामित्र इत्याहुः।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
आ त्वा३†घमवंदुघा ऽङ्कवेगायत्रवेपसम्।

२ १ १ र २ र १
मा१धो२ःपापा२। नउपनोगिराःशा१णू२। रास्वस्तो-

२ १ २ १
२३त्रा। यगिर्वा२३णा३४३ः। ओ२३४५इ। डा॥ १५॥६२

हे "इन्द्र"! "ते" तव "मदाय" मदार्थम् "उक्थिनः" स्तोत्र-युक्ताः "इमे" सोमाः "चिकित्रे" ज्ञायन्ते दृश्यन्ते (कित ज्ञाने। कर्मणि लिट्। इरयोरे-इति रे-इत्यादेशः) किञ्च। "मधोः" मदकरस्य (कर्मणि षष्ठी) मदकर सोमं "पपानः" अत्यर्थं पिबन् अस्माकं "गिरः" स्तोत्र रूपा वाचः "उपशृणु" सम्यक् शृणु। "गिर्वणो" गीर्भिर्वननीय हे "इन्द्र"! स्तोत्राय स्तोत्र कर्त्रे मह्यं "रास्व" अभीष्टं देहि(१)। २॥ ६२

---

* 'सोमार्षम्'-इति वि०।

† "त्वा१"-इति ऋग्वेदीयः पाठः।

---

(१)—'राति'-इति दानकर्मसु चतुर्थं पदम्। नै०३,२०।

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतम् ॥ ३ ॥६३

५र र ५ २ १ ५र १ ५र
I आत्वद्यासा६बर्दुघाम्। ऊवाइगार्यत्रवेरपसम्।

१ २ २ १ २र १ ७ २
आइन्द्राम्धे३नूम्। सुदुघाम्। आ। नियार्मार२३४इ-

५ २१ २ १ २ १
षाम्। उरुधार२३राम्। अरङ्का२३र्त्ता३४३म्। ओ२३४

५इ। डा ॥ १६ ॥ ६३

अनयेन्द्रं धेनु-रूपेण वृष्टिरूपेण च निरूपयन् स्तौति।

"अद्य" इदानीं "धेनुं" धेनुरूपमिन्द्रं "नु" क्षिप्रं "आहुवे" आह्वये। कीदृशीं धेनुं ? "सबर्दुघां" पयसोदोग्ध्रीं "गायत्रवेपसं" प्रशस्यवेगां। "सुदुघां" सुखेनदोग्धुं शक्यां। "अन्यां" उक्तविलक्षणां "उरुधारां" बहूदकधारां "इषम्" एषणीयां वृष्टिं (लिङ्गव्यत्ययः) एतद्रूपेण वर्त्तमानं। "अरङ्कृतं" अलङ्कर्त्तारं पर्याप्तकारिणं वेन्द्रं चाह्वये॥ ३ ॥ ६३

६३ ऋग्वेदस्य ५,७,११,५।

I वाचः साम।

अथ चतुर्थी।

नोधाऋषिः।

१　२　३ २ ३　१ २　३ १ २　　　२ १ २
न त्वा बृहन्तोअद्रयोवरन्त इन्द्र वीडवः*।
१र　२र　३१र　२र३ २ ३ २ ३ १र　२र
यच्छिक्षसिस्तुवतेमावतेवसुनकिष्टदामिनातिते॥ ४ ॥ ६४

४ ५र　४　　४　　१　　२ १र　　२
I नत्वाबृह। तो५द्रयाः। वरन्तइन्द्रवीडा२३वाः।
२　७　　१　७　　　१र
याक्षिचासी २। स्तूवताइमा २। वतेवसू। नकिष्टा२३दा।
१र　　२　　१
मिनाता२३इता३४३इ। ओ२३४५इ। डा॥ १७॥ ६४

हे इन्द्र! "बृहन्तो" बलेन महान्तः अतएव "वीड़वः"(१)। "यच्छिक्षसि" "स्तुवते" "मावते" सर्वतो दृढ़ा अपि "अद्रयः" पर्वताः "त्वा" त्वां "न वरन्ते" बलेन न निवारयन्ति(२)। अनिवारणमेवोत्तरार्द्धेन विवृणोति—'स्तुवते' त्वद्विषयं, स्तोत्रं

* "वीलव"-इति च ऋग्वेदीयः पाठः।

६४ ऋग्वेदस्य ६,६,११,२।

I बार्हदुक्थम्।

(१)—'वीडवइत्यस्यैवार्थमनुपदं वक्ष्यति दृढाइति।
(२)—'महांतोऽप्यं इणोतिर्वारणार्थो द्रष्टव्यः'-इति वि०।

अथ पञ्चमी।

मेधातिथिर्ऋषिः।

१ २ १२उ ३ १ २ ३१र २र
कईंवेदसुतेसचापिबन्तङ्कद्वयोदधे।

३ १र २र ३ १र २र ७ २ ३ १ २
अयंयःपुरोविभिनत्त्योजसामन्दानः शिप्र्यन्धसः॥ ५॥ ६५

५ र र २ १ २ १ ३
I कईंवेदा। सुताइसा१चा२। पिबन्तङ्कद्दायो१

कुर्वते 'मावते' मत्सदृशाय मादृशाय स्तोत्रे यद् "वसु" धनं "शिक्षसि" ददासि(३)। ते तव(४) तदेतद्धनं "नकि" न कश्चित् "आ मिनाति" आभिमुख्येन हिनस्ति। [मीञ् हिंसायां। मीनातेर्निगमे(७,३,८१)इति ह्रस्वः। मावते। युष्मदस्मदोः सादृश्ये वतुब्वाच्य(५,१,६१) इति वतुप्॥

"शिक्षसि" "दित्ससि"-इति च पाठौ॥ ४॥ ६४

---

६५ उत्तरार्चिकस्य ८,२,१५,१=ऋग्वेदस्य ६,३,८,३= जहे १६,२,२०—१८,२,६।

I वाग्रम्।

(३)—'शिक्षति'इति दानकर्मसु अष्टमं पदम् नै०३,२०।

(४)—'प्रसादेनेति शेषः' -इति वि०।

१ र २ १र
दाधा२इ। अयंयःपुरोविभिनत्ताओ१जासा२। मन्दाना

२ १ ३ ५र र ३ ५
२३:ओ३। प्रा२या२३४औहोवा। धा२३४सा: ॥ १८ ॥ ६५

"सुते"(१) अभिषुते सोमे "सचा" ऋत्विग्भिः सह(२) सोमं "पिबन्तम्" एनमिन्द्रं "कोवेद" वेत्ति न कोपि वेत्तीत्यर्थः । "कत्" किंवा(३) "वयः" अन्नं(४) "दधे" धारयति(५)। "योऽयम्" इन्द्रः "शिप्री" हनुमान्(६) "अन्धसः" सोमेन "मन्दानः" माद्यमानः(७) "ओजसा" बलेन "पुरो(८)विभिनत्ति" ॥ ५ ॥ ६५

---

(१)—'सुते, सप्तम्येकवचन मिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, सुतम् अभिषुतं सोमं, सचा मरुद्भिः सह, पिबन्तम्'-इति वि० ।

(२)—'मरुद्भिः सह' इति वि० ।

(३)—'कत्, प्रथमायाश्चयम् अदादेशः कोवा, अस्मै इन्द्राय मत्तोऽन्यः' इति वि० ।

(४)—'वयः इत्यन्ननामसु पाठान्तरेण सप्तमं पदम् नै० २,७ ।

(५)—'दधे ददातीत्यर्थः'-इति वि० ।

(६)—'शिप्री, हनू नासिके वा, तद्वान् शिप्री' इति वि० "शिप्रे हनू नासिकेवा'-इति नि० नै० ६,१७ ।

(७)—मदी तृप्तावित्यस्येदं रूपम्, तृप्यन्नित्यर्थः ।

(८) 'पुरः, असुरपुरः असुरदुर्गाणीत्यर्थः'-इति वि० ।

अथ षष्ठी।

अस्याः परस्याश्च वामदेवऋषिः।*

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
यदिन्द्र शासोअव्रतं च्यावयासदसस्परि।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अस्माकमाᳪंशुम्मघवन्पुरुस्पृहं वसव्ये अधिबर्हय॥६॥६६

२ १ ४र र ५ २र र
I यदिन्द्रा२३शासो अव्रताम्। च्यावयास। दा३-
१ २ १ २ १ २
सास्पारी। वा३२। अस्माकामी। वा३२। शुम्मघवन्।
१ २ १ २ २ १
पुरुस्पृहौ। वा३२। वसाव्यायी। वा३२३। धिबो२३४
५ ४ ५
वा। हा५योई्हाइ॥१८॥६६

हे "इन्द्र"! "यद्" यस्मात् कारणात् "शासः"(१) शिक्षणीयानां यज्ञविरोधिनां शिक्षकस्त्वं तस्मात् कारणात् "सदसः" अस्मद्याग-गृहस्य "परि" परितो वर्त्तमानम् "अव्रतम्" अकर्माणं यागविरोधिनमित्यर्थः। "च्यावय" दूरं निःसारय। अपिच—

* "तौरश्रवम आर्षम्" इति वि०।

६६ आरण्यके ३,५–६।

I तौरश्रवसम।

(१) "शासयति इति वि०

अथ सप्तमी ।

१ २　२ २ ३ १ २ ३ २ ३　१ २ ३ १　२
त्वष्टानोदैव्यंवचःपर्जन्योब्रह्मणस्पतिः ।

३ १२　२२ ३ १ २ ३ १　२　३ २ ३ १ २ ३ १ २
पुत्रैर्भ्रातृभिरदितिर्नुपातुनोदुष्टरन्त्रामणवचः ॥ ७ ॥ ६७

३ २　२ २ ५　४ ५　२ १ २　२ १
I त्वष्टा३४। नोदैवियम्। वचाः। पर्जन्योब्रह्मण-

३　१२२　२१२　२　१
स्पा२३ती:। पुत्रैर्भ्रातृभिरदितिर्नुपातू२३नाः। दुष्टारा-

२　१　२　१
२३न्त्रा। मणांवा२३चा३४३ः। ओ२३४५इ। डा ॥ २० ॥ ६७

हे "मघवन्" धनवन्निन्द्र! "पुरुस्पृहं" बहुभिः स्पृहणीयम् "अस्मा-कम्" अस्मदीयम् "अंशु" सोमं "वसव्ये" वस्तव्ये निवासयोग्ये स्थाने "अधि बर्हय" अधिकं वर्द्धय। यज्ञ-गृहे याग-विरोधिनो राक्षसादीन् निःसार्य्य सोमं प्रवर्द्धयेत्यर्थः ॥ ६ ॥ ६६

"त्वष्टा" एतन्नामकः रूपाभिमानी देवः(१) "नः" अस्मदीयं

I त्वाष्ट्रीसाम।

(१)- 'त्वष्टाऋषिः' इति वि०। "त्वष्टा तूर्णमश्नुत इति नैरुक्ताः त्विषेर्वा स्याद् दीप्ति-कर्मणस्त्वक्षतेर्वा स्यात् करोतिकर्मणः। * * * अग्निरिति शाकपूणिः" इति नि०दै०२,१३-१४।

"वचः"(२) पातु। "ब्रह्मणस्पतिः एतत्संज्ञको मन्त्राभिमानी देवः(३) अस्मदीयं वचः पातु। किञ्च। "अदितिर्नु"(४) अखण्डनीया अदीना वा एतन्नाम्नी देवमाता च(५) "पुत्रैर्भ्रातृभिः" स्वकीयैः सहिता "नः"(६) अस्माकं सम्बन्धि "दुस्तरं"(७)

---

(२)—'दैव्यं देवानां भवं, वचः वाक्यं, पर्जन्यः'-इति वि०। एतन्मये दैव्यमित्यपि कर्तृपदम्, 'नः' अस्मान् इत्येव सर्वत्र कर्मपदम्।

(३)—'ब्रह्मणस्पतिर्बृहस्पतिः'-इति वि०। "ब्रह्मणः (अन्नस्य) पाता वा पालयिता वा इत्यादि" नि०दै०४,१२-१३। एषच पर्जन्यः मन्त्रलिङ्गात्, तथाहि—

"अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभियमोजसातृणत्।
तमेव विश्वे पपिरे स्वर्दृशो बहुसाकं सिसिचुरुत्समुद्रिणम्॥
(ऋ०५म०२अ०१८सू०१मन्त्रः)।

"अश्मनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पतिर्मधुधारमभियमोजसा बलेनाभ्यतृणत्तमेव सर्वे पिबन्ति रश्मयः सूर्यदृशो बहु नं सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम्"-इति च यास्ककृतं तद्व्याख्यानम्।

(४)—'नु इति पादपूरणः'-इति वि०।

(५)—"अदितिरदीना देवमाता। ***। इत्यदितेर्विभूतिमाचष्ट एतान्यदीनानीति वा"-इति नि० दै०४,२२—२३।

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥
(ऋ०१म०८अ०४सू०१०मन्त्रः)।"

(६)—'नः अस्मान्'-इति वि०।

(७)—'द्वितीयैकवचने द्वे दुष्टरं नामणम्, पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम् दुस्तरात् नामणात् व्यसनः सकाशाद्रक्षत्वित्यर्थः' इति वि०।

अथाष्टमी ।

बालखिल्या ऋषयः* ।

१ २ ३ २ ३ १ २ ३ १ २　३ १ २
कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे ।

३ १२ २२ ३ १ ३ २ ३ ३ १ २ ३ १ २
उपोपेन्नुमघवन्भूयइन्नुतेदानं देवस्यपृच्यते ॥ ८ ॥ ६८

५ र र ५र २ ३ ५ २
I कदाचनास्ता६रीरसाइ । नेन्द्रासा२३४श्चा । साइ-

कर्म विरोधिभि स्तरीतु मश्नक्यं "वामाणं"(८) रक्षणीयं "वचः" पातु ॥ ७ ॥ ६७

हे "इन्द्र !" त्वं "कदाचन(१)"कदाचिदपि "स्तरीः" हिंसको "नासि" । यद्वा । स्तरीर्निवृत्त-प्रसवा गौ स्तथाविधो न भवसि । सा यथा वत्साभावात् गृहं प्रति नागच्छति न तथा करोषीत्यर्थः।

---

* वामदेवस्यार्षम्'-इति वि० ।

---

६८ ऋग्वेदस्य ६,४,१८,२ = यजुर्वेदस्य ३,३४—८,२ ।

I अदितिः साम ।

(८)—वामणं प्रजुषधकर्मेति वि०-सम्मतः ।

(१)—विवरणमते 'कदा, च, न' इति पदत्रयम्, अमरकोशम् 'न शब्द अपिशब्दार्थे, कदाचिदपि' ।

अथ नवमी।

मेध्यातिथिऋषिः*।

३ १र २र ३ १ २ ३ १ २

युङ्क्ष्वा* हि वृत्रहन्तम हरी इन्द्र परावतः।

२ १ २ ३ १ २ ३ २ ३ २ ३ १ २

अर्वाचीनो मघवंत्सोमपीतय उग्र ऋष्वेभिरागहि॥ ६॥ ६९

२ ५ १ ४र १र ४ ५ २र ४५ १ २ ५

दाशू२३४षाइ। उपोपेन्नुमघवन्भूयइत्। हाइनू२३४ताइ।

२ ३ ५ २ १ ५ ४ ५

दानन्दा२३४इवा। स्यपो२३४वा। च्यापूतो६हाइ॥२१॥६८

किन्तु, "दाशुषे" हविर्दात्रे यजमानाय "सश्चसि"(१) सङ्गच्छसे अस्मान्। हे "मघवन्" धनवन्निन्द्र! "देवस्य" द्योतनादि-गुणकस्य तव भूयः प्रभूतं दानं "उपोपेत् पृच्यते" (अपर उपशब्दः पूरणः) उपपृच्यत(२) एव अस्माभिः संपृच्यत इत्यर्थः॥ ८॥ ६८

---

* 'मेधातिथिरिन्द्रमाह'-इति वि०।

* "युक्ष्वा"-इत्यननुनासिकः पाठो बह्वृचाम्।

---

६९ ऋग्वेदस्य ५, ७, २८, २।

(१)—'सश्चति गतिकर्मसु पठितः, तथापि दाशुष इति सम्प्रदानश्रुतेर्दानार्थोऽत्र'-इति वि०।

(२)—'उपपृच्यते, उपेत्य भवति, यावत् पूर्वदानं नैव क्षीयते तावदेव ददासीत्यर्थः'-इति वि०।

१   १ २ १   २ र   ४ २

I आइहो२। आइहिहाइ। यंत्वाहिवा३र्त्रा३ह-

३ ४   १ र २   १ २   ३ २   १र २

न्तम। हारोइन्द्र। परावा१ता२३४:। अर्वा३४चीनाः।

१ २ १र   २   ३ २   ३ २

माघवंत्सो। मपाइना१या२३४इ। उग्रा३४ऋषा३इ।

२ १   ५   ५   ५

भिरो२३४वा। गा५हो६हाइ॥ २२॥ ६९

हे "वृत्रहन्तम!" वृत्रं हतवान् वृत्रहा अतिशयेन वृत्रं हतवान् वृत्रहन्तमः यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः(१) (अनो नुट् (८,२,१६) इति तमपो नुट्) हे तादृशेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्व" (हिरवधारणे) आत्मीये रथे योजयैव। हे "मघवन्!" धनवन् "उग्रः" उद्गूर्णबलस्त्वं "सोमपीतये" सोमस्य पानार्थं (दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्(२)) "अर्वाचीनो" ऽस्मदभिमुखः "ऋष्वेभि" ऋष्वैर्दर्शनीयै "र्मरुद्भिः" सार्द्धं "परावतः" (दूरनामैतत्) दूरे वर्त्तमानात् द्युलोकात् "आगहि" आगच्छ॥ ८॥ ६९

I आजीगर्त्तम्।

(१)—'अत्यर्थं घ्नन् वा हन्तीत्यर्थः'-इति वि०।

(२—निघण्टु तृतीय षड्विंशत्तिम दृश्।

अथ दशमी

नृमेधऋषिः।

२ ३ १र २र ३ १ २
त्वामिदाह्योनरोपीप्यन्वज्रिन्भूर्णयः।
१२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३र २
सइन्द्रस्तोमवाहस*इहश्रुध्युपस्वसरमागहि॥ १०॥ ७०

३र ४ ५र २ ३ ४र ५ ५ २१ २ १
I त्वामिदा। ह्योइ। ह्येयोनरा६इ। अपाइप्यन्वा।
२ ३ ५ १ २ १र २र १ २
ज्राइन्भूर्णा२३४याः। सइन्द्रस्तोमवाहसः। इहाश्रुधा।

हे "वज्रिन्!" इन्द्र! त्वां "भूर्णयो" हविर्भरणशीला(१) "नरः" कर्मणां नेतारो यजमानाः(२) "इदा" अद्य "ह्यः" पूर्वद्युश्च(३) "अपीप्यन्" सोमममपाययन्(४)। हे इन्द्र! स त्वं

* "स्तोमवाहसाम्"-इति ऋक्पाठः।

७० उत्तरार्चिकस्य २,१,१४,१ = ऋग्वेदस्य ६,७,३,१ = ऊहे२,४—१८,२,८।

I माधुच्छन्दसम्।

(१)—'तस्मिन्नेव वेदिप्रदेशे कर्मकरणार्थं भ्रमणशीलाः'-इति वि०।

(२)—'ऋत्विगलक्षणा मनुष्याः'-इति वि०।

(३)—सर्वकालमित्यर्थः।

(४)—'प्यायी श्रोप्यायी वृद्धौ इत्यस्येदं रूपम् वर्द्धयन्तीत्यर्थः'-इति वि०।

३र २   ३र २   १  २  ३र २  ३र २  १र
औहोऽ४वाहाइ। उपाखासा। औहोऽ४वाहा। रमा-
२  १
गाः हाऽ४३इ। ओऽ२३४५ई। डा॥२३॥ ७०

"स्तोमवाहसः" (षष्ठार्थे प्रथमा) स्तोमवाहसां स्तोत्रवाहकाना-मस्माकं स्तोत्रम् "इह" यज्ञे "श्रुधि" शृणु "स्वसरं" गृहं च। (दुर्याः स्वसराणीति (नै० ३,४,१०) गृहनामसु पाठात्) "उपाश्नु" उपागच्छ॥ १०॥ ७०

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोग्याख्याने तृतीयाध्यायस्य सप्तमः खण्डः॥ ७॥

---

अथाष्टमे खण्डे—

सैषा प्रथमा।

द्वयोर्वसिष्ठऋषिः।

१ २   ३ २ ३ १ २   ३ २ ३ २
प्रत्यु अदर्श्यायत्यू३च्छन्ती* दुहितादिवः।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २   ३ १ २
अपोमहीवृणुतेचक्षुषातमोज्योतिष्कृणोतिसूनरी॥ १॥७१

* "व्यु१च्छन्ती"-इति ऋग्वेदीयः पाठः, इहत्योपि सायण-सम्मतः परं न क्वापि पुस्तके तथोपलभ्यते।

७१ उत्तरार्चिकस्य १,२,१४,१=ऋग्वेदस्य ५,६,१,१= ऊहे२१,२,८—१२--१५=ऊह्ये१,३—५,२।

२ १ ३ २ १ ३ २
। प्रताइ। इहा। आइ। इहा। उवद। शौ३-

१ २ १ ३ २ १ ३ १ र
आयती। उक्था। इहा। आ। इहा। तीद। हो-

१ ७ १ ७ १ ३ २ १ ३ २
३तादिवा २:। आदिवा २:। अपो। इहा। ओ। इहा

१ र२ र १ ७ १ ७ र १
माहोवृणुते च। त्त्पातमा २:। आतमा २:। ज्योताइ।

३ २ १ ३ २ र १ ७ १
इहा। आइ। इहा। कृणो। तौ३सूनरी २। ओनरी-

१
२३४३। ओ२३४५इ। डा॥२४॥७१

"आयती" आगच्छन्ती "व्युच्छन्ती" तमांसि विवासयन्ती वर्जयन्ती "दिवः" द्युलोकस्य सूर्य्यस्य(१) "दुहिता" पुत्री(२) एवंभूता उषाः "प्रत्यदर्शि" सर्वैः प्रतिदृश्यते (उद्गति पूरणः)

। उषसः।

(१) -यद्यपि द्यौर्नहि सूर्य्यपर्य्यायः तथापि द्युवाचक स्वादि-पदस्य तत्पर्य्यायत्वाद्-स्यापि तत्समत्वम्। तथाहि—"स्वः, पृश्निः, नाकः, गौः, विष्टप्, नभः-इति षट् साधारणानि" इति नि० नै०१,४। "साधारणान्युत्तराणि षट् दिवश्चादित्यस्य च"-इति च यास्ककृत तद्व्याख्यानम् नै० नै०२,१३। वस्तुत आदित्यस्य द्युस्थत्वात् द्युवाचक-शब्देन द्युशब्देन चोपचारात् सूर्यग्रहः। तदुक्तम् "सूर्यो द्युस्थानः" नै० दै० १.५।

(२) -'द्युलोके जायमानत्वात् दिवः दुहिता'-इति वि०। अतएव प्रजापत्यापर-पर्य्यायस्यादित्यस्य प्रतिदिनं प्रथमं पश्चात् भासमानत्वात् कन्या बलात्कारापवादः।

अथ द्वितीया ।

३ १ २ ३ १ २ ३ १ २
इमाउवान्दिविष्टयउस्राहवन्तेअश्विना ।

३ १ २ ३ १ २ २ १ २ ३ १ २
अयवामह्वेवसेशचीवसूविशंविशꣳहिगच्छथः ॥ २ ॥ ७२

२ र र ३ ५र २ र र ३
I इमाउवान्दिविष्टयार२३४ऐही । उस्राहवन्तेअश्विना

सैषा "मही" महती । यद्वा मही महत्तमो नैशं तमोन्धकारं (अप उ इति निपातद्वयसमुदायः । अपेत्यस्यार्थे) "अपोवृणुते" अपवृणोति । कथं ? "चक्षुषा" दर्शनेन । एवं कृत्वा "सूनरी" । जनानां सुष्ठु नेत्री(३) "उषाः" "ज्योतिः" प्रकाशं "कृणोति" करोति।

"अपो मही वृणुते चक्षुषा" इति छन्दोगाः । अपो महि व्ययति चक्षसे" इति बह्वृचाः ॥ १ ॥ ७१

"इमाः" "दिविष्टयः" दिवमिच्छन्त्यः प्रजाः ऋत्विजोपि

७२ उत्तरार्चिकस्य ६,२,१५,१ = ऋग्वेदस्य ५,५,२१,१ = आरण्यके ४,१,१५—१६ = ऊहे २१,२,१० = ऊह्ये १,४-५,३ ।

I अश्विनोः साम ।

(३) --"शोभनाः नरः यस्याः स्तावकर्तेन सा सूनरी, शोभनैः स्तावकैर्नरैः सम्बध्य त्यर्थः" इति वि० ।

अथ तृतीया।

अश्विनौ वैवस्वतावृषी।

२ ३ १ २ ३ १ २ ३ १ २

कुष्ठः कोवामश्विनातपानादेवामर्त्त्यः।

५र २ र र र ५र १

२३४ऐही। अयंवामह्ववसेशचीवसू२३४ऐही। विश्वंवि-

३ ५र ४

श्वंहिगच्छथा२३४ऐही। हो५इ। डा॥२५॥७२

(उद्गीतिनु चार्थं। हे "अश्विना" अश्विनौ!(१) उस्रौ! वासकौ!(२) "वां" युवां "हवन्ते" आह्वयन्ति। अयमहं वसिष्ठोपि हे "शचीवसू" कर्मधनौ! "वां" युवां "अवसे" ऽस्मद्रक्षणाय युवयोस्तर्पणाय वा "अह्वे" आह्वयामि। किमर्थमेवं प्रजामध्यय अपीत्यादरोक्तिरिति तत्राह। "विश्वंविश्वं हि गच्छथः" हि यस्मात् सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छथः खलु, तस्मादेव मुच्यत इति॥२॥७२

(१)—"अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः। तयोः काल ऊर्द्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनु तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यः।"-इति नै० दै० ६.१।

(२)—'उस्रेति गोनाम। लुप्तोपमं चेदं द्रष्टव्यम् उस्रा इव। यथा गावः स्वान् वत्सकान् ह्वयन्ति आह्वयन्ति तद्वत्' इति वि०।

३ १ २ ३ १र २र ३ २ ३ २ ३ १ ३ १ २
घ्नतावामस्नयाक्षयमाणोंऽशुनेत्थमुआद्दन्यथा॥ ३॥७३

४ ५ ४र ५र र ४ १ र २र र १ ७ २
I कुष्ठःकोवामश्विनाश्चा। तापानोदे। वामक्षीयाः३।

१ २ २ ३ २ ३र २ २ १ २ २
होवा३हा३४इ। घ्नता३४वामा१। आया३। होवा३हा

३ २ ३र २ १ २ १ २ २
३४इ। क्षपा३४माणाः। आऽशूना३। होवा३हा३४इ।

३ २ ३ २ १ ३ २ ५र र २
इत्था३४मुवा३न्। उवा२न्। यथा३४औहोवा। ऊ२-

५
३४पा॥ २६॥ ७३

"अश्विना" अश्विनौ! हे देवा देवौ द्योतमानौ! "वां" युवां "कुष्ठः" कौ पृथिव्यां वर्त्तमानः "को" मर्त्यः मरण-धर्मा-मनुष्यः स्तोता "तपानः" तापनः प्रकाशको भवति इति शेषः। न कश्चिच्छक्नुयादित्यर्थः। "वां" युवयोरर्थाय "अस्नया" (अस्न-शब्दाङ्गिसो यादेशः(१) व्याप्तैरभिषवसाधनैरश्मभिः(२) "घ्नता" हन्यमानेन अभिषूयमाणेन "अंशुना" सोमेन। यद्वा। अस्मा-

I अश्विनोः संयोजनम्।

(१)—"सुपांसुलुक पूर्वसवर्णाच्छेयाडाड्याजालः। (७,१,३९)

(२)—'अस्नया चुधा' इति वि०।

अथ चतुर्थी ।

प्रस्कण्व ऋषिः* ।

३ २ ३ १ २ ३ २उ ३ १ २
अयंवाम्मधुमत्तमःसुतःसोमोदिविष्टिषु ।

१ २ ३ १ २ ३ १२ २र ३ १ २
तमश्विनापिबतन्तिरोअन्ह्यंधत्तꣳरत्नानिदाशुषे ॥ ४ ॥७४

३ २ ५र ४ ५ ५ २ १
I अया३४म् । अयंवाम्म । धुमत्ताईमाः । सुतः

२ ६२ १ २ ५ २ ५ २ ३२ २
सोमो२दिविष्टिषु । ओ३हा । ओ३हा३४ । ओहा ।

भिरभिषुतेन "घृता" युवामभिगच्छता "अंशुना" सोमेन "चय-माणः" चीयमाणो यजमानः "इत्थमु" इत्थमेव भवति अत्यन्तं समृद्धो भवतीत्यर्थः । "आदन्" यथा अभिमतान्नरसादिभक्षण-वान् राजादिरिव । स यथा प्रवृद्धा दृष्टान्तविषयो भवति तद्वदयमपि भवतीत्यर्थः ॥ ३ ॥ ७३

हे "अश्विना" अश्विनौ ! "वां" युवयोः "दिविष्टिषु" दिवएषणेषु यज्ञेषु "अयं" पुरोवर्त्ती सोमः "सुतो" अभिषुतः । को-

* 'कुत्सस्यार्षम्' इति वि० ।

७४ ऋग्वेदस्य १,४,१,१ ।

I अश्विनोः साम ।

अथ पञ्चमी ।

मेधातिथि-मेध्यातिथी ऋषी* ।

२　३ १ २ ३ १ २ ३　२ ३ १ २ ३ १ २
आ*त्वा सोमस्य गल्दया सदा याचन्नहं ज्या† ।
१　२ ३ १र　२र　　३ १र　२र ३ १ २
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ ५ ॥७५

१　र　र　२　१　२　१　२
तामश्विना पिबतन्तिरो अह्नियम् । ओ३हा । ओ३हा३४ ।
३र २　१　२　१　२　१　२　३र २
ओहा । धत्ता२रा१ना २ । ओ३हा । ओ३हा३४ । ओहा ।
१　१　३　५र र　३　५
निदा२३ । शु२षा२३४ओहावा । ऊ२३४पा ॥ २७॥७४

इशः ! "मधुमत्तमः ।" अतिशयेन माधुर्यवान् । "तिरोअन्ह्य"(१) तिरोभूते पूर्वस्मिन्दिनेऽभिषुतं तं सोमं "पिबन्त" । "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि रमणीयानि धनानि "धत्त" प्रयच्छत ।

"दिविष्टिषु" "ऋतावृधे" इति च पाठौ ॥ ४ ॥ ७४

* 'प्रगाथस्यार्षम्' इति वि० ।

* "मा"-इति । † "गिरा"-इति च ऋग्वेदीयः पाठ ।

७५ ऋग्वेदस्य ५,७,१३,५ ।

(१) अहनिभवम् अन्ह्यम् । 'तिरो अन्ह्यं तृतीयसवनिकम् । अथवा तिर इति पाप्मना, प्राप्तं यागादिनि भवः । तिरो अन्ह्यः, त तिरो अन्ह्यम्' इति वि० ।

५र र र २ १ ३ ५र र १ ५र
I आत्वासोमा। स्य। गल्दा२या२३४औहोवा। सदा-

१र २१ १ २ ३ ५ २ १ २र
२याचन्नहन्त्रिया२३। भूर्णाओ२३४वा। मृगन्नसवनेषुच्-

हे "इन्द्र!" "त्वा" त्वां "सवनेषु" यज्ञेषु "सोमस्य" "गल्दया"(१) गालनेन आस्रावणेन। "ज्या" जयशीलया स्तुत्या च (अतएव गिरेति बह्वृचाः पठन्ति(२)) तया युक्तो "अहं" "सदा" सर्वदा "याचन्" याचमानः सन् "आचुक्रुधं" मा चुक्रुधं क्रमोधयानि (आ इति प्रतिषेधार्थः, निपातानामनेकार्थत्वात्। अतएव बह्वृचाः मात्वेत्यामनन्ति) बहुशो याचमाने त्वयि क्रोधो जायते तं सोमगालनेन स्तुत्या चापनयामीत्यर्थः। कीदृशं त्वां? "भूर्णिं" भर्त्तारं(३) "मृगं न" सिंहमिव भीमं (स्वामिनः इन्द्रस्य

I सोमसाम।

(१)—'गल्दा'-इति वाङ्नामसु चतुःपञ्चाशत्तमं षट्कम् (१,११)। 'गल्दा धमनयो भवन्ति गलन मासु धीयते'-इति नैरुक्तम (६,२४)।

"आत्वा विशन्त्विन्दव आगल्दा धमनीनाम्"—

(ऋ०८म०१अ०१सू०२०मन्त्रार्द्धः)

आगलना धमनीनाम्-इति तु नैरुक्तम्। मात्वा सोमस्य गल्दयेति बह्वृचपठितमन्त्रव्याख्यानावसरे 'सोमस्य गालनेनेति यास्कश्च।

(२)—आशब्दोऽवगिर्वाचीत्यत्र गिरेति बह्वृचपाठ एव मानम्।

(३)—'भ्रमणशीलम्'-इति वि०।

अथ षष्ठी ।

देवातिथि*ऋषिः ।

१　२　३　२　३　२उ　३　१　२
अध्वर्यो द्रावया त्व ꣳ सोममिन्द्रः पिपासति ।

१　२　३　२　३　१　२　३　२　३　१　२　३　२
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥ ६ ॥ ७६

१र　२　१　र　२　१　२
क्रुधम् । कई्आ२३नाम् । नायाचिषत् । इडा२३भा

१
३४३ । ओ२३४५इ । डा ॥ २८ ॥ ७५

४　र　र　४　१र　१
I अध्वर्यो द्रा५वयातुवाम् । सोममिन्द्रा२ः । पिपा-

याचने लौकिकं न्यायं दर्शयति) –लोके को वा पुरुषः "ईशा-
नम्" ईश्वरं स्वामिनं न "याचिषत्' न याचेत सर्वएव हि या-
चते । अतोऽहमपि त्वां स्वामिनं याचे इति भावः ॥ ५ ॥ ७५

हे "अध्वर्यो !" अध्वरस्य नेतस्त्वं "सोमं" द्रावय उत्तरवेदि-
लक्षणं स्थानं प्रापय । यद्वा । रसात्मना द्रवण-शीलं कुरु ।

---

* 'देवातिथिरिति वि० पाठः ।

---

७६ ऋग्वेदस्य ५,७,३२,१ ।

I आजमायवम् ।

अथ सप्तमी।

द्वयोर्वसिष्ठऋषिः ।

२ ३ १ २ ३ २ ३ १ ३ १ २

अभीषतस्तदाभरेन्द्रज्यायःकनीयसः।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

पुरूवसुर्हिमघवन्बभूविथभरेभरेचहव्यः ॥ ७ ॥ ७७

२ १ २ २ १ २ २ १ २ २

सा१तौ२। उपो२नूनं ययुजेवृ। षाणा१हारी२। आ

१ २ ३ २ १ २ ४ ५ ४

चाजा२३गा। मवृत्रहा। औ३होवा। होपुइ। डा॥

॥ २८ ॥ ७६

अभिषुण्वित्यर्थः। किं कारणमिति चेत्? "इन्द्रः" "पिपासति" सोमं पातु मिच्छति (त्वयैतत्कथमवगतमितिचेत्तत्राह-"वृषणा" वर्षितारौ युवानौ वा। "हरी" अश्वौ "नूनं" अद्य "उपो युयुजे" उपगम्यैव सारथिर्योजितवान् रथे। "वृत्रहा" वृत्रस्य हन्ता(१) इन्द्रस्य "आ जगाम" आगतवान् ॥

"उपोनूनं" "उपनूनम्"-इति पाठौ ॥ ६ ॥ ७६

७७ ऋग्वेदस्य ५,३,२१,४।

(१)—'वृत्रहा मेघस्य हन्ता'-इति वि०।

I अभोषतस्तदाहाउ। भरा। इन्द्रज्यायः कनीया २३साः। पुरूवसुर्हिमघवन्बभूवा२३इया। भराइभार२३रे। चहव्यः। इडा२३भा३४३। ओ२३४५इ। डा॥

॥ ३० ॥ ७७

हे "ज्यायो" ज्यायन्निन्द्र! ("आमन्त्रितं पूर्वमविद्यमानवदिति" इन्द्रपदस्याविद्यमानवद्भावात् ज्यायइत्यस्य सर्वानुदात्तत्वाभावः। नकारस्य रुत्वं(१) व्यत्ययेन नुमभावो वा(२) "कनीयसः" सतो मम "तत्" प्रसिद्धम्। "अभ्याभर" अभ्याहर। हे "मघवन्" धनवन्निन्द्र! "पुरूवसुः" बहुभिर्वननीयो "बभूविथ" असि। "भरे भरे" सङ्ग्रामे(३) "च" "हव्यो" ह्वातव्यश्च बभूविथ(४)॥

"मघवन् बभूविथ"-इति छन्दोगाः। 'मघवन्त्सनादसि"-इति बह्वृचाः॥ ७॥ ७७

---

I समुद्रप्रेयमिधम्।

(१)—"रुमत्वद्धौ (८,३,१)"-इति।

(२)—"व्यत्ययोबहुलम् (३,१,८५)"-इति।

(३)—'भरे' इति सङ्ग्रामनामसु पञ्चम नैघण्टुकम् (२,१७)।

(४)—'एतदुक्तं भवति—यस्मात् ईश्वरः प्रभुश्च तस्मादाभरेत्यर्थः'-इति वि०।

अथाष्टमी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १र २र
यदिंद्र यावतस्त्वमेतावदहमीशीय।

३ २ ३ १ २ ३ १ २ ३ १ २
स्तोतारमिद्दधिषेरदावसो नपापत्वाय रंसिषं ॥ ८ ॥ ७८

२ १ ४र ५ २र १र र र
I यदिन्द्रा२३यावतस्तुवाम्। एतावदहमीशीया।

र र २ २र १ २ १र
स्तोतारा२३मीत्। दोधिषे। रदावा१सा२उ। नपापा२३

५ १ २ ३ ५ ४ ५
४त्वा। यारौवाओ२३४वा। सा५इषोइ्हाइ ॥ २१ ॥

५ २ २र ३ ४ ५ १ २ १ २ ४ ५
II यदिन्द्रयावतस्तुवाम्। आइता३। वादा३हामी।

हे "इन्द्र!" "यद्" यतो(१) "यावतो" धनस्य "ईशिषे" "एतावत्" (षष्ठ्यालुक्(२)) एतावतो धनस्य "अहमीशीय" ईश्वरो

७८ उत्तरार्चिकस्य ८,१,१२,१ = ऋग्वेदस्य ५,३,२०,३ = ऊहे २२,२० = ऊह्ये ५,२०—५,२२।

I, II वैरूपे द्वे।

(१)—'यच्छब्दो यदिशब्दसमार्थे' इति वि०।
(२)—सुपां सुलुगित्यादिना।

अथ नवमी ।

नृमेधऋषिः ।

१ २ ३ १ २　३ १र २र　३ १ २
त्वमिन्द्र प्रतूर्त्तिष्वभिविश्वाअसिस्पृधः ।

१ २　१ २र १　४ ५र　१ २
शाया३ऽ१२। स्तोतारामो२३त्। दधिषेरदा। वासा३

१ २र १　१ २ ३ ५ ४
ऽ१२३। नापापात्वार३। यारौवाओ२३४वा। सा५-

५
इषोऽ६हाइ ॥ ३२ ॥ ७८

भवेयम् । हे "रदावसो !" रदति ददाति वसूनीति रदवसुः(१) तादृश हे इन्द्र ततोऽहमस्मदीयं "स्तोतारम्" "इत् दधिषे" धनप्रदानेन धारयेयमेव । "पापत्वाय" चीणत्वाय(४) "न रंसिषं न दद्याम् ।

"स्तोतारमिद्दधिषेरदावसोनपापत्वायरंसिषम्"-इति छन्दोगाः । "दिधिषेयरदावसोनपापत्वायरासीय"-इति बह्वृचाः ॥ ८ ॥ ७८

(१)—रदावसो इति दीर्घमध्यपाठोऽस्ति क्वचि । "द्व्यचोऽतस्तिङः"-( ६,३,१३५,)"-इति तत्साध्यम् ।

(४)—'पापभवाय पापात्मानः'-इति वि० ।

३ १ २ ३ १ २ ३१ २ ३ १ २ ३१
अशस्तिहाजनितावृत्रतूरसि*त्वं तूर्य तरुष्यतः ॥ ६ ॥ ७६

४ ५ ४ ५र ४ ५ १ २र
। त्वमिन्द्रोहाइ। प्रतूर्तिष्वोवा। अभिविश्वाः।
१ २ १ २र र १ २
असाइस्पा१र्धा२ः। अशस्तिहाजनितावृ। त्रतू१रा-
१ २ ३ २ १ २ ४ ५ ४
सा२इ। त्वां तू१र्या२। तरुष्यता। औ३होवा। हो-
५इ। डा ॥ ३३ ॥ ७६

हे "इन्द्र!" "त्वं" "प्रतूर्त्तिषु" सङ्ग्रामेषु(१) "विश्वाः" सर्वाः "स्पृधो" युद्धकारिणीः शत्रुसेनाः(२) "अभ्यसि" अभिभवसि क्षिप्र। हे "तूर्य!" शत्रूणां वाधक इन्द्र! त्वम् "अशस्तिहा" देवानामशस्तीनां हन्तासि। "जनिता" असुरेभ्यः अशस्तीनां

* "विश्वतूः"-इत्यपि पाठः क्वचिदृग्वेदीयपुस्तके दृश्यते।

७६ उत्तरार्च्चिकस्य ८,१,८,१ = ऋग्वेदस्य ६,७,३,५ = आरण्यके ८,१,३४।

I वैश्वदेवम्।

(१)---प्रकर्षेण तूर्यन्ते हिंस्यन्ते यत्र, स प्रतूर्त्तिः सङ्ग्रामः।

(२)---'स्पृधः'-इति सङ्ग्रामनामसु ऊनविंशतितमं नैघण्टुकम् (२,१७)। स्पर्धं कुर्वन्ति इति स्पृधयतेः क्विपि स्पृधः सङ्ग्रामकारिणीः सेनाः।

अथ दशमी।

नोधाऋषिः*।

१र २र३१र २र ३१र १र३ १ २
प्रयोरिरिक्ष*ओजसादिवःसदोभ्यस्परि†।
१ २ ३१२ ३ १ २३२३१ २
नत्वाविव्याचरजइन्द्रपार्थिवमतिविश्वंववक्षिथ‡ ॥ १० ॥८०

॥ इति द्वितीय-दशति ॥

जनयिता चासि। "वृत्रतः"(३) सर्वस्य शत्रुवर्गस्य हिंसिता चासि। "तरुणतः" बाधकांश्च(४) बाधमानोसि ॥ ८ ॥ ७९

* "मेधसआर्षम्" इति वि०।

* "प्ररिरिरिक्ष"-इति
† "दिवोअन्तभ्यस्परि"-इति
‡ "पार्थिवमनुस्वधांववक्षिथ"-इति च

ऋग्वेदीयाः पाठाः।

८० ऋग्वेदस्य ६,६,११,५।

(३)—नरिति नूर्यतेर्हिंसार्थस्य रूपम्।

(४)—तरुष्यतिर्वधकर्मा तस्येदं रूपम, तथाहि—"वनुष्यतिर्हन्तिकर्मा"-इत्यादि "तरुष्यतिरप्येवं कर्मेति नैरुक्तं द्रष्टव्यम् ५,२। विवरणकारस्तु 'तरुपतिर्वधकर्मा, तरुषन्तु सिञ्चन्ति तान् तरुष्यतः (ये त्वां कर्म्म सिञ्चन्ति तान) प्रतिहिंसेत्यर्थः' इति व्याचष्टे।

४ र र ५ २ १ ११र १
। प्रयोरिरिचओजसा६इ। दिवः सदोरभ्यस्परि। न

७ २र ऽ २ १ २र ऽ २
त्वाविव्या। औहोइवा। चा। रजः। औहोइवाइ।

१र २ १ २ १
इपार्थिवाम्। अतिवार३इश्वाम्। वावक्षिथ। इडार-

२ १
३भा३४३। ओ२३४५इ। डा॥ ३४ ॥८०

हे "इन्द्र!" यस्त्वं "दिवो" द्युलोकस्य "सदोभ्यः" स्थानेभ्यः(१) परिपर्यन्तेभ्यः "ओजसा"बलेनैव "प्र रिरिचे" प्रकर्षेणातिरिक्तो भवसि(२) (रिचेर्लटि बहुलञ्छन्दसीति श्लुः। प्रत्ययस्वरः) किञ्च। हे इन्द्र! "पार्थिवं" पृथिव्यां भवं "रजो" लोकः "त्वा" त्वां महता स्व-शरीरेण "न विव्याच" न व्याप्नोति (द्यावापृथिवीभ्यामपि स्वतः स त्वं बलेन समर्थोऽसीत्यर्थः) एवम्भूतः स त्वम् अस्मान् "विश्वम्" "अति" अतिक्रम्य "ववक्षिथ"।

---

I पुरीषम्।

(१)—'दिवः अवयवभूतानि सदःस्थानानि तेभ्यः। पञ्चमीनिर्देशात् आगत्येति वाक्यशेषः'-इति वि०।

(२)—'रिष हिंसायामित्यस्य मध्यमपुरुषैकवचने एतद्रूपं, यस्त्वं प्रकर्षेण हिंससीत्यर्थः। काम् सामर्थ्याच्छत्रून्'-इति वि०।

वोढमिच्छ(१) (वहेः सन्नन्तस्य छान्दसे लिटि रूपं मन्त्रत्वादाम-भावः ॥

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्याष्टमः खण्डः ॥ ८ ॥

॥ इति बार्हतमैन्द्रम्(१) ॥

असाविदेवमेकोनत्रिंशत्तासु प्रवोमहे ।
त्रिपदोक्ताविराडन्यास्त्रिष्टुभोऽष्टोर्ध्वविंशतिः(१) ।
ऐन्द्रीषु तासु तार्क्ष्यस्य स्तुति रेषा त्यमुष्विति ।
पर्वतेन सहेन्द्रस्य गौरिन्द्रापर्वतेत्यपि(१) ॥

(१)—'ववचिथ'-इति महन्नामसु चतुर्दशं नैघण्टुकम (३,३) अतएव 'महान् भवसी-त्यर्थः'-इति वि० ।

(१)—इन्द्रदेवताका बृहतीछन्दस्काः सन्निवेशे मन्त्रास्तेषां प्रकरणं समाप्तमित्यर्थः ।

(१)—असावि देवमित्यारभ्य कोऽअर्षति ऋक्पर्यन्तं एकत्रिंशत्, तत्र असावीत्यारभ्य ततचुरित्यन्तास्तृतीयदशदात्मका नवमखण्डात्मका वा ऋचो दश, ततः अवद्रप्सो इत्यारभ्य ओषधीष्वित्यन्तास्चतुर्थदशदात्मका दशमखण्डात्मका वा ऋचो नव, ततः त्यमुष्वित्यारभ्य सजीवादित्यन्ताः पञ्चमदशदात्मका एकादशखण्डात्मका वा ऋचो दशेति सङ्कलनयोनत्रिंशत् । तासु ऋच प्रवोमहे-इति तु षोडशतमा, त्रिपदा इयं विराट् इत्युक्ता त्रिपाद्विराट्छन्दस्का इति पूर्वाचार्यैः कथितेत्यर्थः । 'अन्याः अष्टोर्ध्वविंशतिः अष्टाविंशत्यृच ऋचः त्रिष्टुभः । इति सम्प्रति व्याख्यास्यमानानामृचां छन्दः-सङ्केतः ।

(२)—ऐन्द्र-पर्व-गतानान्तु प्रकरणफलादैन्द्रत्वं सिद्धमेव, तासु ऐन्द्रीषु ऋचु त्यमुषु-इति विंशतितमा ऋक्, एषा तार्क्ष्यस्य मध्यमस्थानाग्निविशेषस्य । तदाह यास्कः--"तार्क्ष्यः त्वष्ट्रा व्याख्यात (दै०४.२७)" माध्यमिकस्त्वष्टा त्याष्टमेऽ.म च स्थाने समाम्ना-

तत्र नवमखण्डे—

सैषा प्रथमा।

द्वयोर्वसिष्ठऋषिः।

१ २ ३ १र २र ३ २ क २र ३ १ २ ३ १ २
असाविदेवंगोऋजीकमन्धोन्यस्मिन्निन्द्रोजनुषेमुवोच।
१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
बोधामसित्वाहर्यश्वयज्ञैर्बोधानःस्तोममन्धसोमदेषु॥१॥८१

I असौहोवा३हाइ। वो२३४दे। वाङ्गोऋ। जो-
कमन्धाः। न्यौहोवा३हा। स्मी२३४नी। द्रौजनु।
षेमुवोचा। बोधौहे।वा३हाइ। मा२३४मी। त्वाहरि।

"देवं" दीप्तं(१) "गोऋजीकं" गोभिः संस्कृतं गव्येन मिश्रित-मित्यर्थः(२)। "अन्धः" सोमरूप मन्नम् "असावि" अभिषुतम्।

---

८१ ऋग्वेदस्य ५,३,३,१ = आरण्यके ३,२८—३०।

I प्राकर्षम्।

नोऽस्मिन्निति प्राकपूर्णिः (दे० २,११)] स्तुतिः; किञ्च 'इन्द्रस्यगौरिति सप्तविंशति समा अपिच 'इन्द्रापर्वता'-इति षड्विंशतितमा ऋक्, इयमपि पर्वते न सह इन्द्रस्य स्तुतिः न केवलेन्द्रस्येत्यर्थः।

(१)—'देवं द्वितीयैकवचन मिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्य, देवस्य इन्द्रस्यार्थाय' -इति वि०।

(२)—गो-शब्देनेह गोविकारं गव्यं, ऋजीक च मिश्रम्।

अस्वयज्ञैः। वोधीहोवा३हाइ। ना२३४स्ता। ममन्ध।
सो३४३। मा३दा५इषुई५६ ॥ ३५ ॥

॥ आइहीर। आइही। एहिया। ओ२३४वा।
हाइ। असाविदेवङ्गोऋजीका३मान्धा३ः। आन्धाः।
अन्धा। ओ२३४वा। हाइ। न्यस्मिन्निन्द्रोजनुषेमू३-
वोचा३। वोचा। वोचा। ओ२३४वा। हाइ। वो-
धामसित्वाहर्यश्वा३याज्ञ३ः। याज्ञैः। यज्ञा। ओ२३
४वा। हाइ। वोधानस्तोममन्धसो।मा३दाइषू३। आ-
इषु।एषुवा।ओ२३४वा। हाइ। आइहीर। आइही।

[·] निधनः।

अथ द्वितीया।

१ २ ३१२ ३१र २र ३१२
योनिष्टइन्द्रसदनेअकारितमानृभिःपुरुहूतप्रयाहि।
३र २ २ ५ २ ५र र २ १११११
एहियाँ। ओ२३४वा। हा३४। औहोवा। ई२३४५॥

॥ ३६ ॥ ८१

"इम्" अयम्(३) "इन्द्रः" "अस्मिन्" अभिषुते सोमरूपेऽन्धसि "जनुषा"(४) स्वभावत एव "न्युवोच" नितरां सङ्गतो भवति(५) (उच समवाये) [अथ प्रत्यक्षस्तुतिः(६)-हे "हर्यश्व!"(७) "त्वा" त्वां "यज्ञैः" स्तोत्रैः हविर्भिर्वा "बोधामसि" बोधयामः। "अन्धसः" सोमस्य "मदेषु" "नो" अस्माकं "स्तोमं" स्तोत्रं "बोध" बुध्यस्व॥ १ ॥८१ *

---

(३) -निरुक्ते तु 'ईम्'-इति पदपूरणार्थे व्यवस्थितम्, तथाहि-"अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति" नै०१,९। अत एव ईमिति पादपूरणः'-इति वि०।

(४)—'जनुषेति तृतीयैकवचनमिदं पञ्चम्येकस्य स्थाने द्रष्टव्यम्, पञ्चमी-निर्देशाच्च प्रभृतीति वाक्यशेषः, जन्मनः प्रभृति'-इति वि०।

(५)—'उवोच उक्तवान्'-इति वि०।

(६) बोधेति मध्यमपुरुषयोगादित्यर्थः। तथाहि—"अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना"-इत्यादि नि०७,२।

(७)—हरी हरिद्वर्णौ अश्वौ यस्य, हे तादृश!।

---

*॥ इति अष्टमः प्रपाठकः॥

३ १२ ३२ १२ ३२३ १२ ३१२ ३१ २
असोयथानोवितावृधश्चिद्दोवसूनिममदश्चसोमैः ॥२॥८२

४ ५ १ २ १ २ ३ ४ ५
I योनोः। तआइ। द्राइसद। नाअकारी।

४ ५ १ २ २ ३ ४ ५ ४ ५
तामा। नृभाइः। पुरुहूइ। ताप्रयाही। आमाः।

१ २ १ २ ३ ४ ५ ४ ५ १
यथा। नोइअवि। तावृधश्चीत। दाद्दाः। वसू।

२ १ २ २ ४
नीइमम। दाइ४इः। चाइसोऽमाइ५६इ ॥१॥

१ २ ३ २ ३ ४ ५ ४ ५ १ २
II योनिष्टआइ। इसदनाइ। ह्रोवा। आकाइ।

२ ३ ४र ५ ४ ५ १ २ २ ३ ४र ५
राइतमानृभीः। ह्रोवा। पू। रुहूइ। ताप्रयाही।

हे "इन्द्र!" "ते" तव "सदने" "सदनार्थं "योनिः" स्थानम् "अकारि"। हे "पुरुहूत" बहुभिराहूतेन्द्र! "नृभिः" नेतृभिर्मरुद्भिः(१) सार्द्धं "तं" योनिम् "आ प्रयाहि"। "नो"ऽस्माकं "यथा"

८२ ऋग्वेदस्य ५,३,८,१।

I,II योनिनी द्वे।

(१)—'नभिः ऋत्विग्भिः'-इति वि०।

अथ तृतीया।

गात्नर्षिः*।

अर्द्दृहत्त्वमसृजो विखानि त्वमर्णवान्बद्बधानाँ अरंहणः।

महान्तमिन्द्र पर्वतं वियद्वः सृजद्धारा अवयद्दानवान्हन् ॥१॥ ८२

होवा। आमोयथा। नोअविता। होवा। वाद्वीइः।

चाइहद्दीवस्त्र। होवा। नाइममदः। चसोमैः। हो-

वा। होपइ। डा ॥ २ ॥ ८२

"असः" भवसि। नोऽस्माकं "वृधश्चित्" वृधे वर्द्धनाय चासः। ("वृधेच"-इति बह्वृचाः) तथा "वसूनि" "ददो" ऽस्मभ्यं देहि। "सोमैः" अस्मदीयैः "ममदो" मादय च ॥ २ ॥ ८२

---

* "गृत्समदो नाम ऋषिः"-इति वि०।

---

८३ ऋग्वेदस्य ४,१,३२,१।

४ ५ ४　　२ ३र १ २　　१
I अदर्दृरुत्। समसृजोविखानि। त्वमर्णा२३-

५　　२ ३र ३र १ २　　१र　　५　　२
४वान्। बद्धधाना२ॅअराम्णाः। महान्ता२३४मी। द्रप-

१ २　　१　　५　　१ २ १ २र　　१
र्वतंवियाद्वः। सृजाद्धा२३४राः। अवयद्दान। वार२३न्-

२　　१
हा३४३न्। ओ२३४५इ। डा॥ ३ ॥

हे "इन्द्र!" "त्वम्" "उत्सम्" उत्स्यन्दमानं मेघं "अदर्दः" विदारितवानसि। तदनन्तरं "खानि" मेघस्योदकनिर्गमनद्वाराणि(१) "व्यसृजः" विशेषेण सृष्टवानसि। किञ्च। "बद्धधानान्" "अर्णवान्" उदकवतो मेघान् "अरम्णाः" "विसर्जयसि" धारयसीत्यर्थः (अत्र रम्णातिर्विसर्जनकर्मा(२) ) हे इन्द्र! "यत्" यस्त्वं (यदिति लिङ्गव्यत्ययः) "महान्तं" प्रभूतं "पर्वतं" मेघं(३) विवृत-

(१)—'खानि आकाशानि उदकाभिगमनस्थानानीत्यर्थः।

(२)—अन्यत्र संयमनकर्मेत्याह माधवः।

(३)—पर्वतमिति मेघ-नामसु नवमम्।

४५ ४५ ४५ ४ १र र
II, अदर्दृत्समसृजाः। विखानि। त्वमर्णवान्बद्ध-

र र २१ २ १र २१ २
धानाँ अरा२३म्णाः। महान्तमिन्द्रपर्वतंविया२३द्वाः।

१ २र १३र १२र १ ३ ५र र
सृजाद्धारा२ः। अवा२यद्दान। वा२। या२३४औहो-

३ ११११
वा। हा२३४५न्॥ ४॥ ८३

वानसि। "धारा" अपां "वि सृजत्" व्यसृजः विसर्जितवा-
नसि। "यद्" यदा "दानवान्" दनोः पुत्रान्। यद्वा। उदकस्य
दातृन् मेघान् "अवहन्" अभिहतवानसि। [अत्र निरुक्तम्—
"अदृणा उत्समुत्सउत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वाव्यसृजोस्य
खानि त्वमर्णवानर्णस्वत एतानित्यादि(४)]।

"वियद्वः सृजद्धारा अवयद्दानवान्"—"वियद्वः सृजो-
विधारा अवदानवं हन्—इति च पाठौ॥ ३॥ ८३

---

I,II औरुक्षये द्वे।

(४)—इत्यादि पदेनास्यापरांशोग्राह्यः, तथाहि—(एतानित्यस्यानन्तरम्) "माध्यमिकान्यस्यायाम् बाबध्यमानानरम्णाः। रम्णातिः संयमनकर्मा विसर्जनकर्मा वा। महान्तमिन्द्र पर्वतं मेघं यद् व्यवृणोर्व्यसृजो ऽस्य धारा अवहन्नेनं दानवं दानकर्माणम्"-इति।

अथ चतुर्थी।

पृथीवैन्यऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ १ २
सुषाणासइन्द्रस्तुमसित्वासनिष्यन्तश्चित्तुविनृम्णवाजम्।
१ २ ३ १ १२ ३ २उ ३ १ २ ३ १ २
आनोभरसुवितंयस्यकोनातनात्मनासह्यामात्वोताः ॥४॥८४

४ ५ ४ ५ ३ २ २ २ ३ ५ ४ २
I सुषाणासाः। इन्द्रस्तु। मसित्वा। सनिष्य-
४ ५ ३ २ २ २
न्तश्चित्तुवि। नृ। म्णवा२३४जाम्। आनः। भरा-
३ ५ ४ ५ २ ४ ५ ४ ५ २
ओ२३४वा। सुवितंयस्यको। ना। तानात्माना। सह्वि-
२ २ २ ४
या। मा३४३। तू३वोपूता६५६ः ॥ ५ ॥

२ २ २ ३ ५ १२ ३ २ २
II औ३होऽ३होइ। सु२३४षा। णासाः। इन्द्रस्तु।

हे "इन्द्र!" "सुष्वाणासः" सोममभिषुतवन्तो वयं त्वां "स्तुमसि" स्तुमः। हे "तुविनृम्ण" बहुबल बहुधन वा इन्द्र! "वाजं" चरु-पुरोडाशादि-लक्षणमन्नं "सनिष्यन्तः" दत्तवन्तः सम्भक्तवन्तो वा वयं त्वां स्तुमः। यत एवं अतो हेतोः "नो" ऽस्मभ्यं "सुवितं" सुष्ठु प्राप्तव्यं शोभनं धनम् "आभर" आहर प्रयच्छ। "यस्य" यद्धनमतिप्रियत्वेन "कोना" (कनैः कान्तिकर्मण

८४ ऋग्वेदस्य ८,८,८,१।

I, II पार्थे द्वे।

२ ३ ५ १ २ २ ३ ५ १
मसित्वा। औ३हो३होइ। सा२३४नी। ष्यन्ताः।

२ १ २ ३ ४ ५ २ १ २ ३
चीइत्तुवि। नृम्णवाजाम्। औ३हो३होइ। आ२३४

५ १ २ २ ३ ४ ५ २ २
नाः। भरा। सुविताइम्। यस्यकोना। औ३हो३

२ ३ ५ १ २ १र २ २ ४
होइ। ता२३४ना। त्मना। सह्या। मा३४३। तूइवोपु-

ताई५६ः ॥ ६ ॥ ८४

इदं रूपं। पचाद्यच्। अकारस्य व्यत्ययेन ओकारः। प्रथमैक-वचनस्याकारः) कामयमानो भवसि तद्धनमाभरेत्यर्थः(१)। वयं च "त्वोताः" त्वया रक्षिताः सन्तः। "तना" (धननामैतत्(२) विस्तृतानि धनानि "त्मना"(३) आत्मना स्वयमेव अन्य-नैरपेक्ष्येणैव "सह्याम" (सह अभिभवे। धातूनामनेकार्थत्वात्) त्वत्प्रसादाल्लभेमहि।

"सनिष्यन्तश्चित्तुविनृम्णवाजम्"-इति छन्दोगाः। "ससवांसश्च"-इति बह्वृचाः।

"कोनातनात्मनासह्याम"-"चाकन्त्मनातनासनुयाम"-इति पाठौ ॥ ४ ॥ ८४

(१)—'किं पुनरभि, भवेम ? कोनाः, कुत्सिताश्च ते जनाश्च कोनाः। छान्दसत्वात कु-शब्दस्य क-भावः। पञ्चम्येकवचनस्य छान्दसत्वाच्छादादेशः। कोनात्। कुत्सितात् जनाच्च शत्रोरित्यर्थः'-इति वि०।

(२)—तनेति धननामसु जनविंशतितमं नैघण्टुकम् २,१०।

(३)—"मन्त्रेष्वाङ्याऽदेरात्मनः। ६। ४। १४१।"-इत्यात्मनश्चाकारलोपः।

अथ पञ्चमी ।

सप्तगुर्ऋषिः* ।

३　२ ३ १ २　३ १ २　१ २　३ १ २　३ १२
जगृह्मा*तेदक्षिणमिन्द्रहस्तंवसूयवोवसुपतेवसूनाम्। विद्मा

३ १ २　३ १ २ ३ १ २ ३ १र २　३ १ २
हित्वागोपतिꣳशूरगोनामस्मभ्यंचित्रंवृषणꣳरयिन्दाः॥५॥ ८५

४ र र　र र र　५　१　२
I जगृह्मातेदक्षिणमोहाओहाइए। इन्द्रहा२३स्ता-

र १　२　२ ३ ५　२
म्। वसूयवो। वसूपा३। ताइवसू। नाम्। ओ३।

२　१ २　१र　र २
हा। ओ३। हा३ए। विद्माहित्वा। गोपतीꣳम्।

२ ३ ५　२　२　२ २
शूरगो। नाम्। ओ३। हा। ओ३। हा३ए। अ-

१　२ १ · २ ३ ५　२
स्मभ्यञ्चाइ। चा३०वृष। णाꣳरयिम्। दाः। ओ३।

२　२ २　१　५　२　२ ५
हा। ओ३। हा३ए। रयाइन्द्रा३उवा३। ऊ३४पा।

२र १र २र १र　१ १ १ १　३ १ १ १ १
औहोऔहोवा२३३५उ। वा। ई२३४५॥ ७॥

※ "सप्तगोरार्षम्"-इति वि० ।

* "जगृभ्मा"-इति ऋग्वेदीयः पाठः ।

८५ ऋग्वेदस्य८,१,३,१ ।

५ ४र ५र ४ ५ र ४र ५ २
II जगृह्मातेदक्षिणम्। औहौहोवाहाइ। इन्द्रा
३ ५ २र १ २ २ ३५ २
हा२३४स्ताम्। वस्वयवो। वसुपा३। ताइवसू। नौ।
३ ५ २ २ १र र २
वाओ२३४वा। हरिहाइ। विद्माचित्वा। गोपतीइ
२ ३ ५ २ ३ ५ २ २ १
म्। शूरगो। नौ। वाओ२३४वा। हा३हाइ। अस्मभ्य
२ १ २ ३ ५ २ ३ ५
म्हाइ। त्रा३०वृष। ण७रयिम्। दौ। वाओ२३४वा।
२ ५र र ३१ १ १ १ १
हा३४। औहोवा। ई२३४५॥ ८॥

१ १ १ १र २र १ २
III होई२। होई२। होई२। जगृह्मातेदक्षिणम्।
१ १ १ र १ २र
इन्द्रहास्ता२म्। हास्ता२म्। हास्ता२म्। वसूयवोर
र १ १ १
वसुप। तेवसूना२म्। सूना२म्। सूना२म्। वि-
१र २र १र २ र १ १ १
द्माचित्वागोपतिम्। शूरगोना२म्। गोना२म्। गो-
१ २ १ २ १ १
ना२म्। अस्मभ्यञ्चित्रंवृष। ण७रयाइन्दा२। आइ-
१ १ १ १
न्दा२ः। आइन्दा२। होई२। होई२। होया२।
३ ५र र ३ १ १ १ १
वा२३४औहोवा। ई२३४५॥ ९॥

---

I,II सौपर्णे द्वे।

४ ५र ४ ५र ४ ५र ५ ऽ
IV आओ३होइ। आओ३होइ। आओ३होऽ६वा। औ-

२ ऽ १ र २ १र २
३होइ। औ३होइ। औ२३होवा। जगृह्माताइ। दक्षिणा३म्।

२ ३ ४ ५ ४ ५ ४ ५ २र१ २
इन्द्रहस्तम्। द्रहस्ताम्। द्रहस्ताम्। वसूयवो। वसुपा३।

१ २४ ५ ४ ५ ४ ५ २ १र र
ताइवसूनाम्। वसूनाम्। वसूनाम्। विद्माहित्वा। गो

२ २ ३ ४ ५ ४ ५ ४ ५
पती३म्। शूरगोनाम्। रगोनाम्। रगोनाम्।

२ १ २ १ २ ३ ४ ५ ४ ५
अस्मभ्यञ्चाइ। त्रा३०वृष। णा०रयिन्दाः। रयिन्दाः।

४ ५ ४ ५र ४ ५र ४ ५र ५
रयिन्दाः। आओ३होइ। आओ३होइ। आओ३होऽ६वा।

ऽ २ ऽ २ १ र २ ५र र
औ३होइ। औ३होइ। औ२३होवा३४। औहोवा।

३ १ १ १ १
ई२३४५॥ १०॥

५र र र १ २ १
V हाउहाउहाउ। ओ। होहोवा। ओ। हो

हे "वसुपते"! वसूनां धनानां स्वामिन्निन्द्र! "ते" तव

---

III, IV, V वाम्प्राणि त्रीणि।

२ १र २ १ ३ ४ ५
होवा। जगृह्माताइ। दक्षिणा३म्। इन्द्रहस्तम्।

४ ५ ४ ५ १र१ २ २
द्रहस्तम्। द्रहस्ताम्। वसूयवो। वसुपा३। ताइ-

३ ४ ५ ४ ५ ४ ५ २ १र
वसूनाम्। वसूनाम्। वसूनाम्। विद्माहित्वा।

र २ २ ३ ४ ५ ४ ५ ४ ५
गोपती३म्। शूरगोनाम्। रगोनाम्। रगोनाम्।

२ १ २ १ १ २ ३ ४ ५ ४ ५
अस्मभ्यञ्चाइ। त्रा३०वृष। णा३रयिंन्दाः। रयिन्दाः।

र र र १ २ १ २
हाउहाउहाउ। ओ। होहोवा। ओ। होहोवा।

१ २ ५र र ३ १ १११
ओ। हो। हो२। वा२३४। ओहोवा। ई२३४५॥

॥ ११ ॥ ८५

"दक्षिणं" हस्तं(१) "वसूयवो" धनकामा वयं "जगृह्म" गृह्णीमः

(१)—यद्यपीन्द्रस्य तेजोरूपत्वात् हस्ताद्यभाव एव सिद्धान्तः तथाप्यत्र आरोपितत्वेन समाधेयम् ग्रावादीनामचेतन-प्रसिद्धानामपि तथा स्तुति-दर्शनात्। तथाच यास्कः—"अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते —

"ऋष्वा त इन्द्र स्थविरस्य बाहू।
यत् सं गृभ्णा मघवन् काशिरित्ते॥"

*** यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद् भवति "अभिक्रन्दन्ति हरितेभिरासभिः" इति "ग्रावस्तुतिः"-इत्यादि नै० दै० १,७।

अथ षष्ठी ।

वसिष्ठऋषिः ।

३ १ २ ३ १ २ ३ १र २ ३र ३ १ २ ३ २ ३ २
इन्द्रंनरोनेमधिताहवन्तेयत्पार्यायुनजतेधियस्ताः ।
३ १ २ ३ १ २ ३ २ ३ १र ३र ३ १ २ ३ १ २
शूरोनृषाताश्रवसश्चकामआगोमतिव्रजेभजात्वनः॥६॥८६

२ ३ ५ २ ३ ५ २ १
I इन्द्रना२३४रो। नेमाधा२३४इता। हवन्ता-
२ ३ ५ २ ३ ५ २ १
२३इ। यत्पारा२३४याः। यूनाजी२३४ताइ। धिया-

(यथा बहुप्रद अर्थिनोऽस्मभ्यमदत्वा न गन्तव्यमिति हस्तं गृह्ण-न्ति तद्वत्) हे "शूर" विक्रान्तेन्द्र" ! त्वां "गोपतिं" (अत्र तृत्यवृ-त्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते) बह्वीनां गवां गोपतिं "विद्म" जानीम । अतोऽस्मभ्यं "चित्रं" पूजनीयं "वृषणं" वर्षकं "रयिं(२)"धनं "दाः" धेहि ॥ ५ ॥ ८५

८६ ऋग्वेदस्य ५,३,११,१ = यजुर्वेदस्य २८,१ = आरण्यके १.२,१—२—१४—१५—२,२,१—२—३—४—५—६—७—८—४,१४—४.२,१–१४–१६—१८–२०–५,४ – ५,२,१५।

I गौरीवितम् ।

[२]रयिं गोलक्षणं धनम इति वि० ।

८१क,

२ ३ ५ १ ३ ५ २ १
स्ता२३:। शूरोना२३४र्षा। ताश्रावा२३४साः। चका-

३ ३ ५ २ ३ ५ १ ५
मा२३इ। आगोमा२३४ती। व्रजाइभा२३४जा। त्वन्ना-

२ २ १ ३ ११११
३उवा३। ए३। उपा२३४५*॥ १२ ॥ ८६

"यद्" यदा(१) "पार्य्याः(२)" युद्धे भरण-निमित्तभूतास्ताः प्रसिद्धाः "धियः" कर्माणि "युनजते" प्रयुञ्जन्ते। तदा "नरो" नेतारो "अश्वानां" सङ्ग्रामाणां वा "नेमधिता" नेमधितौ यज्ञे सङ्ग्रामे वा(३) यमिन्द्रं "हवन्ते" ह्वयन्ति। हे "इन्द्र!" स त्वं "शूरः" "नृषाता" नृणां सम्भक्ता(४)। "श्रवसो" बलस्य अन्नस्य(५) वा "चकामे" चकाने काम्यमाने सति "गोमति" गोयुते "व्रजे" गोष्ठे "नो" अस्मान् "भज" भागिनः कुरु।

"अवसश्चकाम"-"श्रवसश्चकाने"-इति पाठौ॥ ६ ॥८६

(१) 'यत् यस्मात्'-इति वि०।

(२)-'पार्य्याः पालयितव्याः प्राप्तव्याः'-इति वि०।

(३)-'नेमधितिः' सङ्ग्राम-नामसु पठ्यते नैघण्टुकम् (२,१७), यज्ञ-नामसु तु न दृश्यते। विवरणकारस्तु सङ्ग्रामार्थ एव स्वीकृतः।

(४)-'नृषाता—नरो मनुष्याः ऋत्विग्लक्षणास्ते सन्यन्ते सम्भज्यन्ते यत्रेति नृषातिर्यज्ञः। षन षण सम्भक्तावित्यस्येदं रूपम्। तस्मात् परस्य सप्तम्येकवचनस्य आदादेशः। नृषाता—नृषातौ यज्ञ इत्यर्थः'-इति वि०।

(५)-हविर्लक्षणस्येत्यर्थः।

अथ सप्तमी।

गौरिवीतऋषिः।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २ ३ १ २

वयःसुपर्णा उपसेदुरिन्द्रम्प्रियमेधा ऋषयो नाधमानाः।

१ २ ३ १ २ ३ २ ३ १र २र ३ २ ५ १ ३ १ २ ३ २

अपध्वान्तमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान्॥९॥८७

५ र र १ र र २ १ र

I वयोहाहाउ। सुपर्णा उपसेदुराइन्द्रम्। प्रियमे-

र र १ २ १ र र र २ १ २

धाऋषयो नाधमा२३नाः। अपध्वान्तमूर्णुहि पूर्द्धि चा२३क्षूः।

"वयो" गन्तारः(१) "सुपर्णाः" सुपतनाः आदित्य-रश्मयः "इन्द्रम्" "उपसेदुः" उपसन्ना अभवन्। कीदृशाः? "प्रियमेधाः" प्रिययज्ञाः(२) "ऋषयो" द्रष्टारः(३) "नाधमानाः" प्रज्ञां याच-

-

८७ ऋग्वेदस्य ८.३,४.५।

I वैदन्वतम्।

(१)- "वय" पक्षिमद्‌गाद्‌इत्यर्थः"-इति वि-।

(२)—मेधइति यज्ञ-नामसु चतुर्थं नैघण्टुकम् ३.१७। प्रियमेधवदविवदित्यस्य व्याख्यानावसरे तु "प्रियमेधः प्रिया अस्य मेधा" इत्यादि यास्कः ३.१७।

(३) -ऋषिरिति द्रष्टृरूपमिति नैघण्टु भाष्यादौ। "साक्षात्कृतधर्माण ऋषयो बभूवुः"-इत्यादि नि० १.२०।

१ ५ २ २ १ ०
मुमुग्धि। औ३हो३इ। आ२१। स्मा३न्निध। ये३-
२ ४
४३। वा३वा५ह्वा६५६न् ॥ १८ ॥ ८७

माना:(४) (याचनप्रकारउच्यते)· हे इन्द्र! "ध्वान्तम्" अन्धकारम् "अपार्णुहि" परिहर ("अपध्वान्तमूर्णुहीति येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेदपहैवास्मात्तल्लुप्यत"-इत्यैतरेयब्राह्मण-मत्रानुसन्धेयम्) "पूर्द्धि" पूरय(५) "चक्षुः" तेजश्च(६)। "मुमुग्धि" मोचय च "अस्मान् निधयेव बद्धान्"। "निधा" पाश्या भवति पाश्या पाश-समूहः(७)। पाश-समूहेन बद्धान् यथा मुञ्चन्ति तद्वत्। (अत्र "वयो वैवं हुवचन मित्यादि निरुक्त(८) द्रष्टव्यम् ॥ ॥ ७ ॥ ८७

(४) माधमाना: इत्यस्य याचमाना: इत्यर्थ: कृतो यास्केनैव नै०४,३।

(५)—"पूर्द्धि पूरय"-इति नि० नै०४,६।

(६)—"चक्षुः ख्यातेर्वा चष्टेर्वा"-इति नि०नै०४,३।

(७)—"निधा पाश्या भवति, यन्निधीयते। पाश्या पाशसमूहः। पाशः पाशयते, विपाशनात्"-इति नि० नै०४,२।

(८)—नैगमकाण्डीय ममीयखण्डम्।

अथाष्टमी

वेनो भार्गव ऋषिः।

नाके सुपर्णमुप यत्पतन्तꣳ हृदा वेनन्तो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥८॥८८

I आ२याम्। अयायम्। औ३हो३इ। आ२इ।
ऊ२। नाके सुपार्णमुप यात्पतन्ताम्। पतन्तम्। औ३हो३इ।
आ२इ। ऊ२। आ२याम्। अयायम्। औ३हो-
३इ। आ२इ। ऊ२। हृदा वेनान्तो अभ्यचाक्षत त्वा।
क्षत त्वौ३। हो३इ। आ२इ। ऊ२। आ२याम्।
अयायम्। औ३हो३इ। आ२इ। ऊ२। हिर

८८ उत्तरार्चिकस्य ९,२,१३,१ = ऋग्वेदस्य १०,१२३,६ = आरण्यके ३,८,३।

I यामम्।

१ २र १   १ २र १   २   २
एथपात्त्वंवरुणास्यदूताम्। स्यदूतम्। औ३ह्वो३इ।

१   ३ २र १   ऽ   २
आ२इ। ऊ२। आ२याम्। अयायम्। औ३ह्वो-

४ र   र   १   र र   ३ २ १
३इ। आ२इ। ऊ२। यमस्ययोनौशकुनांभुरण्यूम्।

३ २ १   ऽ   २
भुरण्युम्। औ३हो३इ। आ२इ। ऊ२। आ२-

१   ३ २र १   ऽ   २   १
याम्। अयायम्। औ३ह्वो३इ। आ२इ। ऊऽ२।

र   २   १   २   १   २
वाद्दा३१उवा२३। ए३। दिवम्। ए३। दिवम्। ए३।

१   २   १   १ १ १ १
दिवम्। ए३। दिवा२३४५॥ १४॥ ८८

हे "वेन!"(१) "त्वा" त्वां "हृदा" हृदयेन मनसा "वेनन्तः" कामयमानाः स्तोतारः "नाके" अन्तरिक्षे "अभ्यचक्षत" अभिपश्यन्ति तदानीं त्वम् उपगच्छसीति शेषः। कथंभूतं? "सुपर्णं" शोभन-पतनं "पतन्तं" अन्तरिक्षं गच्छन्तं। "हिरण्यपक्षं" हिरण्मयाभ्यां पक्षाभ्या मुपेतम्। "वरुणस्य" जलाभिमानिनो

(१)—'वेनति'-इति कान्तिकर्मसु चतुर्थं नैघण्टुकम्, (२.६) अर्चतिकर्मसु च हि चत्वारिंशत्तमम् (३,१४)।

अथ नवमी।

बृहस्पति र्नकुलो वा ऋषिः।

१ २ ३१ २३२ ३ २ ३ १ २ ३२ ३ १ २ ३ १ २
ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः।

३ २र ३१२ ३ २ ३२३ २ ३१२ ३१ २
सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः॥९॥८९

देवस्य(२) "दूतं" चारम्। "यमस्य" नियामकस्य वैद्युताग्नेः(३) "योनौ" स्थाने अन्तरिक्षे अन्तरिक्षे "शकुनं" पक्षिरूपेण वर्त्तमानम्(४)। "भुरण्युं" भर्तारं वृष्टि दानादिना सर्वस्य जगतः पोषकं(५) (भुरण् धारण-पोषणयोः कण्ड्वादिः। अस्मादौणादिक उ प्रत्ययः ॥ ८ ॥ ८८

८९ अथर्ववेदस्य ५,४,१।

(२)—वरुणो मेघ-वर्षण-हेतु-भूतो वायु विशेषः "वरुणो वृणोतीति सतः"-इत्यारभ्य "पृथिवीं उनत्ति भूमिम्"-इत्यन्तम् यास्कोक्तेः।

(३)—यमशब्दस्य तु नियामकत्व योगार्थ लभ्यम् "अग्निरपि यम उच्यते नि० दै० ४, २०)"-इति "तृतीयो अग्निः (नि० दै० ४,२१)" इति च यास्कोक्तेः वैद्युताग्नित्वञ्च लभ्यते तृतीयो अग्नि-इत्युक्तेः तृतीयस्थानो द्युलोकः, तत्स्थः मर्थ्यरूपोऽग्निरिति च लभ्यते। अतएवाह विवरणकृत् 'यमस्य योनौ, यम आदित्य, तस्य योनिः स्थान मण्डलं, द्युलोके यदा आदित्यमण्डलं तत्र अवस्थितम्' इति —

(४) 'शकुन शक्त योनित आत्मानं कर्त्तु समर्थं मित्यर्थः' इति वि०।

(५) - 'भुरण्यु' भ्रमणशील मित्यर्थं' इति वि०। 'भुरण्यु' इति क्षिप्रनामसु अनु द्रष्टमस नैघण्टुकम् २,१५।

I अह्मा। आ२३ह्मा। जज्ञानंप्रथमंपुरास्तात्।
विसाइ। वा२३इसो। मतःसुरुचोवेनआवः। सबू।
सा२३बू। घ्नियाउपमाअस्यवाइष्ठाः। सताः। सा२३-
ताः। चयोनिममतश्चवाइवा३४३ः। ओ२३४५इ। डा॥
॥ १५ ॥ ८९

II ऊवे३हा३इ। ऊवे३हो३इ। हिपा३या। ब्रह्मज-
ज्ञा। ना३०प्रथ। मंपुरस्तात्। विसीमताः। सुरु-
चः। वेनआवाः। मबुध्नियाः। उपमाः। अस्यवि-
ष्ठाः। मतश्चयो। नी३मस। तश्चविवाः। ऊवे३हा-

I, II ऋतसामनी द्वे।

१ ५ २ १ ३ ५र
३इ । इवे३वा३इ । चि । षा२ः । आ२३४ । औ-
र २ २ १ २ २ २ १ ३ १ १ १ १
होवा । ए३ । ऋतममृतम् ए३ । ऋतममृता२३४५म् ॥

॥ १६ ॥ ८९

वेनो नाम कश्चित् कमनीयो(१) गन्धर्वः । तथाच शाखान्तरे "वेनस्तत्पश्यन्नित्यारभ्य गन्धर्वो नाम नित्याम्नातम् ।

स च "वेनः" "पुरस्तात्" पूर्वस्मिन् काले "जज्ञानम्" उत्पन्नम् "अभिन्नं" वा "ब्रह्म" ब्राह्मण-जातिरूपं(२) "प्रथमम्" आद्य-शरीरम । अतोऽस्याः सर्वैः दृश्यमानायाः "सुरुचः" शोभनायाः कान्तेः "आवो" रक्षितवान् (वसुमित्यनुग्रहसूचकः कश्चिदनुकरणशब्दः तथाविधं शब्दं मुखेनाभिव्यञ्जयन् । ब्राह्मण-शरीर-महत्या कान्त्या योजितवानित्यर्थः) स वेनः "बुध्न्याः" मूलं अन्तरिक्षं वा बुध्नः, तत्र भवाः, अस्योपमाः एतदीय-शरीर-कान्ति-सदृशाः, आदित्य-प्रकाशादि-रूपाः कान्तीः(३) "विष्ठाः" विशेषेण स्थापितवान् तथा "सतश्च" इदानीं विद्यमानस्य च "असतश्च" भविष्यद्रूपत्वेदानीमविद्यमानस्य च "योनिम्" उत्पत्तिकारणं निवास-स्थानं वा "विवः" विवृतवान् निष्पादितवानित्यर्थः ॥ ८ ॥ ८९

(१)—"वेनो वेनतेः कान्तिकर्मणः" इति नि०१०.३८ ।

(२)—'ब्रह्म-शब्देनादित्याख्यं च मन्यते' इति वि० ।

(३)—'बुध्न्या दिशः' इति वि० ।

अथ दशमी।

सुहोत्र ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अपूर्व्यापुरुतमान्यस्मै महेवीरायतवसेतुराय।

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
विरप्शिने वज्रिणे शन्तमानि वचांस्यस्मै स्थविराय तक्षुः॥१०॥९०

इति तृतीय-दशति॥३॥

५ र २ र ४ ५ ३ २ ३ १ ३ ४ ५ २
I अपूर्व्याऔहोहोवाइ। पुरुत। मानियस्मै। म-

१र २ २ १ २ ३ ४ ५ २
हेवीरा। याइतव। साइतुराया। विरप्शि। नाइ-

३ ४ ५र २ २ १र ५ २ १र २ १
वज्रिणे। शाइ४३०तमानि। वचांसिया। स्माइस्थ-

"अपूर्व्या" अपूर्व्याणि पूर्वैरकृतानि नूतनानि "पुरुतमानि" बहुतमानि "शन्तमानि" सुखकृत्तमानि "वचांसि" स्तुतिरूपाणि वाक्यानि "अस्मै" इन्द्राय "तक्षुः" ततक्षुः (तक्षतिः करोतीत्यर्थः)। कुर्वन्ति स्तोतार इति शेषः। कीदृशाय?

---

९० ऋग्वेदस्य ४,७,४,१।

I वारवन्तीयम्।

१ २ ४५ २ ४ ५र २
वि। रायतन्तूः। स्थविरायतन्तः। स्थवि। रा३४३।
२ ४ १ १र २१ १११
या३ताप्नुत्तु६५६ः। स्थविरायतन्तू२३४५ः॥ १७॥ ९०

"महे" महते। "वीराय" विविध-शत्रूणां मारयित्रे। "तवसे" तवस्विने बलवते(१)। "तुराय" त्वरमाणाय "विरप्शिने" विशेषेण स्तुत्याय "वज्रिणे" वज्रवते। "स्थविराय" प्रवृद्धाय।

इति श्रीसायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य नवमः खण्डः॥ ९॥

अथ दशमे खण्डे

सेषा प्रथमा।

अस्याः परस्याश्च द्युतानऋषिः*।

१ २३ १ २ ३ १ २ ३ २ ३ २ ३१ २ ३ १ २
अवद्रप्सोअंशुमतीमतिष्ठदीयान†कृष्णोदशभिःसहस्रैः।
३ २३ ३ २ ३ १ २ ३ २ ३१ २ ३ १ २ ३ २
आवत्तमिन्द्रःशच्याधमन्तमपस्नेहितिर्नृमणाअधद्राः‡॥ १॥ ९१

* 'तिरश्चिफतानस्यार्षम्'-इति वि०।

† "इयानः"-इति, ‡ "स्नेहितीर्नृमणाअधत्त"-इति च ऋग्वेदीय पाठः।

९१ ऋग्वेदस्य ६,६,३४,३।

(१) —तवः इति बलनामसु पठितम् नैघण्टुकम् २,९

२ ३ ५ २ ३ ५ १
I अवद्रा२३४प्साः । आ ॆग्नूमा२३४तीम् । आ-
२ १११११ २ ३ ५ २ ३
तो३ । ष्ठा२३४५त् । ईयाना२३४ःकृ । ष्णोदाशा२३४
५ १ २ १११११ २ ३ ५
भीः । साहा३ । स्ना२३४५इः । अवत्ता२३४मो ।
२ ३ ५ १ २ १११ १ २ ३
द्रःशाचोर२३४या । धामा३ । ता२३४५म् । आपःस्नो२३-
५ २ ३ ५ १ ३ २ ५२२
४ही । तिनृमा२३४णाः । अधा२द्रा२३४औहोवा ।
२ १ ११११
अधा३द्रा२३४५ः ॥ १८ ॥

५ ५ १ २३२ २ १ १२२
II अवद्रप्साऽ६ए । आ ॆशूमतीमतिष्ठा२३त् । ईया-
३ ४ ५ १ २ ३ २ १ ३ २ ३ ४ ५
नःकृष्णाः । दाशभिःसहस्ना२३इ । आवत्तमिन्द्राः ।
१ २३२ २ १ ३ १ ३२ ४ ५ १
शाचियाधमन्ता२३म् । अपास्नोहितीम् । नृमणा२३ ।
४ ४
अधा५द्रा हो५इ । डा ॥ १८ ॥

I,II सुरपर्विणी द्वे ।

I अवद्रोप्सअ(ं)शुमतीम् । औ३हो३४इ । औहोवा । आतीश्ष्ठात् । औ३हो३४इ । औहोवा । ईयानःकृष्णाः । औ३हो३४इ । औहोवा । दाश । भाइःसहस्रैः । औ३हो३४इ । औहोवा । आवत्तमिन्द्राः । औ३हो३४इ । औहोवा । शाचि । याधमन्ताम् । औ३हो३४इ । औहोवा । अपास्नीहितीम् । औ३हो३४इ । औहोवा । नृमा२णा२३४औहोवा । अधा३द्रा२३४५ः ॥२०॥

II अवद्रप्सअ(ं)शुमतीम् । ए३ । औ३हो५वा । आतार३४५इष्ठा६५६त् । ईयानःकृष्णोदशभिःसहस्रैः । आवत्तम् । आइ । द्रा३शचि । याधमन्ताम् । अपस्नीहितिनृमणाः । ओवा । अधद्रा३आर३४५ ॥ २१ ॥९१

I,II स्योमरगमि हे ।

(अत्रेतिहास माचक्षते—पुरा किल कृष्णो नामासुरः दश-सहस्र-संख्याकै रसुरैः परिवृतः सन् अंशूमतीनामधेयाया नद्या-स्तीरे अतिष्ठत्। तत्र तं कृष्ण मुदक-मध्ये स्थितम् इन्द्रो बृहस्पति-महागच्छत्। आगत्य तं कृष्णं तस्यानुचरांश्च बृहस्पति-सहायो जघानेति केचिदन्यथा वदन्ति। तेषां कथा-हेतुः—द्रप्स इत्युदक कणोऽभिधीयते। स तु सोमः 'द्रप्सश्चस्कंदेत्यादिषु' सोमपरत्वेनोक्तत्वात्(१)। एतत्पदमाश्रित्याहुः—

"अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः।
नदी मंशुमतीं नाम अभ्यतिष्ठत् कुरुं प्रति।
तं बृहस्पतिनैकेन सोभ्ययात्तत्र वृत्रहा।
योत्स्यमानः सुसंहृष्टै र्मरुद्भि विविधायुधैः।
दृष्ट्वा तानागतान् सोमः स्व-बलेन व्यवस्थितः।
मन्वानो वृत्रहायान्तं जिघांसु मरिसेनया।
व्यवस्थितं धनुष्मन्तं त मुवाच बृहस्पतिः।
मरुत्पतिं रयिं सोम प्रेहि देवान् पुनर्विभो!।
सोऽब्रवीन्नेति तं शक्रः खङ्ग एव बलाद्बली।
इन्द्राय देवानादाय तं पुनर्विधिवत्पुरा।
जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव।

---

(१)—निरुक्तावित्यम् तथाहि "द्रपस स्कन्न मज्जा देशेन, द्रपसः सम्भृत-प्सानीयो

तद्वद्द्रप्स इत्यस्मिन्नृचे सर्वं निगद्यते। एतदनार्षत्वेऽप्यादरणीयं भवति। एषोऽर्थः क्रमेण ऋचि वक्ष्यते। तथाचास्य ऋचोऽयमर्थः—

द्रप्सो द्रुतं सरति गच्छतीति "द्रप्सः" (पृषोदरादिः) द्रुतं गच्छन् "दशभिः सहस्रैः" दशसहस्र-सङ्ख्याकै रसुरैः "इयानः" इयमानः "कृष्णः" एतन्नामकोऽसुरः अंशुमतीं नाम नदी मनु "अवातिष्ठत्" अवतिष्ठते। ततः "शच्या" स्व-कर्मणा प्रज्ञाने न वा(२) "धमम्" उदकस्यान्तरुच्छसन्तम्। यद्वा। जगद्भीतिकरं शब्दं कुर्वन्तं "त" कृष्णासुर"मिन्द्रो" मरुद्भिः सह "आवत्" प्राप्नोत्। "अथ" अनन्तरं पश्चात् "तं" कृष्णासुरं तस्यानुचरांश्च हतवान् इति वदति। "नृमणाः" नृषु मनो यस्य सः। यद्वा। कर्मनेतृषु ऋत्विक्षु एकविधं मनो यस्य स तथोक्तः। तादृशो भूत्वा "स्नीहितिं" (स्नीहितिर्वधकर्मसु पठितः (नि० नै० ३,१८) हिंसित्रीं तस्य सेनाम् "अपद्राः" (द्राति: कुत्सित-गति-कर्मा। स इन्द्रः "अपगमयत्" अवधीदित्यर्थः। तस्यानुचरान् हत्वा तम् असुरं हतवानित्यभिप्रायः ॥ १ ॥ ८१

---

भवति। सर्वे देवा पुष्करे त्वाधारयन्त। पुष्करमन्तरीक्षं पोषति भूतानि। उदकं पुष्करं पूजाकरं पूजयितव्यम। इदमपीतरत् पुष्करमेतस्मादेव पुष्करं वा पुष्यं पुष्यतेः"-इति नि० नै०५,१४ ॥

(२)—शचीति कर्म-नामसु द्वाविंशतितमं पदम् (नै०२,१) प्रज्ञा-नामसु च नवमम् (नै०३,९)।

अथ द्वितीया।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
वृत्रस्यत्वाश्वमथादीषमाणाविश्वेदेवाअजहुर्येसखायः।
३ १ २ ३ १ २ ३ २ ३ २३ ३ १२
मरुद्भिरिन्द्रसख्यन्तेअस्त्वथेमाविश्वाःपृतनाजयासि ॥ २ ॥९२

२ ऽ २ ऽ २ २ १
I हा३। ओ३हा३। ओ३हा३। हाइ। वृत्रस्यत्वा।
२ १ र २ ३ ४ ५ २ १र र २ २ १
श्वसथात्। ईषमाणाः। विश्वेदेवाः। अजह३ः। येस-
४ ५ २ १ २ १ २ ३र ४ ५ २ १ र
खायाः। मरुद्भिराइ। द्रा३सखि। यन्तेअस्तू। अथे
र २ १ २ ३ ४ ५ २ ऽ २
मावाइ। श्वा३ःपृत। नाजयासी। हा३। ओ३हा३।
ऽ २ २ ५र र १ २ १ १ १ १ ११
ओ३हा३। हा३४। औहोवा। आ औ३हो२३४५ ॥२२॥

१ २ २ १ २ २ ३र ५
II होये३। ह्याये३। ह्या। औहो२३४वा।
२ १ २ १ र २ ३ ४ ५ २ १र
हाइ। वृत्रस्यत्वा। श्वसथात्। ईषमाणाः। विश्वे-

९२ ऋग्वेदस्य ६,६,२३,२।

I,II द्युषतो मारुतस्य सामनो द्वे।

देवाः । अजहू३ः । येमखायाः । मरुद्भिराइ । द्रा३-
सखि । यन्तेअस्तू । अथेमावाइ । श्वा३:पृत । नाज-
यासी । हायि३ । हयायि३ । हया । औहो२३४वा ।
हा३४ । औहोवा । आऔ३हो । आऔ३हो३३४५ ॥

॥ २३ ॥ ८२

हे इन्द्र ! तव ये "विश्वदेवाः" प्राक् सखायः सङ्गामे सखित्वं कुर्य्यामेति मित्राण्यभवन् । सर्व्वे देवाः "वृत्रस्य" वृत्रासुरस्य "श्वसथात्" (श्वसेरौणादिकोऽथप्रत्ययः ( , , ) । सर्वान् आगच्छतो दृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वास मकार्षीत्) श्वासाद्भीताः सन्तः अतएव "ईषमाणाः" सर्वतः पलायमानाः "त्वा" त्वाम् "अजहुः" सङ्गामे त्यक्तवन्तः । एवं सति हे इन्द्र ! "मरुद्भिः" सह "सख्यं" सखिभावः "ते" तवास्तु । ये मरुतस्त्वां न परित्यजन्ति तैः सहेति । "अथ" अनन्तरम् "इमाः" विश्वाः सर्वाः "पृतनाः" शत्रुसेनाः "जयासि" स्व-बलेनाभि-

अथ तृतीया।

बृहदुक्थऋषिः।

३ १ २ ३ १र २र ३ १र २र ३ १ २ ३ १ २
विधुन्दद्राण१ुसमने बहूनांयुवान१ुसन्तं पलितोजगार।
३ १ २ ३ १ २ १ २उ ३ २ ३ १र २र
देवस्यपश्यकाव्यंमहित्वाद्यामममारसह्यःसमान॥ ३ ॥ ९३

४ ५ १ ७ २ १ २ १ ४
। वीधूम्। दद्रादद्रा। णा।३१ुसम। नाइबहू-
५ ४ ५ १ ७ २ १ २ ३
नाम्। यूवा। न१ुसान१ुसा। ता३०पलि। तोज-
४ ५ ४५ १ ७ २ १र २ ३ ४
गारा। देवा। स्यपास्यपा। श्याइकावि। यम्महि-

भवसि(१) (अनेन वृत्रघ्नं तमिन्द्रमाह(१)। अत्र मन्त्रे "इन्द्रो वै वृत्रं हनिष्यन्" इत्यादि ऐतरेय-ब्राह्मण मनुसन्धेयम्॥ २॥ ९२

९३ उत्तरार्चिकस्य ८,१,७,१ = ऋग्वेदस्य ८,१,१८,५ = अथर्ववेदस्य १४,२६,८।

(१)—'इवस्य' मेघस्य (क) 'श्वसथात्' आमर्षणात् गर्जितशब्दादेवेत्यर्थः 'ईषमाणाः' पलायमानाः 'विश्वे देवाः' सर्वे देवाः 'अजहुः' त्यक्तवन्तः, के? उच्यते—'सखायः' ये तव सखीभूता आसन्; केवलैर्मरुद्भिः (ख) हे इन्द्र! 'सख्यं' 'ते' तव 'अस्तु' (सोऽयं वाक्यार्थे द्रष्टव्यः)'-इत्यादि, वि०।

(क)—इवः इति मेघ-नामसु अष्टाविंशति पदम् नै०१, १०।

(ख)—"मरुतः मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा"-इत्यादि नि०दै०५,१२।

(१)—एष एव मन्त्रः पौराणिक वृत्रोपाख्याने बीजमिति भावः।

५ ४ ५ १ ० २ १ २
त्वा। आद्या। ममाममा। रा३मचि। या३४३ः।

२ ४
सा३मा५ना६५६ ॥ २४ ॥

२ ३ ३ ११११ २१
II इ००४। आ४५। इ००। इ००२३४५। विधुं-

२ १ २ ३४ ५ २१र
दद्रा। णा३००सम। ना३बह्ननाम्। युवान००सा।

२ १ २ २ ४ ५ २र१ २ १र
ता३०पलि। तीजगारा। देवस्यपा। ग्या३कावि।

२ ३ ४ ५ २ २ ३ ११ ११
यम्मचित्वा। इ००४। आ४५। इ००। इ००२३४४।

२ १र २ १ २ २ ४
अद्यामममा। रा३सचि। या३४३ः। सा३मा५ना६५६॥

॥ २५ ॥ ९३

अनया कालात्मक इन्द्रः स्तूयते—"विधुं" विधातारं सर्वस्य युद्धादेः कर्त्तारं(१) (वि-पूर्वो दधातिः करोत्यर्थे) तथा "समने" (अनन मनः प्राणनं। सम्यगनोपेते) सङ्ग्रामे(२) "बह्वनां" शत्रूणां

---

I, II सोमसामनी द्वे।

(१)—'दृष्टि-प्रदानादिना उपकरणेन सर्वजगतः धारयितारम्'-इति वि०।

(२)—'समनम्' इति भाष्ये स सामसु योक्त्र नैघण्टुकम्२.१७।

अथ चतुर्थी।

द्युतानऋषिः।

२ ३ २३१२३ १ २ ३ १ २ ३ १ २
त्वꣳह्यत्यशत्रुभ्योजायमानोशत्रुभ्योअभव.शत्रुरिन्द्र।
३ १२ २२ ३ १२ २२ ३ २ ३ १ २ ३ १ २
गूढेद्यावापृथिवीअन्वविन्दोविभुमद्भ्योभुवनेभ्योरणन्धा॥१॥९४

"दद्राण" द्रावकम्। ईदृक्सामर्थ्योपेतमपि "युवान" सन्तम्। "पलितोजगार"(३) निगिरतीन्द्र-कृपया। एव मुक्त-लक्षणं वक्ष्य-माण-लक्षणं च "देवस्य" कालात्मकस्येन्द्रस्य "महित्वा" महत्वे-नोपेतं "काव्यं" सामर्थ्यं(४) पश्य हे बृहदुक्थ! (ऋषिःस्वात्मान मामन्त्र्य वदति—) तथा यो जरां प्राप्तोऽद्य "ममार" म्रियते "स" "ह्यः" परेद्युः "समान" सम्यग् जीवति पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः(५)॥ ३॥ ९३

९४ ऋग्वेदस्य ६,६,३५,१।

(३)—'पलितः' पलितत्वं वृद्धत्वस्योपलक्षणम्. वृद्धः सन् जगार. गॄ स्तावित्यस्य उत्तमपुरुषस्यैकवचनमिदम् स्तौमीत्यर्थः' इति वि०।

(४) 'कविर्मेधावी. तस्य भावः काव्यं कवित्वमित्यर्थः, कीदृशं पुनः कवित्वम्? उच्यते —महित्वा महत्वेन स्वमाहात्म्यनेत्यर्थः' इति वि०।

(५)—यास्कस्त्विम मन्त्रं व्याचष्टे—" 'विधुं' विधमनशीलं 'दद्राणं' दमनशीलं 'युवानं' चन्द्रमसं 'पलितः' आदित्यो 'जगार' गिरति स ह्यो म्रियते स दिवा समुदित इत्यधिदैवतम्. अथाध्यात्मं —विधुं विधमनशीलं 'दद्राणं' दमनशीलं 'युवानं' महान्तं 'पलितः' आत्मा गिरति रात्रौ म्रियते रात्रिः समुदितेत्यात्मगतिमाचष्टे" इति नि० १४,१८।

I औहोइतुवाम् । हत्वत्मन्नभ्योजायमाना२३४ः । औ-
होअशा । ऽभ्याअभवः शत्रुरिन्द्रा२३४ । औहोइगढे ।
द्यावापृथिवीअन्वविन्दा२३४ः । औहोइविभू । मद्वरो-
भुवनेभ्योरणन्था२३४५ः ॥ २६ ॥

II त्वोहाइ । हत्यौवाओ२३४वा । मन्नभ्योजायमा ।
नोवा३ । औवा२३४५ । ओशोहाइ । ऽभ्यौवाउ२३४वा ।
अभव शत्रुरि । द्रोवा३ । ओवा३४५ । गढोहाइ ।
द्यौवाओ२३४वा । पृथिवीजन्ववि । दोवा३ । ओवा३४५ ।
विभोहाइ । मद्वगौवाओ२३४वा । भूवने । भ्योवा३ ।
ओवा३४५ । रणापुन्थाः । होपुइ । डा ॥ २७ ॥ ९४

I,II इन्द्रवज्रे द्वे ।

अथ पञ्चमी।

वामदेवऋषिः।

१ १र २र३ १ २ ३ १ २ ३ १ २ ३२ ३ १ २
मेडिन्नत्वावज्रिणम्भृष्टिमन्तम्पुरुधस्मानंवृषभꣳस्थिरप्स्नुम्।

३ २र ३ १ २ ३ १र २र ३ १ २ ३ १ २
कराथ्यर्यस्तरुषोर्दुवस्युरिन्द्रद्युक्षंवृत्रहणंगृणीषे॥ ५॥९५

हे "इन्द्र!" "त्वं ह" त्वं खलु "त्यत्" तदेतत् कर्म्म कृतवानसि। किं तदुच्यते? "जायमानः" त्वं प्रादुर्भवन्नेव "अशत्रुभ्यः" शत्रु-रहितेभ्यः "सप्तभ्यः" कृष्णा-वृत्र-नमुचि-वराहारादिभ्यः सप्तभ्यो बलवद्भ्यः प्राणिभ्यः "शत्रुः" "अभवः" सप्तभ्यः पूर्व्यः शत्रुः शातयिता दारयिता अभवः (सप्त यत्पुरः शर्म्म-शार-दीर्द्दर्त्त इति हि निगमः) अथवा सप्तभ्यःसप्त होतृ-प्रभृतयो होत्रकाः, तदर्थं यज्ञेषु प्रादुर्भवन्नेव कर्म्म-विघ्नकारिभ्यः शत्रुरभवः। किञ्च। हे इन्द्र! त्वं "गूढ़े" संवृते द्यावापृथिव्यौ सूर्य्यात्मना प्रकाश्य अनुक्रमेण ते "अविन्दः" अलभथाः तथा "विभुमद्भ्यो" महत्त्व-युक्तेभ्यः "भुवनेभ्यो" लोकेभ्यः "रणं" रमणं "धाः" धारयसि विदधासीत्यर्थः॥ ४॥ ९४

I मेडीम्। नत्वावज्रिणम्भिष्टिमा२३न्ताम्। पुरु-
धस्मानंवृषभᳪस्थिरा२३प्स्नुम्। करोष्यर्यस्तरुषाइर्दुवार६-
स्यूः। आइन्द्रद्युम्नम्। वृत्रा२३। हारणा२३४औहो-
वा। गृणीइषे२३४५॥ २८॥

II मेडिन्नत्वा। वा३४औहो। ज्राइ। णम्भाइर्ष्टीइ-
मौ। वा३२३४। ताम्। पुरा३४औहो। धस्मान
वृ। षभᳪस्थाइरौ। वा३२३४। प्स्नूम्। करा३४-
औहो। षिअर्यस्त। रुषाइर्दूवौ। वा३२३४। स्यूः।
इन्द्रा३४औहो। द्युम्नम्। वृत्रा२३। हारणा२३४
औहोवा। गृणीषे२३४५॥ २९॥ ९५..

---

I,II भृष्टिमतः सूर्यवर्चसः सामनी द्वे।

हे "इन्द्र!" "दुवस्युः" दुवः परिचरणं स्तुत्यादि-लक्षणं[1] तदिच्छुस्त्वं यतः "अर्यः" अरीन् अस्मद्विरोधिनः[2] "तरुषीः"[3] तारकान् जेतृनस्मान् करोषि (यद्वा। तरुषीः तरणस्वभावात्। पक्ष द्वयेऽपि लिङ्ग-व्यत्ययः। अर्यः अरीनस्माकं शत्रून् करोषि उपक्षीणानिति शेषः) अतः "मेहिंन" (मेहिरिति-वाङ्नाम) [नै०१,११,१८] माध्यमिकीं वृष्टि-प्रदां वाचमिव तां यथावृष्ट्यर्थं स्तुवन्ति तद्वत्[4] "त्वा" त्वां "गृणीषे" स्तोत्रमुच्चारयामि स्तौमि[5] कीदृशं त्वां? "वृत्रहणं" वृत्रस्यासुरस्य मेघस्य वा हन्तारं। "द्युक्षं"[6] द्युलोके वर्त्तमानम्। "पुरुधस्मानं" बहूना मुदकानां धारकं[7] (यद्वा। वर्ण-व्यत्ययः[8])। पुरूणां बहूनां दासयितारं शत्रूणां क्षपयितारं) "वृषभं" कामानां वर्षकम्[9]। "स्थिरप्स्नं" स्थिररूपं। न हीन्द्रस्य रूपं कदाचिदपि प्रच्युतं भवति (यद्वा। स्थिराणां शत्रूणां भक्षकं विघातिन

(१)—'दुवस्यति'-इति परिचरण-कर्मसु पञ्चमं नैघण्टुकम् ३,५।

(२)—'अर्यः'-इति ईश्वर-नामसु द्वितीयं नैघण्टुकम् २.२२। अतएव 'अर्यः ईश्वरः'-इति वि०।

(३)- 'तरुषमिति वधकर्म वधेन सङ्ग्रामो लक्ष्यते, सङ्ग्राममित्यर्थः'-इति वि०।

(४) 'अन्तर्णीत-त्वर्थश्च द्रष्टव्यम्, वाग्मिन मित्यर्थः'-इति वि०।

(५)—'गृणीषे मध्यमपुरुषैकवचनमिदम् उत्तमपुरुषैकवचनैकस्य स्थाने द्रष्टव्यम्' इति वि०।

(६)—दिवि द्युलोके क्षियति निवसति इति द्युक्षः, तम्।

(७)—'पुरु इति धननाम, धस्मान मिति धमे दमनं इत्यस्येदं रूपम्'-इति वि०।

(८) दस्मानमित्येवं दकारवर्णो पठितव्यं धस्मानमिति धकारवर्णपाठो वर्णव्यत्ययः

(९)—'वर्षणाद् वृषभः'-इत्यादि नैरुक्तम् दै०३,२२।

अथ षष्ठी।

वसिष्ठऋषिः।

१ २ ३ १ २ ३ १ २　३ १ २　३ १ २ ३　१ २
प्रवोमहेमहेवृधे*भरध्वप्रचेतसेप्रसुमतिंकृणुध्वं।

१ २　३ १र　२र　३ २
विशःपूर्वीःप्रचरचर्षणिप्राः॥ ६ ॥ ९६

५ ४　१ र २ र　र　१ २ १　१
1 प्रवाः। माहेमहेवृधे। भराधूइवाम्। प्रचाइ-

२ १　२ ३　५　१　३
तसाइ। प्रासूमार३४तोभ्। कृणुध्वम्। इहार्वार३-

मित्यर्थः।)' "वज्रिणं" वज्रवन्तम् "भृष्टिमन्त" गत्रणां भर्जन-
वन्त'(९)॥ ५ ॥ ९५ ॥

---

* "महिवृधे"-इति, "चरा चर्षणि प्राः"-इति च ऋग्वेदीय पाठः।

---

९६ उत्तरार्चिकस्य ८,१,११,१ = ऋग्वेदस्य ५,३,१६,४ आरण्यके ४,२,१३।

(९)—'भृष्टिशब्देन शिखराण्युच्यन्ते, तानि चात्र वज्रशिखराणि परिगृह्यन्ते, तेन तद्वन्तम्' इति वि०।

५ १ २ १ २ १
४इशाः। पूरश्वीः। प्रचा। रारश्चा। षणाइ।

२ ४ ५ ४
प्रा। औ३होवा। होपइ। डा॥ ३०॥

३ १११ १ २ र ३ ५ ३ २
॥ हुं२३४५। प्रवोमहाइमा२३४हे। वृधा३४३इ।

२ ३ ५ ३ ११११ २ ३ ५
भरा२३४ध्वाम्। हुं२३४५। प्रचेतसाइप्रा२३४ह्ह।

३ २ २ ३ ५ ३ १ १११ २ र
मता३४३इम्। कृणू२३४ध्वाम्। हुं२३४५। विश्रःपू-

३ ५ ३ २ २ ३ ५ २ १
र्वीइःप्रा२३४चा। रचा३४३। षणा२३४इप्राः। हुं२

१ ११ र र ४ ५ ५ ३ ११११
३५। हाउहौहोवाई। हाउवा। ई२३४५॥ ३१॥ ९६

हे अस्मदीयाः पुरुषाः! "वो" यूयं "महेवृधे" महतां धनानां वर्द्धयित्रे "महे" महत इन्द्राय "प्रभरध्व" सोमान् प्रणयत। "प्रचेतसे" प्रकृष्ट-ज्ञानाय इन्द्राय "सुमतिं" सुष्टुतिं च(१) "प्रकृणुध्वं" प्रकुरुत।

I,II अङ्कौ स्तः।

(१)—'मन्यते इत्यर्चति कर्मणः (नै०३,१४,२८) सुशब्दः स्तुत्यर्थः; शोभनां स्तुतिमित्यर्थः' इति वि०।

अथ सप्तमी।

विश्वामित्रऋषिः।

२ १ २ २ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
प्रुनॅᳫंहुवेममघवानमिन्द्रमस्मिन्नरेनृतमंवाजसातौ।

३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शृण्वन्तमुग्रमूतयेसमत्सुघ्नंतंवृत्राणिसञ्जितंधनानि*॥७॥ ९७

५ ४ ५ र ४ ५ र ४ २ १ र
I प्रुनॅᳫंहुवेममघवानमिन्द्राम्। अस्मिन्भरेनृत-

र २ १ २ १ र र २ १ २
मंवाचसा२३ताउ। शृण्वन्तमुग्रमूतयेसमा२३त्सू।

अथ प्रत्यक्ष-स्तुतिः(१)। हे इन्द्र! "चर्षणिप्राः"(२) कामैः प्रजानां पूरयिता त्वं "पूर्वीः" हविषां पूरयित्रीः "विशः" प्रजाः "प्रचर" अभिगच्छ॥ ६॥ ९६

---

* "धनानाम्"-इति ऋग्वेदीयः पाठः।

---

९७ ऋग्वेदस्य ३,२,४.६।

I भारद्वाजम्।

(१) प्रचरेति मध्यमपुरुषयोगात्।

(२) चर्षणयो मनुष्याः नि० २,३,८।

घ्न। तंवा२३र्त्ती३। होवा३हा। णिसञ्जितम्।

धना२३नी३। होवा३हा३४३इ। ओ२३४५इ। डा॥

॥ ३२ ॥ ९७

हे "इन्द्र!" "वाजसातौ" वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोऽयं वाजसातिः तस्मिन् "भरे" (बिभ्रति जय-लक्ष्मी मनेन योद्धार इति भरः संग्रामः तस्मिन्) सङ्ग्रामे "शून" शूनम् उत्साहेन प्रवृद्धं(१) "मघवान" धनवन्तम् अतएव "इन्द्र" निरतिशयैश्वर्य्यसम्पन्नं "नृतमं" सर्वस्य जगतोऽतिशयेन नेतारं त्वां "हुवेम" कुशिकावयं यज्ञार्थ मावहयेमा। तथा "शृण्वन्तम्" अस्माभिः क्रियमाणां स्तुतिं शृण्वन्तम्। "उग्र" शत्रूणामुद्गूर्णं। "समत्सु" सङ्ग्रामेषु(२) "वृत्राणि" वृत्रोपलक्षितानि सर्वाणि रक्षांसि "घ्नन्त" हिंसन्तं। "धनानि" शत्रु-सम्बन्धीनि सञ्जितं सम्यग्जेतारं त्वाम् "ऊतये" रक्षणाय वयं मावहयेम॥ ७॥ ९७

(१)—'शून सुखं (नै०३,६,११), सुखकरमिन्द्र मिति वि०।

(२)—'समत्' इति सङ्ग्रामनामसु द्वाविंशमिदमं नैघण्टुकम् २.१७।

अथाष्टमी ।

वसिष्ठ ऋषिः ।

उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आयो विश्वानि श्रवसा* ततानोपश्रोता म ईवतो वचांसि ॥ ८ ॥ ९८

I दिवया । ओवा । औ३होइवा । उदुब्रह्मा । णीइ-
ए र । तश्रवस्या । इन्द्रꣳसमा । यें३महा । यावसि-
ष्ठा । आयोविश्वा । नी३श्रव । सांततानां । दिव-
या । ओवा । औ३होइवा । उपश्रोता । मईव ।
तो३४३ । वा३चाꣳसा६५६इ ॥ ३३ ॥ ९८

* "श्रवसा"-इति ऋग्वेदीयः पाठः ।

९८ ऋग्वेदस्य ५,३,७,१ = आरण्यके ४,२,८-१० ।

I वैश्वदेवम् ।

अथ नवमी।

गौरिवीतिर्ऋषिः।

३ १र २र३ १र २र ३ १र २र३ १र २र

चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात्।

"अवस्या" अन्नेच्छया(१) "ब्रह्माणि" स्तोत्राणि हवींषि च इन्द्रार्थम् "उदैरत" सर्वे ऋषय इति शेषः(उदीरतिपूरणः(२) हे वसिष्ठ! त्वमपि "समर्ये" यज्ञे(३) "इन्द्र" "महय" स्तोत्रेण हविषा च पूजय। अपिच "यइन्द्रो" "विश्वानि" भुवनानि "अवसा" अन्नेन कीर्त्या वा "आततान" सः "ईवतः"(४) उपगमनवतो "मे" मम "वचांसि" स्तुति-रूपाणि वाक्यानि "उपश्रोता" भवतु॥ ८॥ ९८

(१)--अवोऽन्नमिति नरुक्तम्। 'अवस्या अवणीयाणि उत्कृष्टानीत्यर्थः'-इति वि०।

(२)—'अथ ये प्रवृत्तेऽर्थे मिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' इति नै० १,९।

(३)—'समर्थे सङ्ग्रामस्थानीय यज्ञे'-इति वि०। 'समये' इति सङ्ग्रामनामसु त्रयोविंशतितमं नैघण्टुकम् २.१७।

(४)—'ईवतः ईन्वतेर्व्याप्ति कर्मणः, एतद्रूपं व्याप्तिमतः, अशेष-गुणप्रकाशनस्येत्यर्थः। कस्य पुनर्व्याप्तिमतः उपश्रोता! उच्यते—वचांसि, प्रथमाबहुवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम्, वचसः वचनस्येत्यर्थः। यो विश्वानीति पुरस्तादच्छन्दसमध्याहृत्यैक-वाक्यता योजयितव्या'-इति वि०। 'ईन्वति' 'इन्वति' च पाठभेदेन व्याप्तिकर्मसु प्रथमं नैघण्टुकम् २.१८।

३ १र २र ३२र ३ २ ३१र २र३ १ २
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु॥ ८॥९९

॥ चतुर्थ-दशति ॥

५ ४ ५ र ४ र ५ ४ २ १र र २
चक्रं यदस्याप्स्वानिषत्तम्। उतो तदस्मै मध्विच्च-

१ २ १र २ १ २ १ र
च्छाद्यात्। पृथिव्यामतिषितं यदूधः। पयो गोष्वदधा

"अस्य" इन्द्रस्य "चक्रम्" आयुधं(१) अप्सु" अन्तरिक्षे "आ" सर्वतो "निषत्त" निषण्णमासीच्छ्रवे हननार्थम्। "उतो" तत् अपिच "अस्मै" इन्द्राय "मध्वित्" उदकमपि(२) "चच्छद्यात्"

९९ ऋग्वेदस्य ८,३,४,२।

I पुरीषम्।

(०)—"चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा" इति नि० नै०४,२७।

(१)—'आप'-इति अन्तरीक्षनामसु अष्टमं नैघण्टुकम् १,३।

(२)—इच्छब्दोऽप्यर्थः। 'मधु' इति उदकनामसु एकादशं नैरुक्तम् १,१२। मध्वीदिति ऋचि दीर्घस्त छान्दसः।

२ १ २र १र १र १ २ १
षू। आदधाओषधीषु। इडा२३भा३४३। ओ२३४५इ।

डा*॥ ३४ ॥९९

वशं नयति। "पृथिव्याम" अतिषितं" अतिषितं" विमुक्तं यदधः" उदकमस्ति तत् "पयोगोष्वोषधीषुच "आदधा" आदधाति ॥ ८ ॥ ९९

इति श्रीसायणाचार्य्य विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य दशमः खण्डः ॥ १० ॥

---

अथैकादशे खण्डे—

सैषा प्रथमा।

तार्च्यपुत्रोऽरिष्टनेमिऋषिः।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २ ३ १ २ १ २
त्यमूषुवाजिनन्देवजूतꣳसहोवानंतरुतारꣳरथानाम्।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
अरिष्टनेमिम्पृतनाजमाशुꣳस्वस्तयेतार्च्यमिहाहुवेम॥१॥१००

॥ * इतिग्रामेगेये अष्टमः प्रपाठकः॥

* "सहावानम्"-इति ऋग्वेदीयः पाठः।

१०० ऋग्वेदस्य ८,८,३६,१।

५ र　२र　११११　२र र ३
I ओम् । त्यमूषू । वाजि । ना३४५म् । देवजूता२३-
५ र३र२१　२　२३४५　२
४म् । सहोवानन्ता । रुता३ । र७रथानाम् । अरि
३　५　२　२३र ५　२ १
ष्टना२३४इमीम् । पृतना३४३जमाशुम् । स्वस्त । याइ ।
र २ ३ २　२ ४
तार्क्ष्यमिहा३४३ । हु३वा५इमा६५६ ॥ ॥१॥

२र　२ २　र र　४ ३ ३र५
II ईयइया३हाइ । त्यमूषुवाजिना३०देश्वजूतम् ।
३ ५ ४५र　३　५र ३र२१　२
ई४यइया । हा२३४इ । सहोवानन्ता । रुता३ ।
२ ३ ४ ५　२र　२　१　२
र७रथानाम् । ईयइया३हाइ । अरिष्टा३ । नाइ । मी-
१　२ ३ ४ ५　३ ५ ४ ५र　२ ११ ११
३०पृत । नाजमाशूम् । ई४यइया । हा२३४५इ ।
२ १　र २ ३ २　२ ४
स्वस्त । याइ । तार्क्ष्यमिहा३४३ । हु३वा५इमा६५६ ॥
॥२॥ १००

---

I,II तार्क्ष्यसामनी द्वे ।

८५क,

"त्यमु"(१) तं प्रसिद्धमेव "तार्च्यं" तृच-पुत्रं "सुपर्णं" (तृच-पुत्रो गर्गादिः(२) "स्वस्तये" क्षेमाय "इह" अस्मिन् कर्मणि "हुवेम" भृश माह्वयेमहि ("बहुलं छन्दसीति (६,१,३४) ह्वयतेः संप्रसारणं। "लिङ्याशिष्यङ् (३,१,८६)"। यद्वा। प्रार्थनायां लिङि व्यत्ययेन शः(३,१,८५)। कीदृशं? "वाजिनम्" अन्नवन्तं बलवन्तं वा "देवजूतं" देवैः सोमाहरणाय प्रेरितं (जु इति गत्यर्थः, सौत्रो धातुः; अस्मात् क्तः पूर्वपद-प्रकृति-स्वरत्वम्) [यद्वा। देवैः प्रीयमाणं तर्प्यमाणं। यदाह यास्कः—"जूतिर्गतिः प्रीतिर्वा(३)देवजूतं देवप्रीतं वेति] "सहोवानं" सहस्वन्तं (सहश्शब्दादनिप् मत्वर्थीयः) बलवन्तं वा। अतएव "रथानाम्" अस्मदीयानां "तरुतारं" सङ्ग्रामे तारकं। यद्वा। रंहणशीला अमी इमे लोका रथाः(४) तान् सोमाहरण-समये शीघ्रं तरीतारं (श्रूयते हि—"एष इमान् लोकान् सद्यस्तरतीति"। तरते स्तृचि "ग्रसित-स्कभितेत्यादौ (७,२,३४) उड़ागमो निपात्यते) "अरिष्टनेमिं" अहिंसित-रथं (यद्वा। नेमि नमन-शील मायुधम्(५) अहिंसितायुधम्। अथवा उपचारा ज्जनके जन्यशब्दः।

(१)—ऋचि "त्यमूषु"-इति "निपातस्य च (६,३,१३६)"-इति दीर्घः।" "सुञः (८,३,१०७)"-इति षत्वं च।

(२)—तथाच गर्गादित्वात् यञ् (४,१,१०५,)।

(३)—तथाहि,—तदाद्यन्तमसुदितमिदं "नीर्णोऽन्तरिक्षे क्षियति, तूर्णमर्थं रक्षत्यश्नोतेर्वा तस्यैषा भवति 'त्यमूषु वाजिनं' तं भृशमन्नवन्तं जूतिर्गतिः प्रीतिर्वा, देवजूतं देवगतं देवप्रीतं वा सहस्वन्तं तारयितारं रथाना मरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यं मिह ह्वयेमेति"-इति दै० ४,२८।

(४)—"रथो रंहतेर्गतिकर्मणः स्थिरते र्वा स्याद्विपरीतस्य रममाणो ऽस्मिं स्तिष्ठतीति वा रपते र्वा रसते र्वा"-इति नि० दै० ३,११।

(५)—"नेमिः"-इति वज्र नामसु द्वितीय नैघण्टुकम् २,२०।

अथ द्वितीया ।

भरद्वाज ऋषिः* ।

३ २ ३१ २ ३ २ ३ २ ३ १ २ २ २३ २ ३ १ २
त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ।

३ २उ ३ २ ३ १र २र ३ २ ३ २ ३ १ २ ३ १ २
ह्वयेनुशक्रं†पुरुहूतमिन्द्रमिदꣳहविर्मघवावेत्विन्द्रः ॥२॥१०१

२र १र ७ २ १ र र
I त्रातारमिन्द्रमविता । रमीर२३०द्रायम् । हवेहवे-

७ २ १
सुहवꣳशू । रमीर२३०द्राम् । ह्वाइनुशक्रंपुरुहू ।

अरिष्टनेमि मम जनक) "पृतनाजं" पृतनानां शत्रुसेनाना माजितारं प्रगमयितारं जेतारंवा (अज गति-क्षेपणयोः । अस्मात् क्विप् । "वलादावार्द्धधातुकेविकल्पइष्यते" (२,४,५६वा०) इति वचनात् वी-भावाभावः । यजते वा ड्विण्प्रत्ययः) "आशुं" शीघ्रगामिनम् ॥ १ ॥ १००

* "गर्गस्यार्षम्" इति वि० ।

† "ह्वयामि शक्रम्"-इति ऋग्वेदीयः पाठः ।

१०१ ऋग्वेदस्य ४,७,२२,१ ।

I इन्द्रस्य च तातम ।

अथ तृतीया।

वसुक्रो विमदो वा ऋषिः।

१ २ ३२ ३ १ २ १ १२ १ २ऽ १ २
यजामह इन्द्रं वज्रदक्षिण$\smile$ हरीणा$\smile$ रथ्या३० *विव्रतानाम्।

१र २र३ १ २ ३ १ २ ३१र २र ३ १ २ ३ १र २र
प्रश्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्विसेनाभिर्भयमानोविराधसा॥३॥१०२

१ २ १ २ १ २ १ र २
तमीर२३०द्राम्। इद$\smile$ह। वाइः। मघवा। वा३-

२ ४
४३इ। तू३वा५इन्द्राई५ईः॥ ३ ॥ १०१

"त्रातारं" शत्रुभ्यः पालयितारम् "इन्द्रं" "हुवे" आह्वयामि। तथा "अवितारं" कामैस्तर्पयितार मिन्द्र माह्वयामि। "आ हवे हवे" सर्वेष्वाहवनेषु "सुहवं" सुखेनाह्वातुं शक्यम्। "शूरं" शौर्य्यवन्तं "शक्रं" सर्वकार्येषु शक्तं "पुरुहूतं" पुरुभिर्बहुभिः पालनार्थं माहूतम्। एवंविध मिन्द्रम् "आहुवे" आह्वयामि। एव माहूतो 'मघवा" धनवान् स "इन्द्रः" "इदं" पुरोवर्त्ति हविः "वेतु' भक्षयतु॥ २ ॥ १०१

* "रथ्यम्"-इति ऋग्वेदीयः पाठः।

१०२ ऋग्वेदस्य ७,७,८,१।

५ र ४ ५ १ २ १ २
I यजामहोवा। आइन्द्रंवज्र। दक्षा२३इणाम्।

१ र २र १ २ १ २ १र २
हरीणा॑रथ्यंवि। व्रता२३नाम्। प्रश्मश्रुभिर्दोधुवत्।

१ २ ३ ५ १ २ १
ऊ। ध्वाधाभू२३४वात्। विसाइ। ना। भिर्भयमा-

१ २ २ ५
ना२३ः। वा२३इरा३। धा३४५सोद्दाइ॥ ४॥ १०२

वयं "इन्द्र" "यजामहे" सोमलक्षणैर्हविर्भिः पूजयामः। कीदृशं? "वज्रदक्षिणं" शत्रु-बधाय सततं "वज्रो दक्षिणे हस्ते यस्य तम्। "विव्रतानां" रथ-वाहनादि-विविध-कर्मणां(१) "हरीणाम्" एतत्सञ्ज्ञकाना मश्वानां(२) "रथ्यम्" आनेतारम्। स इन्द्रः सोमपानानन्तरं "श्मश्रुभिः(३)" स्वकीयैः "दोधुवत्" पुनः पुनः धून्वानः सन् "ऊर्ध्वधाः" "वि भुवत्(४)" विशेषेण प्रादुर्भवति। किञ्च। "सेनाभिः" मरुदादिभिः स्वकीयैः सैन्यैः "भयमानः" शत्रून् कम्पयन् "राधसा" [द्वितीयार्थे तृतीया (३,१,८५)]राधो धनं (वीत्युपसर्ग-श्रुते र्योग्य क्रियाध्याहारः) विविधं स्तोतृभ्यो ददाति॥ ३॥ १०२

---

I वार्त्रतुरम्।

(१)—वि र्वैविध्यार्थे। व्रतमिति कर्म-नामसु सप्तमं नैघण्टुकम् २,१।

(२)—"हरी इन्द्रस्य"-इति नैघण्टुकम् १,१५,१।

(३)—'श्मश्रुभिः तृतीया-बहुवचनमिदं द्वितीया-बहुवचनस्य स्थाने द्रष्टव्यम्, श्मश्रु-ग्रहणं चात्र प्रदर्शनार्थम्, सर्वरोमाणि शत्रूणां दोधुवत' इति वि०।

(४) भवदिति लेटोरूपम् (३,४,७ किञ्च ३,४,९४)।

अथ चतुर्थी।

एतदादि-तिसृणां वामदेवऋषिः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २३ १ २ ३ २ ३ १ २
सत्राहणंदाधृषिंतुम्रमिन्द्रंमहामपारंवृषभꣳसुवज्रम्।

३ २ ३ १२ २२ ३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हन्तायोवृत्रꣳसनितोतवाजन्दातामघानिमघवासुराधाः॥४॥
१०३

५ र ३ २ ३र ४र ५ १ २ १
I सत्रा। हणा३४औहोवा। दाधृषिन्तू। म्रमि-

२ ३ ५ २ १र २र १ २ १ २ १ १
न्द्राओ२३४वा। महामपारंवृषभꣳसुवज्रा२३म्। हन्ता

३ ५ १ २ २ ४
२योर३४वृ। त्राꣳसनि। तो३४३। ता३वा५जा६५

१र २र १र १ २ ३र १र २ १ १ १ १
६म्। दातामघानिमघवा२सुराधा२३४५ः॥५॥

४ र ३ ४ ३र ४ ५ २ २ ३ ५ २ १र
II सत्राहणंदाधृषिम्। तू३४३म्रमिन्द्रम्। महा-

२र १ २ १ २ १ २ ३ ५ १
मपारंवृषभꣳसुवज्रा२३म्। हन्तायो२३४वृ। त्राꣳसनि।

---

१०३ ऋग्वेदस्य ३,५,२२,३।

I,II धृषतो मारुतस्य सामनी द्वे।

२　　२　८　　१र २र　१र　२ १ ३र
तो३४३। ता३वापुजा६५६म्। दातामघानिमघवार

१र ३ १ १ १ १
सुराधा२३४५ः॥ ६॥ १०३

"सताहणं" बहूनां शत्रूणां हन्तारं(१) "दाधृषिं" अतिशयेन धर्षकम्। "तुम्र" (तुमिः प्रेरण-कर्मा) शत्रूणां प्रेरकं। "महां" महान्तम्। "अपारम्" अपरिमाणं विनाश-रहितमित्यर्थः। "वृषभं" कामानां वर्षितारं। "सुवज्रं" शोभनेन वज्रेणोपेत-मिन्द्रं वयं स्तोतारः स्तुम इति शेषः। "यः" इन्द्रो "वृत्रं" वृत्र-नामान मसुरं "हन्ता" हिंसिता भवति। उतापिच। यः इन्द्रो "वाजम्" अन्नं "सनिता" दाता भवति। "सुराधाः" शोभन-धन-युक्तो यो मघवेन्द्रः "मघानि" धनानि(२) दाता भवति तमिन्द्रं स्तुम इति पूर्वेण सबन्धः। (अत्र सर्वत्र तृन्नन्त-त्वात् "न लोकाव्ययेत्यादिना(२,३,६९) षष्ठी-प्रतिषेधे सति द्वितीयैव भवति॥ ४॥ १०३

(१)—'सता-शब्दः सदा-शब्द-पर्यायः'-इति वि०। 'सता' इति सत्य-नामसु च तृतीयं नैघण्टुकम् ३,१०।

(२)—'मघम्'-इति धन-नामसु प्रथमं नैघण्टुकम् २.१०।

अथ पञ्चमी।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
योनोवनुष्यन्नभिदातिमर्त्तउगणावामन्यमानस्तुरोवा।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
त्विधीयुधाशवसावातमिन्द्राभीष्यामवृषमणस्त्वोताः ॥५॥ १०४

३र ४र ३ ४ ५ र ३ २ ५ १ र
I योनोवनुष्यन्नभिदा। तिमा३२३४र्त्ताः। उगणा
र र २ १ २ १र र र र २ १
वामन्यमानस्तुरोर३वा। त्विधीयुधाशवसावातमार२३इ
१ १ २ २ १ २ २ १ २
न्द्रा। अभाइष्या३मा। वृषामा३णा३ः। त्वोर३ता३४
१
३ः। ओ२३४५इ। डा ॥७॥ १०४

हे इन्द्र! "यो" "मर्त्तो" मनुष्यः "नः" अस्मान् "वनुष्यन्" हन्तुमिच्छन्(१) "अभि दाति" आभिमुख्येनागच्छति(२)। यो वा "मन्यमानः" आत्मानं बहु मन्यमानो मर्त्तः "उगणा वा" उत्कृष्ट-

---

१०४ आरण्यके ५,२,१४।

I आतम्।

(१)—'वनुष्यम् हन्ति-कर्म'-इति वि०।

(२)—'अभिदाति आभिमुख्येन ददाति योऽस्माकमदत्वा अन्येभ्यो ददातीत्यर्थः'-इति वि०। 'दाति'-इति दान कर्मसु प्रथम नैघण्टुकम् ३,२०।

अथ षष्ठी।

२ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यं वृत्रेषु क्षितय स्पर्द्धमाना यं युक्तेषु तुरयन्तो हवन्ते।
१र २र ३ २ ३ १र २र ३ १र २र ३ १ २ ३ १र २र
यं शूरसातौ यमपामुपज्म*न्यं विप्रासो वाजयन्ते स इन्द्रः॥६॥

१०५

गणाः उरुगणगणाः(३) "तुरो(४)" हिंसितो रस्मदीयाः प्रजाः अभि-
गच्छति। केन साधनेन हिंसिष्यन्? "चिधो" [चिः चयो
धीयते क्रियते अनेनेति चिधिः तृतीयैकवचनस्य पूर्वसवर्णः(५)]
चयकारणेन "युधा" आयुधेन (६) "शवसा" वेगेन बलेन वा
आयाति। "त्वोताः" त्वया रक्षिताः(७) "वृषमणः" वृषा इवाच
रन्तो वयं "तम्" "अभिष्याम" अभिभवेम(८)॥ ५॥ १०४

* "मुपज्म"-इति मुद्रितपुस्तकपाठः सायणाचार्य्यादि-धृतश्च।

(३)—'उरु गणयतीत्युरुगणाः, उरुगणाः उगणाः उच्यन्ते; एतदुक्तं भवति--थोऽ-
स्मभ्यमल्पं दत्वा बहु गणयति जनेभ्यः कथयति यस्त्वं मन्यमानः वाचा पूजयन्"-इति
वि०। "उरु"-इति बहु-नामसु प्रथमं पदम् (नै० ३,१)।

(४)—'तुवतेर्वधकर्मण (नै० २, १९) एतद्रूपम्; वाचा पूजयन् हृदयेन हिन-
स्तीत्यर्थः' इति वि०।

(५)—"सुपां सुलुक्-पूर्वसवर्णाच्छेयाडाड्यायाजालः (७,१,३९)।

(६)—'युधा युद्धेन' इति वि०।

(७)—'त्वया उताः'-इति त्वोताः। उताः रक्षिताः।

(८)—इत्येतदाशास्महे इति भावः। "निपातस्य च (६,३,१३६)"-इति मन्त्रे दीर्घः
अभीष्याम इति।

८६ क्रा,

I हाउयंवृत्रेषू। चितयाइः। स्पर्द्धमानाः। धमानाइः। इ२३४यइया। हाउयंयुक्तेषु। तुरयाइ। तोह्ववन्ताइ। ह्ववन्ताइइ। इ२३४यइया। हाउयꣳ शूरसा। ताइउयम। पामुपस्यान्। उपस्याइन्। इ२३४यइया। हाउयंविप्रासाः। वाइजय। ताइसइन्द्राः। स इन्द्राइः। इ२३४य। इयाइ। हाउवा। इ२३४५॥ ८॥

II यंयंया। हाउयंवृत्रेषू। चितयाइः। स्पर्द्धमानाः। धमानाः। यंयंय२०याम्। यंयंया। हाउयंयुक्तेषू। तुरयाइ। तोह्ववन्ताइ। ह्ववन्ते। यंयंय२०याम्।

---

I,II गार्त्समदे द्वे।

५ र र र ४ २३ २ ३४५
यंयंया । हाउयꣳशूरसा । ता३उयम । पामुपस्थान् ।

१ २ १ ऽ १ ५ र र र
उपस्मन् । यंयंय२०याम् । यंयया । हाउयंविप्रासाः ।

४ २ ३ २ ३४५ १ २ १ ऽ १
वा३जय । ता३सइन्द्राः । सइन्द्रः । यंयंय२०याम् ।

५ ५ ३ ११११
यंयंया६ । हाउवा । ई२३४५ ॥ ८ ॥ १०५

(०)"हवेषु" वरकेषु युद्धेषु(१) "स्पर्धमानाः" क्रोधयुक्ताः "चितयो" मनुष्याः(२) (चयन्ति निवसन्त्यत्रेति चितयो मनुष्याः) "यम्" इन्द्रं "हवन्ते" आह्वयन्ति "युक्तेषु" सन्नद्धेषु आयुधैर्युक्तेषु सङ्ग्रामेषु "तुरयन्तः" परस्परं हिंसन्तो जनाः(३) यमाह्वयन्ति । "शूरसातौ" शूराणां सम्भजने(४) यमाह्वयन्ति । युद्धजयार्थमिति शेषः । किञ्च । "अपाम्" उदकानां "सातौ" लाभे "यम्" "उ-

---

(०)—'वामदेव इन्द्रस्यातिभक्ततया इन्द्ररूपमास्थितः, असुरैर्गृहीतो हन्यमान आह—यं हवेष्विति'-इति वि० ।

(१)—'हवेषु' शत्रुषु, हन्तव्येष्विति वाक्य-शेषः'-इति वि० ।

(२)—चितयइति मनुष्य नामसु षष्ठं नैघण्टुकम् २,३ ।

(३)—'तुरयन्तः त्वरमाणाः' इति वि० । "तूर्णिः"-इति क्षिप्र-नामसु द्वादशं नैघण्टुकम् (२,१५) तदेवैवं व्याख्याने बीजम् ।

(४)—'शूरसातौ सङ्ग्रामे'-इति वि० । शूरसातौ-इति सङ्ग्राम नामसु पञ्चविंशं नैघण्टुकम् २,१७ ।

अथ सप्तमी।

विश्वामित्रः स्तौति।

१ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
इन्द्रापर्वताबृहतारथेनवामीरिषआवहतꣳसुवीराः।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र३ १ २
वीतꣳहव्यान्यध्वरेषुदेवावर्द्धेथाङ्गीर्भिरिड़यामदन्ता॥७॥१०६

४ ५ २र १ र २
I इन्द्राहाउ। हाहोइ। पर्वताबृहतारथा२इना

पज्मन्" वृष्टिप्रदानार्थं(५) यमुपगच्छन्ति आह्वयन्तीत्यर्थः(६)।
विप्रासो(७) विप्राः मेधाविनो यजमानाः य मिन्द्रं "वाजयन्ते"(८) वाजिनं कुर्वन्ति हविर्भि र्बलिनं कुर्वन्ति स तादृश इन्द्रः॥ ६॥१०५

---

I वैश्वामित्रम्।

१०६ ऋग्वेदस्य ३,३,१८,१।

(५)—"सुपां सुलुगिति (७,१,३९) चतुर्थ्या लुक्।

(६)—'अपामुपज्मन्—उप पूर्वस्याज गति-चेपणयो (भ्वा०) रित्यस्येदं रूपम्। आपः समीपे यस्मिन् काले आगच्छन्ति स अपामुपज्मा वर्षाकालः; तस्मिन् अपामुपज्मन्। उदकार्थं वर्षाकाले युष्माह्वयन्तीत्यभिप्रायः'-इति वि०-अत्र मते "सुपां सु लुक्(७,१,३९)"-इत्यादिना सप्तम्येकस्य लुक्।

(७)—"आज्जसेरसुक् (७,१,५०)"-इत्यसुकि रूपम्। "विप्रः"-इति मेधावि-नामसु प्रथमं नैघण्टुकम् ३,१५।

(८)—'वाजयन्ते पूजयन्ति'-इति वि०। वाजयतीति अर्चति-कर्मसु षट्त्रिंश-त्तमं नैघण्टुकम् ३,१४।

२　२ ५　४र ५　२र १　र
उवा३ । ऊ३४पा । वामीर्हाउ । हाहोइ । इष आ-
३ २　२ ५　४र ५
वहत७सुवीरा२इराउवा३ । ऊ३४पा । वीत७हाउ ।
२र १　र र ७ २　२ ५
हाहोइ । हव्यान्यध्वरेषुदा२इवाउवा३ । ऊ३४पा ।
४ ५　२र १　र र　र　३ २
वर्द्धाहाउ । हाहो । थाङ्गीर्भिरिड़यामदा॰रताउवा३ ।
२　५
ऊ२३३४पा ॥ १० ॥ १०६

"इन्द्रापर्वता" [इन्द्रश्च पर्वतश्च(१)] हे इन्द्रापर्वतौ ! "बृहता" महता रथेनागत्य "वामो" वननीयाः(२) "सुवीराः" शोभन-पुत्रोपेताः "इषः" अन्नानि "आवहन्तम्" अस्मदर्थं धारयन्त(३) प्रयच्छन्तमित्यर्थः । किञ्च । हे "देवा" देवौ द्योतमानौ ! हे इन्द्रापर्वतौ ! "अध्वरेषु" अस्मत्-सम्बन्धि-यज्ञेषु "हव्यानि" हवन-योग्यानि पुरोडाशादीनि हवींषि "वीत" भक्षयन्तम् । तथा "इड़या" अस्माभि र्दत्तेनान्नेन(४) "मदन्ता" हृष्यन्तौ युवां "गीर्भिः" स्तुतिलक्षणाभि रस्मदीयाभिर्वाग्भिः "वर्द्धथां" प्रवृद्धौ भवतौ ॥ ७ ॥ १०६

(१)—"देवता द्वन्द्वे च (६,३,२६)"-इत्यात्वं, "सुपां सु लुक् (७,१,३९)"-इत्यात्वं च रूपम् ।

(२)—सम्भजनीया इत्यर्थः ।

(३)—'आवहन्त मानयन्त' मिति वि० ।

(४)—'इड़ा'-इत्यन्न-नामसु पठितम् नैघण्टुकम् २,७

अथाष्टमी।

रेणुऋषिः*।

१ २ ३ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयं† सगरस्य बुध्नात्।
१र २र ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
यो अक्षेणेव चक्रियौ‡ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥८॥
१०७

२ २ १र २ १ २
I हा३। हाइ। इन्द्रायगाइ। रा३अनि। शी-
३ ४ ५ २ १र २
तसर्गाः। १। असाउ। असाउ। इन्द्रायगाइ। रा३
१ २ ३ ४ ५ २ १र
अनि। शीतसर्गाः। २। कुवा। कुवा। इन्द्रायगाइ।
२ १ २ ३ ४ ५ २ १
रा३अनि। शीतसर्गाः। ३। अयाम्। अयाम्। अपः

* 'गिरिणोरार्षम्'-इति वि०।

† "प्रैरयं"-इति ऋग्वेदीयः पाठः, "प्र। ईरयम्।"-इति च ऋग्वेदीय-पद-पाठः।

‡ "चक्रिया"-इति च ऋग्वेदीय-पाठः।

१०७ ऋग्वेदस्य ८,४,१४,४।

I सावित्रम्।

२　　२ १　　२ ३४५　　१ २　　१
प्रैरा। या३त्सग। रस्यबुध्नात्। अविदा३त्। अवि-

२　　र १ र　　२ १　　२ ३ ४ ५　　२ १
दत्। योअक्षेणाइ। वा३चक्रि। यौशचीभीः। ईद्या

२ ५　　२१　　२ १　　२
२३। ई३४द्या। विष्वक्तस्ता। भा३पृथि। वी३४३म्।

२ ४
ऊ३तापुद्या६५६म् ॥ ११ ॥ १०७

"इन्द्राय" इन्द्रार्थम् "अनिशितसर्गाः" अतनूकृत-विसर्गाः उपर्युपरि वर्त्तमानाः(१) याः "गिरः" स्तुतयः ताभिर्गीर्भिः "सगरस्य" अन्तरिक्षस्य(२) "बुध्नात्" प्रदेशात् "अपः" उदकानि(३) "प्रैरयत्" प्रेरयति। यः इन्द्रः "शचीभिः" कर्मभिः(४) "पृथिवीम्" "उत" अपिच। "द्यां" दिवं च "चक्रियौ"(५) रथचक्राणि(६) "अक्षेणेव" यथा रथाक्षेण तद्वत् "विष्वक्" सर्वतः "तस्तम्भ" अस्तम्नात् ॥ ८ ॥ १०७

---

(१)—अनिशितसर्गाः—शित इति 'शो तनूकरणे'-इत्यस्य निष्ठायां रूपम्। सर्गः संसर्गः सङ्घातः। शितः सर्गो यासां ताः शितसर्गाः तनूकृत सङ्घाः। न शितसर्गा अशित सर्गाः, बह्वीरित्यर्थः।

(२)—"सगरः" इति अन्तरीक्ष-नामसु चतुर्दशं नैघण्टुकम् १,३।

(३)—दृष्टि-लक्षणानि।

(४)—शचीति कर्म-नामसु द्वाविंशतितमं नैघण्टुकम् २,१।

(५)—"इयाडियाजिकाराणामुपसङ्ख्यानम् (७,१,३९)"-इति इय् भावे, लिङ्ग-व्यत्यये च (३,१,८५) रूपं चक्रियाविति।

(६)—चक्रे इति द्विवचनान्तेन व्याख्यातम् विवरणकृता।

अथ नवमी।

वामदेवऋषिः*।

३ १ २ २ १ २ ३ २ ३ १ २ ३ १ २
आत्वासखायःसख्याववृत्युस्तिरःपुरूचिदर्णवाञ्जगम्याः†।
३ १र २र ३ १ २ ३ २ ३ १र २र ३ १र २र
पितुर्नपातमादधीतवेधाअस्मिन्क्षयेप्रतरांदीद्यानः ॥९॥१०८

४र ५र ४ ५र ४र ५ ४ २ १ र र
I आत्वासखायःसख्याववृत्यूः। तिरःपुरूचिदर्णवांज-
र र २ १ र र र र
गा२म्यौ। चौहो३वा। पितुर्नपातमादधीतवा२इधौ।

* 'वसुराज'-इति वि०।

† "ओ चित् सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान्"-इति ऋग्वेदीय-पाठः।

‡ "अधि क्षमि प्रतरं"-इति, "अधि शमि मतरं"-इति च ऋग्वेदीय-पाठः।

१०८ ऋग्वेदस्य ७,६,६,१।

I कुतीपादवैरूपस्य साम।

१ १ र र र र र
द्यौहोऽवा। अस्मिन्क्षयेप्रतरान्दीदियाऽरनौ। द्यौहो-

२ र १ ३ २ १ १ १
ऽवा। औहो२। इडा२३४५॥ १२॥ १०८

हे इन्द्र! "त्वा" त्वां "सखायः" स्तोतारः "सख्या" सख्येन-स्तुतिभिरित्यर्थः। ताभिः "आ ववृत्युः" अभिमुखं कुर्वन्ति। यतस्त्वं "तिरः" तिर्यग्भूत्वा "पुरु" विस्तीर्णम् "अर्णवम्" अन्तरिक्षं(१) "जगम्याः" अगच्छः। चिच्छब्दः कारण-परः(२) [अथ-परोक्षकृतः(३)—"वेधा" विधाता(४) इन्द्रः "पितुः" मदीयस्य "नपातं" पौत्रं मम पुत्रमित्यर्थः(५)। त मादधीत प्रयच्छतु।

---

(१)—यद्यप्यर्णवम् इत्यन्तरीक्ष-नामसु न दृश्यते, तथापि समुद्र इति तु दृश्यत एव (१,३)।

(२)—तथा च यत एवं तत इदं अस्म इति भावः। "चिदित्येषोऽनेक-कर्मा; आचार्यश्चिदिदं ब्रूयादिति पूजायाम्, (* * *) दधिचिदित्युपमार्थे, कुल्माषांश्चिदाहरेत्यवकुत्सिते, (* * *)।"-इति नि०१,४।

(३)—"परोक्षकृताः—सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य" इति नि० दै० ६,१।

(४)—'वेधा मेधावी भवान्' इति वि० "वेधा" इति मेधावि नामसु पञ्चं नैघण्टुकम् १,५३।

(५)—"पितुरित्यन्न-नाम; पातेर्वा पिबतेर्वा प्यायतेर्वा"-इति दैवत-निरुक्तम् ९,२४॥ विवरणकारस्तु 'पितुः', 'न', 'पातम्'-इति पदत्रयं विच्छिद्य व्याचख्यौ; तथाहि—'पितुर्न न-शब्द उपरिष्टादुपचारादुपमार्थीय', पितु रिव; पातं पा रक्षणे इत्यस्य "नपुंसके भावे क्तः (३,४,११४ उ०)"-इति क्त-प्रत्यये एतद्रूपम्, पातं रक्षणम्। यथा कश्चित् पितुः रक्षणमाधत्ते, तद्वत् भवानपि अस्माकम् आदधीत आदधानं करोत्वित्यर्थः-इति।

अथ दशमी।

गौतमऋषिः।

२ ३ १ २ ३ २३ ३२ ३ १ २ ३ १ २ ३ २

कोऽअद्ययुंक्ते धुरिगाऋतस्यशिमीवतोभामिनोदुर्हृणायून्

३ १ २ ३ १ २ ३ १२ २२ ३ २ ३ २३ १ २

आसन्नेषामप्सुवाहोमयोभून्यएषांभृत्यामृणधत्सजीवात्॥

१०॥१०९

॥ पञ्चम-दशति ॥*

५र र र ५ १ र र र

I कोऽअद्ययुक्ते धुरिगाऋतस्या६ए। शिमीवतोभामि-

र २१ २ र १ र र र र २ १ २

नोदुर्हृणा२३यून्। आसन्नेषामप्सुवाहोमयो२३भूत्।

१ र र र ऽ २ २ ५

यएषाभृत्यामृणधत्सजाइवा३उवा३। ऊ३४पा॥१३॥१०९

कीदृशः? अस्मिन् "क्षये"(६) निवास-भूते यज्ञे "प्रतरां" प्रकृष्टं "दीद्यानः"(७) तेजसा दीप्यमान इन्द्रः पुत्रं ददातु॥ ८॥ १०८

---

१०९ ऋग्वेदस्य १,६,८,१।

I आमहीयवम्।

(६)—निवासार्थ-क्षि-धातो रूपमिदं क्षयइति।

(७)—दीधिङो रूपम्।

---

*॥ इति चतुर्थस्यार्द्धः प्रपाठकः॥

"अद्य" अस्मिन् कर्मणि "ऋतस्य" यज्ञस्य(१) गच्छत इन्द्र-सम्बन्धिनो रथस्य "धुरि" अश्व-वहन-प्रदेशे "गाः" गतिमतोऽश्वान्(२) एषा मश्वानां सम्बन्धिनः प्रग्रहान्वा "आसन्" आस्येन तज्जनितेन स्तोत्रेण "को युङ्क्ते" को नाम नियोक्तुं शक्नोति(३) न कोपीत्यर्थः । कीदृशानश्वान् ? । "शिमीवतः" वीर्यकर्मोपेतान्(४) । "भामिन्" तेजसा युक्तान्(५) "दुर्हृणायून्" परै र्दुःसहेन क्रोधेन युक्तान् (हृणीयतिः क्रुध्यति-कर्मा (नै०२, १३) । "अप्सुवाहः" आपः कर्माणि(६) तेषु इन्द्रं वहन्तीति तान्(७) "मयोभून्" मयसः सुखस्य भावयितॄन्(८) । स्वकीयानां सुखप्रदानित्यर्थः । "यो" यजमानः "एषाम्" ईदृशाना मश्वानां "भृत्यां" भरण-क्रियां रथ-वहन-क्रियां "ऋणधत्" समर्धयति स्तौतीति यावत्(९) "स" ह यजमानो "जीवात्" जीवनवान् भवेत् ॥

---

(१)—'ऋतस्य सत्यस्य सर्वगतस्य वा इन्द्रस्य'-इति वि० ।

(२)—'गाः गो-शब्देनात्र गमन-योगात् अश्वा उच्यन्ते'-इति वि० ।

(३)—'आदित्य-स्तुति-करण-द्वारेणेति विवरणे विशेषः ।

(४)—"शिमी"-इति कर्म-नामसु चतुर्विंशतितमं नैघण्टुकम् २,१ ।

(५)—'भामिनः-शत्रूणां परः क्रुद्धान'-इति वि० । "भामते"-इति क्रुध्यति-कर्मसु (नै०२,१२) पठित मित्येव तत्र बीजम् । 'भामिनः कुत्सित-क्रोधान्' इति वि० ।

(६)—"अपः"-इति कर्म-नामसु प्रथमं नैघण्टुकम् २,१ ।

(७)—'अप्सु निमित्त-भूतासु ये वहन्ति त अप्सुवाहः, उदकस्य पातयितारः; तान्'-इति वि० ।

(८ —"मयः"-इति सुख-नामसु सप्तमं नैघण्टुकम् ।

(९)—ऋणधदिति "ऋणद्धि"-इति परिचरण-कर्मणो रूपम् ३,५ ।

यद्वा। "कः" इति प्रजापति रुच्यते ("कोह वै नाम प्रजापति" रिति श्रुतेः) "ऋतस्य" यज्ञस्य "धुरि" निर्वाहे "गाः" वेदरूपान् वाग्विशेषान्(१०) "अद्य" इदानीं "युङ्क्ते" संयोजयति कीदृशान्? "शमीवतः" प्रतिपाद्यैः कर्मभिर्युक्तान् "भामिनः" उज्ज्वलान् "दुर्हृणायून्" हृणीयति हानि-कर्मा। हातु मशक्यान् वेदाध्ययनस्य नित्यत्वात् एषां शब्दानां आत्म-प्रतिपादकानाम् "आसन्" आस्यानि मुखवदाकरभूतानित्यर्थः। "अप्सुवाहः" अप्सु अन्तरिक्षे तदुपलक्षिते स्वर्गे वहन्ति यजमानं प्रापयन्ति तान्। "मयोभून्" मयसः अध्ययन-प्रभवस्य सुख-साधनस्यादृष्टस्य भावयितॄन्। "यो" यजमानः 'एषां" वचसां "भृत्यां" भरण-क्रियां "ऋणधत्" ऋद्धिमतीं करोति "स जीवात्"(११) स एव जीवति। अन्ये जीवन्मृता इत्यर्थः॥

"आसन्नेषामप्सुवाहः" इति, "आसन्निषून् हृत्स्वसः"-इति पाठौ॥ १०॥ १०९

इति श्रीसायणाचार्य्यविरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्यैकादशः खण्डः॥ ११॥

॥ इति त्रैष्टुभमैन्द्रम्॥



(१०)—"गौः"-इति वाङ्नामसु पतुर्थं नैघण्टुकम् १, ११।

(११)—लेटि आडागमे रूपम् (३.४.९४)।

इहाष्टाविंशति ऋचो गायन्तित्वेत्यनुष्टुभः (क)।
यदीवहन्तीत्यनया स्तूयन्ते मरुतोऽत्र हि (ख)।
ईडितोऽग्नि र्दधिक्रावा दधिक्राव्णो इति ह्यृचा (ग)।
वयश्चिदित्युषस्येयं वैश्वदेवीत्यमो इति (घ)।
ऋक्सामयोः स्तुति र्ऋचंसामेत्यैन्द्रोऽपरा ऋचः (ङ)।
समाख्या प्राणभृन्न्यायादिति पूर्वमुदीरितम् (च)।

(क)—"गायन्ति त्वा" इत्यारभ्य "ऋचंसामयजामहे"-इत्युगन्ताः दशत्रयात्मका अष्टाविंशति ऋचः अनुष्टुप्छन्दस्का इत्यर्थः। इति व्याख्यायमानाष्टादशर्चं छन्दः सङ्केतः।

(ख)—अत्र अष्टादशसु ऋक्षु "यदीवहन्ती" इति पञ्चदशी ऋक्, अनया मरुतो देवताः स्तूयन्ते।

(ग)—"दधिक्राव्णः" इति हि सप्तदशी ऋक्, ऋचा अनया, दधिक्रावा नामकः अग्निः, ईडितः स्तुतः।

(घ)—"वयश्चित्"-इति विंशतितमा ऋक्, इयं, उषस्या उषोदेवताका। "अमो" इति एकविंशतितमा ऋक् वैश्वदेवी अस्याः विश्वेदेवा देवताः इत्यर्थः।

(ङ)—"ऋचंसाम"-इति अन्तिमा ऋक्, अनया तु ऋक्-सामयोः देवतयोः स्तुतिः प्रकाश्यते। अपराः एतत्-पञ्चातिरिक्ताः त्रयोविंशति ऋचः ऐन्द्राः इन्द्रदेवताकाः। इति दैवत-सङ्केतश्च।

(च)—ननु मरुदादि-देवतानामृचां साहित्येऽप्यस्य पर्वस्य ऐन्द्रं ति व्यपदेशः कथमित्याह—समाख्या तु प्राणभृन्न्यायात् सिद्ध्यति, गौण्या वृत्त्या इति भावः। प्राणभृन्न्यायश्च, मीमांसा-शास्त्र-प्रसिद्धः। तथाहि, जैमिनी-सूत्रम्—"तत्सिद्धि जाति-सारूप्य प्रशंसा-भूम-लिङ्गसमवायात् (१,४,१९)।"-इति, तत्सिद्ध्यादि-हेतुतो गौणी वृत्ति राश्रयणीयेति तदर्थः। एतच्च स्फुटं भट्टकारिकायाम —"तत्सिद्धि जाति सारूप्य-प्रशंसा-लिङ्ग भूमभिः षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता॥"-इति; तथा च 'अयं पुरोभवस्तस्य प्राणो भौवायनः'-इत्यस्य एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि लिङ्गसमवाय-हेतुतः तत्सहचरिताः सर्व एव मन्त्रा गौण्या वृत्त्या प्राणभृच्छब्देन लक्ष्यन्ते गृह्यन्त एव "प्राणभृत उपदधाति"-इत्यादि विधौ—तथैवात्रापि यदीवहन्तीत्यादीनां इन्द्र लिङ्गकत्वाभावे

अथ द्वादशे खण्डे—

सैषा प्रथमा।

मधुच्छन्दा ऋषिः।

१ २ ३ १र २र३ २ ३ १ २

गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः॥

३ १ २ ३ २ ३ १ २

ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे॥ १ ॥ ११०

१र २ ३ २ र ५ २ २

। गाया३१। तित्वा३१२३४। गाय। त्रा३इणाः।

१ २ १ २ ५ २ २ ३ २

अर्चा३१। तिया३१२३४। कम। का३इणाः। ब्रह्मा-

१ २ ५ २ २ ३ २

३१। णस्त्वा३१२३४। शत। क्रा३ताउ। उद्वा३१।

११० उत्तरार्चिकस्य ५,२,२३,१ = ऋग्वेदस्य १,११८,१ = ऊहे ६,८—२२,२,५—२३,१—५।

I,II ग्रैखण्डिने हे।

ऽपि ऐन्द्र समुदाय-मध्य-पतितत्वेन इन्द्र-लिङ्ग-साहचर्य्यात् गौण्या ऐन्द्रत्व मित्यस्य पर्वस्यै-न्द्रत्व मवगतम्। किञ्च जैतदिह नूतनमुच्यते उदीरितमेवं पुरस्तादिति स्मारितम्; तथाग्रे यैकादश-खण्डारम्भे द्रष्टव्यम् (२५८पृ०२प०) इति न्यायो ऽप्येषएव, स तु लौकिक इत्येष विशेषः, अतएव माधवेन "एकस्यैव मन्त्रस्य प्राणभृत्त्वे ऽपि हविषो गच्छतीति-मत् तत्-सदृशारिताः सर्वे मन्त्राः प्राणभृत्त्वेन लक्ष्यन्ते (न्या०टी०१,४,१८)" इति।

३ २　　　　　　　　　　　४
अमा३१२३४इ । वया५इमिराइ । हो५इ । डा ॥ १४॥

५र　४ ५　१र २ १　५　१
II गायन्तित्वोहाइ । गायात्रीर३४णाः । अर्चन्त्यर्क-

२　२ २　　　१　५　१ २ ३　४
मा१र्कीरणाः । अर्चन्तियोर३४हा । कमार्कीर३४णाः ।

२ १र　र　२　२　२　　र　३　५
ब्रह्माणस्त्वा अता१क्रा३तो । ब्रह्माणस्त्वोर३४हाइ ।

१ २ १　५　　१　　२ १ २
अताक्रार३४ताउ । उद्वंशमिवया१इमी३रे । उद्वं

३　५　३ २　४
शमोर३४हाइ । वया३इमा५इरा६५६इ ॥ १५ ॥

४र ५　र र　४ ५ ४　१
I,II,III गायन्तित्वागायत्रिणआ । अर्चन्त्यर्कमर्का

२　१र　　　　२　१
२३इणाः । ब्रह्माणस्त्वा२होऽ१इ । अतक्रार२३ताउ । उद्वं

२ २ २　　१ ५　१ ऽ　२
अमिवया१इमी३रे । उद्वंशार३४मो । वाया३उवा३ ।

२　१　　२
उप् । माऽरइरो३५हाइ ॥ १६ ॥ ११०

हे "शतक्रतो" बहुकर्मन् बहुप्रज्ञ वेन्द्र ! "त्वा" त्वां "गायत्रिणः"(१)

III औहवंशीयम् ।

(१)—'गायत्रं साम, तद् येषामस्ति तद् गायत्रिणः, उद्गातार इत्यर्थः'-इति वि० । गायत्रोऽछन्दस्का सावित्र्यामपि गीतं गायत्रं स्वरमङ्गम्, गेयं भवति तदन्यास्वपि ऋक्षु,

उद्गातारः "गायन्ति" स्तुवन्ति(२)। "अर्किणो" ऽर्चनहेतु-मन्त्र(३)-युक्ता होतारः "अर्कम्" अर्चनीय मिन्द्रं "अर्चन्ति" शस्त्र(४)-गतै मन्त्रैः प्रशंसन्ति। "ब्रह्माणो" ब्रह्मप्रभृतयः इतरे ब्राह्मणाः(५)। "त्वा" त्वाम् "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंश मिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशं उन्नतं कुर्वन्ति। यथा वा सन्मार्ग-वर्त्तिनः पुत्राः स्वकीयं कुलं उन्नतं कुर्वन्ति तद्वत्॥

एतामृचं यास्कएवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कं मर्किणो ब्राह्मणा स्त्वा शतक्रत उद्येमिरे वंशमिव वंशो वनशयो भवति वननाच्छ्रूयत इति वेति(५,४,)॥१॥ ११०

न तदक्षरान्वित-स्वरमङ्गस्य नाम गायत्रं प्रत्युत गानमात्रस्यैवेति तु ध्येयम्। अत एव मीमांसा न्यायमालायां सप्तमाध्यायस्य प्रथमपादारम्भे निर्णीतम्—"अतिदेश्यं विनिश्चेतुं कवतीषु रथन्तरम्। गायतीत्यृग् गानयुक्ता शब्दार्थो गान मेव वा"-इत्यादि। गायत्रादि लक्षणन्तु ताण्ड्य ब्राह्मणादिभ्योऽवगन्तव्यम्; तथाहि, तदीय-षष्ठ-तृतीय-खण्डे "अष्टाक्षरा गायत्री नवमो हिङ्कारः" इत्येव मादि।

(२)—गायतीत्यर्चति-कर्मसु द्वितीयं नैघण्टुकम ३,१४।

(३)—"अर्को देवो भवति यदेन मर्चन्ति। अर्को मन्त्रो भवति यदनेनार्चन्ति अर्कं मन्नं भवत्यर्चति भूतानि। अर्को वृक्षो भवति स वृत्तः कटुकिम्ना"-इति नि० नै० ५,४।

(४)—प्रगीताप्रगीतभेदेन स्तोत्रशस्त्रेति नामभेदः, होत्रैव शस्त्रमन्त्राः पठ्यन्ते अत उक्तम्—"शस्त्रयाज्यानुवाक्याभिर्होतालङ्कुरुतेऽध्वरम्। आज्यपृष्ठादिभिः स्तोत्रै रुद्गातालङ्करोत्यमुम्" इति (२पृ०)।

(५)—'इत्यादिबहुवचनान्ता गणस्य सूचकाः'-इति नियमात् सदस्यादीनामपि ग्रह इति भावः।

अथ द्वितीया।

जेता माधुच्छन्दस ऋषिः*।

२ ३ १ २　　२ १ २　३ १ २
इन्द्रं विश्वा अवीवृधंत्समुद्रव्यचसङ्गिरः।

३ १ २　३ १ २ १ २ ३　१ २ ३ १ २
रथीतमꣳरथानांवाजानाꣳसत्पतिंपतिम् ॥ २ ॥ १११

I, इन्द्रं विश्वाः। आवी २वृधान्। सामुद्रव्या। चासङ्गिराः। राथीतमा३१उवा २। रथाइना २म्। वा जाना२३ꣳसात्। पातिंपतिम्। इडा२३भा३४३। ओ२ ३४५इ। डा॥ १७॥

II, ओइन्द्रं विश्वाः। अवी। वृधान्। सा१मू२

* 'यता नाम ऋषिः तस्येदमार्षम्'-इति वि०।

१११ उत्तरार्चिकस्य २,१,१८,१ = ऋग्विदस्य १,१,२१,१ = यजुर्वेदस्य १२,५६—१५,६१ = ऐतरेय-ब्राह्मणस्य ५,७ = जहे २,१२—७,११—२१,३ – २१,७,३।

१ १ २ १
द्राव्या२। चसम्। गिराः। रा१था२तामा२म्।
२ १ १ १ २
रथी। नाम्। वाजा२नाᳫँसा२त्। पतिंपा२३ती३४
१
३म्। ओ२३४५इ। डा॥ १८॥

३ ४ १ ४र ५ र २ १ ५ १
III, इन्द्रं विश्वाअवीवृधन्। समुद्रा२३४व्या। चा३-
१ २ २ १ २र
साङ्गी३राः। राथीतमा२म्। ऊ२। पा२इ। ऊ२।
१ २र र
रथाइनाम्। वाजानाᳫँसा२त्। ऊ२। पा२इ।
१ २ १
ऊ२। पतिं पा२३ती३४३म्। ओ२३४५इ।
डा॥ १९॥

४ ५ ४ ५र र ४ ५ २ १ २
IV इन्द्रं विश्वाअवीवृधन्। ऐयाहाइ। समुद्रा-

---

I,II,III ग्रेखण्डिनानि त्रीणि।

IV पूर्वमादᳫँष्ट्रम्।

१ २ १र २ १
१व्या२। चर्षांगा१इरा२३ः। ऐयार३हाइ। रथाइ-
२ १ १र २ र १
ता१मा२म्। रथाइना२३म्। ऐयार३हाइ। वाजा-
२ १ २ १र २
ना१ᳲसा२त्। पताइंपा१ती२२म्। ऐया२३हा३४३इ।
१
ओ२३४५इ। डा॥२०॥

४ ५ ४५र र ४र५र४र ५ ५ १
V इन्द्रं विश्वाअवीवृधन्नैयादौ। हो६वा। समु-
२ १ १र १ र १
द्रव्यचसम्। गाइरा२३ः। ऐया२३त्। औ२३होवा।
१ २ १ १र १ र
रथाइतमᳲर। थाइना२३म्। ऐया२३त्। औ२३हो-
२ १र र १र १ २ १ १र
वा। वाजानाᳲसत्पतिम्। पाती२३म्। ऐया२३त्।
१ र २ १
औ२३होवा३४३। ओ२३४५इ। डा॥२१॥

---

V उत्तरमादᳲष्ट्रम्।

२ ४ ५ ४ ५ २

VI, हयाइ। हया३। ओहाओहा। हयाइ।

४ ५ ४ ५ २ ४ ५

हया३। ओहाओहा। हयाइ। हया३। ओहा

४ ५ २ १ २र १

ओहा। इन्द्रं विश्वाः। अवीवार्धा२न्। समुद्रव्या।

२ १ र १ रर

चसंगाइरा२ः। रथीतमम्। रथाइना२म्। वाजा-

र ३ २ १ २ ४ ५

ना१सात्। पतिंपाती२म्। हयाइ। हया३। ओहा

३ ५ २ ४ ५ ४ ५ ३ ५

ओहा। हयाइ। हया३। ओहाओहा। हो४इडा।

३ ५ ३

हो४इडा। हो२३४५इ। डा॥ २२॥

२ १ २ २ १ २ १११ ३

VII हयाये३। हयाये३। हया२३४५। ह१२

१ ३४र ५ र ३ २ १

३। आ२३४इ। द्रंविश्वाअवी। वृधाइन्। सा२३४।

३४५ ३ १ १ ३र४ ५ र

मुद्रव्यचसम्। गिराइः। रा२३४। थीतम१रथी।

---

VI,VII महावश्वामित्रे द्वे।

अथ तृतीया।

गौतम*ऋषिः।

३ १ २ ३ १ २ २ २ ३ १ २ ३ १ २
इमेमिन्द्रसुतम्पिवज्येष्ठममर्त्यंमदम्।

२ १ २ १ ३ ४ ५ ३ २ २
नाइम्। वा२३४। जानाऽसत्यतिम्। पताइइम्। इ

१ १ २ १ २ ११११ ३ ११११ ३
यायेइ। इयायेइ। इया२३४५। इ ऽ२३४५। ओ४इ

५ ३ ५ ३
डा। ओ४इडा। ओ२३४५इ। डा॥२३॥१११

"विश्वाः" सर्वाः "गिरः" अस्मदीयाः स्तुतयः "इन्द्रम्" "अवीवृधन्"(१) वर्द्धितवत्यः। कीदृशमिन्द्रं? "समुद्रव्यचसं"(२) समुद्रव्याप्तवन्तं। "रथीनां" रथयुक्तानां योद्धृणां मध्ये "रथीतमम्" अतिशयेन रथयुक्तं "वाजानाम्" अन्नानां "पतिं" सम्मार्गवर्त्तिनां पालकम्॥२॥१११

* 'गोतम'-इति वि० पाठः।

(१)—"नित्य छन्दसि (७,४,८)"-इति अभ्यासस्य दीर्घत्वम्।

(२)—'समुद्रव्यचसं—समुद्रव्यचसा समुद्रस्य प्राप्तिरुच्यते समुद्रस्येव व्यचः प्राप्तिर्यस्य स समुद्रव्यचाः, तं समुद्रव्यचसं समुद्रव्याप्तिमित्यर्थः'-इति वि०।

२ १ २ ३क १र ३ १ २ ३ २ ३ १ २
प्रुक्रस्यत्वाभ्यक्षरन्धाराऋतस्यसादने ॥ ३ ॥ ११२

२ १ ५ २१ ३ ५र र
I इममार२३४इन्द्रा। सुतम्। पा३इबार२३४औहो

१र २ १ ८र १ २ र १
वा। ज्येष्ठममार्तियम्मदम्। प्रुक्रा। स्यत्वाभी३यार

१ ३ २५ र १र ८र १ २ १र २ १ १ १
३। क्षा२रार२३४औहोवा। धारा२ऋतस्यसादने२३४

२
५॥ २४ ॥

५ ३ २ ३ ३ ५ २र १ २ १ २ १
II, इममिन्द्रसुतंपिबा। ज्येष्ठाममा। तियम्मदा

३ २ ३र ५ २ र १ २ ३र
२म्। प्रुक्रा। औहो२३४वा। स्यत्वाभ्यक्षरन्। धा-

२ २र ५ ३ २ ३र ५ ४
रा। औहो२३४वा। ऋता। औहो२३४वा। स्यसा

४
५दनाइ। होऽ५इ। डा॥ २५ ॥

---

११२ उत्तरार्चिकस्य ३,१,२१,१ = ऋग्वेदस्य १,६,५,४। = ऊहे ३,१—२२,२,१७—२३,३।

III, इमिमन्द्रा५सुतंपिबा। ज्येष्ठममा३र्त्त्यम्मादा२म्। औ२। हो२। ऊवाइ। औ३हो२३४वा। शुक्रस्यत्वा३भायक्षारा२न्। औ२। हो२। ऊवाइ। औ३हो२३४वा। धारा१क्रता२। औ२। हो२। ऊवाइ। औ३हो२३४वा। स्यमादा२३ना३४३इ। ओ२३४५इ। डा॥२६॥

IV इममी२३। द्रसुतंपिब। ज्येष्ठाम्। अमा३र्त्त्यम्मादा२म। शुक्रास्यत्वा३। भिया२क्षा२३४रान्। धाराओ२३४वा। आर्त्ताओ२३४वा। स्यसा५दनाइ। हो५इ। डा॥२७॥ ११२

I,II,III,IV वसिष्ठस्य प्रियाणि चत्वारि।

अथ चतुर्थी।

अत्रिऋषिः।

१ २      ३ २उ   ३ १ २
यदिन्द्रचित्रमइहनास्तित्वादातमद्रिवः।
३ १ २      ३ १ २
राधस्तन्नोविदद्वसउभयाहस्त्याभर॥ ४ ॥ ११३

हे "इन्द्र!" "सुतम्" अभिषुतं "इमं" सोमं "पिब"। कीदृशं? "ज्येष्ठं" अतिशयेन प्रशस्यं "मदं" मदकरं "अमर्त्यम्" अमारकं (सोम-पान-जन्यो मदो मदान्तरवन्मारको न भवतीत्यर्थः) तथा "ऋतस्य" यज्ञस्य सम्बन्धिनि "सदने(१)" गृहे वर्त्तमानस्य "शुक्रस्य"(२) दीप्तस्यास्य सोमस्य "धाराः" "त्वा" "अभ्यक्षरन्"(३) आभिमुख्येन सञ्चलन्ति त्वां प्राप्य स्वयमेवागच्छन्तीत्यर्थः॥ ३ ॥ ११२

* "यदिन्द्र चित्र मेहना" इति वहृक्पाठः।

११३ उत्तरार्च्चिकस्य४.२,१४,१ = ऋग्वेदस्य४,२,१०,१ = जहे४,१८—२२,२,१८ = जह्य ५,२,७।

(१)—सदने वेद्याख्यस्थाने, धाराः, अभ्यक्षरन् क्षरन्तु इति वि०-सम्मतोऽर्थः।

(२)—'शुक्रस्य, शुक्रसंज्ञकस्य पवस्य'-इति वि०।

(३)—'अभि, अभिशब्दः "अभिरभागे (१,४,९१)" इत्येवं कर्मप्रवचनीयः, प्रतिशब्देन समानार्थः। त्वां प्रति अक्षरन् क्षरितवन्तः क्षरन्तु। काः? धाराः' इति वि०।

४ ५ ४ २ १ १
I यदिन्द्रोहाइ। चित्रमइहना२३। आ२३४। स्ति

२ ५२ २ २ १ १ ३ ४ २
त्वादा। हा३इ। तमद्राइवा२३ः। रा२३४। धस्तन्नो-

५ २ १ २ २
विदा। हा३। वा। सा३। उभयाहा२३। स्तिया-

२ ५
उवा३४३। भा३४५रो६हाइ॥ २८॥

५ २ ४ ५ ३ ५ १ २ २
II यदिन्द्रचित्रमौहोवा। हा२३४ना। अस्तित्वादा-

२ १ २ ३ ५ १२ २
तमोवा३। ओवा। द्रा२३४इवाः। राधस्तन्नोविदो-

२ १ २ ३ ५ १ २ २
वा३। ओवा। वा२३४सा३। उभयाहस्तियोवा३।

१ २ २ ५
ओवा३४३। भा३४५रो६हाइ॥ २९॥

I,II वौकि द्वे।

२ १ ४ ५ २ ३ ५ १
I यदिन्द्रा२३चित्र। मइहा२३४ना। अस्ता२इ-
१र २ १ र २ १ र १
त्वादा। तमद्राइवो। राधस्तान्ना२ः। विदद्वसाउ।
२ १ १ ४ २ ५
उभयाहा२३। स्ता२३या३। भा३४पुरोईहाइ॥ ३०॥

३ ४ ५ ३ १ ४ ५ १र र
II यदिन्द्रचित्रमइ। हना३। आस्ती। त्वादात-
र १ १ १
मद्रिवः। राधस्ता२३न्नाः। वौवौ२। ददसाउ। उ-
१ १ १ २ १
भया२३हा। स्ताया२३। भा२३रा३४३। ओ२३४५इ।
डा॥ ३१॥ ११३॥*

हे "अद्रिवो"(१) वज्रवन्! "चित्र" चायनीयेन्द्र! "यद्" इदं "त्वादातं" त्वया दातव्यं यद् "राधो" धनम् "इह" अस्मिन्

I. आकूपारमनादेशम्।

II. वौक्तम्।

(१)—'मतुवसोरिति (८,३,१) रुत्वे रूपम्।

* ॥ इति ग्रामे गेये नवमस्यार्द्धः प्रपाठकः॥

अथ पञ्चमी ।

तिरश्ची आङ्गिरसऋषिः ।

३ १र २र ३ २उ ३ १ २ ३ १ २
श्रुधीहवन्तिरश्च्याइन्द्रयस्त्वासपर्यति ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
सुवीर्यस्यगोमतोरायस्पूर्द्धिमहाँ असि ॥ ५ ॥ ११४

लोके "मे" मम नास्ति तद्धनं हे "विद्द्दसो" लब्धधनेन्द्र ! "नः" अस्मभ्यम् "उभया हस्त्या"(२) उभाभ्यां हस्ताभ्याम् "आभर" आहर ॥

अत्र निरुक्तं—"यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति-यन्म इह नास्तीति वेति द्रष्टव्यम्(३) ॥ ४ ॥ ११३

---

११४ उत्तरार्चिकस्य२,२,१८,१ = ऋग्वेदस्य६,६,३०,५ = ऊहे २,२,७—१३,१४ ।

(२,—आर्ले (७,१,१९) रूपम ।

(३)—तथाच—"यदिन्द्र चित्रं चायनीयं, मंहनीयं धनमस्ति । यन्मइह नास्तीति वा (त्रीणि मध्यमानि पदानि) त्वया न स्तद् दातव्यम् । अद्रिवन् (अद्रिरादृणात्येनेनापि वात्तेः स्यात् । ते सोमाद इति ह विज्ञायते । राध इति धन नाम राध्नुवन्त्येनेन) तन्नस्त्वं वित्तधनाभाभ्यां हस्ताभ्यामाहर उभौ समुद्रौ भवतः'-इति ४,४ ।

I ओम् ॥ श्रुधी। हावा२ऽ(हावा२म्। तिरश्चिया:। इन्द्रया२३स्त्वा। सपौ३हो। यती३या। सुवीर्यस्य-गोमता:। रायास्पू२३र्द्धी। महा(२३। असिया३४३। ओ२३४५इ। डा॥१॥

II श्रुधीहा३वन्तिराश्चया:। इन्द्रायस्त्वा। सपर्य-तायो३४। सुवी। रियाम्या२३४गो। माता२:। रा-यास्पूर्द्धी३। हा३हाइ। महा(५असी। हो ५.इ डा॥२॥११४

हे इन्द्र! य: "त्वा" त्वां "सपर्य्यति" (सपर-शब्द:([1]) कण्ड्वादि:)

---

I,II तैरश्चे द्वे।

(१)—"सपर्य्यति"-इति परिचरण कर्म्मसु तृतीयं नैघण्टुकम् ३.५।

अथ षष्ठी।

गौतमऋषिः।

१ २　३ १ २　२ १ २　३ १ २
असावि सोम इन्द्र ते शविष्ठ धृष्ण्वा गहि।

१ २　२ २ ३　४ १ २　२ १ १ २
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यो न रश्मिभिः॥ ६ ॥ ११५

हविर्भिः परिचरति तादृशस्य "तिरश्चा" एतन्नामकस्य ऋषेर्मम "हवं" स्तुतिं "श्रुधि"(२) शृणु। श्रुत्वा च हे इन्द्र ! त्वं "सुवीर्य्यस्य" शोभनवीर्य्योपेतस्य। यद्वा (वीरे पुत्रे भवं वीर्य्यं) सुपुत्रवतः। "गोमतः" गवादि-पशुमतः(३)। "रायो" धनस्य दानेन "पूर्द्धि" अस्मान् पूरय(४)। एतत्सामर्थ्यं कुत इत्यत आह— त्वं "महान्" गुणाधिकः देवानां श्रेष्ठश्च "असि" भवसि खलु॥ ५ ॥ ११४

---

११५ उत्तरार्च्चिकस्य ३,२,२१,१=ऋग्वेदस्य १,६,५,१,= जहे ३,१८,—२२,२ १८—२३,४।

(२)—"श्रु-शृ-णु-पॄ-कृ-वृभ्यश्छन्दसि (६,४,१०२)"-इति सिद्धम्। मन्त्रे तु दीर्घः पाठः 'श्रुधी'-इति, स च "द्व्यचोऽत (६,३,१३५)"-इत्यत्र "अत" इत्यविवक्षया साध्यः।

(३)—'गो-शब्देनात्र सोम उच्यते सोमवत इत्यर्थः'-इति वि०।

(४)—"पूर्द्धि"-इति पाल्या कर्मसु पठ' नैघण्टुकम ३,१९। "श्रु-शृ-णु-पॄ-कृ-वृभ्यश्छन्दसि (६,४,१०२)"-इति सिद्धम्। "पूर्द्धि पूरय देहीति वा"-इति वि० मै०४,७।

३ ४र १र ५ ५ र २ ३ ५ २ १
I असाविसोमइन्द्रते। शविष्ठा२३४धृ। ष्णो३आ-

२ १ १ २र २ २ १ २ ५
गा३ही। आत्वापृणा२३क्ता३। त्विइ२०द्रा२३४याम्।

१ २ ३ ५ ४ ४
रजाः। सूर्यौवा ओ२३४वा। नरा५श्मिभीः। हो ५ इ

डा॥ २॥ ११५॥

हे "इन्द्र"! "ते" त्वदर्थं "सोमः" "असावि" अभिषुतोऽभूत्। हे "शविष्ठ" अतिशयेन बलवन्! अतएव "धृष्णो" शत्रूणां धर्षयितरिन्द्र! "आ गहि"(१) देव-यजन-देश मागच्छ। आगतञ्च "त्वा" त्वां "इन्द्रियं" सोम-पानेनोत्पन्नं प्रभूतं सामर्थ्यम्(२) "आ पृणक्तु"(३) आ पूरयतु। "रजः" अन्तरिक्षं(४) "रश्मिभिः" किरणैः "सूर्यो न" यथा सूर्य्यः पूरयति तद्वत्॥ ६॥ ११५

---

I महावैश्वामित्रम्।

(१)—"वा छन्दसि (३,४,८८)"-इति सिद्धम्।

(२)—'इन्द्रियं, अन्तर्णीत-मत्वर्थमिदं द्रष्टव्यम्, इन्द्रियवन्तम्, अविकलेन्द्रियमित्यर्थः-इति वि०।

(३)—पृच सम्पर्के-इति धातोरूपमिदम्, अर्थान्तरत्वात्।

(४)—'रजसी'-इति द्यावापृथिवी-नामसु अष्टमं नैघण्टुकम् ३,३०। अतएवाह विवरणकृत्—'रजः-शब्दो लोकवचनः। * * *। यथा पृथिवी-लोके अन्तरीक्ष-लोके च सूर्यः'-इति।

अथ सप्तमी।

काण्वो मेधातिथिर्ऋषिः*।

१२ २१ २३२३१२ ३२
एन्द्र†याहि हरिभिरुपकण्वस्य सुष्टुतिम्।
३२ २३ ३१ २३ १२३१२
दिवोअमुष्य शासतो दिवं यय दिवावसो॥७॥ ११६

५र२ ३ ४र ५ ४ ५ २ १ २ ३
I एन्द्रा३याहि हरिभाइः। उपाकण्वा२। स्यासुष्टू२३४
५ २र १ २ २ ५ १ २
तीम्। दिवोअमू३। ष्याशासा२३४ताः। दाइवंयया
१ ४ २ ५
३१उवा२३। दा२३इवा३। वा३४५सो६हाइ॥४॥

४र५र ४ २ ४ ५ १ २१
II एन्द्रयाहि हरिभिः। उऊवाहाइ। उपकण्वस्य सु-

* 'मेधातिथिराह'-इति वि०।

† "ऐन्द्र"-इति ऋग्वेदीयः पाठः।

११६ उत्तरार्चिकस्य ८,१,१६,१ = ऋग्वेदस्य ६,२,२,१।

I,II काण्वे द्वे।

२ १ २ १र २ १ २ ३

ष्टुतिम्। उहुवा२३हाइ। दिवोअमू३। ष्याशासा२३-

५ १ ३ २ ५ ४

४ताः। हाइवंययाउ। वा३। दे२३४वा। वसोपूवा।

४

वोपूइ। डा॥५॥११६

हे "इन्द्र!" "कण्वस्य" एतन्नामकस्य ऋषेः(१) "सुष्टुतिं"(२) शोभनां स्तुतिं प्रति "हरिभिः" अश्वैः "उपायाहि" आगच्छ। "दिवो" द्युलोकं [द्वितीयार्थे षष्ठी(३,१,८५)] "अमुष्य" अमुष्मिन्निन्द्रे "शासतः" शासति [विभक्ति-व्यत्ययः(३,१,८५)] तत्र वयं सुखमास्महे। हे "दिवावसो" दीप्त-हविष्केन्द्र! "दिवं" स्वर्गं "यय" यूयं गच्छत (बहुवचनं पूजार्थम्)।

यद्वा। हे "दिवावसो" दिवो द्यु नामकं "अमुष्य" अमुं लोकं "शासतः" शासनं कुर्वन्तो यूयं "दिवं" स्वर्गं "यय" गच्छत (अत्र बहुवचनं पूजार्थमित्यर्थः॥७॥११६

(१)—'कण्वस्य सुष्टुतिं, लुप्तोपममेतद् द्रष्टव्यम्—कण्वस्य स्तुतिमिव'-इति वि०।

(२)—"पूर्वपदात्(८,३,१०६)"-इति षत्वम्।

अथाष्टमी ।

अस्याः परस्याश्च तिरश्ची ऋषिः ।

२ ३ १२३२ ३१ २ ३१२
आत्वागिरोरथीरिवास्थुःसुतेषुगिर्वणः ।

२ २३ १२ ३१ २ ३२उ ३१२
अभित्वासमनूषतगावोवत्संनधेनवः * ॥ ८ ॥ ११७

५र र २ ४र५४र ५ २ ६र १ ७ ६
I आत्वागा३इरोरथीरिवा । अस्थुः सुते३षूगिर्वाणा

२ ५ २ ५ २ र १२ २
३ः । ओ३४वा । ओ२३४वा । अभित्वामा३मानू१षाता३ ।

२ ४ ३ ५ १र २ २ २१ ५
ओ३४वा । ओ३४वा । गावोवा३त्सा३म् । नधो२३४वा ।

४ ५
नाप्वोई्हाइ ॥ ६ ॥ ११७

"गिर्वणः" गीर्भिर्वननीय हे इन्द्र! "सुतेषु" सोमेषु अभिषुतेषु सत्सु "गिरः" अस्माकं स्तुतिलक्षणा वाचः "त्वा" त्वाम्

* "समनूषतेन्द्र वत्सं न मातरः"-इति ऋग्वेदीय पाठः ।

११७ ऋग्वेदस्य ६,६,२०,१ ।

I वैश्वामित्रम् ।

अथ नवमी।

विश्वामित्र ऋषिः।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
एतोन्विन्द्रꣳस्तवाम शुद्धꣳशुद्धेनसाम्ना।

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳशुद्धैराशीर्वान्ममत्तु ॥८॥ ११८

"आ स्युः"(१) आभिमुख्येन शीघ्रं गच्छन्ति तिष्ठन्तीत्यर्थः। तत्र दृष्टान्तः—"रथीरिव" यथा रथवान् रथेन गच्छन् वीरः प्राप्यं देशं क्षिप्रं गच्छति तद्वत्। किञ्च। हे इन्द्र! अस्मदीया गिरः "त्वा" त्वाम् "अभि" लक्ष्य "समनूषत" सम्यक् शब्दायन्ते स्तुवन्तीत्यर्थः (नु स्तवने। कुटादिः(२)। तस्य लुङि रूपं) तत्र दृष्टान्तः—"वत्सन्न" यथा "धेनवः" प्रीति-युक्ता गमन-शीला वा "गावः" वत्स मभिलक्ष्य हम्भा-रवादि-शब्दं कुर्वन्ति तद्वत् ॥ ८ ॥ ११७

* 'विश्वमना आह आत्मीयान् ऋत्विजः'-इति वि०।

११८ उत्तरार्च्चिकस्य ६,२,८,१ = ऋग्वेदस्य ६,६,३१,२ = जहे ७,२,१२।

(१)—"छन्दसि लङ् लुङ् लिटः (३,४,६)"-इति सार्वकालिके लिटि रूपम्।

(२)—तथाच—"गाङ् कुटादिभ्योऽञ् णिन्ङित् (१,२,१)"-इति ङित्तो ङित्त्वात् गुणाभावः फलम्।

४र५र ४ ५ ४ ५र४ २ १ र ११ २

I एतोन्विन्द्र(ँ)स्तवामा। शुद्ध(ँ)शुद्धे नसा२३म्ना।

१र र र २१ २ १र २ १

शुद्धै रुक्थैर्वावृध्वा२३(ँ)साम्। शुद्ध रा२३शीर। वांरन्।

११ ५र र २ ११११

ममा३४औहोवा। ह्व२३४५॥ ७॥

५रर ५ २१ २ १

II एतोन्विन्द्र(ँ)स्तवा६मा। शुद्ध(ँ)शुद्धे। न। साम्ना-

१ २ २ १र ३ ५ २

२। शुद्धाइरु३क्था२इः। वावा२र्ध्वाँ२३४(ँ)साम्। शु

१र २ १ २ १ २ १

द्वैरा२३शी। वान्ममत्तु। इडा२३भा३४३। ओ२३४५इ।

डा॥ ८॥ ११८

अत्रेतिहास माचक्षते—पुरा किलेन्द्रो वृत्रादिकानसुरान् हत्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत। तद्दोषपरिहाराय इन्द्र ऋषीनवोचत्——यूयं अपूतं मां युष्मदीयेन साम्ना

---

I शुद्धाशुद्धीयम्।

II शुद्धाशुद्धीयोत्तरम्।

शुद्धं कुरुतेति। तत स्ते च शुद्दाख्यादकेन साम्ना शस्त्रैश्च परिशुद्ध-मकार्षुः। पश्चात्पूतायेन्द्राय यागादि-कर्मणि सोमादीनि-हवींषि च प्रादुरिति। एषोऽर्थः शाटायनक-ब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वा पूत इवामेध्यो अमन्यत असौ अकामयत शुद्धमेव मासन्तं शुद्धेन साम्ना स्तुयुरिति। स ऋषीनब्रवीत् स्तुत मेति। त ऋषयः सामापश्यन् तेनास्तुवन् एतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति"।

तथाच अस्या ऋचोऽयमर्थः—

ऋषयः परस्परं ब्रुवन्ति। "नु" चिप्रम्(१) "एतो" आगच्छतैव। आगत्य च "शुद्धेन" शुद्दाख्यादकेन साम्ना। तथा शुद्धैः शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्चेन्द्रं "शुद्धम्" अपापिनं कृत्वा "स्तवाम" स्तुयाम। ततः "साम्ना" शस्त्रैः "वावृध्वांसं" पाप-राहित्येन वर्द्धमानं "शुद्धैः" शुद्दाख्यादकैः स्तोत्रैः क्रियाविशेषैः "आशीर्वान्" आश्रयणवान्(२) गव्यादिभिः संस्कृतः सोमः "ममत्तु" इन्द्रं मादयतु (माद्यतेश्छान्दसः श्लुः(३) ॥

"शुद्धैराशीर्वान्"-"शुद्ध आशीर्वान्"--इति पाठौ ॥८॥११८

(१)—""नु-इति क्षिप्र-नामसु प्रथमं नैघण्टुकम् २,१५।

(२)—'सोममिश्रितं दधि चाशिरमुच्यते, तद् यस्यास्ति सः आशीर्वान्'-इति वि०।

(३)—द्वितीयाध्यायीय-मङ्गल-वचनात् (९,४,७६)।

अथ दशमी।

शंयुर्बार्हस्पत्य ऋषिः।

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
योरयिंवो* रयिन्तमोयोद्युम्नैर्द्युम्नवत्तमः।
१ २ ३ १ २र ३१ २ ३ १ २
सोमःसुतःसइन्द्रतेऽस्तिस्वधापतेमदः॥ १०॥ ११९

॥ प्रथम-दशति ॥

५र र र ३ ५ १र र
I योरयिंवोरयाइाउ। ता२३४मा:। योद्युम्नैर्द्युम्नव-
२ १र १ ० १ र
त्तमः। सोमःसुतःसआ२३होइ। इता२इ। अस्तिस्वधा-
१ २
पता२३होये३। मदो२३४५इ। डा॥ ८॥

३र ४ ३ ४र ५ ३ ५ ३र ४ ३र ४ ५
II योरयिंवोरयि। तमो२३४वाइ। योद्युम्नैर्द्युम्नव।

----

* "योरयिवो"-इति निरनुस्वार ऋग्वेदीय-पाठः।

----

११९ ऋग्वेदस्य ४,७,१६,१ = आरण्यगाने ३,२,१४।

I,II रयिष्ठि द्वे।

२ ५ ३र ४ ३ ४५ ३ ५ २
तमोर३४हाइ। सोमःसुतःसइ। इतोर३४हाइ। अ-

४ ५ र र २ ५ ४
स्तिस्वधापते। मदोर३४हा। होपुइ। डा॥ १० ॥११९

हे इन्द्र! "वः" (वचन-व्यत्ययः—(३,१,८) तव परिचारकेभ्यः स्तोतृभ्यः "यः" सोमः "रयिं" धनं प्रयच्छतीति शेषः। कीदृशः "रयिन्तमः" अतिशयेन रयिमान्। यश्च "द्युम्नैः" द्योतमानैर्यशोभिः(१) "द्युमत्तमः" अतिशयेन यशस्वी। हे "स्वधापते" स्वधाया अन्नस्य(२) सोमलक्षणस्य पालकेन्द्र! स "सोमः" अभिषुतः सन् "ते" तव "मदः" मदकरः "अस्ति" भवति॥ १० ॥ ११९

वेदार्थस्य प्रकाशेन तमोहार्दन्निवारयन्*।
पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्ग-प्रवर्त्तक-श्री-वीर-बुक्क-भूपाल-साम्राज्य धुरन्धरेण सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दो-व्याख्याने तृतीयाध्यायस्य द्वादशः खण्डः॥ १२ ॥

(१)—"द्युम्नैः सवनीय-पुरोडाशादिभिः"-इति वि०।

(२)—"स्वधा"-इति अन्न-नामसु सप्तदशतमं नैघण्टुकम् २,७।

* "निरामयन्" इति रा० शा० पु० पाठः।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

## अथ चतुर्थाध्याय आरभ्यते ।



तत्र प्रथम-खण्डे—

मैषा प्रथमा ।

भरद्वाजऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २
प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।

३ २ ३ २ ३ १ २ ३ १ २
अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ १ ॥ १२०

---

१२० उत्तरार्चिकस्य ६,३,२,१ = ऋग्वेदस्य ४,७,१४,१ = जहे १०,१—१६,१—२ = जह्मि २,२ = ८ ।

१ २ २ १ २ २ १ २२
I प्रत्यस्मैपिपाद्दाउ। आइषाइताइ। वाइस्वानि-
१ २ २ २ २ १ ३२ १
वाइ। दूषे३द्दा३द्दा३इ। भा३रा। आरा२०गमा। या-
२ २ २ २ २ १ १ ५२
जा३द्दा३। ग्मा३याइ। अपा२३। आ२दा२३४औ-
२ १ ३२ १ ३ १ १ ११
द्दोवा। ध्वने२नरा२३४५: ॥ ११ ॥

५ २ ५२ १ २२ १ २२१
II प्रत्यस्मैपो६पीषताइ। वाइस्वानिवाइ। दूषेभा-
१ ३२ १ २
रा२। आरा२०गमा। यजग्मा। याइ। अपस्वाद-
१ २१ २ ४ ५ ४
ध्वना२३द्दोइ। नरा। औ३द्दोवा। द्दो५इ। डा ॥१२॥

३४ ५२ ४ ५२ ३२ १ २ ५
II प्रत्यस्मै पिपो। षता३इ। वा२३४इ। स्वानि-

I,II कौल्मलबर्हिषे द्वे।

II नानदम।

र　४ ५　४　१र ४ ५　२　५
विदुषे। भारा। अरङ्गमायज। ग्मयोर२३४चाइ।

४ ५ ४ ५　२ १　५　४　५
आपश्चादा। घ्वनोर२३४वा। नापुरोइचाइ ॥ १३ ॥१२०

हे अध्वर्यो! "नरः" कर्मणि नेतस्त्वं "अस्मै" इन्द्राय प्रतिभर"(१) प्रतिहर सोमं प्रयच्छेत्यर्थः। कीदृशायेन्द्राय? "पिपीषते" पातुमिच्छते(२)। "विश्वानि" सर्वाणि वेद्यानि "विदुषे" जानते। "अरङ्गमाय" पर्याप्त-गमनाय। "जग्मये" यज्ञेषु गमनशीलाय। "अपश्चाद्दघ्वने" [दघि गति-कर्मा(३)] अपश्चाद्गमनाय सर्वेषा मग्रगामिने (नरः नृ शब्दाच्चतुर्थ्यर्थे षष्ठी(४)। ङसि ऋतो गुणश्छान्दस(५)) नरे कर्मणांनेत्रे(६)। अतएव बह्वृचा "अपश्चाद्दघ्वने नरे" इति चतुर्थ्यन्तत्वेनामनन्ति ॥ १ ॥ १२०

---

(१)—भरइति "हृग्रहोर्भश्छन्दसि"-इति वचनाद् हरतेर्भत्वेन रूपम् अतो व्याचष्टे प्रति हरेति।

(२)—पञ्च-चमसादीनि पात्राणीति शेषः।

(३—निघण्टौ "दघ्यति"-इत्य गति-कर्मसु एकपष्ठितमत्वेन पाठात् (२,१४)।

(४)—"चतुर्थ्यर्थे बहुलं छन्दसि (२,३,६२)"-इति पा०।

(५)—"बहुलं छन्दसि (७,३,९,७)"-इति पा०।

(६)—'नरः प्रथमैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम, नराय मनुष्याकाराय'-इति वि०।

अथ द्वितीया ।

वामदेवः शाकपूतो वा* ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आनोवयोवयःशयंमहान्तंगह्वरेष्ठांमहान्तंपूर्विनेष्ठाम् ।

३ २उ ३ १ २
उग्रंवचोअपावधीः ॥ २ ॥ १२१

५र र र ५ १र २ ५
I आनोवयोवयःशाइयाम् । महान्तङ्गह्वरा२३४इष्ठा-

२र र ३ ५ २१ २ ३
म् । महान्तंपूर्विना२३४इष्ठाम् । उग्रंवा२३चाः । अ-

२ ४
पा३वा५धाइ५इः ॥ १४ ॥ १२१

हे "वयस्य"(१) मित्रभूतेन्द्र ! "अयम्" ईदृशस्त्वं "महान्तं" महत्प्रभूतं "गह्वरेष्ठां" गिरि-गुहादौ वर्त्तमानं "नः" अस्म-

---

* 'वामदेवस्यार्षम्' इत्येव वि० ।

---

१२१ यजुर्वेदस्य ५,८ ।

I शाकपूतम् ।

(१)—मूले "वयः शयम्"-इति यद् दृश्यते, तत्रैव 'वयस्य !'—'अयम्'-इत्येवं छेदः सीकृतो भाष्यकृतेति बध्यते । विवरणकारेण तु नात्र किमपि व्याख्यातम् ।

अथ तृतीया ।

प्रियमेधऋषिः ।

२ ३ १ २ २ ३ १ २ ३ १ २
आत्वारथंयथोतयेसुम्नायवर्त्तयामसि ।

२ १ २ ३ २ ३ १ १ ३ १ २
तुविकूर्मिमृतीषहमिन्द्रंशविष्ठसत्पतिम्* ॥ ३ ॥ १२२

दीयं "वयः" सोम-लक्षण मन्नम्(१) "आ" हर [उपसर्ग-श्रुतेर्योग्य-क्रियाध्याहारः(२) ] आहृत्य "महान्तं" महत्-प्रभूतं "पूर्व्विनेष्ठां" पूर्व्वमादौ संसारे प्रवर्त्तमानम् । "उग्रं" क्षुत्पिपासा-निमित्तेन भयङ्करं । "वचः" अस्मदीयं वचनं ("अशनायापिपासे ह त्वा उग्रं वचः"—इति श्रुतेः ) "अपावधीः" अपजहि, देवत्वं प्रापये-त्यर्थः ("तत् प्राप्नोत्यशनायापिपासे निवर्त्तते। न वै देवा अश्नन्ति न पिबन्ति"—इति श्रुतेः ॥ २ ॥ १२१

* "इन्द्र शविष्ठ सत्पते"-इति ऋग्वेदीय-पाठः ।

१२२ उत्तरार्च्चिकस्य ८,१,३,१ = ऋग्वेदस्य ६,५,१,१ = जहे २१,१८ ।

(१)—वय इति सुत इति च अन्न-नामसु पाठ-भेदेन सप्तमं नैघण्टुकम् २,७ ।

(२)—"आनो वयो"-इति मूले आ-इत्युपसर्ग-श्रवणात् हरार्थाभरेति क्रिया अध्याहार्येति भावः ।

५र र र ४ ५ १ २ २ ५ १
I आत्वारथंयथौहोवा। तायाइहा२३४न्ना। यवर्त्त-

र २ ३ ५ १२ १ २
यामसितुविकूर्मीम्। आ२३४र्त्तौ। षहम्। आइन्द्रा-

४ ५ २१ २ १
३ ऽ शावी। छसत्या २ ३ ती ३ ४ ३ म्। ओ २ ३ ४५इ।

डा॥ १५॥

३र ४र ३ ४ ५र ३ २ ३र ४र ५ २१
II आत्वारथंयथो। तयाइ। आत्वारथाम्। यथो

२ ३र ५ ३ ५ २र १
ताया। औहो२३४वा। ई२३४हा। सुम्नायवर्त्ता३या-

२ ३र २ १ ३ ५ २ र १
मसी। औहो३१इ। औ२हो२३४वा। तुविकूर्मिमृ३ता-

२ ३र २ ३ ५ २
दूषहभ्। औहो३१इ। औ२हो२३४वा। इन्द्रऽंशवि-

१ २ ३र २ ३
ष्ठा३सात्पतिम्। औहो३१इ। औ२हो२३४५वा६५६।

३ ५
ई२३४हा॥ १६॥ १२२

---

I,II कौल्मलबर्हिषे द्वे।

अथ चतुर्थी ।

प्रगाथऋषिः ।

२ ३ २ ३ १ २ ३ १ र २ र
सपूर्व्योमहोनांवेनःक्रतुभिरानजे ।

३ २ ३ र २ ३ २ ३ २ ३ १ २ ३ १
यस्यद्वारामनुःपिता* देवेषुधियआनजे ॥ ४ ॥ १२३

हे इन्द्र! "त्वा" त्वां "आवर्त्तयामसि" आवर्त्तयामः । किमर्थम्? "ऊतये" अस्माकं रक्षणाय "सुम्नाय" सुखाय च(१)। किमिव? "रथं यथा" ऊतये सुखाय चावर्त्तयन्ति तद्वत् । हे "शविष्ठ"(२) बलवत्तमेन्द्र! "तुविकूर्मि" बहु-कर्माण(३) "ऋती-

* "मनुष्पिता"(क) -इति सायणाचार्य्य-धृतपाठः, ऋ पाठश्चः ।

१२३ ऋग्वेदस्य ६,४,४१(२४)१ ।

(१)—"सुम्नम्"-इति सुख-नामसु षोड़शतमं नैघण्टुकम् ३,६ ।

(२)—'सम्बुध्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, शविष्ठम् अतिशयेन बलवत्तमम्'-इति वि० ।

(३)—'तुवीति बहु-नाम (नै० ३,१,२), कूर्मिः कर्त्ता, बहूनां वृत्रवधादीनां कर्मणां कर्त्तारम्'-इति वि० ।

(क)—"छन्दसि वाऽप्राम्रेडितयोः (८,३,४९)"-इति विसर्गस्य षत्व-विकल्प-विधानात् ।

५ २ २ २ ५ १२ १ २ १ २
I सपूर्व्योमहोनाईमे। वेनःक्रतु३भाइरानजे३। हा

२ ऽ २ २ १ २ ऽ२ १
३हा। औ३हो३वा। आइही२। यस्यद्वारा३मानुः

२ २ २ ऽ २ २ १ १ २
पिता३। हा३हा। औ३हो३वा। आइही२। दाइवेषू

२ २ २ ऽ २ २ १ १
धा३। हा३हाइ। औ३हो३वा। आइही२। यआ२-

१ ३ ५२ २ २ १ २ ११ ११
३। ना२जा२३४औहोवा। मधुश्चुता२३४५ः॥ १७॥ १२३

षहम्" हिंसकाना मभिभवितारं। "सत्पतिं" सतां पालकमिन्द्रं त्वामिति समन्वयः॥ ३॥ १२२

"स" इन्द्रः(१) "पूर्व्यो" मुख्यः(२) "महोनां"(३) पूज्यानां यजमानानां "क्रतुभिः" यज्ञैर्निमित्तभूतैः "वेनः" कान्तः(४)

---

I मधुश्चुन्निधनम्।

(१)—'स मनुष्यः'-इति वि०।

(२)—'पूर्व्यः प्रथम इत्यर्थः'-इति वि०।

(३)—'महोनां मकारस्य हकारापत्तिश्छान्दसः, मघोनां मघवतां धनवतां मध्ये, वेनः कामः'-इति वि०।

(४)—"वेनति"-इति कान्ति कर्मसु पठितं नैघण्टुकम् २,६।

अथ पञ्चमी।

श्यावाश्व आत्रेय ऋषिः*।

३ १ २ ३ २३ १ २ ३ २३ २
यदीवहन्त्याशवोभ्राजमानारथेष्वा।

१ २ ३ २उ ३ २ ३ १ २
पिबन्तोमदिरंमधुतत्रश्रवाᳬसिकृण्वते ॥ ५ ॥ १२४

तेषां हविः कामायमानः "आनजे" आगच्छति(५)। "यस्य" इन्द्रस्य "द्वारा" द्वाराणि प्राप्यपापानि "धियः" कर्माणि देवेषु" एतेषु मध्ये "पिता" सर्वेषां पालकः "मनुः" 'आनजे" प्रापयति [नजिः प्राप्ति-कर्मा(६)]।

* "मघोनां"-"मघानाम्"-इति पाठौ ॥ ४ ॥ १२३

* वामदेवस्यार्षम्'-इति वि०।

(५)—आनजे इति अञ्जेरूपम् 'व्यक्तीकरोति'-इति वि०।

(६)—निघण्टौ व्याप्ति-कर्मसु नचतेः पाठात् (२,१८)। विवरणकारस्त्वेव माह—'आनजे-अञ्जु व्यक्ति-म्रक्षण-गतिषु इत्येतस्य गत्यर्थस्य अन्तर्णीत-ण्यर्थस्य चेद रूपम्, आगमयति उत्पादयति इत्यर्थः। एतदुक्तं भवति—यस्य यागद्वारभूतानि आधानादीनि यागविषयाश्च बुद्धीः सर्वस्य ज्ञाता इन्द्र उत्पादयति स प्रथमं यागं करोतीति समस्तार्थः' इति।

४ ५र ४ ५ र ४५ ४ ५ १
I यदीवच्चंत्याशवः। य। द्येयादौ। ओइवह्नंता-
१ १ र र र र २ १
आ१शावा२ः। ओइभ्राजमानारथाइषू१वा२। ओइपि-
र २ १ र २ १
बन्तोमदिराम्मा१धू२। ओइ। तत्रश्रवा९सिकोवा३ओ२-
५ ४ ५
३४वा। एवा५तोई्दाइ॥ १८॥ १२४

हे इन्द्र! "यदि" यत्र यस्मिन् यज्ञे "रथेषु" "भ्राजमानाः" दीप्यमानाः(१) "आशवः" क्षिप्र-गामिन स्त्वदीया मरुतः "आ वहन्ति"। यत्र आभिमुख्येन त्वां प्रापयन्ति "तत्र" तस्मिन् यज्ञे "मदिरं" मदकरं "मधु" उदकादि-रस-विशेषितं सोम-लक्षण मन्नं वा 'पिबन्तः "श्रवांसि" अन्नानि "कृण्वते"(२) दृष्टि-द्वारा कुर्वन्ति। [यद्वा। अस्मिन्यज्ञे"भ्राजमानाः"दीप्यमानाः"आशवः" शीघ्रगामिनः "मदिरं" मदकरं "मधु" सोमं "पिबन्तः" पास्यन्त ऋत्विग्यजमानाः "रथेषु" सोम मावहन्ति "तत्र" तस्मिन्यज्ञे "श्रवांसि" अभिषवादि-कर्मभिः प्रशस्तान्यन्नानि "कृण्वते" कुर्वन्ति॥ ५॥ १२४

---

I उषःसाम।

(१)—'भ्राजमानाः रथेषु नियुक्ताः, सन्तइति वाक्यशेषः-इति वि०।

(२)—'कृञ् हिंसायाम्'-इत्यस्य लादे रूपम्, अर्थस्तु करोतेरेव। अथवा विकरण-व्यत्ययेन रूपम् (३,१,८५)।

अथ षष्ठी।

शंयुरृषिः※।

१ २ ३ १ २ ३ १र २र३ १ २
त्यमुवोअप्रहणंगृणीषेशवसस्पतिम्।
१ २ ३ २ ३ २ ३ १ २ ३ १ २
इन्द्रंविश्वासाहंनरंमंहिष्ठंविश्ववेदसम्† ॥६॥१२५

३ ४ ५र ३२ ३ ५ २ र १र
I त्यमुवोअ। प्रहा। हा२३४णाम्। गृणीषेशव-
२ १ २ ४ ५ १ २ १ २
सः। पताइम्। आइन्द्रा३०वाइश्वा। सहा३ंहोये-
५ ३ २ २ १ ५ १ २ १
३४। नारमो३इ। शचिष्ठा२३४०वी। श्ववा३हो२३४।
५ ४ ५
वा। दा५सोइहाइ॥ १८ ॥१२५

※ संयुरिति दन्त्यादि-पाठो विवरणे।

† "नरं मंहिष्ठं विश्वचर्षणिम्"-इति ऋग्वेदीयःपाठः।

१२५ ऋग्वेदस्य ४,७,१६,४।

I भारद्वाजम्।

अथ सप्तमी।

वामदेव ऋषिः।

३ १ २ ३ १र २र ३ १ २
दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः।

४ ५ ४र ५र र ४ १
I ओहाइ। दधिक्राव्णोअकारिषम्। ओहाइ। ओ-

हे ऋत्विग्यजमानाः! "वो" युष्मदर्थं "त्यम्" तमेवेन्द्रं "गृणीषे" स्तौमि [यद्वा। "वो" यूयं "गृणीत" स्तुत वचन-व्यत्ययः(१)] कीदृशमिन्द्रम्? "अप्रहणं"(२) अप्रहर्त्तारं भक्ताना मनुग्राहकं। "अवसो" बलस्य"पतिं" पालकं। "विश्वासाहं"(३) विश्वस्य शत्रो रभिभवितारं "नरं" नेतारं "शचिष्ठं" यज्ञादि-कर्म-स्थितं(४)। "विश्ववेदसं" विश्वं वेदो धनं(५) यस्यासौ विश्ववेदाः तम्॥ ६॥ १२५

---

I दधिक्राव्णम्।

(१)—"व्यत्ययो बहुलम् (३,१,८५)"-इति। विवरणकारस्त्वेवं व्याचष्टे—'गृणुता वित्यस्येदं रूपम्, मध्यम-पुरुषैकवचनस्योत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम्; गृणे स्तौमीत्यर्थः'-इति।

(२)—'केनचित् प्रहर्त्तुं मशक्यम्'-इति वि०।

(३)—"विश्वस्य वसु-राटोः (६,४,१२८)"-इति सूत्रस्थ-वार्त्तिक-वचनात् साहेऽपि दीर्घः।

(४)—"शची"-"शचि" च पाठभेदेन कर्म-नामसु द्वाविंशतितमं नैघण्टुकम्(२,१) तत्र तिष्ठन्तमित्यर्थः।—"शविष्ठम्"-इति विवरण-सम्मतः पाठः, अतएव तत्र 'शविष्ठम् अतिशयेन बलवन्तम्'-इति व्याख्यानम्। शव इत्यन्न-नामसु दृश्यते हि निघण्टौ२,७।

(५)—"वेदः"-इति धन-नामसु चतुर्थं नैघण्टुकम् (२,१०)।

३ २३१२ ३२३१२
सुरभिनोमुखाकरत्प्रन*आयूꣳषितारिषत् ॥७॥ १२६

२ २ १ २ १२ २ १२
हाइ । जिष्णोरश्वस्यवाजिनार्२३होइ । सुरभिनोमुखाका-

२ १ १ २ १ २१२
र्२३रात् । प्रना२३होइ । आयू२३हो । षितारा२३इ-

२ १
षा३४३त् । ओ२३४५इ । डा ॥ २० ॥ १२६

दधिक्रावाऽग्नि-विशेषः । स चाश्वरूपः(१) “अग्निर्देवेभ्यो-निलीयत अश्वो रूपं कृत्वा यदश्वत्यतिष्ठदि” त्यादिअध्वर्यु-ब्राह्मण-मनुसन्धेयम् ।

* “प्रण”-इति मूर्द्धन्य-पाठः ऋग्वेदीयः ।

१२६ ऋग्वेदस्य ३,७,१३,६ ।

(१)—अत्र यास्कः—“दधिक्रावा इत्येतद् दधत् क्रामतीति वा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा । तस्याश्ववद् देवतावच्च निगमा भवन्ति (२,२७)”-इति । तस्य चोदाहरणे द्वयोरेव, तथा हि अश्व-रूपस्योदाहरणम्—

“उतस्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि-

"दधिक्राव्णो" देवस्य स्तुतिम् "अकारिषं" करवाणि। "जिष्णोः" जयशीलस्य "अश्वस्य" तद्रूपस्य "वाजिनो" वेगवतः। स देवो "नो" ऽस्माकं "मुखा(१)" मुखानि चक्षुरादीनीन्द्रियाणि "सुरभी" सुरभीणि "करत्"(२) करोतु। "नो" ऽस्मभ्यम् "आयूंषि" "प्र तारिषत्" प्रवर्द्धयन्तु (प्र-पूर्वस्तिरतिर्वर्द्धनार्थः ॥७॥ १२६

---

कक्ष आसनि। क्रतुं दधिक्रा अनु सन्त वीत्वत्पथामङ्काꣳस्यन्वापनीफणत् ॥" (ऋ० ४म० ४अ० ८सू० ४ऋ०ऋक्)

"अपि स वाजी वेजनवान् क्षेपण मनु तूर्णं मश्नुते ऽध्वानं ग्रीवायां बद्धो (ग्रीवा गिरतेर्वा गृणाते र्वा गृह्णाते र्वापि कक्ष आसनीति व्याख्यातम्)। क्रतुं दधिक्राः कर्म वा प्रज्ञां वा अनुसन्तवीत्वत्। तनोतेः पूर्वया प्रकृत्या निगमः। पथा मङ्कांसि पथां कुटिलानि (पन्थाः पततेर्वा पद्यतेर्वा पन्थतेर्वा) अङ्कोऽञ्चते रापनीफणदिति फणते श्चर्करीतवृत्तम्"-इति च तद्भाष्यम्।

देवता बपस्योदाहरणमिदम्—

"आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांꣳसि ॥" (ऋ० ४म० ४अ० ६सू० १० ऋक्)

"आ तनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्य-जातानि सहस्रसाः शतसा वाजी वेजनवानर्वेरणवान्सम्पृणक्तु नो मधुनोदकेन वचनानीमानीति। (मधु धमतेर्विपरीतस्य)"-इति च तद्भाष्यम्।

(१)—"सुपां सु-लुगिति (७,१,३९)"-इत्याले रूपम्।

(२)—लेटो रूपम् (३,४,७)।

अथाष्टमी।

जेता माधुछन्दस ऋषिः।

३ २ ३ १र २र३ १र २र
पुरांभिन्दुर्युवाकविरमितौजाअजायत।

२३ १२३ १० ३२३ १२ ३२
इन्द्रोविश्वस्यकर्मणोधर्त्तावज्रीपुरुष्टुतः॥ ८ ॥ १२७

द्वितीय-दशति ॥ २ ॥

५र ३ १२ ४र ५ १ र र २१र
I पुराम्भिन्दर्युवाक। वीः। अमितौजाअजाया२-

२ १ र २ १२३ ५ १
३ता। आइन्द्रोविश्वा३। स्याकर्मा२३४णाः। धर्त्ता। वा-

२ ३ ५ ४ ४
ज्रीवाओ२३४वा। पुरुपुष्टुताः। हो५इ। डा ॥२१॥ १२७

अयम् "इन्द्रः" उच्यमान-गुण-युक्तः "अजायत" सम्पन्नः। कीदृग्गुणक इति? तदुच्यते—"पुरां" पुराणां "भिन्दुः" भेत्ता "युवा" कदाचिदपि बली-पलितादि-वार्द्धक्य-रहितः। "कविः" मेधावी "अमितौजाः" प्रभूत-बलः "विश्वकर्मणः" कृत्स्नस्य ज्योतिष्टोमादेः

---

१२७ उत्तरार्चिकस्य ५,१,२०,१ = ऋग्विदस्य १,१,२१,४ = ऊहे ५,१३—२२, २,२०।

I मारुतम्।

"धर्त्ता" पोषकः(१) "वज्री" यजमान-रक्षणार्थं सर्वदा वज्रयुक्तः "पुरुष्टुतः" बहुभिर्होत्रादिभि स्तत्तत्-कर्मणि स्तुतः ॥ ८ ॥ १२७

इति श्रीसायणाचार्य्य विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दो व्याख्याने चतुर्थस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीय-खण्डे—

मैषा प्रथमा।

प्रियमेधा ऋषिः।

१२ ३ २ ३ १ २ ३ १ २ ३ १ २
प्रप्रवस्त्रिष्टुभमिषंवन्दद्वीरा*येन्दवे।

३१ २ ३ १ २ ३ २ ३ १ २
धियावोमेधसातयेपुरन्ध्याविवासति ॥ १ ॥ १२८

---

* "मन्दद्वीरा"-इति ऋग्वेदीय-पाठः।

---

१२८ ऋग्वेदस्य ६,५,५,१।

(१)—'धर्त्ता' धारयिता. कथं सर्वस्य कर्मणः ? इन्द्रायत्तत्वात्. इन्द्रेस्य इन्द्रायत्तत्वात्-इति वि०।

५ २ २ २ ५ २ १ २
I प्रप्रवस्त्रिष्टुभमिषमोवाओवाइ९। वन्दद्वीरा। य-

१ ० ५ २ ५ २ १ २ र २ र २
आइन्दवे२। ओ२वा। ओ२वा३९। धियावोमेधसा-

२ १ ५ २ ५ २ २ १ २ २
१ता३याइ। ओ३वा। ओ३वा३९। पुरान्धी३या३।

२ १ ५ ४ ५
विवो२३४वा। सापुतो६वाइ॥ २२॥ १२८

हे अध्वर्य्वादयः! "वो" यूयं [प्रथमार्थे द्वितीया(१)] "त्रिष्टुभं" स्तोभ-त्रयोपेतम्(२) "इषम्" अन्नं(३) "प्र प्र" [अपरः प्र-शब्दः

I वामदेव्यम्।

(१)—'वः युष्मभ्यम्' इति वि०।

(२)—साम-मन्त्रान्वितमित्यर्थः सामसु एव स्तोभादेः श्रवणात्, तत्सम्पादनार्थं एव विकार-विश्लेष-विकर्षण-विरामाभ्यास लोपागम स्तोभादयः क्रियन्ते; अतएवैवं साम-विधानं ब्राह्मणम्—"एतस्य साम्न ऋगेवास्थीनि, स्वरो मांसानि, स्तोभा लोमानि" इति (१,१) स च स्तोभः त्रिविधः—पद-वाक्याक्षर-भेदात्। पद-स्तोभाः हाउ-कारादयः पञ्चदश, मन्त्र-ब्राह्मण-तृतीय-प्रपाठकीय-त्रयोदश-खण्ड-परिगणिताः, अनाय ते सर्वत्र साम-ग्रन्थे, विशेषत आरण्ये। वाक्यस्तोभाः पुनराम्नाय्यादि-भेदाश्च, तथाहि—"आशास्तिः स्तुतिः संख्यानं प्रलयः परिदेवनम्। प्रैष मन्वेषणञ्चैव सृष्टिराख्यानमेव च"-इति, इमास्तु स्तोभाः ग्रन्थे श्रुताः आरण्यादौ च गीयन्ते। वर्णस्तोभ-लक्षणमधिकत्वं त्वगृविलक्षणत्व-मिति, तदुक्तम् माधवेन—"स्तोभस्य लक्षणं नास्ति किं वास्ति न विवर्णता। आधिक्य मप्यतिव्याप्तं विशिष्टं लक्षणं भवेत् (८अ० २पा० ११ अधि०)"-इति तदुदाहरणन्तु,

पूरणः(४)।] भरतेति शेषः। उपसर्ग-श्रुते र्योग्य-क्रियाध्याहारः। कस्मै? "वन्दद्वीराय" यो वीरान् स्तौति स वन्दद्वीरः(५) तस्मै "इन्दवे" इन्द्राय। [इन्दते रैश्वर्य-कर्मण(६) इदं रूपम्। [अथवा(७) फलैर्वृष्टिभिर्वा उनत्तीतीन्दरिन्द्रः तस्मै। स चेन्द्रो "वो" युष्मान् "मेधसातये" यज्ञ-सम्भजनाय(८) "पुरन्ध्या" बहु-प्रज्ञया(९) "धिया" कर्मणा(१०) "आ विवासति" परिचरति(११)। अभिमत-फल-योजनेन सत्करोतीत्यर्थः॥ १॥ १२८

---

सर्वत्रैव गानग्रन्थं, प्रायः सर्व-सामस्वेवेत्युक्तोऽपि नात्युक्तिः इहैव ऋचि गीतं यत साम तत्रापि श्रूयते। तथाहि—

'मेधसातये'-इत्यत्र 'मेधसा १ ता ३याइ'-इत्यादि।

(३)—"इषम्"-इत्यन्ननामसु चतुर्दशतमं नैघण्टुकम् २,७।

(४)—'प्रसमुपोदः पादपूरणे'-इति छन्दःशाममादित्यभिप्रायः।

(५)—"वीरो वीरयत्यमित्रान् वेतेर्वा स्याद् गति-कर्मणो वीरयतेर्वा इति यास्कः(१,७)।

(६)—'इदि परमैश्वर्ये (भ्वा० प०)।

(७)—"इन्दुः" इति उदक-नामसु चतुरशीतितमं नैघण्टुकम्(१,१२)—यज्ञ-नामसु च त्रयोदशतमम् (३,१७)—दैवतकाण्डे नैरुक्ते चाचविर्भाक्तु देवतानाम-धेय गणनाम् चान्तिमम्,तथाहि यास्कः—"इन्दुरिन्धेरुनत्तेर्वा"-इत्यारभ्य "तेषामेतान्यचविर्भाञ्जि वेनो ऽसुनीतिर्ऋतरिन्दुः"-इति ४,४१—४२।

(८)—"मेधः"-इति यज्ञ-नामसु चतुर्थं नैघण्टुकम् ३,१७। विवरणकारस्त्वेवमाह— 'मेधसातये अपठितमपि यज्ञ-नामैतद् द्रष्टव्यम्, चतुर्थ्येकवचनमिदं सप्तम्येकवचनस्थ-स्थाने द्रष्टव्यम्, मेधसातौ यज्ञे इत्यर्थः'-इति।

(९)—"पुरन्धिः बहुधीः तत्कः पुरन्धिर्भगः पुरस्तात् तस्यान्वादेश इत्येकमिन्द्र इत्य-परम्, स बहुकर्मतमः, पुरां च दारयितृतमो वरुण इत्यपरम्, तं प्रज्ञया स्तौति"-इति नि० नै० ६,१३।

(१०)—"धीः"-इति कर्म-नामस्वेक विंशतितमं नैघण्टुकम् २,१।

(११)—"विवासति"-इति परिचरण-कर्मसु दशमं नैघण्टुकम ३,५।

अथ द्वितीया ।

वामदेव ऋषिः* ।

३ १ २ २ १ २ २ १ २ ३ १ ३ १ २
कश्यपस्यस्वर्विदोयावाहुःसयुजाविति ।

२ १ २ ३ १ २ ३ २ ३१२ ३२ ३ १ २
ययोर्विश्वमपिव्रतंयज्ञंधीरानिचाय्य ॥ २ ॥ १२९

५ ५ १ २ २ १ २
I कश्यपस्यसुवर्विदा३इए । यावाहुःस । युजावा१-

२ ४२ २ ४ ५ ३२ १ २ २
इती२३४ । ययोर्विश्वमपि । व्रता३म् । यज्ञांधीइरा: ।

१ १ २ ५२ २ ३ ५
निचा२३ । आ२या२३४औहोवा । ऊ२३४पा ॥२३॥१२९

पश्यतीति कश्यपः । "कश्यपः पश्यको भवती" तिश्रुत्यन्तरम् । तस्य "कश्यपस्य" सर्वज्ञस्येन्द्रस्य सम्बन्धिनौ "यौ" अश्वौ । "ययोः" च "विश्वं" सर्वम् "अपि" "व्रतं" कर्म "यज्ञं" प्रति

---

* "कश्यपस्यार्षम्"-इति वि० ।

---

१२९ आरण्यगानस्य ४,१९,२० ।

I काश्यपम् ।

अथ तृतीया।

प्रियमेध ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
अर्चतप्रार्चतानरःप्रियमेधासोअर्चत।

यजनीय-देशं प्रतीत्येवं "निचाय्य" निश्चित्य "सयुजौ" (सहैव युञ्जाते-इति) "स्वर्विदः" स्वर्गं लब्धवन्तो "धीराः" जनाः आहुः(१)।

अथवा "कश्यपः" प्रजापतिः ("कश्यपोऽष्टमः स महामेरुं न जहातीति" श्रुत्यन्तरात्) तस्य "स्वर्विदः" सर्वं पश्यतः "यौ" देवौ "सयुजौ" सहचरौ जना आहुः वेदविद स्तौ मित्रावरुणौ। ("अहर्वै मित्रो रात्रिर्वरुणः" इत्यैतरेय-ब्राह्मणम्। सर्वस्य कार्यस्य तयोरेवान्तर्भावात् (इन्द्राग्नी वा देवौ तयो रेव सर्व-निर्वाहकत्वात्) तदभिप्रायेण ऋक् मैत्रावरुणी ऐन्द्राग्नी वेति पूर्वमभिहितम्॥ २॥ १२९

---

१३० ऋग्वेदस्य ६,५,६,२,।

(१)—विवरण-मते स्वर्विद इति षष्ठ्यन्तं कश्यपस्येत्यस्य विशेषणं, धीरा इति च द्विवचन-स्थानिकं बहुवचनम् यावित्यस्य विशेषणम्।

१ २   ३ २   ३१उ   ३ २   ३क २र

अर्चन्तु पुत्रका उत पुरमिद्* धृष्ण्वर्चत ॥ ३ ॥ १३०

२ र   ३   ५   २ र   ४   २ ३ ५

I अर्चतप्रार्चतानार२३४राः । प्रियमेधा३सो ३अर्चत ।

२ १   ४   २र ३ ५   १   २   ४

अर्चन्तुपू२३त्रा३काउत । पुरमिद्धा२३ । धृष्णुवा३र्चा५ता

६५६ ॥ २४ ॥ १३०

हे "नरः" कर्मणां नेतारोऽध्वर्य्यादयः ! यूयं इन्द्रम् "अर्चत" पूजयत स्तुत्या "प्रार्चत" प्रकर्षेणार्चतेन्द्रमेव । हे "प्रियमेधासः !" प्रियमेध-सम्बन्धिनस्तद्गोत्रा यूयं अर्चतेन्द्रम् । "पुत्रकाः" पुत्रा अभ्यर्चन्त्विन्द्रम् । "उत" अपिच "पुरमित्" पुरमेव(१) स्तोतृणामभिमतस्य पूरकं । "धृष्णु" धर्षणशीलं तादृशमिन्द्रम् "अर्चत" ॥ ३ ॥ १३०

---

* "पुरं न"-इति ऋ० पाठः ।

---

I प्रैयमेधम् ।

(१)—'इच्छब्द इव-शब्दस्यार्थे, पुरमिव धृष्णुम् । यथा कश्चित् पुमान् धृष्णुं दृढम् अभिभवनं परकीयाभ्यां सेनानाम् अर्चति तद्वदित्यर्थः'-इति वि० ।

अथ चतुर्थी।

मधुच्छन्दा ऋषिः।

३ १र २र ३ २ ३ १ र ३ १ २
उक्थमिन्द्रायशꣳस्यंवर्द्धनंपुरुनिष्षिधे*।

३ १र २र ३ १ २ ३ १ २ ३ १ २
शक्रोयथासुतेषुनो†रारणत्सख्येषुच ॥ ४ ॥ १३१ ॥

१ २ १ २ १ २ १
I उक्थमिन्द्रा। यशꣳसार३याम। वार्द्धनंपु। रुनिः

२ १ २ २ १ २ ३ ५ २र १
षा२३इधाइ। शक्रो३या३था३। सूतेषू२३४नाः। रार-

२ १ २ १
णा२३त्सा। खियाइषू २ ३ चा ३ ४ ३। ओ २३४५ इ।

डा ॥ २५ ॥ १३१

---

* "निः षिधे"-इति ऋ०—पाठः, इहापि च सायण-धृतः।

† "सुतेषुणो" इति ऋ०-पाठः, जर्मन्मुद्रित-पाठश्च।

---

१३१ ऋग्वेदस्य १,१,१,८ ५।

I बार्हदुक्थम्।

अथ पञ्चमी ।

प्रियमेध ऋषिः ।

२ १ २　३ २ ३ १ २　३ १ २
विश्वानरस्यवस्पतिमनानतस्यशवसः ।

१ २　३ २ ३ १ २ ३ १ २
एवैश्चचर्षणीनामूतीहुवेरथानाम् ॥ ५ ॥ १३२ ॥

५ र　२ १　१ र १
[ विश्वानरा । स्यवा २स्पाती २म् । आनानत ।

१ २　१ र२ २र　१　१　१
स्यशावा१सा २ः । एवैश्वा । चर्षणा २इनाम् । ऊ २ती ।

२ १ २　१　५ ५
हुवाइर । था२३४नोई३डाइ ॥ २६ ॥

"इन्द्राय" इन्द्रार्थं "वर्द्धनं" वृद्धि-साधनं "उक्थं" शस्त्रं "श-स्यम्" अस्माभिः शंसनीयम् । कीदृशायेन्द्राय ? "पुरु निःषिधे" पुरूणां बहूनां शत्रूणां निषेध-कारिणे । "शक्रः" इन्द्रो "नो" ऽस्मदीयेषु "सुतेषु" पुत्रेषु "सख्येषु च" सखित्वेष्वपि "यथा" येन प्रकारेण"रारणत्"अतिशयेन शब्दं कुर्यात् तथा शंस मिति पूर्वेणान्वयः । ( अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रः नो ऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः ॥ ४ ॥ १३१

---

१३२ ऋग्वेदस्य ६,५,१,४ ।

१ २ १ र ४ ५ २ १र २
II विश्वा३४। नरस्यवौचोस्यातीम्। अनानता३।
१ २ ३ ५ १ र २र १ ५ २र
स्याशावा२३४सा:। एवैश्वा। चर्षणा२३४इनाम्। ऊ
१र २ १ २ १ ५ ५
तीऊवा२र। था२३४नो६हाइ॥ २७॥ १३२

"विश्वानरस्य"(१)विश्वान् शत्रून् न्यतस्य"अनानतस्य"शत्रुणा-मप्रह्वस्य "शवसो" बलस्य "पतिं" स्वामिन मिन्द्रं "वः" (अत्र इन्द्र-सम्बन्धिनो मरुतोऽपि सङ्कीर्त्यन्ते) हे मरुतः! "वो" युष्माक मित्यर्थः (यद्यपि मरुत्स शब्दनं नास्ति तथापि व इति सामर्थ्या ल्लभ्यते)युष्माकं"चर्षणीनाम्"सैनिकानाम्(२) "एवैः" गमनै(३) सह (यद्वा। चर्षणीना मिन्द्रस्य सेना-रूपाणां वो युष्माकं गमनैरिति सामानाधिकरण्यम्) युष्माकं "रथानां" च "ऊती"(४) ऊतिभि

---

I,II वैश्वानरस्य सामनी द्वे।

(१)—"नरे सञ्ज्ञायाम् (६,४,१२९)"-इति विश्वस्याकारो दीर्घः विश्वानर-पदस्य यास्क-कृतं व्याख्यान मिह विस्तृतं विद्यते —"वैश्वानरः कस्मादित्यारभ्य—"अयमेव सोऽग्निर्वैश्वानरो निपातमेवैत उत्तरे ज्योतिषी एतेन नामधेयेन भजते"-इत्यध्याय शेषान्ता न्येकादश-खण्डानि द्रष्टव्यानि (नै० दै० १,२१—३१)।

(२)—"चर्षणय इति मनुष्य-नामसु अष्टमं नैघण्टुकम् २,३।

(३)—एवैरिति गति-कर्मण एते रूपम् (२,१४,१२०)।

(४)—"ऊती"-इति पूर्वसवर्णदीर्घे (७,१,३९) रूपम्। "ऊतिरवनात्"-इति यास्कः (५,३)। अतएव 'ऊती-ऊतये रक्षणाय'-इति वि०।

अथ षष्ठः ।

भरद्वाज ऋषिः ।

१ १२ ३१ १२ ३१२ १२ ३ १२
सघायस्ते दिवो नरो धिया मर्त्तस्य शमतः* ।

३ १२ २२ ३ २ ३ २ ३ २३ ३ १२
ऊतीस† बृहतो दिवो द्विषो अꣳहो न तरति ॥६॥ १३३॥

गमनैश्च सह "हुवे"(५) आह्वयामि। गन्तृभी रथैर्गन्तृभि मरुद्भिश्च स हेन्द्रं हुवे इत्यर्थः ॥

यद्वा। हे यजमानाः! युष्मदीय-सैनिकानां रथा यदा प्रविशन्ति युद्धाय स्व-सङ्ग्रामं, तदानीं तेषां साहाय्यायेन्द्रं हुवे इत्यर्थः(६) ॥ ५ ॥ १३२

*"ऋधद् यस्ते सु दानवे धिया मर्त्तः शशमते"-इति ऋ० ।
†"ऊतीष"—इति मूर्द्धन्य-पाठः ऋ० ।

१३३ ऋग्वेदस्य ६,५,१,५ ।

(५)—अत्र ऊः सम्प्रसारणं छान्दसम् (६,१,२४) ।

(६)—"विश्वानरस्यादित्यस्यानानतस्य प्रवतो महतो बलस्यैवेच कामे रथनै रवनैर्वा चर्षणीनां मनुष्याणामूत्या च यथा रथाना मिन्द्र मस्मिन् यज्ञे ह्वयामि"-इति यास्कः (दै० ११,२१) ।

२ १र २ २ १र २ २
I सघायस्ता३इ। ए। दिवोनरा३ः। ए। धि-

१र २ २ १ ५ २ र १ २ २
यामर्त्ता३। ए। स्वशमता३ः। ए। ऊताइसवू३। ए।

१र २ २ १र २ २ १ २
ह्नतोदिवा३ः। ए। द्विषोअं्हा३ः। ए। नातरति।

१ २ १
इडा२३भा३४३। ओ२३४५इ। डा॥२८॥

५र २र १ २र १
II सघायस्ताइ। दिवोनराः। धियामार्त्ता२। स्व

१ २र र १ र १ २र १
शमताः। ऊतीसावू२। ह्नतोदिवाः। द्विषोआं्हा-

१ २ १ २ १
२ः। नातरति। इडा २ ३ भा ३ ४ ३। ओ २ ३ ४५ इ।

डा॥२८॥१३३

"शमतः" कर्मानुष्ठानेन शान्तस्य वृत्तस्य निज-मार्ग-वर्तिन इत्यर्थः। "मर्त्तस्य" मनुष्यस्य मध्ये [जात्येक-वचनं(१)] "दिवो"

---

I,II शाकपूते द्वे।

(१)—"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"-इति पा० १,२,५८ सू०

द्योतनादि गुणकस्य(२) "ते" तव "धिया" कर्मणा स्तुत्या(३) "नरः" मनुष्यः "सखा" स्तोता(४) भवति "सः" नरः। "यः" "बृहतो" महतो "दिवो" दीप्तस्य तव सम्बन्धिन्या "ऊती"(५) ऊत्या रक्षया "द्विषो" द्विष्टन् "अंहो न" आहनन शीलं पापमिव "तरति" अतिक्रामति ॥ ६ ॥ १३३

(२) 'दिव्, क्रीड़ा-विजिगीषा-व्यवहार द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु' इति दि० प०।

(३ —"धीः" इति कर्म नामसु एकविंशतितम नैघण्टुकम् (२,१) इह च स्तुत्याख्यं कर्म। स्तुतिक्रियेत्यर्थः।

(४) —स्तुत्य-स्तोतृलक्षणं सखित्वमिह गृह्यते। मन्त्रे तु सर्वपुस्तके "सघा" इत्येव पाठः, तत्र घ इत्यनर्थकं "निपातस्य च (६.३.१३६)" इति दीर्घान्वितञ्च। परमिह तद्दत्तैव चित्रं यत् सखेति भाष्यकृता कुत आमादितमिति।

(५)—पूर्वसवर्णदीर्घः (७,१.३९)।

(६) —अंहः पापम् अतएव ऋगवेद प्रथम- मण्डलान्तर्गत पञ्चदशानुवाकीय-द्वादश मन्त्रस्य सप्तदश्या ऋचो व्याख्याने यास्कः

("सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यं हुरो गात्")

"सप्तैव मर्यादाः कवयश्चक्रुस्तासामेकामप्यभिगच्छन्नंहस्वान् भवति। स्तेय(१) तल्पारोहणं(२) ब्रह्महत्यां(३) भ्रूणहत्यां(४) सुरापान(५) दुष्कृतस्य कर्मणः पुनः पुनः सेवां(६) पातके नृतोद्य(७)मिति" इति ६ २७।

अथ सप्तमी।

अत्रि ऋषिः।

३ १ २ ३ १ २ ३ २ ३ १ २
विभोष्ट*इन्द्रराधसोविभ्वीरातिःशतक्रतो।
१ २ ३ १ २
अथानो†विश्वचर्षणेद्यु म्न‡ꣳसुदत्र¶मꣳहय॥७॥ १३४

५ र र ५ २ १र ५र १ २ र
I विभोष्टइन्द्रराधा६सा:। विभ्वीरा२तिःशतक्रतो।
१ १ र २र र १
शता२क्राताउ। आथानोविश्वचर्षणे। श्वचा२र्षाणाइ।
२ १ २ ३२ ४
द्यु म्नꣳसुदत्रमꣳहयं। त्रमा३ꣳहापूया६५६॥ ३०॥१३४

* "उरोष्ट"-इति,
† "अधानो"-इति,
‡ "द्यु म्ना"-इति,
¶ "सुक्षत्र"-इतिच
} ऋग्वेदीयाः पाठाः।

१३४ ऋ ४,२,९,१।

I वरुणान्याः साम।

अथाष्टमी।

प्रस्कण्व ऋषिः।

१ २　　३ १ २ ३ १र　२र
वयश्चित्तेपतत्रिणोद्विपाच्चतुष्पादर्जुनि*।

हे "शतक्रतो" बहुकर्मन्निन्द्र! "विभोः" प्रभूतस्य "राधसो" धनस्य "ते" तव "रातिः" दानं "विभ्वी" महती "अद्य" अतः कारणात् हे "विश्वचर्षणे!"(१) सर्वस्य द्रष्टः "सुदत्र" कल्याण-दानेन्द्र!(२) "नो" ऽस्मभ्यं "दाम्न" धनं "महय" प्रयच्छ(३) ॥ ७ ॥ १३४

* "द्विपच्चतुष्पदर्जुनि"-इति ऋग्वेदीय-पाठः।

(१)—"विश्वचर्षणिः"-इति पश्यति-कर्मसु दशमं नैघण्टुकम्. 'विचर्षणिः"-इति च नवमम् (३,११)। हविषेति (ऋ० १ म० ९ अनु० २ सू ४ ऋक) मन्त्र-व्याख्यानावसरे यास्कश्चर्षणिरितिपदस्य चायितेत्यर्थमाह। तथाहि—

"हविषा जारो अपां पिपर्त्ति पपुरिर्नरा।
पिता कुटस्य चर्षणिः॥"

"हविषापां जरयिता पिपर्त्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा। पिता कृतस्य कर्मण चायितादित्यः"-इति (५.२४)।

(२) "सुदत्रः कल्याण-दानः"-इत्यत नै० ३.१८।

(३)—"मंहते" इति दान कर्मसु दशमं नैघण्टुकम् ३.२०।

१ ३ १ २ ३ १र २र ३ १र २र ३ १ १
उषःप्रारन्नृतूँरनुदिवोअन्तेभ्यस्परि ॥ ८ ॥ १३५

५ २ ४र ५ २ १र र २
। वयश्चा३इत्तेपतत्रिणाः। द्विपाच्चतुष्पादर्जुनाये३।

४ ५ ४ ५ २र १ २ र १ १ ४
उषःप्रारान्। ऋतूँ२रनू। दिवोआन्ते२३। भा२३या३ः।

२ ५
पा३४५रो६होइ ॥ ३१ ॥ १३५

हे "अर्जुनि"(१) शुभ्रवर्णे "उषः" उषोदेवते "ते" तव "ऋतून् अनु" गमनान्यनुलक्ष्य "द्विपात्" मनुष्यादिकं "चतुष्पाद्" गवादिकं तथा "पतत्रिणः" पतत्रवन्तः पक्षोपेताः "वयश्चित्" पक्षिणश्च(२) "दिवोअन्तेभ्यः" आकाशप्रान्तेभ्यः "परि" उपरि "प्रारन्"(३) प्रकर्षेण गच्छन्ति (रात्रावन्धकारेणाभिभूताः सर्वे प्राणिनस्त्वदागमनानन्तरञ्चेष्टावन्तो भवन्तीत्यर्थः ॥ ८ ॥ १३५

---

१३५ ऋग्वेदस्य १,४,६,३।

I उषसम्।

(१) –"अर्जुनी" इति उषोनामसु षष्ठं नैघण्टुकम् १,८।

(२) 'वयश्चित्, चिच्छब्द इव-शब्दस्यार्थे, वयइव-पक्षिण इव'-इति वि०। अत्र मते पतत्रिण इति नतु विशेषणम् पदम्।

(३) –गतिकर्मणो ऋच्छतेरूपम (नै० २,१४,३५)।

अथ नवमी।

आप्त्यस्त्रित* ऋषिः(°)।

३ १र २र ३ २ ३ २ ३ १ २ ३ १ २ २
अमीये देवास्थन मध्य आरोचने दिवः।

१ २ ३ २ ३ ३ २ ३ २ ३ २ ३ १ २
कद्व ऋतंकदमृतं†का प्रत्ना‡व आहुतिः ॥ ९ ॥ १३६

* "त्रितः"-इति वि० पाठः।

| | |
|---|---|
| ※ "विश्वारो"-इति<br>† "कदनृतम्"-इति<br>‡ "क्व प्रत्ना"-इति च | ऋग्वेदीयाः पाठाः। |

१३६ ऋग्वेदस्य १,७,२०,५।

(°)—इहत्य-विवरण-ग्रन्थे इतिहास इयम्। तद्यथा——आप्तस्य ऋषेः त्रयः पुत्राः एकत-द्वित-त्रिता इति। ते पशुकामाः याज्यान् यजमानानेत्य गाः आयाचिरे, लेभिरे च ताः। आयान्तो गृहं जग्मुः। तद्गच्छतो मेधा सरस्वत्यास्तीरेण परस्मिन् काले निषण्णो गवोदकः। ददर्श, दृष्ट्वा चोत्थाय अभिमुखः सरस्वतीतीरे सर्वतीर्थे रात्रौ तामायमानाः। तेषां त्रासमास्थितानां ततः कूपे निर्जले तृणैर्वल्लिभि र्यावकीर्णे पपात। तस्य तत्रस्थस्यैवं मनः प्रादुरभूत् — कृत-याग-सङ्कल्पस्य अकृत यागस्य मम मृत्यु-र्नैश्रेयसं! तत् कथं मिहस्थ एवाहं सोमं पिबेयम्!-इति - अन्ये तु पुनरेतदेवेतिहासमन्यथा व्याचक्षते - एकत-द्विताभ्यां स्वरूपा गावो लब्धा स्तेन बहवः; तत ईर्ष्यया ताभ्यां कूपे वीरुध सत्तीर्णे ददर्श। स ता मादाय सोमोऽयमिति मनसा निश्चित्य यागैश्वर्यम् अन्यान्यपि याग साधनानि मनसा सङ्कल्प्य शर्करा अभिषवग्रावा कृत्वा तां वीरुधं समभिषुषाव • अभिषुत्य च देवानाजुहाव। ते देवा आहूता. सन्त आहूान

५ र र र र ४ ५ १ र र र २
। अमीयेदेवास्थाना। मध्यआरोचनेदिवाः। कद्द-
१ २ १ १र र २ १र २
ऋताम्। कदमार्त्तारम्। काप्रत्नावआहुर२३तो३४३।
१
ओ२३४५इ। डा॥ ३२ ॥१३६

हे "देवाः!" इन्द्रादयः "ये" ऽमी यूयं "दिवो" दीप्तस्य (सूर्यस्य,[१]) "आरोचने" दीप्तिविषये "मध्ये" अन्तरिक्षलोके "स्थ"

[ देवानां रुचिः ।

कारण मननुबुध्यमाना उद्विग्ना बभूवुः। तद् वृहस्पतिः शुश्राव। श्रुत्वा च देवान्-वाच, त्रितस्य यज्ञो वर्त्तते, तत्र गच्छाम इति। तत स्ते देवा आ जग्मुः। स तानागतान् कूपादुद्धरणार्थो तुष्टाव, उपायं लब्धवांश्च="अमी ये देवाः स्थ"-इति॥

इम मेवेतिहासं "सम्मातपन्त्यभितः"-इति मन्त्रव्याख्यानावसरे यास्कोऽप्यवततार। तथाहि———— (ऋ०१म०१५अनु०१२सू०८ऋक्)

"सम्मा तपन्त्यभितः सपत्नी रिव पर्शवः। मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी॥"

"सन्तपन्ति मामभितः सपत्ना इवमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति। स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति। सन्तपन्ति माध्यः। कामास्तोतारं ते शतक्रतो। वित्तं मे अस्य रोदसी। जानीतं मेऽस्य द्यावापृथिव्याविति। त्रितं कूपेऽवहितम् एतत् सूक्तं प्रतिबभौ। तत्र ब्रह्मेतिहासमिश्रं मृङ्मिश्रं गाथामिश्रं भवति। त्रितस्तीर्णतमो मेधया बभूवापि वा सङ्ख्या नामैवाभिप्रेतं स्याद्-कतो द्वित स्त्रित इति त्रयो बभूवुः"-इति ४.६।

(१—यद्यपि निघण्टावादित्यनामसु "स्वः"-इत्यादि षट्कमेव गणितं तथाप्यत्र

अथ दशमी ।

वामदेव ऋषिः ।

३ १ २　　४र २ ३　१ २　७ १ २
ऋचꣳसामयजामहेयाभ्यांकर्माणिकृण्वते ।

१र　२र　　३ २ ३ १ २
वितेसदसिराजतोयज्ञन्देवेषुवक्षतः ॥ १० ॥ १३७

## ॥ तृतीय-दशति ॥

भवथ (सूर्य-प्रकाश्य स्थाने) इत्यर्थः । तेषां "वो" युष्माकं सम्बन्धि स्तोत्र-विषयं "ऋतं" सत्यं "क्व" कस्मिन्देशे वर्त्तते? "अनृतं (न-कारस्य स्थाने मकारः) अमृतं "क्व" कुत्रास्ति? "वो" युष्मदीया "प्रत्ना" पुराणी "आहुतिः" "का" कीदृशी? युष्मदीयं दानं किमभूदित्यर्थः (ईदृग्भूत-दुःखानुभवेन मया पूर्वं मनुष्ठितो याग-समूहो युष्मान्न प्राप्नोदित्यनुममे(२) ॥ ८ ॥ १३६

---

"स्वः"-पर्याय-दिव्शब्दस्यापि आदित्य-वाचकत्वम्, तथाहि यास्कः—"स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान्त् स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता"-इति २,१४ ।

(२)—'एतदुक्तं भवति । वृत मम तदद्य नास्ति कूपे निपतिते, तत् क्व । अमृतं सोमाख्यम् । हविः, धानाः, करम्भः, पुरोडाशः, प्रतीवापः, पयस्यापरस्वरग्नीषोमीयः पशुः सवनीयः एव मौदिकं घृतम् अमृतं च क्वात्र विद्यते?"-इति वि० ।

I ऋच७ंसामयजा। महाइ। याभ्यांकर्माणिकृण्वा-
२३ताइ। वितेसदसिराजा२३ताः। यज्ञंदा२३इवे।
षुवक्षतः। इडा२३भा३४३। ओ२३४५इ। डा॥ ३३॥

II ऋच७ंसा३मायजामहाइ। याभ्यांकर्मा। णिका-
ण्वा१ता२इ। ण्वाता३२इ। वाइतेसद। सिराजा१ता-
२ः। जाता२ः। यज्ञांदा१इवे२। षुवक्षतः। इडा-
२३भा३४३। ओ२३४५इ। डा॥ ३४॥ १३७

"याभ्याम्" ऋक्सामाभ्यां "कर्माणि" शस्त्र-स्तोत्र-प्रमुखानि "कृण्वते" होतार उद्गातारः कुर्व्वन्ति। ताम् "ऋचं" "तत् साम" च "यजामहे" वयं पूजयामः "ते" ऋक्सामे "सदसि" ऋत्विक्समूहे सदोमण्डपे "विराजतः" स्तोत्र-शस्त्र-रूपेण विशेषेण प्रका-

---

I,II ऋक्साम्नोः सामनी द्वे।

ययतः। ते च ऋक्सामे देवेषु "देवेषु" इन्द्रादिषु "यज्ञं" "वक्षतः"(१) प्रापयतः॥ १३७

इति श्रीसायणाचार्य्यविरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य द्वितीयः खण्डः॥ २॥

इत्यानुष्टुभमैन्द्रम्॥

---

सन्त्येकादश या विश्वाः पृतना इति संमताः।
जगत्य ऐन्द्र्यो रोदस्योः स्तुतिर्घृतवती इति॥
उभे यदिन्द्ररोदसी महापङ्क्तिरितीरिता(क)॥

---

(१)—प्रापणार्थस्य वहते (भ्वा०उभ०) रूपमिदम्।

(क)—अनन्तरमिह "विश्वाःपृतना"-इत्यारभ्य-"प्रमंहिने"-इत्यन्ताः चतुर्थ-दशद्यात्मकाः या एकादश ऋचः सन्ति, तत्र "घृतवती"-इति नवमी ऋक् रोदस्योः द्यावा-पृथिव्योः स्तुतिः, अन्याः दश ऐन्द्रः, किन्तु "उभे यदिन्द्र रोदसी" इति दशमी ऋक् महापङ्क्ति छन्दस्का; अपरा जगत्यः। इति छन्दोदैवत-सङ्केतः।

मैषा प्रथमा।

रेभ ऋषिः*।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
विश्वाःपृतना अभिभूतरंनरः†सजूस्ततक्षुरिन्द्रञ्जजनुश्चराजसे।

३ १ २ ३ २ ३ १ २ ३ १ २ २ २ ३ १ ३ १
क्रत्वेवरेस्थेमन्यामु‡री¶मुतोग्रमोजिष्ठन्तरसं§तरस्विनम्॥१॥
१३८

५ ४ १ २ २ १ २ २ ३ १ १ २ १२
I विश्वोहाइ। पृतनाअभिभू। तरन्नराः। सजू-

२ १ २ १ २ २ १ ५ २ २
स्ततक्षुराइन्द्रंजजनूः। चराजासोर२३४हाइ। क्रत्वौहोइ।

---

* "त्यशोकस्यार्षम्"-इति वि०।

† "नरं"-इति ऋग्वेदीयः पाठः।

‡ "क्रत्वा वरिष्ठं वर आमु०"--इति ऋग्वेदीयः, सायण-कृतोत्तर भाष्ये च।

¶ "आमुरिम्"-इति ऋग्वेदीय-पाठः।

§ "तवसं"-इति च ऋग्वेदीयः पाठः।

---

१३८ उत्तरार्च्चिकस्य ३,१,१४,१=ऋग्वेदस्य६,६,२७,५=ऊहे २,२,१३।

I वैश्रीकम्।

वरौ्चोइ। स्थेमन्या२मू२३४रीम्। उतोचाइ। उग्र-मो२३४जौ। श्नन्तारा२३४साम्। चोइ। तरा३४। स्विनम्। ओ६वा। ओइदो२३४वा॥ ३५ ॥* १३८

"विश्वाः"सर्व्वाः व्याप्ता वा"पृतनाः"[पृङ् व्यायामे (तु० आ०)] व्याप्रियन्त इति पृतनाः सेनाः(१) "नरो" नेत्रः "सजूः" परस्परं सङ्गताः सत्यः "अभिभूतरं" शत्रूणा मत्यर्थमभिभवितारम् "इन्द्रं" "ततक्षुः" आयुधादिभि स्तोत्राणीचक्रुः आयुधवन्तं चक्रुरित्यर्थः [यद्वा पृतना इति सङ्ग्रामनाम (नि०२,१७,) व्याप्रियन्ते अत्रेति "पृतनाः" सङ्ग्रामाः सर्व्वानेव संग्रामानभिभावुक मिन्द्रं "नरो" नेतारोऽन्ये स्तोतारः अन्योन्यं सङ्गताः स्तुतिभि स्तोत्ता मकुर्वन्। [यद्वा। यष्टारो हविः-प्रदानेन वीर्य्यवन्तं कुर्वन्तीति।] किञ्च स्तोतारः"राजसे" [राजते स्तुमर्थे असे प्रत्ययः(२)] आत्मनो विराजनार्थं सूर्य्यात्मनमिन्द्रं"जजनुः"(३) जनयामास स्तोत्र-शस्त्रैः

(१)—"पृतनाः"-इति निघण्टौ मनुष्य नामसु(२,३) सङ्ग्राम नामसु च(२,१७) दृश्यते।

(२)—"तुमर्थे से-सेन-ऽसेन्-क्से-कसेन-ऽध्यै अध्यैन् कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै तवेङ्-तवेनः (३,४,९)"-इति पा०।

(३)—"छन्दस्युभयथा (३,४,११७)"-इति सिद्धम।

* ॥ इति ग्रामे गेये नवमः प्रपाठकः ॥

अथ द्वितीया।

सुवेदः शैलूषिर्ऋषिः*।

१ २ ३ १ २ ३ २उ ३ २उ ३ १ २ ३ २ ३ २
अत्तेदधामिप्रथमायमन्यवेहन्यद्दस्युन्नर्यं †विवेरपः॥

१ २उ ३ १ २ ३ १ ३ २ ३ १ २ ३ २ ३ १ २
उभेयत्त्वारोदसीधावतामनुभ्यसात्तेशुष्मा‡त्पृथिवीचि

दद्रिवः॥ २॥ १३९

स्व-यज्ञे प्रादुरभावयन्नित्यर्थः। "उत" अपिच "क्रत्वे" स्वकीय-वृत्र-वधादि-कर्मणे "वरे" श्रेष्ठे "स्थेमनि" (स्थिर-शब्दादिमनिच् ५,१,१२२) स्थैर्य-युक्ते स्थाने स्थितम् "आमुरि" शत्रूणां मारयितारमिन्द्रम् आत्मनां धन-लाभार्थं स्तोतारः स्तुवन्तीत्यर्थः। कीदृशम्? "उग्रम्" उद्गूर्णबलम् अतएव "ओजिष्ठम्" ओजस्वितमं "तरो" बलं तद्वन्तं "तरस्विनं" सङ्ग्रामे शत्रु-बधार्थं बलवन्तं वेगवन्तं वा॥ २॥ १३८

---

* "सुमेधस आर्षम्"-इति त्रि०।

† "यद्वृत्रं नर्य"-इति ऋग्वेदीयः पाठः।

‡ "यत्त्वा भवतो रोदसी अनु रेजते शुष्मम०"-इति ऋग्वेदीयः पाठः।

---

१३९ ऋग्वेदस्य ८,८,५,१।

I ओं ॥ अग्ने३ह्वोइ । दधा३ह्वो२३४ । मिप्रथमायम । न्यवाइन्यवाइ । अह्वा३न्होइ । यह्वा३ह्वो२३४ । स्युनयं विवे । अपाअपाः । उभे३ह्वोइ । यत्वा३ह्वो२३४ । रोदसीधावताम् । अनूअनू । भ्यसा३ह्वोइ । तेशू३ह्वो२३४ । यात्पृथिवीचिद । द्रिवोद्रिवाः । द्रिवआ । अह्वोवा६ । ह्वाउवा । ई२३४५ ॥ १ ॥

II अग्ना३१इ । दधा३१२३४ । मिप्रथमायम । न्यवाइ न्यवाइ । अह्वा३२न् । यह्वा३१२३४ । स्युनयं वोवेः । अपा- अपाः । उभा ३१इ । यत्वा३१२३४ । रोदसीधावताम् । अनूअनू । भ्यसा३१त् । तेशू३१२३४ । यात्पृथिवीचिद । द्रिवोद्रिवाः । द्रिवए । ह्वियाइ६ ह्वा । ह्वो५इ । डा ॥ २ ॥

III अयो२३४वा । अयायो२३४वा । आग्नाइ । दा- २३४धा । मिप्रथमायम । न्यवाइन्यवाइ । अयो२३४-

---

I, II *गौरवरिगइने द्वे ।

५ ३ २ ३ ५ ४ ५ १ ५ ४ ५ ४र
वा। अयायोर३४वा। आह्वान्। या२३४इ। स्युन्नयंविवः।

५ ४ ५ ३ ५ ३ २ ३ ५ ४ ५
अपाअपा.। अयो२३४वा। अयायो२३४वा। ऊभाइ।

१ र र ५ र ४र ५ र ४ ५ ४ ५ ३
या२३४त्वा। रोदसीधावताम्। अनूअनू। अयो२३४

५ ३ २ ३ ५ ४ ५ २ ४र
वा। अयायो२३४वा। भ्यासात्। ता२२४इष्णु। च्मात्पृ-

४र ५ ४ ५ ४ ५ ४ ५ ४ ५र र ५
थिवीचिद। द्रिवोद्रिवाः। द्रिवआ। औह्वोवाइ। हा-

२ र २
उवा। द्रिवइह्वो३ह्वा२१॥ ३॥

३ ५ ३ २ ३ ५ ४ ५
IV इयो२३४वा। इयायो२३४वा। आत्ताइ।

१ र ५ ४र ५ ४ ५ ४ ५ ३
दा२३४धा। मिप्रथमायम। न्यवाइन्यवाइ। इयो२३४

५ ३ २ ३ ५ ४ ५ १ ५ ४
वा। इयायो२३४वा। आह्वान्। या२३४इ। स्युन्-

५ ४र ५ ४ ५ ३ ५ ३ २ ३ ५
यंविवेः। अपाअपाः। इयो२३३वा। इयायो२३४वा।

४ ५ १ र र ५ र ४र ५ र ४ ५ ४ ५
ऊभाइ। या२३४त्वा। रोदसीधावताम्। अनूअनू।

३ ५ ३ २ ३ ५ ४ ५ १
इयो२३४वा। इयायो२३४वा। भ्यासात्। ता२३४इष्णु।

III,IV अत्रेर्विवर्त्तौ द्वौ।

४र ४र ५ ४ ५ ४ ५ ४ ५ ४ ५र र
षमात्पृथिवीचिद। द्रिवोद्रिवाः। द्रिवआ। औहोवाई।
५ २ २
हाउवा। द्रिवइहोइह्‌ऽ१॥ ४॥

१ २ ४ ५ १ र ५
V आर२३याइम्। आत्ताइ। दा२३४धा। मिप्र-
४र ५ ४ ५ ४ ५ १ २ ४ ५
थमायम। न्यवाइन्यवाइ। आ२३याइम्। आहान्।
१ ५ ४ ५ ४र ५ ४ ५ १ २
या२३४ह। स्युन्नयं विवेः। अपाअपाः। आ२३याइम्।
४ ५ १ र र ५ र ४र ५ र ४ ५ ४ ५
ऊभाइ। या२३४त्वा। रोदसौधावताम्। अनूअनू।
१ २ ४ ५ १ ५र
आ२३याइम्। भ्यासात्। ता२३४यिशू। आत्पृथि-
४र ५ ४ ५ ४ ५ ४ ५ ४ ५र र ५
वीचिद। द्रिवोद्रिवाः। द्रिवआ। औहोवाई। हा-
२ १ १ १ १ १
उवा। द्रिवोइद्रिवा२३४५ः॥ ५॥

२ ४ ५ १ २ ५
VI अयंयाइः। आत्ताइ। दधा३१२३४। मिप्र-
४र ५ ४ ५ ४ ५ २ ४ ५
थमायम। न्यवाइन्यवाइ। अययाइः। आहान्।
१ २ ५ ४र ५ ४ ५ २
यद्दा३१२३४। स्युन्नयं विवेः। अपाअपाः। अयंयाइः।
४ ५ १ २ र ५ र ४र ५ र ४ ५ ४ ५
ऊभाइ। यत्वा३१२३४। रोदसौधावताम्। अनूअनू।

---

V,VI महासावितमे द्वे।

अयंया३ः। भ्यासात्। ताइभू३१२३४। आत्पृथि-
वीचिद्। द्रिवोद्रिवाः। द्रिवआ। औहोवाई। हा-
उवा। द्रिवा३ई२३४५॥ ६॥

VII औहोहोहाइ। आत्ताइ। दा२३४धा।
मिप्राथा२३४मा। यमन्या२३४व। यमन्या२३४वाइ।
अहा३१२न्। या२३४दा। स्पुन्नारी२३४याम्। विवेरा-
२३४पो। विवेरा२३४पाः। उभा३१२इ या२३४त्वा।
रोदासो२३४धा। वतामा२३४न्। वतामा२३४न्।
भ्यसा३१२त्ता२३४इभू। आत्पृथी२३४वी। चिदद्री२३-
४वः। चिदद्रा२३४इवाः। द्रिवआ। औहोवाई। हा-
उवा। ए३। द्रिवइहा२३४५॥ ७॥

VIII अत्ताऔहोहोहाइ। दधा३१२३४। मिप्रथमा-
यम। न्यवाइन्यवाइ। अहाऔहोहाइ। यद्दा३१२३४।

VII,VIII, महाशैरीषे द्वे।

५ ४र ५ र ४ र ५ १ २
स्युन्नर्यविवेः। अपाअपाः। उभाऔहोहोहाइ। यत्वा-

र ५ र ४र५र ४ ५ ४ ५ र
३१२३४। रोदसीधावताम्। अनू अनू। भ्यसाऔ-

४ ५ १ २ र ५ ४र ५ ४
होहोहाइ। ताइग्रा३१२३४। स्मात्पृथिवीचिद्। द्रि-

५ ४ ५ ४५ ४ ५र र ५ १ १
वोद्रिवाः। द्रिवआ। औहोवा६। हाउवा। द्रिवए-

१ १ २१
३द्रिवा२३४५ः॥ ८ ॥१३९

हे "अद्रिवः" वज्रवन्निन्द्र! "ते" तव "मन्यवे" कोपाय तेजसे वा "प्रथमाय" मुख्याय "श्रद्धामि" श्रद्धामादरातिशयन्तद्विषयं करोमि(१)। "यत्" येन मन्युना "दस्युं" कर्मणामुपक्षपयितारम् असुरम् "अहन्" अवधीः (नर्यमिति क्रिया-विशेषणम्) नरहितं यथा भवति तथा तेन हत्वा च मेघेनावृताः "अपः" उदकानि च "विवेः" इमं लोकं प्रत्यागमयः (तस्मै मन्यवइत्यन्वयः) "यद्"

(१)—'श्रत् सत्यं, ते तुभ्यं, दधामि ददामि'-इति वि०। "श्रत्"-इति सत्य-नामसु द्वितीयं नैघण्टुकम् ३,१०।

अथ तृतीया।

वामदेव ऋषिः।

१ २ ३ १ ३ १ २ ३ १ २ ३ २उ ३१र १ २र ३ १ २
समेतविश्वाओजसापतिंदिवोयएकइद्भूरतिथिर्जनानाम्।
३ १र २र ३ १ २ ३ १ २ ३ १र २र ३२ ३ २
सपूर्व्योनूतनमाजिगीषन्तंवर्त्तनीरनुवावृतएकइत् ॥३॥१४०

४ ५ १ र र २ १ २
1 समाच्चाउ। आइतविश्वाओजसा३। पतिमा३इ।
१ २र २ १ २ १
दिवा२३४ः। च्चाहोइ। यआइका१ई२त्। भूर-

यदा "उभे" "रोदसी" द्यावापृथिव्यौ "त्वा" त्वाम् "अनुधावताम्" गच्छतां त्वदधीने भवत इत्यर्थः। तदानीं "पृथिवी चित्" पृथिवीत्यन्तरिक्षनाम (नि० १,३,८) प्रथितं विस्तीर्णमन्तरिक्षमपि(२) "शुष्मात्" त्वदीयाद्बलात्(३) "भ्यसाते" बिभेति [भ्यस भये (भ्वा० आ०) पञ्चम-लकारे(४) रूपम्] विभीयात् भयेन कम्पतइत्यर्थः ॥ २ ॥ १३९

(२)—अयर्थेदिच्छन्दः, विवरणे तु पादपूरणार्थः। किञ्च 'अन्तरीक्ष-पदस्य प्रदर्शनार्थम्, यथोऽपि लोका इत्यर्थः'-इति विवरणे विशेषः।

(३)—"शुष्मम्"-इति बल-नामसु एकादशं नैघण्टुकम् २,९।

(४)—लेडीति भावः। तथाच "लिङर्थे लेट्(३,४,७)"—"लेटोऽडाटौ(३,४,९४)"-"इतश्च लोपः परस्मैपदेषु (३,४,९७)"-इति सूत्र-त्रयं विशेषेण सार्थ्यम्।

२　१　२　३र २　१ ७
तिथिः। जनार२३ना३४म्। छाछोइ। सपूर्विया२ः।

१र २ र　१　२　३र २　१ २
नूतनमा। जिगा२३इषा३४न्। छाछोइ। तंवार्त्ता-

१ २र र　१ १　२　१
१नी२ः। अनुवावृते। आये३। कयाउवा३। वृधे१॥

॥ ८ ॥

५ ४र५ ४ ५र ४र५ र ४ ५　४ ५　१ २र
II समेतविश्वाओजसापतिम्। एपातीम्। दिवया।

५ २ २ ५ २　१ २　१र
द्यौ२। द्यौ३द्यो३वाई३या। यआइका१ई२न्। भूर-

२　१　२　५ २ २ ५ २
तिथिः। जनार२३नाम्। द्यौ२। द्यौ३द्यो३वाई३या।

१ ७　१र २ र　१　२
सपूर्विया२ः। नूतनमा। जिगा२३इषान्। द्यौ२।

५ २ २　५ २　१ २　१ २र र
द्यौ३द्यो३वा। ई३या। तंवार्त्ता१नी२ः। अनुवावृते।

१ २　२　२
आये३। कया।उवा३। मद्दे१॥ १०॥

५ ४र५ ४ ५र ४र ५ र ४ ५　४ ५　र
III समेतविश्वाओजसापतिम्। एपातीम्। दाइ-

२　५ २ २　१ ० २　१
वा१या२। औ२। द्यौ३द्यो३वा। ओमोवा। यआइ-

---

I, II, III इन्द्रस्य प्रियाणि त्रीणि।

२ १र २ १ २ ५

का१ई२त । भूरतिथिः । जना२३नाम । औ२ । हो

२ २ १ २ १२ १र २र

२हो३वा । ओमोवा । सपूर्वो१या२ः । नूतनमा ।

१ २ ५ २ २ १ २

जिगा२३इषान । औ२ । हो३हो३वा । ओमोवा ।

१ २ १ २र र १२ २

तंवार्ता१नो२ः । अनुवावृते । आये३ । कयाउवा३ ।

१ ३ १ १ १ १

धर्मणे२३४५ ॥ ११ ॥ १४०

हे "विश्वाः" सर्वाः प्रजाः ! "दिवः" स्वर्गस्य "ओजसा" बलेन "पतिं" स्वामिन मिन्द्रं(१) "समेत" स्तोत्रेण हविषा वा सम्यक् प्राप्नुत । इन्द्रः "एकइत्" एक एव सन् "जनानां" यजमानानां "अतिथिः" अतिथिवत् प्रियो "भूः" भवति । "पूर्व्यः"(२) पुरातनः "स" इन्द्रः "आजिगीषन्" स्व-शत्रून् जेतु मिच्छन् "नूतनम्" अद्यतनं स्तोतारं प्रति "एकइत्" एकएव वर्त्तनिर्मार्गः सन् "अनुवावृते"(३) अनुवर्त्तयति ॥ ३ ॥ १४०

(१) —'द्युलोक ग्रहणं चात्र प्रदर्शनार्थम्, त्रयाणा मपि लोकानां स्वामिन मित्यर्थः' इति वि० ।

(२) – "पूर्वैः कृत मिनि यौ च (४,४,१३३)" इति य-प्रत्यये रूपम् ।

(३)—सार्वकालिको लिट् (३,४,६)—"तुजादीनां दीर्घोऽभ्यासस्य (६,१,७)"-इति दीर्घस्य ति विशेषः ।

अथ चतुर्थी।

सव्य आङ्गिरस ऋषिः*।

३१ २　३ २ ३ २ २　३ २ ३ १ ३ १ २
इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो।
२३ १ २ २ १ २ ३ १ २ ३ २ १ ३ २ ३ १ २ ३ २ २
नहि त्वदन्यो गिर्वणो गिरः सघत् क्षोणीरिव प्रति तद्धर्य नो वचः† ॥४॥ १४१

५ र　२ १र　१　१२ र　र
I इमेतआ। इन्द्रतेवयंपूरू २ष्टूता २। येत्वारभ्यचरा-
१　१ र र　१
मसिप्रभू २वासा २३। नहित्वदन्यो गिर्वणोगिरा २ःसा-
र १र　१　१२ ३
घा २त। क्षोणीरिवप्रतितद्धर्यनो २वाचा २ः। वचाओ-
५ ४
२३४वा। ह्योपूइ। डा ॥ १२ ॥

५ र　२ १र　२　१　२
II इमेतआ। इन्द्रतेवयंपूरू। ष्टुता। या१इत्वा २
१　१ र २　र　१　२　१
राभ्या २। चारामसिप्रभू। वसाउ। ना१ही २त्वादा-

* "सत्यस्यार्षम्"-इति वि०।

† "प्रति नो हर्य्य तद्वचः"-इति ऋग्वेदीयः पाठः।

१४१ ऋग्वेदस्य १,४,२२,४।

I, II, III वैरूपाणि त्रीणि।

१ २र १ १ २
२न्। योगिर्वणोगिरः। सघात्। चो१णी२राइवा-

१ २ ११ १र २ १
२। प्रतितह्व। यंनोवा२३चा२४३ः। श्रो२३४५इ।

डा॥ १३॥

२ १र ४ ५ ४ ५ ४ ५ ४ ५ १र र
III इमेता२३इन्द्रतेवयंपुरुष्टुतोवा। येत्वाराभ्या२।

१र ४ २र३ ५ २ १ १र
चरामसी२३प्रा३भूवसाउ। नहित्वादा२न्। योगिर्व-

४ २ १ ५ १र र १
णो२३गी३रःसघत्। चोणोरिवा२। प्रतितह्वा२३।

४ ४
यंनो५वचाः। चो५इ। डा॥ १४ ॥१४१

"प्रभूवसो" प्रभूतधन हे इन्द्र! अतएव "पुरुष्टुत" पुरुभिर्बहु-भिर्यजमानैः स्तुत! "ये" वयं "त्वा" त्वाम् "आरभ्य" आश्रयतया "बल" "व्यचरामसि"(१) चरामः यागे वर्त्तामहे। 'ते' इमे वयन्तु तव स्वभूताः हे "गिर्वणो" गीर्भिर्वननीयेन्द्र! "त्वदन्यः" त्वत्तोन्यः कश्चिदपि "गिरः" स्तुतीः "न हि सघत्" न हि

(१)—"इदन्तोमसि (७,१,४६)"-इति मस इगागमः।

अथ पञ्चमी।

विश्वामित्रस्तौति।

२ १ २ ३ १ २ ३ २ २ ३ १ २ ३ २ ३क २र
चर्षणीधृतंमघवानमुक्थ्या३* मिन्द्रङ्गिरोबृहतीरभ्यनूषत।

३ १ २ ३ १ २१ २ ३ १ २ ३ १ २ ३ १
वावृधानम्पुरुहूतꣳसुवृक्तिभिरमर्त्यञ्जरमाणन्दिवे

२
दिवे॥५॥ १४२

५ र २ १ र २ १ १ १
I चर्षणीधृतꣳहाउ। मघवानमुक्थ्या२३याम्। इन्द्र

र र २ १र २ १ ० १ ०
ङ्गिरोबृहतीरभ्यनूषा२३ता। वावृधाना२म्। पुरुहूता

प्राप्नोति। अतस्त्वं "नो" ऽस्माकं वचः" स्तुति-लक्षणं "प्रति-हर्य"(१) कामयस्व "क्षोणीरिव" यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि कामयते॥ ४॥ १४१

---

* "उक्थ३"-इति ऋग्वेदीयः पाठः।

---

I वार्हदुक्थम्।

१४२ ऋग्वेदस्य २,२,१५,१ = आरण्ये २,१-२-२।

(१)—"हर्यति" इति कान्ति कर्मसु पठितं नैघण्टुकम् २,६।

१ २ ५ १ १ २ १
२३म्। सुवा२क्ती२३४इभीः। अमा२र्त्तियाम्। जर-

१ ४ २ ५
माणा२३म्। दा२३इवे३। दा३४५इवो६हाइ॥१५॥१४२

"बृहतीः" प्रभूताः "गिरः" अस्मदीयाः स्तुति-लक्षणा वाचः "चर्षणीधृतं" चर्षणीनां मनुष्याणा(१) मभिमत-फल-प्रदानेन धारकं पोषकं [यद्वा आकर्षकत्वेन सर्वमिति चर्षणि बलं(२) तद्धारकं "मघवानम्" "उक्थ्यम्" उक्थैः शस्त्रैः शंसनीयं(३) "वावृधानं" बल-धनादि-सम्पत्त्या प्रतिक्षणं वर्द्धमानं "पुरुहूत" बहुभिः स्तोतृभि राहूतम् "अमर्त्य" मरण-धर्म-रहितं "सुवृक्तिभिः" शोभन-स्तुति-वाक्यैः "दिवे दिवे"(४) प्रत्यहं "जरमाणं" स्तूयमाणं तम्(५) इमम् "इन्द्रम्" "अभ्यनूषत"(६) अभितः सर्वे स्तुवन्तु॥ ५॥ १४२

(१)—"चर्षणयः"-इति मनुष्य-नामसु अष्टमं नैघण्टुकम् २,३।

(२)—यौगिकार्थ एष न तु निघण्टु लभ्यः। चर्षणिः "चायिता आदित्य"-इति च नै०५.२४।

(३)—"उकथ्य"—इति प्रशस्य-नामसु सप्तमं पदम् ३,८।

(४)—"दिवे दिवे"-इत्यहर्नामसूपान्त्यं नैघण्टुकम् १,९।

(५)—"जरते"-इत्यर्चति-कर्मसु सप्तमं नैघण्टुकम्।

(६)—"नोति"-इत्यप्यर्चति-कर्मसु जनन्त्यं प्रथमं नैघण्टुकम् ३,१४।

अथ षष्ठी।

कृष्ण आङ्गिरस ऋषिः*।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अच्छाव †इन्द्रं मतयः स्वर्युवः ‡ सध्रीचीर्विश्वाउशतीरनूषत।

१ २ २ १ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
परिष्वजन्तजनयोयथापतिंमर्यं नशुन्ध्युंमघवानमूतये॥६॥१४३

५ र ५ २ १ र र र
। अच्छावइन्द्रम्मतयः सुवर्युवाइए। सध्रीचीर्विश्वाउ-

१ १ र १
शतीरनू २षाता २। परिष्वजन्तजनयोयथा २पातौ २म्।

१ २ १ २ १ ३ ५ ५ र र
मर्यन्ना२३ःशु। ध्युम्म। घवा२। नमू३४औहोवा।

२ १ ११११
तया३ई२३४५॥ १६॥

---

※ "कृष्ण आत्मीयान् ऋत्विज आह—" इति वि०।

† "आच्छाम" } इति च ऋग्वेदीयौ पाठौ।
‡ "स्वर्विदः" }

---

१४३ ऋग्वेदस्य ७,८,२४.१।

•८७क,

१ २ ५ ४ ५ ४ ५ २र १
II आ२३४। च्छावइन्द्रम्म। तयाः। सूवयुवा२३ः।

१ २ ५र ४ ५र ४ ५ २र १र
सा२३४। ध्रीचीर्विश्वाउ। शतीः। आनूषता२३।

१ ५ ४ ५ २र १र
पा२३४। रिष्वजन्तज। नयाः। याथापता२३इम्।

१ ५ ४ ५ ४ ५ २र १र २
मा२३४। र्यन्नशुंध्युम्म। घवा। नामूतया३१उ। वा-

१ १ १ १
२३४५॥ १७॥ १४३

"स्वर्युवः"(१) स्वर्गेण मिश्रयित्वाः "सध्रीचीः" सङ्गताः विश्वा व्याप्ताः "उशतीः" कामयमानाः "मतयः" स्तुतयः(२) "इन्द्रम्" ईश्वरम् "अच्छानूषत" अभिष्टुवन्ति(३)। किञ्च।

---

I,II त्रासदस्यवे द्वे।

(१)—'युमिश्रणे'-इति यौतेरूपम् (अदा०प०)। विवरणे तु 'स्वर्गं याः गन्तुमिच्छन्ति ताः स्वर्युवः स्वर्ग-गमन-शीला इत्यर्थः'। एतन्मते इच्छत्यर्थे क्यचि "क्याच्छन्दसि (३,२,१७०)"-इति उ प्रत्यये स्वर्युः, तस्य बहुवचनान्तस्येदं रूपम्।

(२)—मतय इति "मन्यते"-इति स्तुतिकर्मणो रूपम् (नि० ३, १४, १८)।

(३)—"अच्छ अभेः, आप्तुमिति शाकपूणिः" (नै० ५, २८)। "निपातस्य च (६. ३,१३६)"-इति ऋचि दीर्घः।

अथ सप्तमी।

सव्य ऋषिः*।

३ २उ ३ १ ° १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २
अभित्यंमेषंपुरुहूतमृग्मियमिन्द्रंगीर्भिर्मदतावस्वोअर्णवम्।
३ २ १ २ १ १ २ २ १ २ ३ १र २र ३ १र २र
यस्यद्यावोनविचरन्तिमानुषं†भुजेमंहिष्ठमभिविप्र

मर्चत॥७॥ १४४

५ २ ४र ५ ४ ५ २ १ र
I अभित्या३म्मेषंपुरुहू। तम्टग्माया२म। इन्द्रंगी-

"जनयो" जायाः यथा "पतिं" भर्त्तार "मर्यं न" यथाच "शुन्ध्युं" शुद्धं दोष-रहितं "मघवान" धनवन्तम् "ऊतये" रक्षणाय "परिष्वजन्त" आलिङ्गन्ति [छान्दसो लोट्(४)] तद्वदिन्द्रं मे स्तुतयः परिष्वजते।

"परिषजन्त"-"परिषजते"-इति च पाठौ॥ ६॥ १४३

---

* "अङ्गिरा नाम ऋषि."-इति वि०।

† "मानुषा"-इति ऋग्वेदीयः पाठः।

---

१४४ ऋग्वेदस्य १,४,८,१।

I सोमसाम।

(४)—व्यत्ययेनेति (३,१,८५) भावः। "परस्मैपदात (८,३,१०६)"-इति कपम्:

र १ ७ २ ३र २
भाइः। मदतावस्वा३आर्णवम्। ओ३४। हाहोइ।

र र १ ७ २ ३र २
यस्यद्यावोनविचरन्तो३मानुषम्। ओ३४। हाहोइ।

र १ ३ २ ५र र,
भुजेमꣳहिष्ठमभिविप्रमर्चत। दुरा२। तिना३४औहोवा।

३ ५
ऊ२३४पा॥ १८॥ १४४

"त्यं" तं प्रसिद्धं "मेषं" शत्रुभिः स्पर्द्धमानं। [यद्वा। कण्वपुत्रं मेधातिथिं यजमानमिन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ। स ऋषिस्तं मेष इत्यवोचत् अत इदानी मपि मेष इन्द्रो-विधीयते। मेधातिथेर्मेषेति सुब्रह्मण्या मन्त्रैकदेशस्य व्याख्यान-रूपं ब्राह्मणमेव मान्नायते—"मेधातिथिं ह काण्वं मेषो भूत्वा जहारेति"। आगत्य सोमं अपहृतवानित्यर्थः।] "पुरुहूतं" बहु-भिर्यजमानै राहुतम् "ऋग्मियम्"(१) ऋग्भिर्विक्रियमाणं स्तूय-मानमित्यर्थः। स्तुत्या हि देवता विक्रियते (यद्वा ऋगभिर्मीयते ऋग्मीः तं) "वस्वो अर्णवं" धनाना मावासभूमिम्। एवं शब्दात इति गुणविशिष्ट मिन्द्रं हे स्तोतारः! "गीर्भिः" स्तुतिभिः "अभिमदत" आभिमुख्येन हर्षं प्रापयत। "यस्य"-

(१)—'ऋचः स्तुतयः, ताभिः यः स्तूयते स ऋग्मियः, तम् ऋगमियं स्तुतिवन्त स्तुत्य मित्यर्थः' इति वि०।

अथाष्टमी।

सव्य ऋषिः*।

२उ ३ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १र २र
त्यꣳसुमेषंमहयास्वर्विदꣳशतंयस्यसुभ्वः†साकमीरते।
३ १र २र ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अत्यंनवाजꣳहवनस्यदꣳरथमेन्द्रंववृत्यामवसेसुवृक्तिभिः॥८॥
१४५

५ २ ४र५ ४ ५ २ १
I त्यꣳह्व३मेषम्महया। सुवर्वाइदा२म्। शतंयस्य

इन्द्रस्य "कर्माणि" मानुषं [जात्येकवचनं(२)] "मानुषाणि" मनुष्याणां हितानि "विचरन्ति" विशेषेण वर्त्तन्ते। अत्र दृष्टान्तः—"द्यावो न" यथा सूर्यस्य(३) रश्मयः सर्वेषां हितकराः "भुजे" भोगाय "मंहिष्ठम्" अतिशयेन प्रवृद्ध "विप्रं" मेधाविनं(४)। तथाविधमिन्द्रम् "अभ्यर्चत" अभिपूजयत॥ ७॥ १४४

* "सत्यस्यार्षम्। अन्तरात्मन एवायं प्रेषः"-इति वि०।

† "सुभ्वः"-इति ऋग्वेदीयः पाठः।

१४५ ऋग्वेदस्य १,४,१२,१।

I सौभरम्।

(२)—"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् (१,२,५८)" इति पा०।

(३)—यथा "स्वः"-इति दिवः अन्तरीक्षस्य च नाम (१,४,१) द्यौ रपि तथा अथवा द्युस्थत्वादादित्योऽपि द्यौरुच्यते।

(४)—"विप्र"-इति मेधाविनामसु प्रथमं नैघण्टुकम् ३,१५।

सुभ्व:साका३माइराश्ता२इ। अत्यन्नवाज७ हवनस्याउ-
दा७राश्था२म्। आइन्द्रंववृत्याम। वसायेइ। सूर-
वृ२३४औहोवा। स्तौ२३४भीः॥ १८ ॥ १४५

"त्वं" तं प्रसिद्धं "मेषं" शत्रुभिः सह स्पर्द्धमानं "स्वर्विदं" स्वरादित्यो द्यौर्वा(१) तस्य "वेदितारं" लब्धारं वा। [यद्वा। स्वःसुष्ठु अरणीयं धनं तस्य लम्भयितारम्।] एवं गुणविशिष्टमिन्द्रं हे अध्वर्यो! "समहय" सम्यक् पूजय। "यस्य" इन्द्रस्य "शतं" शतसंख्याकाः(२) "आववृत्यां" प्रति आवर्त्तयामि। कीदृशं? "रथं" "हवनस्यदं" हवनमाह्वानं यागं वा प्रति वेगेन गच्छ-

(१)—निघण्टौ साधारणनामसु पठितत्वात् (१,४,१)।

(२)—इतः परं मिश्रभाष्यपुस्तके किञ्चित् (सुभ्वः साकमीरते इत्यस्य व्याख्यानं) त्रुटितं दृश्यते। विवरणे त्वस्या एवं व्याख्यानम्—'त्वम्' तम इन्द्र', 'मेषं' मेषरूपम्, 'सुमहया' सुष्ठु पूजया स्तुतिभिः, हे मदीया ऋत्विजः। कीदृशम इन्द्रम? उच्यते—'स्वर्विदम्' (स्वःशब्दः स्वर्गपर्यायः, विदस्तु लाभार्थः ज्ञानार्थो वा) स्वर्गस्य लब्धारं ज्ञातारं वा यस्य। किम्? उच्यते—'शतं' यस्य। शतमिति बहुनाम (३,१,९) 'सुभ्वः' अपठितमपि मरुता-मेतद्द्रष्टव्यम् बहवो यस्य मरुतः, के? सामर्थ्यात् स्तोतारः, 'साकं' सहभूताः, 'ईरते' प्रेरयन्ति, किम्? सामर्थ्यात् स्तुतीः सहभूतेऽयं स्तुवन्तीत्यर्थः। अश्वमपि 'अत्यम्' अश्वमिव 'वाजं' हविर्लक्षणमन्नम्, 'हवस्यदं' स्यन्दति गतिकर्मा आह्वानं प्रति गन्तारं, केन? उच्यते—'रथं' द्वितीयैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्, रथेन इन्द्रम् 'आववृत्याम्' आवर्त्तयेदुरित्येतदाशास्महे, किमर्थम्? उच्यते—'अवसे तर्पणाय, सोमेन 'सुष्टुतिभिः' सुष्ठु वर्जित-दोषाभिः स्तुतिभिः"-इति।

अथ नवमी।

भरद्वाज ऋषिः।

१ १ २ ३ १ २ ३ १ ३ २ ३ १ २ ३ १ २ ३ १ २
घृतवतीभुवनानामभिश्रियोर्वी पृथ्वीमधुदुघेसुपेशसा।
१ २ ३ १२ २२ ३ १ २ ३ १ २ ३ २ ३ १ २
द्यावापृथिवीवरुणस्यधर्मणाविष्कभितेअजरेभूरि
रेतसा॥ ९॥ १४६

४ ३ ५ ४ २ ३ ४२ ५२ २ १२
I घृतव। ताउइभुवनानाम्। अभिश्रिया। उर्वी-
२ २ २ १ २ २ २ २२
पृथ्वीमधुदुघेसुपेशसा२३वोइ। द्यावापृथिवीवरुणा। स्या-
१ १ २ १ २ १ २२ १२
धर्मणा२३। वोइ। विष्काभा२३ते। आजरे। भूरि।
२ २ २ १ २ १ २ १२ २२
राये३। तसाउवा३। ए३। इन्दुःसमुद्रमुर्वियाविभा-
३ १ १ १ १
ती२३४५॥ २०॥

५ ४ ५ २ ४ ५ २ २ ४ ४ २ १२ २
II घृतवतीभुवनानाम्। भा५इश्रिया। उर्वीपृथ्वी-
त्नम्। गमने दृष्टान्तः—"अत्यन्नवाज" गमन साधन मश्वमिव
"मह्य" पूजय॥ ८॥१४५

---

१४६ ऋग्वेदस्य ५,१,१४,१।

I,II वरुणसामनी द्वे।

२ र १ र र र २र १
मधुदुघेसुपेशा२सा। द्यावापृथिवीवरुणा। स्याधर्मणा।

१ २ १ २ १ ५र १र २ २
वाइष्कभिताइ। अजरे२भूरि। रायेइ। तसाउवाइ।

१ २ १ २ १र २र ७ १ १ ११
इन्दुःसमुद्रमुर्वियाविभातीर३४५॥ २१ १४६॥

"द्यावापृथिवी"(१) द्यावापृथिव्यौ "घृतवती"(२) दीप्तिमत्यौ(३) उदकवत्यौ(४) वा भवत इति शेषः "भुवनानां" भूतानाम् "अभिश्रिये" अभिश्रयणीये भवत इति सर्वत्रानुसन्धेयम्, "उर्वी"(५) विस्तीर्णे "पृथ्वी" बहुकार्य्यरूपेण प्रथिते च, "मधुदुघे" मधुन उदकस्य दोग्ध्र्यौ(७), "सुपेशसा"(८) सुरूपे,

(१), (२) –पूर्व्वसवर्णं रूपम् ७,१,३९।

(३)—"तेजो वै घृतम्"-इत्यादि-श्रुतिरेवैवमर्थे नियामकम्।

(४)—"घृतम्" इत्युदकनामसु दशमं नैघण्टुकम् १,१२।

(५)—श्रात्वे रूपम् ७,१,३९।

(६) –'ऊर्वीति बहुनाम (३,१,१) अवयवभूतत्वाच्च बहु-व्यपदेशः, बह्ववयवे'-इति वि०।

(७)—'द्यौस्तावत् साक्षादेव उदकं क्षरति, पृथिव्यपि उदकस्य हेतुभूताया आकृतितत्प्रदान द्वारेण'-इति वि०। "मधु"-इत्युदक-नामसु एकादशतमं नैघण्टुकम् (१.१२)।

(८)--"पेशः" इति रूपनामसु दशमं नैघण्टुकम् (३.७)। श्री-प्रत्ययस्यात्वे रूपम् ७,१,३९।

अथ दशमी।

मेधातिथि ऋषिः।

महापङ्क्तिश्छन्दः।

( षड़्ष्टाक्षराः पादा, द्वौ चार्द्धर्चौ वधीमहे )

३ १र २र ३ १ २    ३ २ ३ १ २
उभे यदिन्द्र रोदसी आपप्राथोषा इव।

३ १ २  ३ १ २  २ १ २  ३ २
महान्तं त्वा महीनाꣳ सम्राजं चर्षणीनाम्॥

३ १र २र   ३ १र २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्॥ १०॥ १४७

५ ४र ५ ४र ५ ४   १ २  १ २
I उभेयदिन्द्ररोदसाइ। आ२३पा। प्राथउषा३१उ-

"वरुणस्य" सर्वनियामकस्य(९)" धर्मणा" धारणे "विष्कभिते" पृथक् धारिते "अजरे" नित्ये "भूरि रेतसा" बहु-रेतस्के बहु-कार्य्ये वा भवतः (अत्र साक्षात् द्यावापृथिव्योः स्तुतिः, प्रसङ्गाद् वरुणस्येति द्रष्टव्यम्॥ ८॥ १४६

---

I श्येनम्।

१४७ उत्तरार्चिकस्य ४,१,१८,१=८,७,२२,१=आरण्ये ३,१९=ऊह्ये १,१९।

(९)—वरुणो मेघ-प्रचालक-वायु-विशेष एवेति दैवत-काण्डीय-नैरुक्त पर्यालोचनया मन्यते। विवरणकृता तु 'वरुणो मध्यमस्थानः, प्रतिरुद्र एव'-इत्युक्तम्।

१ ३ २ १ र २ १ ९ २
वा२३। इवआ। महान्तंत्वामहाइनाम्। संम्रौ३हो।
१ २ २ २ २ २ १र २
जश्चर्षणा३१उवाये३। ना३मा। देवीजनित्रियाजी१-
१ ९ २ १ २ २
जाना२त्। भद्रौ३हो। जानित्रियजा३१उवा२३। ए३।
२
जनदा३२॥ २२॥ १४७॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यस्त्वम् "आ पप्राथ" स्व-तेजसा आ पूरयसि [प्रा पूरणे आदादिकः (प०)। छान्दसो लिट्(१)] "उषा इव" यथा उषाः स्वभासा सर्वं जगदा पूरयति तद्वत्। "तं" "महीनां" महतां देवानामपि "महान्तम्" नायकम्। "चर्षणीनां" मनुष्याणामपि "सम्राजम्" ईश्वरम् "इन्द्रम्" "त्वा" त्वां "देवी" देवनशीला(२) "जनित्री" साधुजनयित्री(३) अदितिः(४) "अजीजनत्" अजनयत् (जनेर्ण्यन्तात्

(१)—"छन्दसि लिट् (३,२,१०५)"-इति पा०।

(२)—'दानादि-गुण-युक्ता'-इति वि०। यास्कस्त्वाह—"देवो दानाद्वा दीपनाद्वा द्यु-स्थानो भवतीति वा यो देवः सा देवता"-इति ७,१५।

(३)—साधुकारिणि तृणीति (३,२,१३४)-भावः।

(४)—"अदितिरदीना देवमाता"-इत्यादि नैरुक्ताः (४,२२-२३)।

अथैकादशी।

एषा गर्भस्राविण्युपनिषत्*।

२३ १२ ३१२ ३२३२ ३१२ ३१२३१२
प्रमन्दिनेपितुमदर्चतावचोयःकृष्णागर्भानिरहन्नृजिश्वना।

३ २३१२३१२ ३१२ ३१२
अवस्यवोवृषणंवज्रदक्षिणंमरुत्वन्तंसख्यायहुवे-

मर्हि† ॥११॥ १४८

॥ इति चतुर्थ-दशति ॥

२ ३ ५ २ ४ २र३५ १२
I प्रमन्दा२३४इने। पितुमदा३र्चा३तावचः। यःका-

ल्ङि चङि रूप मेतत्) यस्मादेषा जनयित्री ईदृशं पुत्र मजी-जनत् अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता जाता [जनेर्ण्यन्तात् साधुकारिणि तृन् (३,२,१३५)। "जनिता मन्त्रे (६,४,५३")-इति इडादौ णि-लोपो निपात्यते। "ऋन्नेभ्य (४.१,५)"-इति ङीप् ॥ १० ॥ १४७

* 'कुत्स आत्मीयान् पुत्रान् पौत्रांश्चाह—"-इति वि०।

† "हवामहे"-इति ऋग्वेदीयः पाठः।

१४८ ऋग्वेदस्य १,७.१२.१।

I त्रैरूपम्।

१ ५ १ २र १२ १ २ २ ३
३ओ२३४वा । ष्णागर्भानिरहन्नृजिश्वना३ । अवस्या२३-

५ १ २ १ २३ ५ १ २ ३
४वाः । वृषणंवा । ज्ञादत्ता२४४इणाम् । मारौवाओ२-

५ ४ र
३४वा । त्वन्तꣳसख्यायह्ववापूइमहाउ । वा । २३ ॥ १४८

हे ऋत्विजः! "मन्दिने" स्तुतिमते(१) स्तोतव्यायेन्द्राय "पितुमत्" हविर्लक्षणेनान्नेनोपेतं(२) "वचः" स्तुतिलक्षणं वचनं "प्रार्चत" प्रकर्षेणोच्चारयत । "यः" इन्द्रः "ऋजिश्विना" एतत् संज्ञकेन राजर्षिणा सख्या सहितः सन् "कृष्णगर्भाः" कृष्णोनाम कश्चिदसुरः, तेन निषिक्तगर्भाः तदीया भार्य्याः "निरहन्" नितरामवधीत् [कृष्ण मसुरञ्च तत्पुत्राणा मनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्य्या अपि अवधीदित्यर्थः(३) । "अवस्यवः(४)" रक्षणेच्छवो वयं "वृषणं" कामानां वर्षितारं "वज्रदक्षिणं" वज्रयुक्तेन दक्षिण-हस्तेन

(१)—"मन्दते"-इति स्तोतृकर्मसु अष्टादशतमं पदम् ३,१४ । अत्र यास्कः—"मन्दी मन्दतेः स्तुति-कर्मणः * * * प्रार्चत मन्दिने पितुमद्वचः"-इति ४,२४ ।

(२)—पितुरित्यन्ननामसु षष्ठं पदम् २,७ ।

(३)—अत्र विवरण-कार-व्याख्यान मतःष्टतरम्, तथाहि—'कृष्णगर्भाः—कृष्णो मेघः, तस्य गर्भभूता आपः, निरहन्निति (गत्यर्थोऽस्मणीत-पर्यायः द्रष्टव्यः) निर्गमितवान् पातितवानित्यर्थः'-इति ।

(४)—रक्षणार्थादवतेरस्मदात् क्यचि 'क्याच्छन्दसि (३,२,१७०)"-इति उ-प्रत्यये रूपम् ।

उपेतं "मरुत्वन्तम्" इन्द्रं "सख्याय" सख्युः कर्मणे(५) "हुवेमहि" आह्वयामः ।

"हुवेमहि"-"हवामहे"-इति च पाठौ ॥ ११ ॥ १४८

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥*

॥ इति जागतम् ॥

—:o(—

---

अष्टाविंशतिरिन्द्रेति मुख्याः(अ) सप्तदशोष्णिहः ।
आद्या(क) दशान्याः ककुभः(च) पिबेत्यष्टादशी विराट्(ट)॥

---

(५)—"सख्युर्यः (५,२,१३६)"-इति कर्मणि यः ।

(अ)—इन्द्रेति "इन्द्रसुतेषु"-इत्यारभ्य "वयमुत्वेत्यन्ताः दशत्रयात्मकाः अष्टाविंश ऋचः मुख्याः साम्प्रतं व्याख्यातुं गृहीतत्वेन प्रधानाः ।

(क)—तत्र आद्याः सप्तदश "इन्द्रसुतेष्वित्यारभ्य "अपामीवेत्यन्ताः उष्णिहः उष्णिक्-छन्दस्काः ।

(च)—अन्याः दश "अभ्रातृव्यो"-इत्यारभ्य "वयमु त्वं तदित्यन्ताः अन्तिमदशदा-त्मकाः दश ऋचः ककुप्-छन्दस्काः ।

(ट)—पिबेति "पिबा सोममिन्द्र"-इति द्वितीय दशदन्तिमा ऋक् तु विराट्-छन्दस्का । इति छन्दः सङ्केतः

तु चे वेत्था ह्यपामीवामित्यादित्यपरिष्टुतिः(त)।
आगन्त गाव इत्येते मरुता(प) मिन्द्रदेवताः॥
अन्या ऋचो(य) ऽभिधीयन्ते ऋषयस्तत्र तत्र हि(श)॥

तत्र चतुर्थे खण्डे—

सैषा प्रथमा।

नारद ऋषिः।

१ २ ३ २ ३ १ २ ३ १ २ ३क २र
इन्द्र* सुतेषु सोमेषु क्रतुम्पुनीष† उक्थ्यम्।

(त)—"तुचे तुनाय"-इति पञ्चदशी, "वेत्था हि निर्ऋतीनां" इति षोड़शी, "अपामीवामपस्त्रिध"-इति च सप्तदशी ऋक्—आदित्यस्य देवस्य परिष्टुतिः सर्वतः स्तवनं यथा तादृशी, आदित्य-देवताका इत्यर्थः।

(प)—"आगन्ता मा रिषण्यत"-इत्येकविंशतितमा ऋक्, "गावश्चिद्घा"-इति चतुर्विंशतितमा ऋक् च इत्येते द्वे मरुद्देवतानां मन्त्रौ इति शेषः।

(य)—अन्याः अवशिष्टाः त्रयोविंशति ऋचः इन्द्रदेवताः ज्ञेया इति यावत्। इति दैवत सङ्केतः।

(श)—आसामष्टाविंशत्यृचामृषयस्तु तत्र तत्रैव व्याख्यानमुखेनैव अभिधीयन्ते कथितु मारभ्यन्त इत्यर्थः।

* "इन्द्रः" } इमौ ऋग्वेदीयौ पाठौ,
† "पुनीत" } सायण-कृतोत्तर-भाष्ये च।

३ २ ३ २ ३ १ २ ३ २
विद्देवृधस्यदत्तस्य*मंहा॑ऽञ्चिषः ॥ १ ॥ १४९

५ ४ २ १र र र २ १ १ २र १
I इन्द्रा । सुतेषुसोमे । षु । ह्वोई२ । ह्वो । वाह्वोइ ।

र २ १ २ ३ १ २
क्रतुम्पुनीषउक्थियाम् । विदाइवा१र्द्धा२३ । स्या३दा ञ्चा-

२ १ २ १
३स्या । मंहा॑ऽ२३ञ्चिषा३४३: । ओ२३४५इ । डा ॥ २४ ॥

३ २ १ ३ २ १ २ १र र र
II इन्द्रा३ह्वोइ । ह्ववे३ह्वोइ । सुतेषुसोमेषुक्रतुम्पु-

र २ १ २ १ २
नीषउक्थियाम् । विदाइवा१र्द्धा२ । स्यद्क्षस्या । मा-

४र ५ ३ १ १ १ १
३हा॑ऽञ्चि । षा२३४५: ॥ २५ ॥

---

* "दत्तसो"
† "मंहाग्चि" } इमौ च ऋग्वेदीयौ पाठौ ।

---

१४९ उत्तरार्चिकस्य १,२,१२,१ = ऋग्वेदस्य६,१,७,१ = ऊहे१,२,१०—१८,२ ।

I क्रौञ्चम् ।

II अनुक्रौञ्चम् ।

५ र र ४ ५ १ १ २ १
III इन्द्रसुतेषुसोमेषू। क्रतूर०पुनाइ। षउक्थि-

२ र १ १ २ र १
याम्। विदेवाद्धा२। स्यदक्षस्या। महा॒ हाइषा२ः।

१ २ १
महा॒२३हिषा३४३ः। ओ२४४५इ। डा॥ २६ ॥ १४९॥

हे "इन्द्र!" "सोमेषु" सुतेष्वभिषुतेषु सत्सु तान् पीत्वा "क्रतु" कर्म-कर्त्तारं "उक्थ्य" स्तोतारं च(१) "पुनीषे" शोधयसि(२)। [यद्वा सोमेष्वभिषुतेषु उकथ्यं(३) क्रतुं यागं तैः सोमैः पुनीषे यजमानैः पूतङ्कारयसि] किमर्थं? "वृधस्य" वर्द्धकस्य "दक्षस्य" बलस्य(४) "विदे" लाभाय। स तादृश "इन्द्रः" "महान् हि" महान् खलु (अत एवं कर्त्तुं शक्नोतीति भावः॥ १ ॥ १४९

I,II कौसम्।

(१)—क्रतुरिति कर्मनाम (२,१,११)—उक्थ्यमिति स्तोत्रविशेषस्य नाम, गौण्या वृत्त्या इह तत्कर्तरि व्यपदेश इति भावः।

(२)—विवरणकारस्त्वेवं व्याख्यातम्—'क्रतुं प्रति पुनीषे, पुनातिरत्र गत्यर्थो द्रष्टव्यः गच्छतीत्यर्थः। कीदृशं प्रति गच्छति? उच्यते—उकथ्यम् प्रशस्यमधिगुणमित्यर्थः -इति। एतन्मये तु पुनीषे-इति "पवते"-इत्यस्य गति-कर्मसु पठितस्य (नै०२,१४,१०८) विकरण-व्यत्ययेन३,१,८८ रूपम्। किञ्च उकथ्यमिति प्रशस्य-नामसु (३,८,६)पठितस्येति।

(३)—अत्र पक्षे उकथ्यमिति क्रतुमित्यस्य विशेषणम्; उकथस्तु सप्तानां सोमसंस्थानामन्यतमम्, तथाहि, लाट्यायन-सूत्रम्—"अथ सोमसंस्थाः, अग्निष्टोमो(१) ऽत्यग्निष्टोमो(२) उकथः(३) षोडशी(४) तिरात्रो(५) वाजपेया(६) प्तोर्यामः(७)"-इति (५प्र० ४ख०)।

(४)—"दक्षः" इति बल-नामसु चयोदशतमं नैघण्टुकम्( २,९ )।

अथ द्वितीया ।

द्वयोर्गोषूक्त्यश्वसूक्तिनामृषी* ।

१ २ ३ १र २र ३ १ २ १ २
तमुअभिप्रगायतपुरुहूतंपुरुष्टुतम् ।

५र र २ र १ ५र २ ३ १
I हाउतमूवभी । प्रगायता । हाउ । पुरुहूर२३४-

५ २ ३ १ ५र २ ३ ५ २
ताम् । पुरुष्टुताम् । हाउ । इन्द्रङ्गार२३४इर्भीः । त-

१ २ ५र ३ १ ४ १
वाइषार२इमा३४ । हाउ । विवाइसापूताई५६ । दी-

५
२३४वौ ॥ २७ ॥

३ ५र २ ३ ४र ५ ५ २ १ २
II ता४मूवभि । होइ । प्रगायताइए । पुरुहूइ-

* 'गोषुक्ती वाश्वसूक्ती वा आत्मीयाम् ऋत्विज आह'-
इति वि० ।

I,II दैवोदासे द्वे ।

१ २ ३ १ २ ३ १र २र
इन्द्रङ्गीर्भिस्तविषमाविवासत ॥ २ ॥ १५०

२ १ २ २ १ ३ ५ २ १ २
ताम्। पुरुहू३ता३म्। पुरु२हू२३४ताम्। इन्द्राङ्गी-

२ १ २ २ १ २ २ १ ३
३र्भाइः। तवाइषा३मा। विवासा३ता३। विवा२सा-

५ १ २ १र २ १
२३४ता। आइन्द्रा३४म्। गीर्भा३इः। तविषम्।

७ २ १ २ ३ ५ २ १ १ १ १
आ। विवा२३चा३। साता ओ२३४वा। ऊ२३४५ ॥२८॥

५ ४ २ ३ ४ र ५ २ १ र १
III तमू३अभिप्रगायता। पुरु। हूतम्पुरु२ष्टू-

१ १ १ ५ २ १
ता२म्। इन्द्रा२०गाइर्भी२ः। तविषा२३४मा। विवा-

१ २ ५र र ३ ५
२३। सा२ता२३४औ३होवा। ओ२३४का: ॥ २९ ॥

---

१५० ऋग्वेदस्य ६,१,१७,१।

III प्रकृतौः संयोजनम्।

५४ २ २४ र ५र　२१ र　१
IV तमू३अभिप्रगायतेदाम् । पुरु । हूतम्पुरु२ष्टू ता-

१　२र　र　१२　१
२म् । आइन्द्रङ्गीर्भिस्तविषमा । विवासा१ता२ । आ-

२　३ १११ १　२१　२　१
इन्द्रङ्गा२४५इ । भा२३४५इः । तवाइषा२३मा३ । वा-

३　५र र　२ ३११११
२इवा२३४औहोवा । सतए२३४५ ॥ ३० ॥ १५०

"पुरुहूतं" बहुभिराहूतं "पुरुष्टुतं" बहुभिः स्तुतं "तमु" तमेव इन्द्रं हे स्तोतारः ! "अभिप्रगायत" अभिमुखं प्रकर्षेण स्तुध्वम् । एतदेव स्पष्टयति—"तविषं" महान्तम्(१) इन्द्रं "गीर्भिः" वाग्भिः "आविवासत" परिचरत(२) ॥ २ ॥ १५०

---

IV ओकोनिधनम् ।

(१)—"तविषः"-इति महन्नामसु सप्तमं नैघण्टुकम् ३,३ ।

(२)—"विवासति"-इति परिचरण-कर्मसु अन्तिमं पदम् ३,५ ।

अथ तृतीया।

१ ३ १ २ ३ १ २ ३ १ २ ३ २
तन्तेमदङ्गृणीमसिवृषणम्पृत्सु*सासहिम्।

३ १ २ ३ १ २
उलोककृत्नुमद्रिवोहरिश्रियम्॥ ३ ॥१५१

४ ४ २ १ र
I तन्ते५मदम्। गृणी५मसि। वृषा। णम्पृत्सुसा

१ २ १र र २
सा२हाइम्। उलोका। कृतनुमद्राइ। वोहा२३रीइ।

१ २ १
आ३४३या३४३म्। ओ२३४५इ। डा॥ ३१ ॥

२ ५ २ ३ ४ र ५ ५ ० १
II ता४न्ते। होइ। मदङ्गृणीमसी६ए। वृषाहो२।

२ १ र र र १
णम्पृत्सा१साहो२म्। उलोककृत्नुमद्रिवोहा१री२।

१ ४ ५ ४
श्रियाम्। औ२३होवा। हो५इ। डा॥ ३२ ॥

* "पृत्सु"-इति ऋग्वेदीय-पाठः, सायणकृतोत्तरभाष्ये च।

१५१ उत्तरार्च्चिकस्य २,२.१८,१ = ऋग्वेदस्य ६,१,१७,४ = ऊहे २,२.६—८,१३—१८,१८।

५ र　र　५　२ १ २　२
III तन्तेमदङ्गृणीमसी३ए । वृषाओ३हो३४ । पा-

५ ४ ५र ४ ४　२ १ २　१　५ ४ ४　४
म्यृत्सासहीम् । उलाओ३हो३४ । कक्रानुमद्रिवाः ।

२ १　५　४　५
हरो२३४वा । आपूयोर्दहाइ ॥ ३३ ॥

४ र　र ४　१　२　१　२　२
IV तन्तेमदा५ङ्गृणीमसाइ । वार्षणंपु । त्सासा३ही-

१　२　२　१　१　२　१ २ २　१
३म् । होवा३हाइ । उलोका३कृ३ । होवा३हा । नुमा-

१　३　५र र　२　२　१२११
२३ । द्रा२इवा२३४ओहोवा । हरिश्रिया२३४५म् ॥

३४ ॥ १५१ ॥*

हे "अद्रिवः" वज्रवन्निन्द्र! "ते" त्वदीयं "तं" "मदं" सोमपान-जनितं हर्षं "गृणीमसि" गृणीमः प्रशंसामः (गृ शब्दे क्र्यादिः "प्वादीनां ह्रस्वः(७,४,८०)" । "इदन्तोमसि(७,१,४६)"-इति मस इकारागमः ।) कीदृशं? "वृषणं" वर्षितारं कामानां ।

---

I,II,III,IV हारिवर्णानि चत्वारि ।

---

*॥ इति अर्द्धः प्रपाठकः ॥

अथ चतुर्थी।

पर्वतऋषिः।

१र २र ३ १ २ ३ १ २ ३ २ ३ २
यत्सोममिन्द्र विष्णवियद्वाघत्रितआप्तेय।

१ २ ३ १ ३ १ २ ३ १र २र
यद्वामरुत्सुमन्दसेसमिन्दुभिः॥ ४॥ १५२

५ र ४ ५ १ र र
I ओम्। यत्सोममिन्द्रविष्णावी। यद्वाघत्रितआप्तियाइ।

२ र १ ५ १ ३ ५र र
यद्वामरुत्सु माइन्दासो२३४हाइ। सा२मा२३४औहोवा।

२ १ ३ १ १ १ १
ए३। दूभी२३४५ः॥ १॥

"पृत्सु" वैरि-सम्पर्क-जनितेषु संग्रामेषु(१)। (अतएव बह्वृचाः पृत्स्विति पठन्ति। पृत्सु समत्स्विति संग्रामनामसु (नि०२,१७,-२१-२२)पठितम्। "सासहिं"(२) शत्रूणामभिभवितारं "लोककृतं" लोकस्य स्थानस्य कर्त्तारं "हरिश्रियं" हरिभ्यामश्वाभ्यां श्रयणीयं सेव्यम्। "उ" शब्दः सर्वेषां समुच्चये पाद-पूरणे वा॥ ३॥ १५१

---

१५२ ऋग्वेदस्य ६,१,४,१।

(१)—ननु "पृत्सु"-इत्यस्य सङ्ग्रामेषु इत्येव मर्थश्चेत् कथं तत्पर्यायेषु न पठितं निघण्टौ? अतएव विनिर्गमकमावश्यकमित्याह—अतएवेत्यादि। अस्ति पाठः सङ्ग्रामनामसु "पृत्सु"-इति पदस्य (२,१७,२१) श्रूयते च तथा पाठो बह्वृचि, तदत्र निघण्टावपि 'पृत्सु'-इति च पाठभेदेन ग्राह्य मिति भावः।

(२)—सुत्रादित्वादभ्यासदीर्घः ६,१,७।

४ र　　४　　२ १र र　　र
II यत्सोममा५इन्द्र विष्णवाइ । यदाघाचित आप्ता २-
१　　२ १र　　१　　२　　१　३
याइ । यदामा २रुत्सुमा । दासाये३ । सा२मा२३४-
५र र　　३　　५
औहोवा । द२३४भीः ॥ २ ॥

५र र र र　　१　३　　५र र　　३
III हाउहायत्सोममा । द्रा२वा२३४औहोवा । ष्णा-
५　　१ ९र　　१ ९र　　१र　　र　　१
२३४वी । यदा२घाचित आ२प्तिये । यदामरुत्समा२३हो ।
७　　१　　१ २　　२　३
दमा २इ । समा२३होये३ । दुभिरो २ ३ ४ ५ इ ।
डा ॥ ३ ॥

३र २　　३　　५　　२ र　　४
IV औहो३१इ । औ२हो२३४वा । यत्सोममी३न्द्रा-
२ ३ ५　　३र २　　३　　५　　२ र
३विष्णवाइ । औहो३१इ । औ२हो२३४वा । यदाघ-
४　　२र ३ ५　　३र १　　३
चीश्ता३आप्तियाइ । औहो२१इ । औ२हो२३४वा ।
१ र　　४　२ ३ ५　　३र २　　३
यदामरु३त्सु३मन्दसाइ । औहो३१इ । औ२हो२३४५वा-
१　　३ ११११
६५६ । समिन्दु भौ२३४५ः ॥ ४ ॥ १५२ ॥

---

I,II,III,IV तैतानि चत्वारि ।

अथ पञ्चमी।

एतदादि-तिसृणां विश्वमना वैयश्वऋषिः।

२ ३ १ २ ३ १ २ ३ १ ३ ३ २ १
एदुमधो*र्मदिन्तरꣳसिञ्चाध्वर्यो† अन्धसः।
३२उ ३ १२ ३२ २ १ २
एवाहिवीरस्तवतेसदावृधः ॥ ५ ॥ १५३

हे "इन्द्र!" "विष्णवि"(१) विष्णौ सोमपानार्थं मागते सति अन्यदीये यागे "यद्" यदि तेन विष्णुना सार्द्धं पिबसि। "यद्वा" यदि वा "आप्त्ये" अपाम्पुत्रे "त्रिते" एतत्संज्ञके राजर्षौ यजमाने सोमं पिबसि (इतिपूरणं) "यद्वा" यदि च "मरुत्सु" च सोमपानायागतेषु अन्यदीये यज्ञे "मन्दसे" माद्यसि तथाप्यस्मदीयैरेव "इन्दुभिः" सोमैः सम्यक् माद्य ॥ ४ ॥ १५२

---

* "मध्वो"
† "सिञ्च वाध्वर्यो" } इति-ऋग्वेदीय-पाठौ।

---

१५३ उत्तरार्चिकस्य ८,२,१०,१ = ऋग्वेदस्य ६,२,१८, = ऊहे १५,२,९।

(१)—"ऋतस्य गुणः (७,३,१०८)"-"जसि च (१०९)"-इति सूत्रे "जसादिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः"-इति कात्यायनोक्तेरिह गुणः। विवरणे तु—'सप्तम्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यं, सहयोगे च तृतीया, विष्णुना सह' इति व्याख्यानम्।

I एदुमधोः। मदा३२इन्ता२३४राम्। सिञ्चाध्वर्यो-
अन्धसा२ः। धा२३४साः। एवाहिवीरस्तवया२इ। वा-
२३४ताइ। सदा३वा५र्धा६५६ः॥ ५॥

II एदुमधौहोपुर्मदिन्तराम्। सिञ्चाहो२इ। अध्वर्यो-
अन्धासा२ः। आइवा१इहिवी२। रा२स्तवताइ।
सदा२। धा। औ३होवा। होपुइ। डा॥ ६॥१५३॥

हे "अध्वर्यो" अध्वरस्य नेतः ऋत्विक्! "मधोः"(१) मदकरस्य "अन्धसः" सोमलक्षणस्यान्नस्य "मदिन्तरं" अत्यर्थं मादयितृतमं(२) सोमरसमेव "आसिञ्च" इन्द्रार्थमभिषव(३)। [इदु-इत्यव-धारणे(४)] "वीरः" समर्थः "सदावृधः" सर्वदा हविभिर्वर्द्ध-

I,II सराधसे द्वे।

(१) लिङ्गव्यत्ययेन रूपम् (३,१.८५)।

(२) मदः कर्त्तव्यत्वेन यस्मिन् स मदी। अतिशयेन मदी, मदितरस्तम्। अतिशयेन मदकरमित्यर्थः। अत्र मते "मदितरं"-इति नकारहीन-दकारान्वित-पाठ एव बुध्यते।

(३)—ग्रहणसमाप्ताविति भावः।

(४) "इत्"-"उ" द्वावपि पदपूरणौ इति वि०। 'पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' इति नि० १।९

अथ षष्ठी।

२ ३ १ २ ३ १ २ ३ १र २र
एन्दुमिन्द्रायसिञ्चतपिबातिसोम्यंमधु।
१र २र ३ २
प्रराधाᳬसिचोदयते*महित्वना॥ ६ ॥ १५४

२ ४ २ ४ ५ १ ५र र १
I एन्दु५ऽमि। द्रा३या३सिञ्चता। पिबा२तिसोम्य
२ १र २ १र १ २ १
म्मधु। प्रराधा२३ᳬसी। चोदयता३मा३ही। त्वना।
१ ४ ५ ४
औ३होवा। हो५इ। डा॥ ७॥ १५४॥

नीयः। यद्वा। सर्वदा स्वबलस्य वर्द्धकोऽयमेवेन्द्रः "स्तवते(१)हि" स्तोतृभस्त्वादिभिः स्तूयते खलु (स्तुतायेन्द्राय सोमो दातव्यः तस्मादासिञ्चेति समन्वयः॥ ५॥ १५३

हे ऋत्विजः! "इन्दु" स्यन्दनशीलं(१) सोमम् "इन्द्राय"

---

* "राधमा चोदयाते"-इति ऋग्वेदीय-पाठः, सायणीयो-त्तरभाष्ये च।

१५४ उत्तरार्चिकस्य ७,१,८,१ = ६,२,१७,३ = ऊहे १०,२,८।

I मारुतम्।

(१)--विकरण-व्यत्यये रूपम् (३.१,८५)।

(१)--यद्वा यास्कः--"इन्दुरिन्धे रुनत्ते र्वेति(१०,४१)"-तदिहोनत्ते रूपमिष्टमिति 'उन्दी क्लेदने (रु० प०)'। क्लेदनस्यादीभावः सुतरां स्यन्दनशीलमित्यर्थः।

अथ सप्तमी।

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
एतोन्विन्द्रꣳस्तवामसखायःस्तोम्यन्नरम्।
३ १र २र ३ २३ ३ २
कृष्टीर्योविश्वाअभ्यस्त्येकइत्॥ ७॥ १५५

५र र ५ १ २र १ ३ २
। एतोन्विन्द्रꣳस्तवाईमा। साखायस्तोर। मिया३४
१ २१र र २र १ २ १ २
५म्। नरमाकृष्टीर्योविश्वाअभि। आ। स्तियाये।
१ ३ ५र र ३ १ ११ १
काईरदा२३४औहोवा। ऊ२३४५॥ ८॥ १५५॥

इन्द्रार्थम् "आसिञ्चत" आभिमुख्येन प्रत्याचारयत (आग्रयण द्रव्येण सेचनं कुरुत तमभिषुणतेत्यर्थः) ततः "सोम्य"(२) सोममयं "मधु" मदकरं सोमरसं "पिबाति"(३) पिबतु। पीत्वा च स इन्द्रः "महित्वना" स्वमहत्त्वेनैव "राधांसि" अन्नानि स्तोतृभ्यः "प्रचोदयते" प्रकर्षेण चोदयतु॥ ६॥ १५४

---

१५५ ऋग्वेदस्य ६, २, १८, ४।

। वैश्वमनसम्।

(२)—'सोममर्हति य· (४,४,१३७)"—"मये च (४,४,१३८)" इति मयडर्थे यः।

(३)—लेटि (३,४,७) बाहुलकात्(७,१,१०) मिवभावे इतोलोपस्यापि नैक नियतत्वात् (३,४,९७), आडागम (३,४,९४) रूपम

अथ नवमी ।

गौतमऋषिः ।

१ उ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
यएकइद्विदयतेवसुमर्त्तायदाशुषे ।
१ २ ३ १ २ ३ १ २ ३ २
ईषानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ ८ ॥ १५७

५ र र २ १ १
। यएकइदि्हाहाउ । विदयताइ । वसुमार२३र्त्ता ।
१र र र २ र १ २
यदाशुषाइ । ईशानोर२३हा । प्रातिष्कुता३१उवा२३ ।
५ १ २ २ ४ ५ ४
ई२३४न्द्राः । अङ्गा । औ३होवा । होपइ । डा ॥१२॥
३ ५ ३ ५ २ ३ ५
II या२३४ए । का२३४ईत । वीदाया२३४ताइ ।
१ २ १ २ १ २ ३ ५ १ २र र १
वासुमर्त्ता२३हा३ । यादाश्रू२३४षाइ । आइशानोअ ।

स्तुतिमिच्छते(१) "इन्द्राय" "बृहत्" बृहन्नामकं साम "गायत" पठत ॥ ८ ॥ १५६

---

१५७ उत्तरार्चिकस्य ५,२,२२,१ = ऋग्वेदस्य ८.६,६,२, = आरण्ये २,१४ = ऊहे६,७ ।

(३) "पनस्यति" इति अर्चति-कर्मसु पञ्चविंशतितमं नैघण्टुक. तस्मादुपलाय (३.२,१७) रूपम

प्रता२३हाइ। ष्कू२३४ताः। आइन्द्रोऋ। गा२।

या२३४औहोवा। ई२३४न्द्राः ॥ १३ ॥

III यएकइद्विदायाइतोइ। वासुमर्त्तायाइदा। ऊम्।

शू२३४षाइ। आइशानोअप्रतिष्कुत। आइशा। नो

अप्रताइ। ष्कू२३४ताः। आइन्द्रोऋ। गा२। या

२३४औहोवा। ई२३४न्द्राः ॥ १४ ॥ १५७ ॥

"यः" इन्द्रः "एकइत्" एकएव "दाशुषे"(१) हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति [अङ्गेति क्षिप्र-नाम(२)] "अप्रतिष्कुतः" परैरप्रतिशब्दितः [प्रति-कूल-शब्द-रहित इत्यर्थः(३)] एवम्भूतः स "इन्द्रः" क्षिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति ॥ ८ ॥ १५७

I,II,III त्रैककुभानि त्रीणि ।

(१)—"दाश्वान् साक्षात् मोढ़ांश्च (६,१,१२)।

(२)—"अङ्गेति क्षिप्रनामाञ्चितमेवाङ्कितं भवति"-इति नि० नै०५.१७।

(३)—'स्कु, आवरणे (स्वा० ३०)' इति स्कुनोतेः रूपम्।

अथ दशमी।

विश्वमना ऋषिः।

१ २ ३१ ३ ३ १२ २२ ३ १ २
सखायआशिषामहे*ब्रह्मेन्द्रायवज्रिणे।
३ २३ २३ १ २ ३ १ २
स्तुषऊषुवोनृतमायधृष्णवे ॥ १० ॥ १५८

॥ पञ्चम-दशति ॥*

५ र र ३ २ ४ ५ ३ २ ४
। सखायआहाउ। शिषा३महेहाउ। ब्रह्मा३इन्द्रा
५ १ २ २ २ १ ०
हाउ। यवज्रिणाइ। स्तूषऊषू३हाइ। वोनृतमा२-
२ १ १ २ ५र र ३
३हा। यधा२३। ष्णाया२वा२३४औहोवा। ऊ२३-
५
४पा ॥ १५ ॥

४ ५र ४र ५ र ४ ५ र र
॥ सखायआशिषाम। हाइ। ब्रह्मेन्द्रायवज्रि-

* "आशिषामहि"-इति ऋग्वेदस्य।

१५८ ऋग्वेदस्य ६,२,१५,१।

*॥ इति चतुर्थः प्रपाठकः ॥

णोवा। आईतोइवाइ। होवाइहाइ। हाइ। स्तुष-
ऊष२३४। वोहोहाइ। नार्त्ताइमाइ। होवाइहाइ।
हा। यधा२३। ष्णयार्वा२३४औहोवा। ई२३४५॥१६॥

III साश्खायः। आशिषा। माइहाइ। ब्रह्मे-
न्द्रायवज्रिणो। हाइ। स्तुपऊषुवोइनार्त्तामा। यार-
३४धु। हाइहाइ। वानार्त्तामा। यार३४धु। हा
३हा। ष्णवाइइ। औइहो। औहोवा। त्मघाइइ।
औइहो। औहोवा३४। औहोवा। ऊ३२३४ण
॥१७॥१५८॥

"सखायः" मित्रभूता हे ऋत्विजः! "वज्रिण" वज्रहस्ताय
न्द्राय "ब्रह्म" स्तोत्रम् "आशिषामहे" वयमाशास्महे च [यद्वा।
ब्रह्म अस्माभि दीयमानं हवीरूपमन्नम् आशास्महः। साधु स्तु-

I, II, III औहवणी नियानानि त्रीणि।

१०१क,

शिष्टौ (अदा०प०)। व्यत्ययेनात्मनेपदम्(३,१,८५)। अतएव "आशिषामहि"-इति बह्वृचा आमनन्ति) तत्र "वः" सर्वेषा मेव युष्माकमर्थाय "नृतमाय" सर्वेषां नेतृतमाय। यद्वा सङ्ग्रामे आयुधानां नेतृतमाय "धृष्णवे" शत्रूणां धर्षण-शीलाय तस्मै इन्द्राय अहमेव "सुस्तुषे" सुष्ठु स्तौमि(१) ॥ १० ॥ १५८

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

अथ पञ्चमे खण्डे--

सैषा प्रथमा।

प्रगाथ ऋषिः।

३ १र २र ३ १ २ ३ २ ३ १ २
गृणेतदिन्द्रतेशवउपमान्देवतातये*।

१र १र३ १ र २र
यद्धꣳसिवृत्रमोजसाशचीपते ॥ १ ॥ १५९

* "उपमं भद्रा इन्द्रस्य रातयः"-इति ऋग्वेदीय-पाठः।

(१)—ऋचि "उषु"-इति "सुञः (८,३,१०७)"-इति षत्वे रूपम्।

१५९ ऋग्वेदस्य ६,४,४०(२३),२।

I घ्नाउगृणाइ। तदाश्इन्द्रातोइ। शवार२३१२३:। उपाश्मान्देवतातयाइ। यद्ध॒सार२इवा। त्रमोइ-जासा। शची। पते। औ२३होवा३४। औहोवा। द्यु२३४औः॥ १८॥

II गृणे। तदा३४। औहोपुइन्द्रते शवाः। उप मान्देवताता२३या३४इ। यद्धा३४॒सिवा। त्रमोजसा। शाश्चीप। ता२३४५इ॥ १९॥

III गृणेतदौहोपुइन्द्रते शवाः। उपमान्दे२वता२-तये। उपमान्देवताता२३याइ। यद्ध॒मिवृ। त्रमो-

---

I, प्रयस्वत्, II, आचारम्, III प्रयस्वत्।

अथ द्वितीया।

भरद्वाज ऋषिः।

२ ३ १र २र१ २ ३ १ २ ३ १ २
यस्यत्यच्छम्बरंमदेदिवोदासायरन्धयन्*।

२ ५ ३ ५ ३
२३जसाउ। वा३। शा२३४ची। पा२३४ताइ। हो
२३४५इ। डा॥२०॥१५८

हे "इन्द्र!" "ते" तव "तच्छवो" बलं "उपमा" अन्तिकं(१) "देवतातये(२)" यजमानाय यज्ञार्थं वा(३) "गृणे" स्तुवे। "यद्" यस्मात् हे "शचीपते!(४)" "वृत्रम्(५)" "ओजसा" बलेन "हंसि" [तस्मात् ते शवो गृण इति सम्बन्धः॥ १॥ १५८

* "रन्धयः"-इति ऋग्वेदीयः पाठः।

—"उपमा" इत्यन्तिक-नामसु अन्त्यं (नैघण्टुकम् २,१६)।—'सर्वबलानामुपमा
[illegible] तोत्कृष्टमित्यर्थः'-इति वि०।
[illegible] देवात् तातिल् (४,४,१४२)"-इति स्वार्थे तातिलि रूपम्।
[illegible] तातौ"-इति यज्ञनामसु दशम नैघण्टुकम् (३,१७)।
[illegible] कर्म-नाम (नै०२,१,२३) तस्य पतिः शचीपतिः, तस्य सम्बोधन
[illegible] होमादि-कर्मणामधिपति भूतइत्यर्थः'-इति वि०।
[illegible] -इति वि०। "वृत्र"-इति मेघनामसु अष्टाविंशतितमं नैघण्टु

अयꣳ स सोम इन्द्र ते सुतः पिब ॥ २ ॥ १६०

I यस्या३१ । त्यच्छा३१२३४म् । बरम् । मा३दा३ ।
दिवो३१ । दासा३१२३४ । यर । धा३यान् । अया-
३१म् । ससो३१२३४ । मई । द्रा३ता३ । सुता३१ः ।
पिबा३ । ओ२३४वा । ऊ२३४पा ॥ २१ ॥

II यस्यत्यच्छा५म्बरम्मदा३ । दिवोदासायरन्धयन् ।
आयꣳससो३ । मइ । द्रता३इ । स२ता२३४औहोवा ।
पौ२३४वा ॥ २२ ॥

III यस्यत्या२च्छाम्बरम्मदा३ । दिवो२दासायरन्धयन ।

---

१६० ऋग्वेदस्य ४,७,१५,१ ।

आयꣳससोइ। मइ। द्रताइइ। सूतआ२३ः। पा

२इवा२३४औहोवा। इ२३४ती॥ २३॥

IV या४स्त्यत्। द्योइ। शम्बरम्मदा६ए। दिवो-

दासायरन्धयन्नयाꣳसा३सो। मइ। द्रता३४। औ-

होवा। सू२३४ताः। पिबो२३४५इ। डा॥ २४॥ १६०

हे "इन्द्र!" "त्वं" "यस्य" सोमस्य "मदे" पानेन जनिते हर्षे सति "शम्बरम्" असुरं(१) "दिवोदासाय" राज्ञे "रन्धयन्" [रध हिंसा-संराद्ध्योः (दि०प०)] हन्ता भवसि [त्यदिति क्रिया विशेषणं(२)] तत् प्रसिद्धं यथा भवति तथा हे "इन्द्र!" "सः" "अयं" "सोमः" "ते" त्वदर्थं "सुतः" अभिषुतः। अत एव(३)॥ २॥ १६०

---

I, II, III, IV दैवोदासानि चत्वारि।

(१)—"शम्बरम्"-इति निघण्टौ मेघ नामसु (१,१०)— उदक-नामसु (१,१२)- बल-नामसु च (२,९) पठितम्। असुरमित्यपि मेघ-नामसु (१,१०) दृश्यते तत्रैव।

(२) "त्यच्छब्दस्तच्छब्द पर्यायः" ... तं शम्बरम्"-इति नि० ..."

अथ तृतीया ।

नृमेधऋषिः ।

१ २　　　３　१ २
एन्द्रनोगधिप्रिय*सत्राजिदगोह्य† ।

३ २उ ३ १ २ ३१र　२र ३ २
गिरिर्नविश्वतःपृथु‡पतिर्द्दिवः ॥ ३ ॥ १६१

४र ५ ५　　२ १　　२　　१ र २　　　१र
I एन्द्रनाः । गधिप्रा२३या । सात्राजित् । अगो-

२　　　३ २　　३ २　　१　　१　　१
ह्या२३या३४ । गिरा३४इर्नवाइ । श्वताःपार्थूइः । पा ।

३　　५र र　　　३　　५
२ता२३४औह्योवा । दी२३४वाः ॥ २५ ॥

४　　　४　　१ र २　　　१　१र
II एन्द्रनो५गधिप्राया । सात्राजित् । अगोह्यायी ।

* "प्रियः"-इति,
† "दगोह्यः"-इति,　　ऋग्वेदीयाः पाठाः ।
‡ "विश्वतस्पृथुः"-इति च,

१६१ उत्तरार्च्चिकस्य ५,१,१८,१ = ऋग्वेदस्य ६,७,१,४ = ऊहे ५,१२ ।

I,II साम्यर्त्ते द्वे ।

अथ चतुर्थी।

पर्वतऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
यद्दन्द्रसोमपातमोमदःशविष्ठचेतति।

३ २ ३ २ ३ २ ३ १ २
येनाहꣳसिन्या३त्रिण*न्तमीमहे॥ ४ ॥ १६२

२ १ २र २ १ १
होइवा। गिराइर्नवौ। होइवा। श्वतार२३ः। पार-

३ ५र ५ १ २ ३ २
थू२३४ओहोवा। पतिर्दिवा१ः॥ २६ ॥ १६१ ॥

हे "प्रिय!" सर्वेषां प्रियतम! हे "सत्राजित्" महतां शत्रूणां जेतः! हे "अगोह्य" तिरस्कर्त्तुमशक्य इन्द्र! "गिरिर्न" पर्वत इव "विश्वतः" सर्वतः "पृथुः" पृथुतमः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्य त्वं "नो" ऽस्मान् "आगधि"(१) आगच्छ। ॥ ३ ॥ १६१

---

* "न्य३त्रिणं" इति ऋग्वेदीयः पाठः।

---

१६२ ऋग्वेदस्य ६,१,१,१।

(१)—"बहितप (६.४,१०३) इति हेर्धिः।

४ ५ १ २ ४ ५ २ १ २ १ २ र
I यइन्द्रसो । मापा३तामाः । मदा:शवाइ । छचे-

१ २ ४ ५ २ १ १ ४र ५
तताइ । याइनाऽ३ह्वाऽसी । नियत्रिणाम् । ता३मीम ।

३ १ १ १ १
हा२३४५इ ॥ २७ ॥ १६२ ॥

हे "इन्द्र !" "यः" त्वं "सोमपातमः" अतिशयेन सोमस्य पाता हे "शविष्ठ" बलवत्तम ! [शव इति बलनाम (नै० २,९,३) तस्माद्विन्नन्ता(१) दातिशयनिक इष्टन् (५,३,५५) विन्मतोर्लुक् टिलोपः (६,४,१५५)] हे इष्टेन्द्र ! तस्य तव सोम-पान-जनितो यो "मदः" "चेतति" सम्यग् जानाति [वृत्रवधादीनि कार्य्याणि कर्त्तुं । य इत्यस्य चेततीत्यनेन सम्बन्धाद् "यद्वृत्तान्नित्यम्(८,१,६६)" -इति न निहन्यते । अथवैतदेक मेव वाक्यम्—हे बलवत्तमेन्द्र ! सोमपातमः सोमस्य पातृतमो यस्त्वं मदः सोमैर्मादयितव्यस्तर्पयितव्यः सन् चेतति । पुरुष-व्यत्ययः(३,१,८५) चेतसि सम्यग् जानासि । "मदोनुपसर्गे (३,३,६६)"-इति मदेः कर्मण्यप् प्रत्ययः] "येन" सोम-पान-जनितेन मदेन "अत्रिणम्" अत्तारं राक्षसादिकं "निहंसि" निहिनस्सि निकृष्टां हिंसां प्रापयसि "तं" मदं तादृक्-

I आचारम् ।

(१,—पाणिनिकोश,२,११२, बहुल-वचनान्मतर्थ विनिः ।

अथ पञ्चमी।

इरिमिठ* ऋषिः।

१ १२ २२ १ १उ ३ १ २ ३ १ २ ३ १ २
तुचेतुनाय† तत्सुनोद्राघीयआयुर्जीवसे।

१ २ ३ १ २
आदित्यासःसमहसः‡कृणोतन॥ ५॥ १६३

४ ३२४ ५२ ३२ ३ ५ २ ३ ५
I तुचेतुना। यता३२त्सु२३४ना:। द्राघीया२३४यू:।

महोपेतं त्वां वा "ईमहे" [याञ्चा-कर्माय(नि०३,१८,१] याचामहे [यद्वा। ई गतौ दैवादिकः(प०)। छान्दसो विकरणस्य लुक् (२,४,७३)। ईयामहे उपगच्छामः स्तुतिभिः सम्भजामहे इत्यर्थः॥ ४॥ १६२

---

* 'इतिमिठि'-इति वि० पाठः।

† "तुचे तनाय" } इमौ ऋग्वेदीयौ पाठौ।
‡ "सुमहसः" }

---

१६३ ऋग्वेदस्य ६,१,२८,३।

I दीर्घायुष्यम्।

२र १　　१　　१　　१ २ १　　२
जीवासा२इ। आदी१त्यासा२ः। सुमहसा२ः। कृ-
२　४　　३ १ १ १ १
णो३ता५। ना२३४५॥ २८ ॥ १९३ ॥

हे "सुमहसः" शोभन-तेजस्काः(१) हे "आदित्यासः" अदितेः पुत्राः! "नो" ऽस्माकं "तुचे" पुत्राय(२) "तुनाय" [तनोतेर्लुक्(३)। तनोति कुलमिति तुनः पौत्रः। उकारोपजनश्छान्दसः(४)। अत एव बह्वृचा "तनाय"-इति पठन्ति। तस्मै तुनाय] पौत्राय च(५) "जीवसे(६)" जीवनाय "द्राघीयो" दीर्घतमं तत् प्रसिद्धम् "आयुः" जीवितं "सु" सुष्ठु "कृणोतन" कुरुत ॥ ५ ॥ १९३

(१)—विवरण-मते महस इति मह पूजायामित्यस्य रूपम्। अतएवोक्तं तत्र 'सुमहसः सुपूजाः कृणोत् कुरुतेत्यर्थः' इति।

(२)—"तुक्" इत्यपत्य नामसु प्रथमं नैघण्टुकम् (२,२)।

(३)—तुकि किले "तनिपत्योश्छन्दसि ६,४,९९"-इति उपधा-लोपः फलमस्य सम-स्तस्य तत्र उकारोपजनः।

(४)—उपजनोऽत्र वर्णवृद्धिः, आगम इति भावः। तत्र च व्यत्ययवचनं शरणम्।

(५)—'तनायेति धन-नाम (नै० २,१०,१९)। तस्मा इदं तादर्थ्ये चतुर्थी, धनस्य धारणायेत्यर्थः'-इति वि०।

(६)—'जीवसे' इति "तुमर्थे सेऽसेन् (३,४,९)" इत्यादिना सिद्धम्।

अथ षष्ठी।

विश्वमना ऋषिः।

३ १र २र ३ १ २ ३ १ २
वेत्थाहिनिर्ऋतीनांवज्रहस्तपरिवृजम्।
१ २ ३ १ २ ३ १ २
अहरहःशुन्ध्युःपरिपदामिव ॥ ६ ॥ १६४

४र५र ५ ५ र ४ १ २ १
I वेत्थाहिनिर्ऋतीनाम्। वाज्रहस्तपरिवृ। जाम्।
२ १ २ १ २ १ २ ४
अहर। हाः। शुन्ध्युःपरि। पदा३मा५इ५ना ६५६
॥ २८ ॥ १६४

इदानीं मृषिरिन्द्रं सम्बोध्याह हे "वज्रहस्त" वज्रयुक्तहस्तेन्द्र! निर्ऋतीनाम्" उपद्रवकारिणां रक्षसां(१) परिवर्जनं (हिरवधारणे) त्वमेव "वेत्थ" जानोषि। तत्र दृष्टान्तः—अहरहरित्यादिः। "शुन्ध्युः" (अस्मिन्नुदिते सति ब्राह्मणा आत्मीयं कर्म्म कृत्वा शुद्धा भवन्तीति शोधन-हेतुत्वाच्छुन्ध्युरादित्यः) आदित्यः "परिपदामिव" परितः पद्यमानानां यजमानानां [यद्वा।

---

१६४ ऋग्वेदस्य ६,२,१८,३।

I शुन्ध्युः साम।

(१)—'निर्ऋतिर्मृत्यु-देवता, तस्याः सम्भूतानां प्रकृतीनां मारणात्मिकानाम्' इति वि०।

अथ सप्तमी ।

हरिमिठऋषिः ।

१र २र ३ २ ३ २ ३ १ २ ३ २
अपामीवामपस्त्रिधमपसेधतदुर्मतिम् ।

१ २ ३ १ २ ३ १ २
आदित्यासोयुयोतनानोअꣳहसः ॥ ७ ॥ १६५

४ र ५र र ४ १ र २ १
। अपामीवामपा । स्त्रिधाम् । अपसेधतदुर्मा२३·

२ १ १ १र र २ १ ५
तीम् । आदी२त्यासा२ः । युयोतन।नओवा३ओ२३४वा ।

४ ५
हा५सोई्हाइ ॥ ३० ॥ १६५ ॥

परितः पततां पक्षिणां वर्जनं स्व-स्थान-त्यागम] "अहरहः" प्रतिदिनं यथा वेति ।

उदिते सूर्ये पक्षिणः स्वस्थानं परित्यज्य सर्वतो गच्छन्ति खलु । एवं त्वयोन्द्रे स्वबलेन प्रकाशमाने सति शत्रवः स्वपुराणि त्यक्त्वा पलायन्त इत्यर्थः ॥ ६ ॥ १६४

हे "आदित्यासः" आदित्याः ! "अमीवां" रोगम् "अपसेधत" अस्मत्तोपगमयत । "स्त्रिधं" बाधकं शत्रुं च अपसेधत ।

१६५. ऋग्वेदस्य ६.१.२६.५ ।

1 अपामीवम् ।

अथाष्टमी।

वसिष्ठ ऋषिः।

२ ३ १ २ ३ १ २ ३ १ २ ३१ २ ३ १ २
पिबासोममिन्द्रमन्दतुत्वायन्तेसुषावहर्यश्वाद्रिः।
३ २ ३ १ २ ३ १ २ ३ १ २
सोतुर्बाहुभ्याꣳसुयतोनार्वा॥ ८॥ १६६

॥ प्रथम-दशति॥

५ ४ १र १र र
1 पिबा। सोममिन्द्रमन्दतुत्वा २। यन्तेसुषावह-
२ १ २ १र २ २
रिया। श्वा२३द्रीः। सो२३तूः। बाहूभी३या३म्।
१ ३ ४र र २ १र १११
सुया२ता२३४औहोवा। ए३। नार्वा२३४५॥ ३१॥

"दुर्मतिम्" अस्माकं दुःखस्य मन्तारञ्च अपसेधत। अपिच हे आदित्याः! "नो" ऽस्मान् "अंहसः" पापात् "युयोतन"(१) पृथक्कुरुत॥ ७॥ १६५

---

१६६ उत्तरार्च्चिकस्य ३,१,१३,१ ऋग्वेदस्य ५,६,५,१= आरण्ये १,२,२०—११,२१—३,२५= ऊहे २२,२,१—३= ऊह्ये १,१०—५,२,३।

1 वैराजम्।

(१)—'तप्तनप्तनथनाश्च (७.१.४५)' इति तस्य तनादेशे रूपम्।

४　५　१　२　१　२
॥ हाउपिबा । सोममिन्द्र । मा । दतुवा३ ।

१　२　१र　र　२
दतुवा । यन्ते सुषावहरिया । श्वा१द्रो२ः । श्वाद्रो२ः ।

र　१　र　२　१　२　१　३
सोतुर्बाहूभ्याम् । सुयता३ः । सुयता३ः । नार्र्वा२३४

५र　र　३१　१　१　१
औहोवा । ई२३४५ ॥ ३२ ॥ १६६ ॥

हे "इन्द्र !" "सोमं" "पिब" । सोमः त्वां "मन्दतु" मादयतु हे "हर्यश्व !" "ते" त्वदर्थं "सोतुः" अभिषवकर्त्तुः "बाहुभ्याम् अर्वा न" रश्मिभ्यामश्वइव "सुयतः" सुष्ठु परिगृहीतः(१) "अद्रिः"(२) ग्रावायं "सोमं" "सुषाव" ॥ ८ ॥ १६६

इति श्रीसायणाचार्य्य-विरचिते माधवीये-सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य पञ्चम-खण्डः ॥ ५ ॥

---

॥ सहोदैर्घतमसम् ।

(१)—'कथं पिबामि ? उच्यते—सुयतः सुबद्धः'-इति वि० ।

(२)—'अद्रिः प्रथमैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्, अद्रिभिः अभिषावभिरित्यर्थः'-इति वि० ।

अथ षष्ठे खण्डे—

सैषा प्रथमा।

सौभरिर्ऋषिः।

३ २ ३ १र २र ३ १ ० ३ १ २
अभ्रातृव्योअनात्वमनापिरिन्द्रजनुषासनादसि।

३ १ २ ३ १ २
युधेदापित्वमिच्छसे ॥ १ ॥ १६७

४ र र ४ २ १र २ १
I अभ्रातृव्योपुअनातुवाम्। अनापिराइन्द्रा २।

१ ३ २ ३ ५ २ १र २र
ज। नुषा२। सना३४५त्। आ२३४सी। युधेदार-

१ २ र ३ २
पित्वमिच्छसे। युधा१ ॥ ३३ ॥ १६७ ॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४,१,१४५)"-इति व्यन् प्रत्ययः) सपत्न-रहितः "अना" अनेतृक [ "ऋतश्छन्दसि (५,४,१५८)"-इति कपः प्रतिषेधः] अनियन्तृक इत्यर्थः। "अनापि" बन्धु-वर्जितश्च "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि। यद्य त्वम् "आपित्वं" बान्धवम्(१) "इच्छसे"

१६७ उत्तरार्च्चिकस्य६,२,४,१ = ऋग्वेदस्य ६,२,३,४ = आरण्ये २,१६ = ऊहे७,१०।

I अभ्रातृव्यम्।

(१)—'ज्ञातित्वम्'-इति वि०।

अथ द्वितीया ।

सौभरिर्ऋषिः ।

१ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
योनइदमिदंपुराप्रवस्यआनिनायतमुवस्तुषे ।
१ २ ३ १ २ ३ १ २
सखायइन्द्रमूतये ॥ २ ॥ १६८

४ २ ५ २ १ २ १
I योनोवाउ । इदाम् । इदंपुरा२३वाउ । प्रवा ।
२ १ २ २
प्रवस्यआ२३वाइ । निना । निनायतमुवा२३वाउ ।
१ २ २ १२ २
स्तुषाइ । सखायआ२३वाइ । द्रमूता२३या३४३इ ।
१
ओ२३४५इ । डा ॥ ३४ ॥

५२४ २ ३ ४ ५ १२ २ २ १ १
II योना३इदमिदंपुरा । योनइदमिदा१०पू३रा । प्र-
२ २ ४ २ ३ ५ १ २ ४
वस्यआनिना । यता३मू३वस्तूषाइ । निना । यता३मू-

इच्छसि तत्र "युधेत्"-युद्धेनैव(१) युद्धं कुर्वन्नेव स्तोतृणामर्थाय सखा भवसीति ॥ १ ॥ १६७

---

१६८ ऋग्वेदस्य ६,२,२,४ ।

I,II ग्रामेगेये द्रष्टव्ये ।

(१) -इच्छन्द इव यथार्थः ।

अथ तृतीया।

सौभरिर्ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २

आगन्तामारिषण्यतप्रस्थावानोमापस्थात*समन्यवः।

३ १ २

दृढाचिद्यमयिष्णवः॥ ३ ॥ १६९

१ १ ५ २ १ १ २ ४

इवस्तुषाइ। सखाया२ः। आ२३इ। द्रमूइतापुयाइ-

पुईइ॥ ३५ ॥ *१६८

"सखायः" समान-ख्याना हे ऋत्विग्यजमानाः! "यः" इन्द्रः "पुरा" पूर्वम् "इदम् इदम्" दर्शनीयतया विद्यमानं "वस्यः" वसीयः (वसोरीयसुनोकारलोपश्छान्दसः) प्रशस्तं वसुनोऽस्मान् "प्राणिनाय" प्रकर्षेणानीतवान्। "तमु" तमेव धनानामानेतारम् इन्द्रं "वो" युष्माकं धन-लाभार्थम् "ऊतये" रक्षणाय च "स्तुषे" सौभरि रहं स्तौमि॥ २ ॥१६८

---

* "स्थाता"-इति "स्थिराचिन्नमयिष्णवः"-इति च ऋ०।

---

१६९ ऋग्वेदस्य ६,१,३६,१।

---

*॥ इति ग्रामे गेये दशमः प्रपाठकः॥

४र ५ ४ २र १ २ १ र
I ओम् ॥ आगन्ता। मारिषण्या२३ता। प्रास्था-

२र र १र २र १ ७ १ २ २ ४ ५
वानोमापस्थात्। सामन्यावा२ः। दृढाचीऽ३या३। मयोवा।

४ ५
ष्णापूवोई२हाइ ॥ १ ॥ १६९

हे "प्रस्थावानः" प्रस्थातारः प्रगन्तारो(१) "मरुतः"! "आगन्त" अस्मानागच्छन्त। "मारिषण्यत"(२) अनागमनेन नोऽस्मान्मा हिंसिषत। हे "समन्यवः" समान-तेजस्काः समान क्रोधाः! वा "दृढ़ाचित्(३)" दृढ़ान्यपि पर्वतादीनि हे "यमयिष्णवः" नियमयितृत्वशीलाः! नियमयितारः! "मापस्थात" अस्मत्तोन्यत्र मातिष्ठत अस्मास्वेवावतिष्ठध्व-मित्यर्थः ॥ ३ ॥ १६९

---

I बृहत्कम्।

(१)—'प्रय..... परि युद्धार्थं गन्तारः इत्यर्थः' इति वि०।

(२)—"दुरस्युर्द् विषस्युर्... .....(७,४,३६)" इति सिद्धम।

(३)—इव चिच्छब्दोऽपर्थः। "चिदितिपयोऽनेककर्मा" इत्यादि नै०१,४।

अथ चतुर्थी।

सौभरिर्ऋषिः।

१ २ ३१२३ ३१ २ ३१२३१२
आयाह्ययमिन्दवे*श्वपतेगोपतउर्वरापते।

१ २
सोमꣳसोमपते पिब॥ ४॥ १७०

४र ५र ४ २१ र २ १
I आयाही। अयमिन्दवे। श्वपा२३ताइ। गोप-

२ १२ ३र२ १र
तउ। र्वारा१पाता२३४इ। सोमा३म। सोमा२३।

१ ३ ५र र २ ५
पा२ता२३४औहोवा। पौ२३४बा॥ २॥

४र५र ४ २ १ २ २ १ २र१र
II आयाहिया। या३माइन्दा३वे। आश्वपतेगो-

२र १ १ २ २ २ १
पते। ऊ। र्वारा२३हा३इ। पा३ताइ। सो२३४मꣳ

* "याहीमइन्दवो"-इति ऋग्वेदीय-पाठः।

१७० ऋग्वेदस्य ६.२,१.३।

अथ पञ्चमी।

सौभरिर्ऋषिः*।

१ २　　३ २ ३ १ २ ३ २ ३ १ २
त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि।

५　१　२　१　५　५ २
हाइ। सो। म। पते३हा३इ। पा२३४इवा। एहि-
५　४
याई६हा। हो५इ। डा॥ ३॥

५ २ २　　५　　१ १ २　　२
III आया३ह्ययमिन्दाइवाइ। अश्वापा१ता २इ। गो
२　१ ३　　१　२　२
पाताऊ३। वरा२पार३४ताइ। सोम०मोमा३१। प-
१　२ १　५ ३　५　४ ५
ताइ। पिबा३ओ२३४वा। ऊ२३४पा। ऊपा॥ ४॥ १७०

"अश्वपते" अश्वानां स्वामिन्! "गोपते" गवां पालयितः "उर्वरापते" सर्व-शस्याढ्या भूमिरुर्वरा तस्याः पते हे इन्द्र! "इन्दवे" सोमाय तुभ्यम् (अयं सोमोभिषुत इति शेषः) तस्माद् "आयाहि" सोमं प्रत्यागच्छ, आगत्य "सोमपते" हे इन्द्र! "सोमं" "पिब" ॥ ४ ॥ १७०

* "प्रयोगोनाम ऋषिः"-इति वि०।

I,II,III सौथवमानि त्रीणि।

२ १र २र ३१ २
सऽस्थेजनस्यगोमतः ॥ ५ ॥ १७१

५ र १र २ १ ०
I त्वयाह्स्वित्। यूजावयम्। प्रातिश्वासा२।

१ २ १ २ ३ २ १ २
तंवृषभ। ब्रूवी१माहा२३४इ। सऽस्था२इ। जानस्य-

१ ५ ३ ५
गोर३४वा। मा२३४ताः ॥५ ॥१७१

"वृषभ" वर्षितः! हे इन्द्र! "गोमतः" गवादि-युक्तस्य जनस्य "संस्थे" स्थाने युद्धे(१) "श्वसन्तम्" अस्मान् प्रति क्रोधातिशयेन श्वास-कारिणं शत्रुं "युजा"(२) सहायेन "त्वया ह स्वित्" त्वयैव खलु(३) वयं "प्रति ब्रुवीमहि" प्रतिवचनं कुर्मः निराकरिष्याम इत्यर्थः ॥ ५ ॥ १७१

---

१७१ ऋग्वेदस्य ६,२,३,१ = यजुर्वेदस्य ३१,६।

I धेनुसाम।

(१)—'सम्तिष्ठन्ते यत्र योद्धारः स संस्थः सङ्ग्रामः, तस्मिन् संस्थे'-इति वि०।

(२)—युज्यत इति युक् सहायः, तेन युजा।

(३) -स्विदर्थः खल्विति। 'स्विदिति पदपूरणः' इति वि०।

अथ षष्ठी* ।

१ २ क ३ २र ३ २३ १ २
गावश्चिद्घासमन्यवःसजात्येनमरुतः†सबन्धवः ।
३ १ २ ३ १ २ ३ २
रिहते‡ककुभोमिथः ॥ ६ ॥ १७२

५र र ५ २ र १र
I गावश्चिद्घासाइमन्यवाः । सजात्येनमरुतःसबन्ध-
१ २ १ र २ २ १ २ ४ ५
वा२३होइ । रिहतेकाकू३भो । मिथा । औ३होवा ।
४
हो५इ । डा ॥ ६ ॥ १७२

"समन्यवः" समान-तेजस्काः समान-क्रोधा वा हे मरुतः ! "गावश्चित्" गावश्च युष्मात्प्रभृताः(१) "सजात्येन" समान-जाति-

---

* 'मारुतीयमृग । सौभरेरार्षम्'-इति वि० ।

† "मरुतः"-इति । ‡ "रिहते"-इति च ऋग्वेदे स्वरभेदेन पठ्यते ।

---

१७२ ऋग्वेदस्य ६,१,४०,१ ।

I सवेशीयम् ।

(१)—'गो शब्देनात्र आदित्यरश्मय उच्यन्ते । चिच्छब्द उपमायाम् । आदित्य-रश्मयइव, * * *,आदित्यरश्मय इव सर्वे मदीप्ताइत्यर्थः'-इति वि० । "गावः"-इति रश्मिनामसु तृतीयं नैघण्टुकम् (१,५) ।

अथ सप्तमी।

द्वयोर्नृमेधऋषिः।

१ ० ३ १ २ ३ १ २ ३ १ २

त्वन्न इन्द्राभर ओजो* नृम्णꣳ शतक्रतो विचर्षणे।

त्वेन एकस्माज्जात इति(२) एवं "सबन्धवः" समान-बन्धुकाः सत्यः "ककुभो" दिशः(३) प्राच्यादि-दिग्भागान् प्राप्य "मिथः" परस्परं "रिहते" लिहन्ति (घेति पूरकः ॥ ६ ॥ १७२

---

* "नृमेधस आर्षम्"-इति वि०।

† "भरँ ओजो"-इति ऋग्वेदीय-पाठः, सायणीयोत्तर-भाष्ये च।

---

(२)—'सर्वेषां कथं समानजातित्वम्? एकस्मात् पुंसः सकाशाज्जायमानत्वात्'-इति वि०।

(३)—'ककुभः प्रधानभूताः, आदित्यरश्मयः, * * *, अथवा ककुभो दिशः, दिक्-शब्देनात्र दिग्वासिनो यजमाना लक्ष्यन्ते, तान् आस्वादयन्ति उपजीवन्तीत्यर्थः। कथमुपजीवन्ति? उच्यते—मिथः सम्भूता इत्यर्थः। अथवा गाव एव समन्यवो दोग्ध्राः, सजात्यः सपत्नाः पुत्र-पौत्र-भ्रात्रादि-सहिताः'-इति वि०।

(४)—अत्र विवरणकृत्—'आ-इत्युपसर्गश्रुते भरेत्याख्यातमनुकृष्यते, आभर। वीरं पुत्रम्। कीदृशं पुत्रम्? पृतनाषहं पृतना इति संग्राम-नाम, तस्मिन् शत्रूणा मभिभवितार मित्यर्थः'-इति।

३ १ २ ३ १ २
आवीरंपृतनासहम्* ॥ ७ ॥ १७३

४ ५ ४ २ १र २ १ र २ १
I त्वन्नई । द्र आभार२३रा । ओजोनृम्णाम् । शात-

२ १ २ ३ ५ १ र २ २ १
क्रता३उ । वीचर्षा२३४णाइ । आवीरंपा३हा३ । तार-

३ ५र र ३ ५
ना२३४औ होवा । सा२३४हाम् ॥ ७ ॥

४ ५ ४ १र २ १ र २ १
II त्वन्नइन्द्रा । आभार२३रा । ओजोनृम्णाम् । शात-

२ १ २ ३ ५ २र १र २ ३ र
क्रता३उ । वीचर्षा२३४णाइ । आवीरा२३म्पा । तना-

२ १ ४ ५ ४
सहाम् । औ२३होवा । हो५इ । डा ॥ ८ ॥ १७३

हे "शतक्रतो" बहु-कर्मन् ! "विचर्षणे" विविध-द्रष्टरिन्द्र ! "त्वं" "नो" ऽस्मभ्यम् "ओजो" बलं "नृम्णं" धनञ्च "आ भर"

* "पृतनाषहम्"--इति ऋग्वेदीयः पाठः ।

१७३ उत्तरार्चिकस्य ४,२,१३,१ = ऋग्वेदस्य ६,७,२,४ = ऊहे ४,१८ ।

I,II आभरे द्वे ।

अथाष्टमी।

क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
अधाह्रीन्द्रगिर्वणउपत्वाकामईमहेसस्टग्महे*।

३ २ ३ १ २ ३ १ २
उदेवग्मन्त† उदभिः॥ ८॥ १७४

४ ५र ४ २ १ २ १ २र र २र
I अधाह्रिया। द्रगिर्वा२३णाः। उपत्वाका। मई-

२ १ २ १ १ २
मा२३हाइ। सस्टग्मा२२हाइ। ऊदे२। वग्मा२३ताः।

१ २ ४ ४
उदा२३भाइः। इडा५भीः। ह्रो५इ। डा॥८॥

५ र र ५ १ २र र १ २
II अधाह्रीन्द्रगिर्वाइणाः। ऊपत्वाका। माई१मा-

आहर। "वीरं" वीर्योपेतं "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" ह्वयामह इति शेषः(४)॥ ७॥ १७३

---

* "कामान्महःसस्टज्महे"-इति ऋग्वेदीय-पाठः।

† "उदेवयन्त"-इति ऋग्वेदीय-सायणीयोत्तरभाष्ये च।

---

१७४ उत्तरार्चिकस्य १,१,२३,१ = ऋग्वेदस्य ६,७,२,१ = ऊहे१,१७,=१०,२,८।

१ ७ १ २ ४ ५
हा २इ । साहूमाहा २इ । ऊद१वाम्मा२३ । तओवा ।

४ ५
दापूभोईहाइ ॥ १० ॥

५ र र ५ १ २र र १ २
III अधाहीन्द्रगिर्वणाईए । उपत्वाका । माई१मा-

२ १ २ ३ ५ २ ५ २ २ २
हाउइ । साहूम्मा२३४हाइ । उदौ३हा३ । वा३हा३ ।

१ ३ २ ५र र २ १ १ १ १ ११
म्मा२ । तऊ३४औहोवा । दभो३रे२३४५ ॥ ११ ॥१७४

हे "गीर्वण" गीर्भिर्वननीयेन्द्र । "अधा हि"(१) सम्प्रति "त्वा" त्वां "कामा" काम्ये निमित्ते । [यद्वा । काम इति सुपां सु(७,१,३९) कामान्(२)] "ईमहे" याचामहे(३) । किञ्च । याचमानाः सन्तः "उपमस्महे" उप सृजामः स्तुतिभिस्त्वां संयोजयाम इत्यर्थः ॥ तत्र दृष्टान्तमाह—"उदेव" यथो-

I,II,III ऐषिराणि त्रीणि ।

(१)—'अध इत्यस्य पदपाठः । हीत्यस्य हेतौ' इति वि० ।

(२)—'कामः प्रथमैकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, काम - कामशब्देनात्र काम्यमानत्वात् धनमुच्यते कामं धनम्' इति वि० ।

(३)—"ईमहे" इति याचा कर्मसु पठितम् [illegible] ।

अथ नवमी।

द्वयोः सौभरिः।

१ २ ३ २३२३ १ २ ३१२ ३२ ३१२
सीदन्तस्ते वयोयथा*गोश्रीतेमधौमदिरेविवक्षणे।
३ १२ ७२
अभित्वामिन्द्रनोनुमः ॥ ९ ॥ १७५

२ ५ २ ४ ५२ ५ ७२१ १२१
। सा३४इ। दन्तस्तेव। योया६था। गोश्रा इतेम।
७२ १ २ ४५ ३ ११११ २ १२
धौमदिराइ। वा३इवक्ष। णा२३४५इ। अभित्वामा-
२ ४ २ ३ ११११
इन्द्रा३नो।३। नू३४५। मा२३४५ः॥ १२ ॥

दकेन "गमन्तो"(४) गच्छतः पुरुषाः "उदभिः" अञ्जलिना उत्क्षिप्यादकैः समीपस्थान् क्रीडार्थं संसृजन्ति तद्वदित्यर्थः।
"ससृजमहे"-इति बह्वृचाः पठन्ति ॥८॥ १७४

* "यथा"-इति ऋग्वेदीयः; स्वरे भेदः।

१७५ ऋग्वेदस्य ६,२,१,५।

(४) —"छन्दस्युभयथा (३,४,११७)"-इति सिद्धम्।

३र ४५ र४५ ३२ १ र५ र५ ५र
II मौद्न्तस्त्वेवयः। यथा३। गो२३४। औतंमधौम-

४५५ ३२ २ १ ५ ० ०
दिराइ। विवा३। हा३। क्षा२३४णाइ। अभौ३।

२ १ ५ ० २ १ १ ५
हो३इ। त्वा२३४मौ। इनो३। नू२३४मा:। उ-

५
हुवाई्हाउ। वा॥ १३ ॥ १७५

हे "इन्द्र!" "गाश्रोते" (श्रीञ् पाके। गोर्विकारो दधि पयश्च गोशब्देनोच्यते। तेन) दध्ना पयसा च श्रीते मिश्रिते "मदिरे" मदकरे "विवक्षणे"(१) स्वर्ग प्रापण शीले त्वदीये "मधौ" सोमे "सौदन्तो" निवसन्तः। सदने दृष्टान्तः "वयो-यथा पक्षिणो यथा एकत्र सङ्गम्भूय तिष्ठन्ति तद्वत् सौदन्तो वयं "त्वाम्" "अभि" आभिमुख्येन "नोनुमः" पुनः पुनः भृशं वा स्तुमः॥ ८ ॥ १७५

1.II मोदन्तोयि द्वे।

(१)—"वक्षमिष्टकृतं" इति वि०।

अथ दशमी।

३ २ ३ १ २ २ २उ २ १ २ २ १ २
वयमुत्वामपूर्व्य स्थूरंनकच्चिद्भरन्तोवस्यवः।
१ २ २ १ २
वज्रिञ्चित्रं* हवामहे॥ १० ॥१७६

॥ द्वितीय-दशति॥

५ २ २र ३ ४र ५ २र १
I वयमुत्वामपूर्विया। स्थूरन्नकच्चिद्भरन्तआवस्यावा
५ २ २ १ ४ २
२३४:। वज्रिन्। चित्राइम्। हा२३वा३। मा३४५
५
होइहाइ॥ १४॥

५ ४ ५ ४र ५ र र ४ ५ ५ २
II वयमुत्वामपूर्व्यस्थूरन्नकच्चिद्भरन्तः। ओवा। हा३-
२ २ १ १ १ १ १ १ २ २ ३ २ १ १
हाइ। अवस्यावा२३४५:। हा३हाइ। वज्रिञ्चित्रार-

* "वाजेचित्रं" इति ऋ० सायणीयोत्तर-भाष्ये च।

१७६ उत्तरार्चिकस्य १,१,२२,१ = ऋग्वेदस्य ६,२,१,१ = ऊहे १,१८-२१,१०।

I पक्षसाम। II सौभरम्।

१ १ २　　२ २　　३ र　　१　　५
३४५म्। हा३हाइ। हवा३। मा२३४हाइ। उहू

५
वाईहाउ। वा॥ १५ ॥१७६

हे "वज्रिन्" वज्र-युक्त! "अपूर्व्य" त्रिषु सवनेषु प्रादुर्भूतत्वादभिनव! "भरन्तः" सोम-लक्षणैः रत्नैस्त्वां पोषयन्तो वयं "चित्र" चायनीयं विविधरूपं वा "त्वाम्" त्वामेव "अवस्यवः" अवो रक्षणमात्मनइच्छन्तः सन्तः "हवामहे" त्वामाह्वयामः तत्र दृष्टान्तः—"स्थूरं न"(१) यथा भरन्तो व्रीह्यादिभिर्गृहं पूरयन्तो जनाः "स्थूरं" स्थूलं गुणाधिकं "कच्चित्" कञ्चिन्मानवं यथा ह्वयन्ति तद्वत् ॥ १० ॥ १७६

इति श्रीसायणाचार्य्य विरचिते माधवीये सामवेदार्थ प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

॥ इत्यौषिगनं काकुभम् ॥

स्वादोरित्थादशस्त्वृच नरमा नतमित्यसौ।
उपरिष्टाद्बृहत्याख्याताः ससदश पङ्क्तयः(क) ॥

(१)—'स्थूरम् त्वदं स्तरवचनः'-इति विवरणकारः। अत्र मते "स्थूरम्" इति पाठः।

(क)—"स्वादोरित्था"-इति ततोयदशदारभ्य "नतमंहो"-इति चतुर्थदशत्यन्तिमान्ता अष्टादश ऋचः, तत्र "नतम्" इति अस्मौ अन्तिमा ऋक् उपरिष्टाद्बृहती-

चन्द्रमानतमित्येते वैश्वदेव्यौ(ख) प्रतीत्यसौ।
आश्विनौ(ग) तिस्रआग्नेय्यआतेअग्नइधीमहि॥
आग्नौं नाग्नोत्तमित्येता(घ)महेनोअद्य चौषसौ।
सौमौ भद्रन्नइत्येषा(च) शिष्टाऐन्द्राउदोरिताः(छ)॥

तत्र सप्तमे खण्डे—

सैषा प्रथमा।

आदितोगोतमोनामऋषिः सम्परिकीर्त्तितः।

३ २ ३ १ २ ३ २३ १ २ क २र
स्वादोरित्याविषूवतोमधोः*पिबन्तिगौर्यः।

* "मध्वः" इति ऋग्वेदीय-पाठः।

छन्दस्का। अपराः सप्तदश ऋचः पङ्क्तयः पङ्क्ति छन्दस्काः। इति छन्दः-सङ्केतः।

(ख) -"चन्द्रमा"-इति नवमी. "नतम्"-इति अष्टादशी एते ऋचौ वैश्वदेव्यौ अनयोः विश्वे देवा देवताः।

(ग)---"प्रतिप्रियतम" -अमौ दशमी ऋक आश्विनी अश्वि देवताका।

(घ)---"आतेअग्नइधीमहि"-इति एकादशी, "अग्निं न"-इति द्वादशी, अग्निस्तम्"-इति सप्तदशी एताः तिस्र ऋचः आग्नेय्यः।

(ङ)—"महेनो अद्य"-इति त्रयोदशी ऋक् औषसी उषोदेवताका।

(च)— "भद्रं नो"-इति चतुर्द्दशी इयमृक् सौमी सोम-देवताका।

(छ)—शिष्टाः दश ऋचः ऐन्द्राः इन्द्र-देवताकाः उदीरिताः मन्त्रदृष्टिभिरित्यर्थः। -इति दैवत-सङ्केतः।

३र २र ३ २३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
याइन्द्रेणसयावरीवष्णामदन्तिशोभथा*वस्वीरनुस्वराज्य-
म् ॥ १ ॥ १७७

४र ३र ४ ३र ४५र ३२ १ ५र
I स्वादोरित्थाविषू। वताइः। मा२३४। धोःपि-

र ४५ १र र २ १र २ १२र
बन्तिगौ। रियाः। याइन्द्रे ण सयावा२३रौः। वृष्णा-

१२ १र २ १ २ १ र २
मद। तिशोभा२३था। वस्वाइरा१नू २। स्वाराजियम्।

१ २ १
इडा२३भा३४३। ओ२३४५इ। डा ॥ १६ ॥ १७७

"स्वादोः" स्वादुभूतस्य रस-युक्तस्य "इत्था विषूवतः" इत्थमनेन प्रकारेण सर्वेषु यज्ञेषु व्याप्तियुक्तस्य(१) "मधोः" मधुर-रसस्य सोमस्य ("क्रियाग्रहणं कर्त्तव्यमिति" कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी) एवं विधं सोमं "गौर्यो" गौरवर्णा गावः

* "शोभसे"-इति च ऋ०।

१७७ उत्तरार्चिकस्य ३,२,१५,१ = ऋग्वेदस्य १,६,६,५ = आरण्ये १,२,२१—२,८,१०—३,१५—१७-१८।

I यामम्।

(१)--विषूवत इति विपूलव्याप्तिवित्यस्य (आ० ३०)।

अथ द्वितीया।

३ २उ ३ २उ ३ १ २ ३ २ ३ १ २
इत्थाहिसोमइन्मदोब्रह्म*चकारवर्द्धनम्।

१ २ ३ १ २ ३ १र २र३ २ ३ २ ३ १ २ ३
शविष्ठवज्रिन्नोजसापृथिव्यानिःशशाअहिमर्चन्ननुस्व-

१ २
राज्यम्॥ २॥ १७८

५ र २ १ २ १ २ १र २१
1 इत्थाहिसो। मइन्मा२३दाः। ब्रह्मचका। रवर्द्धा-

२ १ २ १र २ १र
२३नाम्। शविष्ठव। ज्रिन्नोजा२३सा। पृथिव्यानिः

"पिबन्ति"। या गावः "वृष्णा" कामाभिवर्षकेणेन्द्रेण "सयावरीः" सह गच्छन्त्यः सत्यः "मदन्ति" हृष्टा भवन्ति। ताः "इन्द्रपीतस्य" सोमस्यावशेषं पिबन्तीत्यर्थः। "शोभथाः" [वचनव्यत्ययः (३,१,८५)] इन्द्रेण सह शोभन्ते। "वस्वीः" पयःप्रदानेन निवास-कारिण्यः(२) ता गावः "स्वराज्य" स्वस्य स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वन्तद् "अनु" लक्ष्य अवस्थिता इत्यर्थः॥ १॥ १७७

* "मदेब्रह्मा"-इति क०।

१७८ उत्तरार्च्चिकस्य १,५,२८,१। आप्नुदभ्यो १४-७०४-१

(२)—'वस्विति धन नाम (नि०२,१०.१४) धनवन्त्यः' इति वि०।

शशाअहिम्। अर्चानाश्नू२। स्वरौहो२। जियमो-
२३४५इ। डा॥ १७॥

II इत्थाहिसोपमदम्मदा:। ब्रह्मचका। रवर्द्धा२३-
नाम्। शाविष्ठा२३४वा। ग्निनोजा२३४सा। पृथिव्या-
निःशशाअहिम्। अर्चा३ह्नोइ। अनू२३चो। स्वाराजि
यम्। इडा२३भा३४३। ओ२३४५इ। डा॥ १८ ॥१७८

हे "शविष्ठ" अतिशयेन बलवन्! "वज्रिन्" वज्रवन्निन्द्र! "इत्था हि" इत्थम् एव अनेन शास्त्रोक्तप्रकारेणैव(१) "सोमे" त्वया गृहीते सति "मदः" [मदेः स्तुति कर्मणः(२)] स्तोता(३) "वर्द्धनं" तव वृद्धिकरं "ब्रह्म" स्तोत्रं(४) "चकार"। अनेन कृतवान् (इदित्येतत् पद-पूरणम्) अतस्त्वम् "ओजसा" बलेन "पृथिव्याः

I, II गृत्समदस्य मदौ द्वौ।

(१)—"हि" शब्दो यथार्थे। इत्था सत्यम् इति वि०। "इत्था" इति सत्यनामसु पठितम् नैघण्टुकम् ३.१०)।

(२)—"मदति" इति अर्चति कर्मसु चतुश्चत्वारिंशत्तमं नैघण्टुकम् ३.१४।

(३)—"मदे मत्तमो चेयं "यस्य च भावेन भावलक्षणम्" इति, *** सोमे उपकल्पिते इति वि०।

(४)—ब्रह्म शब्दो ब्राह्मण शब्द पर्यायः। गोतमस्य परोक्ष-वचनेन आत्मान

अथ तृतीया*।

१ २ १ २ ३ १२ ३ १र २र
इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः।
२उ ३ २ ३ २ ३ १र २र ३ १र २र ३ १ २
तमिन्महत्स्वाजिषूति†मर्भे हवामहे स वाजेषु प्र नो-
विषत् ॥ ३ ॥ १७९

सकाशात्(५) "अहिम्" आगत्य हन्तारं वृत्रं(६) "निःशशाः" निःशेषेण शशाः(७) मा वधस्वेति शासनं कृत्वा पृथिव्याः सकाशान्निरगमयदित्यर्थः। किं कुर्वन्? "स्वराज्यं" स्वस्य राज्यं राजत्वम् "अनु" लक्ष्य "अर्चन्" पूजयन् स्व-स्वामित्वं प्रकटयन्नित्यर्थः॥ २ ॥ १७८

---

* 'गौतमस्यार्षम्' इति वि०।

† "षूते"--इति ऋग्वेदीयः पाठः, उत्तराग्रन्थीय-सायणधृतश्च।

---

१७९ उत्तरार्च्चिकस्य ३,२,१४,१—ऋग्वेदस्य १,६,१,१ = आरण्यके ३,१८ = ऊहे १८,२,४ = ऊह्ये १,१२—१३।

निर्दिशति—गोतम-नामा ब्राह्मणः चकार करोति; किं? सामर्थ्यात् स्तोत्रम्' इति वि०।

(५)—'पृथिवीत्यन्तरिक्ष-नाम, अन्तरिक्षात्' इति वि०। "पृथिवी"-इति अन्तरिक्ष-नामसु नवमं नैघण्टुकम् (१.३)।

(६)—'अहिम् मेघम्, वृष्टिमित्यर्थं' इति स्पष्टम् वि०। "अहिः"-इति मेघ-नामसु एकविंशतितमं नैघण्टुकम् (१.१०)।

(७)--'शश प्लुतगतौ भ्वा० प०'-इत्यस्य रूपम्, अन्तर्णीतण्यर्थः।

I इन्द्रोमदायवा३ । वाहोइ । शवसेवृत्रहा३ ।
नृभीः । तमिन्महत्स्ववा३ । जाइपू । ऊतिमर्भेहवा३ ।
माहाइ । मावा । जाइपुप्रनो२३४वा । वा५इपो६हाइ
॥ १९ ॥

II इन्द्रोमदा५यवावृधाइ । शवसेवृ । त्रहानृभी-
३४ः । ताम् । इन्माहा२३४त्स्ववा६ । हाउ । जाइपू ।
ऊतिमर्भेहवा१ । मा३हाइ । मावा । जाइपुप्रनो२३
४वा । वा५इपो६हाइ ॥ २० ॥

III इन्द्रोमहा५यवावृधाइ । शवसेवृ । त्रहा २नृभि ।
आऔ३हो । औहोवा२३४५ । ह२३४५ । तमिन्म-

---

I,II आभौंके हे ।

हृ। न्त्सुवा२जिषु। आऔ३हो। औहोवा२३४५।

हु२३४५। ऊतिमर्भे। हवा२महे। आऔ३हो।

औहोवा२३४५। हु२३४५। सवाजेषूप्रा३नो३। वा-

३४५इषोई३हाइ॥ २१॥

IV इन्द्रोमदायवावृधेशवसेवृ। त्रहानृभीरः। तामि

न्महे। न्त्सुआ१जिषू३। ऊतीमा२३४र्भाइ। हवा२मा-

हाइ। मवाजेषुप्रा३नो३। वा३४५इषोई३हाइ॥ २२॥

V इन्द्रो३१२३४। मदा। यवावृधेशवा२सा२३४

इवृ। त्रहा३। औहोवा। आ३। औहो२३४वा।

नृभाइः। तमिन्महन्त्साजिषूतिमा२३भीइ। हवा३। औ

III, IV आभोगवे द्वे।

२ ऽ २ ३ ५ ४ १ २ र
होइवा। आइ। औहोर्३४वा। महाइ। मवाजेषु

ऽ २ ३ २ ऽ २ ३ ५ ४
प्रनाइ। औहोइवा। आइ। औहोर्३४वा। वा५इ

५
पोईहाइ॥ २३॥

३ २ र ५र ५ १ २र
VI इन्द्रो३४। मदाय। वावाईद्धोइ। शवसेवृ।

१ २ ४र ५र ३र २ १ २ १
त्रहानूभीइः। हाउहौ। होवा। तामिन्महत्सु।

२ २ ४र ५र ३र २ १ २र १
आ१जिषूइ। हाउहौ। होवा। ऊतिमर्भे। हवा-

२ ४र ५र ३र २ १ र र २ ४ २
माहेइ। हाउहौ। होवा। मवाजेपृप्राइनोइ। वा३४

५ ५
पूइपोईहाइ॥ २४॥

५र र ३ २ र ५र ५
VII ओहाइ। इन्द्रो२४। मदाय। वावाईद्धोइ।

१ २र १ २ ४र ५र ३र २ १
शवसेवृ। त्रहानूभीइः। आउहौ। होवा। तामि-

---

V, VI, VII वार्हद्गिराणि त्रीणि।

न्मह । त्सुआ१जिषू३ । आउहौ । होवा । ऊतिम
भोइ । हवौ । होऽ३वा । माहा२इ । सवाजेषूप्राऽ३नो
विषात् । औ२३होवा । होऽ५इ । डा ॥ २५ ॥ १७९

"वृत्रहा" वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता(१) [यद्वा । आवरकाणां(२) शत्रूणां हन्ता इन्द्रः "मदाय" हर्षार्थं "शवसे" बलार्थञ्च "नृभिः" यज्ञस्य नेतृभिः ऋत्विग्भिः "वावृधे" स्तोत्र-शस्त्र-रूपाभिः स्तुतिभिः प्रवर्द्धितो बभूव स्तुत्या हि देवता प्राप्तबला सती प्रवर्द्धते । "तमित्" तमेव इन्द्रं "महत्सु" प्रभूतेषु "आजिषु" सङ्ग्रामेषु "ऊतीम्" अस्माकं रक्षकम्(३) "हवामहे" आह्वयामहे । तथा "तम्" इन्द्रम् "अर्भे" अल्पे सङ्ग्रामे "हवामहे" । अस्माभिराहूतः "स" चेन्द्रः "वाजेषु" सङ्ग्रामेषु "नो" ऽस्मान् "प्राविषत्"(४) प्रावतु प्रकर्षेण रक्षतु ॥३॥ १७९

(१)—"वृत्रो मेघ-इति नैरुक्ताः, त्वाष्ट्रोऽसुरइत्यैतिहासिकाः ; अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्ष कर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति"-इति यास्कः (नि० २,१६) ।

(२)—"मिलं भरं भवति बिभर्त्तेः । तं अघ्निवानपववार। तद् वृत्तो वृणोतेर्वा वर्त्ततेर्वा वर्धतेर्वा । यदवृणोत् तद् वृत्रस्य वृत्रत्वमिति विज्ञायते"-(नि०२,१७) इति यास्कोक्ति-वैविध्यात् ।

(३)—'ऊतिम्, द्वितीयैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम ; ऊतये पालनाय'-इति वि० ।

(४)—अवते र्लेटि रूपम् ।

अथ चतुर्थी ।

२ ३ २ ३ १ २ ३ १ २ क २र
इन्द्रतुभ्यमिदद्रिवोनुत्तंवज्रिन्वीर्यम्।

२र ३२र ३ १ २ ३ २ ३ ३ २ ३ १र २र ३ २ ३ १ २ ३
यद्धत्यंमायिनंमृगन्तवत्यन्मायया[1]वधीरर्चन्ननुस्व-

१ २
राज्यम् ॥४॥ १८०

५ ५ १ २ र १
। इन्द्रतुभ्यमिदद्रिवाइए। आनुत्तंवज्रिन्वीरियम्।

२ १ २ १ २
यद्धात्या१म्मा२। याइनंमृगम्। तवात्या१न्मा२।

१ र २र १ १ १ र २ १
यायावधीः। अर्चाना१न्२। स्वाराजियम्। इडा२-

२ १
३भा३४३। ओ२३४५इ। डा ॥२६॥ १८०

---

* 'गौतमस्यार्षम्' इति त्रि०।

"मृगंतमुत्व'मायया"-इति ऋ०।

---

१८० ऋग्वेदस्य१,५,३०,२।

1 स्वाराज्यम्।

अथ पञ्चमी* ।

३ १ २ ३ २उ ३ १ २ ३ १ २
प्रेह्यभीहिधृष्णुहिनतेवज्रोनियंसते ।

[अद्रिरिति मेघनाम (नै०१,१०,१)] । हे "अद्रिवन्" वाहन-रूप-मेघ-युक्त(१) "वज्रिन्" वज्रवन्निन्द्र ! "तुभ्यमित्" तवैव [षष्ठ्यर्थे चतुर्थी(२)] "वीर्य्यं" सामर्थ्यम् "अनुत्त" ग्रत्रुभिरतिरस्कृतम् । "यद्"(३) येन वीर्य्येण खलु "मायिनं" मायाविनं "मृगं" मृग-रूपमापन्नं(४) "त्यं" तं "वृत्रम्" असुरं(५) त्वमपि माययैव "अवधीः" हतवानसि । अतः कारणात् तव वीर्य्यं "यत्" तत् प्रसिद्धं भवति । "अर्चन्ननु स्वराज्यमिति" पादो व्याख्यातः(६) ॥ ४ ॥ १८०

---

* 'गौतमस्यार्षम्'-इति वि० ।

---

(१)—'अद्रयः अभिषवाः ग्रावाणः, तैः तद्वान्; अथवा अद्रिर्मेघः, तेन हन्तव्येन तद्वान्; अथवा अद्रिर्वज्रस्तेन तद्वान्'-इति वि० ।

(२)—"षष्ठ्यर्थे चतुर्थीति वाच्यम्(२,३,६२)"-इति कात्यायनीयोक्तेरिति भावः ।

(३)—द्वितीया चात्र तृतीयार्थे द्रष्टव्या, व्यत्ययेन (३,१,८५) ।

(४)—"मृगो मार्ष्टेर्गतिकर्मणो"-इति यास्कः(१,२०) । अतएव विवरणे मार्गणीयं वेत्युक्तम् ।

(५)—असुर इत्यपि मेघ-नामसु नैघण्टुकं दृश्यते १,१०,२९ ।

(६)—अव्यहित-पूर्वस्यामृचीति भावः ।

१ २ ३ १ २ उ　३ २ ३　१ २　३ १ र　२ र ३ २　३　१ २ ३　१
इन्द्रनृम्णꣳहितेशवोहनोवृत्रञ्जयाअपोर्चन्ननुस्वरा-
२
ज्यम् ॥ ५ ॥ १८१

I प्राइही२। अभीहिधृष्णहाऔ३हो। नाता२इ।
वज्रोनियꣳसयाऔ३हो। आइन्द्रा२। नृमणꣳहिते-
शवाऔ३हो। हाना२ः। वृत्रञ्जयाअपाऔ३हो। आ-
र्चा२नान्२। स्वाराजियम्। इडा२३भा३४३। औ२३४
५इ। डा ॥ २७ ॥ १८१

हे "इन्द्र!" "प्रेहि" प्रकर्षेण गच्छ। "अभीहि" हन्तव्यान् शत्रून् आभिमुख्येन प्राप्नुहि। प्राप्य च "धृष्णुहि" तान् शत्रून् अभिभवति तव "वज्रो" "न नियंसते" शत्रुभिः न नियम्यते अप्रतिहतगतिरित्यर्थः। तथा "ते" तव "शवः" त्वदीयं बलं "नृम्णं" नृणां पुरुषाणां नामकम् अभिभावकम्।

---

१८१ ऋग्वेदस्य १,५,२८,३।

I सवेशीयम्।

अथ षष्ठी*।

३ १ २ ३ १ २ ३ १ २ ३ १ २
यदुदीरतआजयो धृष्णवे धीयते धनम्†।

३ १ २ ३ २ २ ३ २उ ३ १र २र ३ १ २ ३ १ २
युत्त्वा‡ मदच्युताहरीकंहनःकंवसौदधोस्मांइन्द्रवसौ-

दधः॥६॥१८२

४ र र ४ २ १ ५र र १ २
I यदुदीरापूतआजयाः। धृष्णवे२धी। यताइधा१-

"हि" यस्मादेवं तस्मात् "वृत्रम्" असुरं मेघं वा "हन" जहि। तदनन्तरं तेन निरुद्धा "अपः" उदकानि "जयाः" जय, वृत्रं हत्वा तेनावृत मुदकं लभस्वेत्यर्थः(१)। शिष्टं स्पष्टम्॥५॥१८१

* 'गौतमस्यार्षम्'-इति वि०।

† "धना"-इति, ‡ "युत्त्वा"-इति च ऋग्वेदीयौ।

१८२ उत्तरार्चिकस्य ३,२,१४,३ = ऋग्वेदस्य १,६,१,२ =ऊहे १८,२,४ ऊह्ये १,१,१—१२,२,—१३,२।

I सवेशीयम्।

(१)—केचिदिदानीन्तना ऋगेषा पूर्वतनानां चैत्र जल-हरणाय समद्भूतेत्यनुमीयन्ते। वस्तु तत्तदमत्, "अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति (नि० २,१६)"-इत्यादिना एवमादीनां कल्पितार्थत्वस्य स्पष्टत्वात्, "असद्वृत्तान्तान्वाख्यानम्"-इत्यादि मीमांसा-सिद्धान्ताच्चेति दिक्।

१र　२　४ ५　२ १　२
ना२म। युक्ष्वामदच्युता३। हारी। क॑ऽहनःकंवसा-
४ ५　२ १र　२　१र　२
३उ। दाधाः। अस्मा॑ऽआ२३इन्द्रा। वसौदा२३धा३-
१
४३। ओ२३४५इ। डा ॥ २८ ॥ १८२

अत्रेदमाख्यानम्-रहूगण-पुत्रो गोतमः कुरु-सृञ्जयानां राज्ञां पुरोहित आसीत्। तेषां राज्ञाम्परैः सह युद्धे सति स ऋषिरनेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति। तस्य च तत् पुरोहितत्वं वाजसनेयिभिराम्नातम् "गोतमो ह वै राहूगणः उभयेषां कुरु-सृञ्जयानां पुरोहित आसीत्" इति।

"यद्" यदा "आजयः" सङ्ग्रामाः "उदीरते" उद्गच्छन्ति उत्पद्यन्ते तदानीं "धनं" "धृष्णवे" यो धृष्णुः धर्षयिता शत्रूणां जेता भवति तस्मै धीयते निधीयते। जयतो धनं भवतीत्यर्थः। हे "इन्द्र!" त्वां तादृशेषु युद्धेषु प्रवृत्तेषु "मदच्युता" शत्रूणां "मदस्य" गर्वस्य च्यावयितारौ "हरी" त्वदीयावश्वौ(१) "युक्ष्व" रथे त्वदीये योजय। योजयित्वा च "कं" चिद्राजानं तव परिचरणमकुर्वन्तं "हनः" हन्याः। "कं" चन त्वां परिचरन्तं "वसौ" धने "दधः" स्थापयसि (अतो जयाजयौ त्वमेव कारयितासि। तस्मात् हे इन्द्र! अस्मान् अस्मदीयान् राज्ञः वसौ धने "दधः" स्थापय ॥ ६ ॥ १८२

(१)—'हरी इन्द्रस्य'-इति नैघण्टुकम् १, १५ १।

अथ सप्तमी*।

२ ३ १ २ ३ १ २ ३१ २
अक्षन्नमीमदन्तह्यवप्रिया अधूषत।

१ २ २ ३ २ ३ १ २ ३ २ ३ क २र ३
अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्र-

१ २
तेहरी॥७॥ १८३

३ ४ ३ ४२ ५ ३ २ १ ५ ४२ ५ २
I अक्षन्नमीमद। तह्योइ। आ२३४। वप्रियाअधू।

४ ५ १ २र १ २र १ र २ १ र
षता। अस्तोषतस्वभानवः। विप्राना२३वी। ष्ठाया-

२ र १र २ २ १ ३ ५र र
मती। योजानूइवा३इ। द्रा२ता२३औहोवा।

३ ५
हा२३४री॥ २८॥ १८३

हे "इन्द्र!" त्वया दत्तान्यन्नानि "अक्षन्" यजमाना भक्तवन्तः भक्ता च "अमीमदन्त हि" तृप्ता आसन् खलु। "प्रियाः" तनूः "अवाधूत" अकम्पयन् अतिशयित-रसास्वादेन वक्तुमशक्तवन्तः शरीराण्यकम्पयन्। तदनन्तरं "स्वभानवः" स्वायत्तदीप्तयः

* 'गौतमस्यार्षम्'-इति वि०।

१८३ ऋग्वेदस्य १,६,३,२।

I साम।

अथाष्टमी*।

३ १ २ ३ २उ ३ १ २ ३ १ २
उपोषुशृणुहीगिरोमघवन्मातथाइव।

३ १ २ ३ १ २ ३ १ ३ २ ३ १ १र ३ २उ क २र ३
कदा†नःसूनृतावतःकरइदर्थ‡यामइद्योजान्विन्द्रते

१ २
हरी॥८॥१८४

३ ४र ३ ४ ३र ४ ५ २ २ ४ १
। उपोषुशृणुहीगिरः। ए३। औ३होपुवा२। मा-

"विप्राः" मेधाविनः ऋत्विजः "नविष्ठया" अतिशयेन नूतनया "मती"(१) मत्या स्तुत्या "अस्तोषत" अस्तुवन्। अतः हे "इन्द्र!" ते त्वदीयौ "हरी" एतत्मज्ञावश्वौ "नु" क्षिप्रं(२) "योज" रथे योजय॥७॥१८३

---

* 'गौतमस्यार्षम्'-इति वि०।

† "यदा"-इति, ‡ "आदर्थ"-इति च ऋग्वेदीय-पाठौ।

---

१८४ ऋग्वेदस्य १,६,३,२।

(१)—मतिः-इति 'मन्यते'-इति स्तुतिकर्मसु पठितस्य रूपम् (३,१४,१८ नै०)। तृतीयायास्तु "इयाडियाजीकाराणामुपसङ्ख्यानम्" इति (७,१,३९) कात्यीय-वचनादीकारः।

(२)—"नु"-इति क्षिप्रनामसु पाठं नैघण्टुकम् (२,१५)।

२ १र २ ३ २ ३ २ १ र
घवन्मा। तथाआ१इवा२३४। कदा३४नःह्र। नात्तौ

२ १ २ १ २ ३र २ ३ १
वत.। करइद। थाया१माई२३४त्। योजा३४नुवा

१ ३ ५र र ३ ५
३इ। द्रा२ता२३४औहोवा। हा२३४रौ॥ २०॥ १८४

हे "मघवन्" धनवन्निन्द्र! "गिर:" अस्मदीया: स्तुती: "उपो" उपैव "सुश्रुणुहि" उपगम्य सम्यक् शृणु। "तथाइव"(१) पूर्वं यथाविधस्त्वं तद्विपरीतो माभूः (अस्मासु पूर्वं यथा अनुग्रह-बुद्धि-युक्त तथाविधएव भवेत्यर्थः) अपिच "नो" ऽस्मान् "सूनृता-वतः" (प्रियसत्यात्मिकावाक् सूनृता) तया स्तुति-रूपया वाचा-युक्तान् "करः" करोषि। त्वमपि "अर्थयासइत्" अर्थयास एव नतदासे। अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपिस्वीकरोषीत्यर्थः। अतो हे "इन्द्र"! "ते" "हरी" त्वदीयावश्वौ "नु" चिप्रं "योज" रथे योजय। "कदा" यदेतिकर इत्यर्थः।

"करइदर्थ"-इति, "करआदर्थ"-इति च पाठो॥ ८॥ १८४

(१)—"तथा, "तन् विस्तारे (त०,प०)"-इत्यस्येदं रूपम्. मा विस्तारं कार्षीः, मा विलम्बिठाः, शीघ्रमागच्छेत्यर्थः। इवेत्ययमुपमार्थः, यस्तु उपमार्थस्य सम्प्रत्ययार्थं प्रयोग इति पदपूरणः' इति वि०।

अथ नवमी ।

त्रितऋषिः ।

२ १ २ ३ २ ३ १र २र३ १ २ ३ १
चन्द्रमाअप्स्वा३न्तरा*सुपर्णोधावतेदिवि ।
१ २ ३ १ २ ३ १ २ ३ १
वो हिरण्यनेमयःपदविन्दन्तिविद्युतोवित्तंमेअस्य
२
रोदसी ॥ ९ ॥ १८५

२ १ र २ १ २ १र २
I चन्द्रमाआउवा । प्सवान्ताराउवा । सुपर्णोधाउ-
१र र २ १ २
वा । वतेदिवि । नवोह्हिराउवा । णयनादमायाउवा ।
१ २ १ २ १र
दंविन्दाउवा । तिविद्युताः । वित्तम्माआउवा । स्यरोदा
२ १
३सा३४३इ । ओ२३४५इ । डा ॥ ३१ ॥

४ ५ र ४ २ १ २ २ १ २र
II चन्द्रमाआ । प्सू३आन्ता३रा । सुपर्णोधाव ।

---

* "अप्स्वं१तरा"--इति ऋग्वेदीय-पाठः ।

---

१८५ ऋग्वेदस्य १, ७, २०, १ ।
१०७क,

१ २ ३ २ १ ३र १ २र १ २
तार३इ। दिविया। नवे ा२ह्विरण्यने मयःपदंविन्द।
१ ५ २ १ १ २
तिविद्यूता२३४च्चाइ। वित्तं्चोइ। मआ२३च्चो। स्य-
१र २ १
रोदा२३सा२३सा३४३इ। ओ२३४५इ। डा॥ ३२॥

५ २ ४ ५ ४ ५ १ २र र १
III चन्द्रमा३आप्सुवन्तरा। सुपर्णोधा। वताइ-
२ १ ३र २ २र १ २
दा१इवो२। नवो२ह्विरण्यनेमयः पदं विन्द। तिवि-
१ २ १ २ २ १र २
द्यूता२३ः। वित्तंचोइ। मआ२३च्चो। स्यरोदा२३सा-
१
३४३इ। ओ२३४५इ। डा॥ ३३॥

५ ४ ५र ४ १ र र २ १र
IV चन्द्रमाअप्सुवा। तरा। सुपर्णोधावतेदा२३इ-
२ १ १ २ र १ २
वो। नवा२३च्चोइ। ह्विरण्यनेमयःपदंविन्द। तिवि-
१ २ १ १ २ १
द्यूता२३ः। वित्तं्चोइ। मआ२३इच्चो। स्यरो२३।
१ ३ ५र र २ ५
दा२सा२३४औहोवा। ज३२३४पा॥ ३४॥

---

I,II,III त्रैतानि त्रीणि।

V चन्द्रोह्रोमाप्स्वन्तरा । ओ६वा । सुपर्णोधावते-
दाइवाये३ । ह्रोवा३ह्रोरइ । ऊवा३४५इ । नवोचाइरण्य-
नाइमायार३ः । ह्रोवा३ह्रोरइ । ऊवा३४५इ । पदं-
विन्दन्तिवाइद्युतार३ः । ह्रोवा३ह्रोरइ । ऊवा३४५इ ।
वित्तंमे अस्यरोदासाये३ । ह्रोवा३ह्रोरइ । ऊवा३ओ
५वा६५६ । ऊ३२३४पा ॥ ३५ ॥१८५

"अप्सु" आन्तरिक्षासु(१) उदकमये मण्डले "अन्तः" मध्ये वर्त्तमानः "सुपर्णः" शोभन-पतनः [यद्वा । सुपर्णइति रश्मि-नाम(नै० १,५,१५)]सुषुम्णाख्येन सूर्यरश्मिना युक्तः "चन्द्रमाः(२)" "दिवि" द्युलोके "आधावते" आभिमर्यादायाम् । एकेनैव प्रकारेण धावतिशीघ्रं गच्छति । तादृशस्य चन्द्रमसः सम्बन्धिनः । हे

IV,V सौपर्णे द्वे ।

(१)—"आपः"-इति अन्तरीक्ष-नामसु अष्टमं नैघण्टुकम् (१,३) ॥

(२)—"चन्द्रमाश्चायन्द्रमति चन्द्रो माता चान्द्रं मानमस्येति वा । चन्द्रश्चन्दतेः कान्ति-कर्मणश्चन्दनमित्यप्यस्य भवति चारु द्रमति चिरं द्रमति चमेर्वा पूर्वम । चारु रुचे र्विपरीतस्य"-इति,(नि० दै० ४ ४ ।

अथ दशमी।

अवस्युर्ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रतिप्रियतमꣳरथंवृषणंवसुवाहनम्।
३ १ २ ३ १ २ २ २ ३ २ ३ १ २ ३
स्तोतावामश्विनावृषिस्तोमेभिर्भूषति*प्रतिमाध्वीममश्रुतꣳ
१ २
हवम्॥ १० ॥१८६

॥ तृतीय-दशति ॥

"हिरण्यनेमयः" सुवर्ण-सदृश-पर्यन्ताः! [यद्वा। हित-रमणीय-(३) प्रान्ताः] "विद्युतो" विद्योतमानाः रश्मयः "वो" युष्माकं "पदं" पदस्थानीयम् "अग्र" "विन्दन्ति" मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभ्यते। अतइदं नोचितं तस्मात् कूपात् मामुत्तारयतेत्यर्थः। अपिच हे "रोदसी" द्यावापृथिव्यौ! "मे" मदीयं "अस्य"(४) इदं स्तोत्रं "वित्तं" जानीतम्॥ ८ ॥१८५

* "स्तोमेनप्रतिभूषति"-इति ऋग्वेदीय-पाठः।

१८६ उत्तरार्चिकस्य ८,३,१२,१ = ऋग्वेदस्य ४,४,१५,१ = ऊहे ११,१,३६ = ऊह्ये ४,१८।

(३)—"हिरण्यं कस्मात् ह्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हित-रमणं भवतीति वा हृदय-रमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्सा कर्मणः"-इति नि० २,१०।

(४)—'द्वितीयार्थे षष्ठी' इति वि०।

१ ५ ४५ ४ ५ १ २
I प्रा२३४। तिप्रियतमम्। राथोम्। वार्षणव।

१र २ १र २ २ १ १ ५
सुवाद्दा२३नाम्। स्तोतावा३मा३। श्विना२वा२३४षीः।

१र २ २ १ २ १ ५ १र २
स्तोमाइभोइभं३। षातिप्रा२३४तो। माध्वाइमा३-

२ १ ४ २ ५
मा३। अ२३ताम्। द्दा३४५वो६द्दाइ॥ ३६ ॥ १८६*

हे "अश्विनौ !" (१)(एकः प्रति-शब्दोऽनुवादः) "वां" युवयोः "प्रियतमं" "रथं" "स्तोता" "ऋषिः"(२) "स्तोमेभिः" स्तोमैः

---

I त्वौशम्।

(१)—"अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः। अश्वैराश्विनावित्यौर्णवाभः। तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः। तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनुतमोभागो हि मध्यमो ज्योतिर्भाग आदित्यः" इति नि० दै० ६, १।

(२)—'ऋषिः अवस्युर्नाम, आत्मानमेव परोक्षरूपेण प्रथमपुरुषेण निर्दिशति'-इति वि०।

---

॥ इति अष्टम प्रपाठकः ॥

"प्रतिभूषति" अलङ्करोति। कीदृशं रथं ? "वृषणं" फलानां वर्षितारं। "वसुवाहनं"(३) धनानां वाहकं (ईदृशं रथमागमनाय स्तोतीत्यर्थः) तस्मात् हे "माध्वी" ! मधुविद्या-वेदितारौ(४) "श्रुतं" शृणुतम् ॥ १० ॥ १८६

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

अथाष्टमे खण्डे —

सैषा प्रथमा।

वसुश्रुतऋषिः* ।

१ २          ३ १ २   ३ १ २

आते अग्न इधीमहि द्युमन्तं देवाजरम्।

३ २ ३ १ २ ३ २ ३   १ २ ३ १र   २र   ३ १ ३

यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य-

१ २

आभर ॥ १ ॥ १८७

---

* 'वत्सस्यार्षम्'-इति वि०।

---

१८७ उत्तरार्च्चिकस्य ३,२,२१,२ = ऋग्वेदस्य ३,८,२२,४ = जहे ३,१६—१७,६।

(३)—'वसु धनम् उह्यते प्राप्यते नीयते येन स वसुवाहनस्तं वसुवाहनं धनस्य नेतारम्' इति वि०।

(४)—'मधुपूर्णौ'-इति वि०। 'इकारोमत्वर्थीयः'-इति च वि०।

१ र५ र ४५ २
I ओम्॥ आ२३४। तेअग्नइधी। माहाइ। द्युमन्तं

र १ २३२ १ २ २ १ ३
देवा३। आ२३। जरमा। यद्वास्या३ता३इ। पानी२या-

५ २१२र १ ०३२ १
२३४सी। समिद्दी२दय। ता१३इ। द्यविया। इषा ए

२ २ १ ४ २ ५
स्तो३तृ३। भ्या२३आ३। भा३४५रो६हाइ॥ १॥

३र ४र५ र २ ४ ५ २ ४र५ ४ ५
II आतेअग्नइधी। मा३हाइ। द्युमन्ता३देवअजरम्।

३४ ३र ४र ३ ४र ५ र ४ ३ ४र२ ४ ५ २१ २
यद्वस्याते पनीयसी। समिद्दीदयताइ। ऊ३म्द्युम्।

२ ५ १ र २ २ १ २
द्या२३४वी। इषए स्तोतृभ्या३आ। द्युं३म्द्युं३४३म्।

२ ५
भा३४५रो६हाइ॥ २॥ १८७

हे "अग्ने" देव! "द्युमन्तम्" दीप्तिमन्तम् "अजरम्" अजीर्णम्
"ते" "आ" सर्वतः "इधीमहि"(१) दीपयामः। "यद्" खलु

I,II सप्तये द्वे।

(१)—'ञिइन्धी दीप्तौ'-इत्यस्य रूपम्।

अथ द्वितीया।

विमदऋषिः।

१र २र ३ १ २
अग्निंनस्ववृक्तिभिर्होतारंत्वावृणीमहे।

३ १ २ ३१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३
शोरम्यावकशोचिषंविवोमदेयज्ञेषुस्तीर्णबर्हिषं

१ २
विवक्षसे*॥ २ ॥ १८८

२ ३ ५ १र २ ३ १ १
I हाउ। औहोर३४वा। अग्निन्नस्ववृक्तिभीर३-

११ २ २ ५ १र१र र र ३
४५ः। हाउ। औहो२३४वा। होतारन्त्वावृणीमहे-

"ते" त्वदीया "स्था" सा "पनीयसी" स्तुत्यर्हा(२) "समिद्" दीप्तिः "दीदयति" दीप्यते "द्यवि" द्युलोके। किञ्च। "स्तोतृभ्यो" ऽस्मभ्यं "इषम्" अन्नम्(३) "आभरा" आहर॥ १ ॥ १८७

---

* "यज्ञायस्तीर्णबर्हिषेविवोमदेशीरम्यावकशोचिषं विवक्षसे"-इति ऋग्वेदीय-पाठः।

---

१८८ ऋग्वेदस्य ७,७,४,१ ॥

I उत्सेधम्।

(२)—"पनते"-इति अर्चति-कर्मणो रूपम् (नै० ३,१४,११)।

(३)—"इषम्"-इत्यन्न-नामसु चतुर्दशतमं पदम् ( नै० २,७, )।

१ १ १ १ २ ५ २ र १ २ र १ र
२३४५। हाउ। औहो३३४वा। शोरंपावकशोचि-

३ ३ ५ २ ३ ५
षम्। विवोमा२२४दाइ। हाउ। औहो२३४वा।

२ १ २ र १ २ ३ १ १ १ १ २ ३ ५
यज्ञाइषुस्तीर्णबर्हिषा२३४५म्। हाउ। औहो२३४वा।

१ २ १ १ १ १ १
विवक्षसे२३४५॥ ३॥

५ र र १ र २ र र र
॥ अग्निन्नस्ववृक्तिभिर्हइहाहाइ। होतारंत्वावृणीम-

१ २ १ २ २ र १ २ र १ २ र १ २ १ २
हइहइहा३। हाइ। शोरंपावकशोचिषमिहइहा३।

२ ३ २ ३ ५ २ १ २ र १ २ १ १ १
हाइ। विवोमा२३४दाइ। यज्ञाइषुस्तीर्णबर्हिषमिहइ-

२ २ १ ३ ५ र र ३ ५
हा३। हा३इ। वा२इवा२३४औहोवा। हा२३४से

॥ ४॥ १८८

हे अग्ने! तव स्वभूते "विमदे"(१) एतदाख्ये ऋषौ मयि "इयं" स्तुतिः प्रवृत्तास्ति (नेति सम्प्रत्यर्थे) न आतोऽवयमिदानीं "स्वह-

II निषेधम्।

(१)—अत्र हि भाष्यपुस्तकेषु 'विमदे'-इत्येव पाठः अथवा च: इत्यस्य व्याख्यानं न कृतम्। विवरण-ग्रन्थे तु 'विमोमदे' इत्येव पाठः, तथाच—तव 'विभः', 'मदे'-इति च पृथक् व्याख्यातम्।

अथ तृतीया।

सत्यश्रवा ऋषिः।

३ १२ ३ १२ ३ १ २ ३ २ ३ १ २
महेनो अद्यबोधयोषोरायेदिवित्मती।

१ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
यथाचिन्नो अबोधयः सत्यश्रवसिवाय्ये सुजाते अश्व-

सूनृते॥ ३ ॥१८९

भिः" स्वयङ्कृताभिः दोष-वर्जिताभिः स्तुतिभिः "होतारं" देवानामाह्वातारं होम-निष्पादकं वा "अग्नि" "त्वा" त्वाम् "आहुणीमहे" आभिमुख्येन सम्भजामहे। कीदृशं? "यज्ञेषु" यागेषु "स्तीर्णबर्हिषम्" आसादितबर्हिष्कम्। "शीरम्" ओषध्यादिषु सर्वत्रानुशायिनम्(१)। "पावकशोचिषं" शोधक-दीप्तिं(२)। "विवक्षसे" (महन्नामैतत) हे अग्ने! त्वमपि महान् भवसि। [यद्वा। "विमदे" यज्ञस्य सम्बन्धिनः सोमस्य पान-जन्य-विविध-मदार्थं "त्वामाहुणीमहे" इति योज्यम्]॥

"शीरम्पावकशोचिषंविवोमदेयज्ञेषुस्तीर्णबर्हिषंविवक्षसे"-इति छन्दोगाः। "यज्ञार्थंस्तीर्णबर्हिषोविवोमदेशीरम्पावकशोचिषंविवक्षसे"-इति बह्वृचाः॥ २॥ १८८

---

१८९ उत्तरार्च्चिकस्य ८,३,११,१ = ऋग्वेदस्य ४,४,२१,१ = ऊह्ये ४,१७।

(१)—"अनुशायिनमिति वा शिनमिति वा"-इति नि० १०,१५।

(२)—"पावक-दीप्तिम्"-इति नि० १०,१४।

३ २　　　२ ५ र　४　५ र　५　१
I मद्दा३४इ । मद्देनोअद्य । बोधा६या । उषो-
२ र　१　२　१ २ २　१ २ २
राये । दिवित्मा२३ती । यथाचो३न्ना३ः । आबोधा-
५　१　२ २　१ २　५　१
२३४याः । सत्याश्रा३वा३ । सिवा२या२३४या३ । सु-
२ २　१ ४　२　५
जाता३आ३ । श्वा२३सु३ । ना३४५न्नौ६हाइ । ५ ॥१८९

"अद्य" अस्मिन्यागदिने हे "उषः" उषोदेवि !(१) "दिवित्मती" दीप्तिमती(२) त्वं "नो" ऽस्मान् "महे" महते "राये" धनप्राप्तये "बोधय" प्रज्ञापय प्रकाशयेत्यर्थः । सति प्रकाशे क्रतु-द्वारा द्रव्यस्योपार्जयितुं शक्यत्वात् । "यथाचित्" यथैव पूर्वं नोऽस्मानबोधयः, अतीतेषु यथा बोधितवती तद्वदद्यापीत्यर्थः । हे "सुजाते"(३) शोभनं जातं जन्माविर्भावो यस्यास्तादृशि ! हे "अश्वसूनृते",

I सत्यश्रवसश्च वाय्यस्य साम ।

(१)—अश्विनोः परस्तात् उदयात् पुरस्ताच्च यः कालः, तदात्मिका देवी उषाः देवी, सूर्यैत्यपीत्युच्यते सूर्या-दुहितेत्यपि वर्ण्यते ( नैरुक्तं द्रष्टव्यम् ) ।

(२)—'दिवो दुहिता'-इति वि० ।

(३)—अत्र हि अर्द्धमेकारोच्चारणं पारिषत्कृतिः श्रूयते । तथाचोक्तं भगवता पतञ्जलिना प्रथमाध्यायीय-प्रथमपाद-द्वितीयाह्निके—"ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारञ्चाधीयते—सुजाते अश्वसूनृते"-इत्यादि, "पारिषत्कृतिरेषा"-इत्यादि च । अपि च "सुजाते अश्व"-इत्यत्र हि सन्ध्यभावस्तु "प्रकृत्यान्तःपादमव्यपरे (६,१,११५)"-इति सिद्धम् ।

अथ चतुर्थी।

विमदऋषिः।

३ १र २ ३ १ २ ३ २ ३ १ २ ३ १र २र

भद्रन्नोअपिवातयमनोदक्षमुतक्रतुम्।

१ २ ३ १र २र ३ २ ३ २ ३ २ ३ २ ३ १र २र ३ १ २

अथातेसख्येअन्धसोविवोमदेरणागावोनयव*संविव-

क्षसे॥ ४॥ १९०

२ १ ४ ५र १ ५र १ २

I भद्रन्नो२३अपिवातया। मनो२द। क्षाम्। ऊत-

३ ५ १ १र र १ २र ३ २ १ ३

क्रा२३४तूम्। आथाते। सा। ख्येअन्धसा३ः। वि-

२ २ ५ १ ५र १र ५र १ २ १

वोमा२३४दाइ। रणा२गावा२नय। वसाये३। वा२-

३ ५र र ३ ५

ड्वा२३४औहोवा। क्षा२३४से। ६॥ १९०

प्रियसत्यात्मिका स्तुतिवाग्यस्याः सा हे तादृशि देवि !(४) "वाय्ये" वय-पुत्रे "सत्यश्रवसि" मयि(५) अनुगृहाणेयं॥ ३॥ १८९

हे सोम! त्वं "नोऽस्मदीयं "मनः" "भद्रं" कल्याणं "प्राप" शुभ-सङ्कल्प-लक्षणं "वातय" गमय (अस्माक परः शुभसङ्कल्पं

* "रणन्गानयव"--इति ऋग्वेदीयः पाठः।

१९० ऋग्वेदस्य ७,७,२,१।

1 पौषम्।

(४)—'अमृतमते-आदित्यभार्ये' इति वि०।

(५)—'सत्यश्रवोनाम राजा वाय्यः'-इति वि०।

अथ पञ्चमी।

गोतमऋषिः।

१ २ ३१ २ ३२३ १२ २ ३ १ २
क्रत्वामहा ँ अनुष्वधंभीमआवावृते*शवः।
१ २ ३१२३ २ ३ २ ३१२ ३२ ३१ २ ३ १ २
श्रियऋष्वउपाकयोर्निशिप्रीहरिवांदधेहस्तयोर्वज्र-

३ २
मायसम्॥ ५ ॥१९१

कुर्वित्यर्थः) तथा "दक्ष" वृद्धमपि सर्वव्यापिनमन्तरात्मानमपि(१) "भद्र" शुभ-कारित्व-लक्षणं प्रापय (अस्माकमन्तरात्मानं शुभ-कारिणं कुर्वित्यर्थः) "उत" अपिच "क्रतु" प्रज्ञानं भद्रं "शुभा-ध्यवसाय" लक्षणं प्रापय(शुभाध्यवसायिनं कुर्वित्यर्थः) "अथ" अनन्तरं स्तोतारः "ते" तव "सख्ये" स्तुत्यस्तोतृत्वे(२)ज्य-यष्टृत्व-लक्षणे सखि-कर्मणि रमतामिति शेषः॥ तत्र दृष्टान्तः—"यवसे" घासे "रणाः"प्रीति-युक्ता गावा "न" गावइव (ता यथा प्रीतिं कुर्वते तद्वत्। कस्मिन् सति? "अन्धसः" सोमाख्यस्यान्नस्य सम्ब-न्धिनि वस्तुनि "विमदे"(१) विविध सोम-जन्य-मद-निमित्ते सति। कस्मादेवं? यस्माद् "विवक्षसे" महान् भवसि॥ ४ ॥ १९०.

---

* "वावृधे"--इति ऋग्वेदस्य।

---

१९१ ऋग्वेदस्य १,६,१,४।

(१)-- 'दक्षं शोधनं' इति वि०।

(२)—'विवोमदे' इत्यत्रस्याः 'विमदे' इति व्याख्यातम्, वो इत्यस्य व्याख्यानं क्वापि नोपलभ्यते।'

५ र र ५ २र र र १ २
। क्रत्वामहाँ३अनुष्वधाईमे। भीमआवावृ३ताइग्रा-

१ २ १ २ ३ ५ २ र
१वा२ः। श्रियऋष्वा३ः। ऊपाका२३४योः। निशिप्री-

१ २ १ २ २ २ १ ५
हरी३वांदा१धा२इ। हस्तायो३र्वा३। ऊमो२३४वा।

४ ५
या५सो६हाइ। ७ ॥ १९१ ॥

"क्रत्वा" कर्मणा प्रज्ञया वा "महान्" सर्वाधिकः "भीमः" शत्रूणां भयङ्कर इन्द्रः "अनुष्वधं" "स्वधेत्यन्न-नाम (नै० २,७, १७)। स्वधायां [विभक्त्यर्थेऽव्ययीभावः(१)] सोम लक्षणस्यान्नस्य पाने सतीत्यर्थः। "शवः" आत्मीयं बलं "आवावृते" आभिमुख्येन प्रावर्त्तयत्। तदनन्तरम् "ऋष्वो" दर्शनीयः(२) "शिप्री" हनुमान्। नासिकावान्वा(३)। "हरिवान्" हरिश्यामश्वाभ्यमुपेतः इन्द्रः "उपाकयोः" समीप-वर्त्तिनोर्हस्तयो

I औषसम्।

(१)—"अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्द-प्रादुर्भाव-पश्चाद्-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्त वचनेषु"-इति (पा० २,१,६) अनेनैवेति भावः।

(२)—"ऋष्वः"-इति [illegible]मसु तृतीयं नैघण्टुकम् (३,३)।

(३)—"शिप्रे हनू ना[illegible]"-इति नै० १२,१७।

अथ षष्ठी।

गौतम* ऋषिः।

३ १२ २२३ २३१२ ३ १२
सघातंवृषणꣳरथमधितिष्ठातिगोविदम्।
१२ २२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २२
यःपात्रꣳहारियोजनम्पूर्णमिन्द्राचिकेततियोजान्वि-
३ १ २
न्द्रतेहरी॥ ६ ॥१९२

३ ४२३ ४५ ३२ ३२ ४२ ५ १ २२
I सघातंवृषणम्। रथा३४औहोवा। आधितिष्ठा।
१ २ १२ २ १ ७ ३
तिगोवा१इदा२म्। यःपात्रꣳहां। रीयो२जा२२४-

वोष्ठोः(४) "आयसं' अयोमयं वज्ञं "श्रिये" सम्पदर्थं "निदधे" निदधाति स्थापयति (सोम-पानेन हृष्टः प्रबलइन्द्रः गवां हन-नाय हस्तेवज्रं गृह्णातीत्यर्थः॥ ५ ॥ १९१

* 'गौतम'-इति वि० पाठः।

१९२ ऋग्वेदस्य ६,२,४।

I लौगम्।

(४)—"उपाके"-इति चत्रिक-सामस्य सप्तमं पदम् (२,१६)।

अथ सप्तमी।

वसुश्रुत ऋषिः।

३ १र २र ३ २उ ३ २ १र १र २र ३ १ २
अग्निंमन्येयोवसुरस्तंययन्तिधेनवः।

३ १ २ ३ २उ ३ १ ३ २ ३ १ २ ३ २ ३
अस्तमर्वन्तआशवोस्तंनित्यासोवाजिनइषं स्तोतृभ्य

१ २
आभर॥ ७॥ १९३

५ २र १ २ ३ ५ १र २
नाम्। पूर्णमि। द्रा। चीकेता२३४ती। योजानू३-

२ १ ३ ५र र ३ ५
वा३६। द्रा२ता२३४औहोवा। वा२३४री। ८॥१९२॥

"मघा"(१) स खल्विन्द्रः "वृषणं" कामाभिवर्षकं "गोविदं" गवां लम्भयितारं(२) "रथम्" "अधितिष्ठाति" ईदृशे रथेऽधितिष्ठतु आरूढ़ो भवतु। हे इन्द्र! "यो" रथः "हारियोजनं" एतत्सञ्ज्ञं धाना-मिश्रितं "पूर्णं" सोमेन पूर्णं "पात्रं" "चिकेतति" ज्ञापयति (तं रथमधितिष्ठेति पूर्वत्रान्वयः) अधितिष्ठाय "ते" त्वदीयौ "हरी" अश्वौ "नु" क्षिप्रं "योज" रथे योजय॥ ६॥ १९२

---

१९३ उत्तरार्चिकस्य ८,२,१०,१ = ऋग्वेदस्य ३,८,२२,१ = जहे ४,१६।

(१)—'घा'-इति दीर्घपाठः। तत्र "निपातस्य च (६,३,१३६)" इति दीर्घः।
(२)—'गोविदं गाः येन लम्भितं'-इति वि०।

I अग्निन्ता३म्मन्येयोवद्धः। अस्तंयंया३। तीधेना-
२३४वाः। अस्तमर्वा३। ताआ२शा२३४वाः। अस्तन्नि-
त्या३। सोवा२जा२३४इनाः। इषाऽस्तो२तृ३४। व्वा-
ह्यो२३४व्वा। भ्या२३आ३। भा३४५रो६हाइ॥ ८॥१९३

"तम्" अग्निं "मन्ये" स्तौमि। "यः" अग्निः "वसुः" वासकः। "यम्" "अस्तं" सर्वेषां गृहवदाश्रयभूतं(१) "धेनवः" गावः "यन्ति" गच्छन्ति प्रीणयितुम्। "अस्तम्" उक्तलक्षणम् "अर्वन्तः" अरणवन्तोऽश्वाः "आशवः"(२) शीघ्रगामिनः यन्ति। तथा "नित्यासः" नित्यप्रवृत्ता[?] जिनः"(३) हविर्लक्षणान्नवन्तो यजमानाः "यमस्तं" 'यन्ति' तम् मन्ये। "इषम्" अन्नं "स्तृभ्यः" अस्मभ्यम् "आभर" आहर इति॥ ७॥ १९३

---

I निषेधः साम।

(१)—"अस्तम्"-इति गृहनामसु पञ्चमं नैघण्टुकम् (३,४)।
(२)—"आशु","आशु"-इति द्विलिङ्गमेव पदं पाठभेदेन निघण्टौ दृश्यते(२,१५,१६)
(३)—'वेगवन्तः'-इति वि०।

अथाष्टमी।

अंहोमुग्वामदेव्यऋषिः।

२उ ३ १ २३ १र २र ३ १ २
नतमꣳहोनदुरितंदेवासोअष्टमर्त्यम्।

३ १ २ १ २ ३ २ ३१र २र ३ २ १ २ ३ १ २
सजोषसोयमर्यमामित्रोनयति*वरुणोअतिर्द्विषः ॥८॥ १९४

॥ चतुर्थ-दशति ॥

४ ५र ४ ५ ४ ५ ४ ५ १ ५र र
I नतमꣳहोनदुरितम्। ईयइयाहाइ। दाइवा२सो·

१ २ १ २१र २१ २ १र २र १ २१र र
अष्टमर्त्तियमी। यइया२३हाइ। सजोषसोयमर्यमाई।

२१ २ १ २ १ ३
यइया२३हाइ। माइत्रोनाया३। तिवा२रु२३४५णा-

१ २ १ २ १ १ १ १
ई५६ः। अतिद्विषा२३४५ः॥ १० ॥ १९४

हे "देवासः" देवाः! [आज्जसेरसुक् (७,१,५०)] "तं" मर्त्यं

* "नयन्ति"--इति ऋग्वेदीयपाठः।

१९४ ऋग्वेदस्य ८,७,१३,१।

I गोराङ्गिरसस्य साम।

मनुष्यम् "अंहः" पापं दुरितं तत्फलरूपं दुर्गमनञ्च "नाष्ट"(१) न प्राप्नोति (अश्नोतेर्लुङि, झलोझलीति सिचोलोपः, अडभावश्छान्दसः) "अर्यमा" अरीन् नियच्छति इति एतन्नामकोदेवः। (नयन्ति मत्रन् एते) "मित्रः" (प्रमीतेः) त्राता देवश्च नयति। "वरुणः" पापानां निवारको देवः "यं" "नयति"। एते त्रयो देवाः "सजोषसः" सङ्गताः समानाः प्रीयमाणा वा भवन्तः "द्विषः" द्वेष्टॄन् अतिक्रम्य "यं" स्तोतारं नयन्ति (प्रत्येकविवक्षया एकवचनम्) तत्राष्टेत्यन्वयः॥ ८॥ १९४

इति श्रीसायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्याष्टमः खण्डः॥ ८॥

॥ इति पाङ्क्तम्॥

---

परिप्रधन्वप्रभृतिऋचस्त्रिंशद्भवन्ति(क) हि।
एतासान्तु ऋषिच्छन्दोदेवतास्तु पृथक् पृथक्।
वक्ष्यन्ते सायणार्येण(ख) तत्र तत्र परिस्फुटम्॥

---

(१)—"नाष्टः", "नाष्ठः", "नाष्ट"—इति वा निघण्टौ व्याप्तिकर्मसु पञ्चमं पदं पाठभेदेन पठ्यते (२,१८)।

(क)—तत्र, "परिप्रधन्वेन्द्रायेत्यादि दशर्चं प्रथमं दशत्, "विश्वतोदावन्विश्वतो" इत्यादि दशर्चं द्वितीयम्, "अचेत्यग्निः"-इत्यादि "इन्द्रोविश्वस्यराजतीत्यन्तं दशर्चं तृतीयमिति विवेकः।

(ख)—एषा पूर्वाचार्य-लेख-प्रोक्ती यद्यप्यस्माभिः परोक्षेण निर्दिश्यति सायणाचार्येणेति। १।

अथ नवमखण्डे—

सैषा प्रथमा।

आद्यानां पञ्चां ऋण-त्रसदस्यू सहिताहृषी,

पवमानो देवता। तत्रादिर्द्विपदा(०)।

२ ३ २ १ २ ३ १ ३ १ २ ३ १ र १ र
परिप्रधन्वेन्द्रायसोमस्वादुर्मित्रायपूष्णेभगाय ॥१॥ १९५

४ ५ ४ ५ ४ १ र र १ ५
I परिप्रधन्वा। इन्द्रायसोमास्वा१दू२३४:। हाइ।

२ १र २र१र ५ १ ५ ५
मित्राया। पूष्णेभा२३४हाइ। गा२३४योइहाइ॥ ११ ॥

४ ५ ४ ५ ४ १ र र ऽ २ ऽ २
II परिप्रधन्वा। इन्द्रायसोमा। ओ३हा। ओ३हा।

---

१९५ उत्तरार्च्चिकस्य ६,१,८,१ = ऋग्वेदस्य ७,५,२०,१ = ऊहे ६,२०—१,५,१,५,१,९,२,१०—१०,९—१२,७—१४,४ १७,२,६—२१,१९ = ऊह्ये ३,२,१४।

I,II इन्द्रस्य सङ्क्रमे द्वे।

(०)—"पङ्क्तिः पञ्चमी पञ्चपदा"-इति दैवतब्राह्मणानुशासनम् (३,१२)। "पङ्क्तिः पञ्चपदा"-इति नैदानम् (७,११)। सर्वं ह्येतत् पञ्चाक्षरपदाभिप्रायेण, गायत्र्यास्तथैव दर्शनात्। वस्तुतस्तु "गायत्र्यावसवः, चत्वारि क्रमात् वर्द्धन्ते"-इति पिङ्गलानुशासनात् चत्वारिंशदक्षरा पङ्क्तिः, दशाक्षरं च तस्याः पादमेकम्। सा च छन्दःशास्त्रानुशासनात् (६अ०) विविधा। प्रस्तारपङ्क्तिः, विष्टारपङ्क्तिः, संस्तारपङ्क्तिः, अक्षरपङ्क्तिः, पदपङ्क्तिरिति नामलक्षणयोर्भेदात्। सेयं द्विपदा, पदपङ्क्तौ गण्यते।

र १　र　　　　५　२　　५　२　　३र २　　५र र
स्वादुर्मित्राया। ओ३हा। ओ३हा। पूष्णा३४औहोवा।

२　　११११११
भगा३या२२४५॥ १२॥

३२　१　　　३　　५　　३　२　१
III परी३होइ। प्रधा२३४न्वा। इन्द्रा३हो। य-

३　　५　　३र २　१　　　३　　५　　३र २　१
सो२३४मा। स्वादु३हौइ। मित्रा२३४या। पूष्णो३होइ।

३　　५　　४र ३र ४र ५　　३र २　　　२
भगा२३४या। पूष्णेभगाय। पूष्णो३४३। हो३४३इ।

२　४　　　　२　　१　२ ३ १ १ १ १
भा३गा५या६५६। ए३। सुवर्वते२३४५॥ १३॥

२　२　　　　　　१　२　　३　　५　　२
IV हा३हाइ। परिप्रा३धान्वा। ए२३४हिया। हा-

२　　　२　　र　　१　२　　३　　५
३हाइ। हा३हाइ। इन्द्राया३सोमा। ए२३४हिया।

१　२　　२　२　　र　　१　२　　३　　५
हा३हाइ। हा३हाइ। स्वादुर्मी३त्राया। ए२३४हिया।

---

III स्वर्निधनं सौहविषम्।
IV सौहविषम्।

होइहाइ। हाइहाइ। पूष्णेभाइगाया। ए२३४-
हिया। हाइहा२३४३इ। ओ२३४५इ। डा॥ १४॥

V प। र्येपारो। प्रधन्वा। होवाइहोइ। इन्द्रा-
यसोमा। होवाइहोइ। स्वादुर्मित्राया। होवाइहो-
येइ। पूष्णेवाओ२३४वा। भगा५याउ। वा॥१५॥१९५

हे "सोम!" "स्वादुः" स्वादुरसस्त्वं "इन्द्राय" "पूष्णे"(१) "भगाय"(२) एतेभ्यो देवेभ्यः "परिप्रधन्व" परितः पात्रेषु प्रक्षर॥ १ ॥ १९५

---

V वाङ्निधनंसौहविषम्।

(१)—"पूषा"-इति निघण्टावन्तरीक्षदेवतासु सूर्यात् परं गणितम् (५,६)। व्याख्यातश्चैवं यास्कः—"यद्रश्मिपोषं पुष्यति तत् पूषा भवति"-इति।

(२)—"भगमादित्यः"-इति नै॰२,१९। "भगो व्याख्यातः (३,१६) तस्य कालः प्रागुत्सर्पणात्'-इति च नै॰९, १२।

अथ द्वितीया।

त्रिपदा अनुष्टुप्पिपीलिकमध्या(°)।

३ १र २र ३ १ २ ३ १ २ ३ १ १ २ १ २
पर्यु षु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः।
३ २ ३ १ २ ३ १ २
द्विषस्तरध्या ऋणया न ईरसे॥ २॥ १९६

२ र र र १ २ १ २
I पर्यू षु प्र धन्वा वाजा३सा। तायाइ। ओइ। पारी।
१ २र १ ७ १
ओइ। वृत्राणि। सक्षणिः। द्वाइषस्तारा२। धि-
१ १र १
या२इ। अर्णाया२ः। ना२ः। ईरासा२३इ। ओ-
२ २ १
ये३। रसा३४३इ। ओ२३४५इ। डा॥ १६॥

५ २ १ र २ १ २ ३ ५
II पर्यू षु। प्रधन्वावा३। जासाता२३४याइ।
२ र १ २ २ १र २ २
परि वृत्राणि सक्षणिः। द्विषास्ता३रा। धियाऋणया१ना-
२ १ २ ५
३ई। इम। रा३४४सो६हाइ॥ १७॥

---

. १९६ उत्तरार्चिकस्थ ६,१,७,१ = ऋग्वेदस्य ७,५,२२,१ = ऊहे ३,१,७।

(°)—"पिपीलिका—पेलतेर्गतिकर्मणः, पिपीलिकमध्येत्यौपमिकम्"-इति दैवत-ब्राह्मण-तृतीयखण्डे। एतदेव पाठभेदेन निरुक्तावपि, तद्यथा "पिपीलिकमध्ये-त्यौपमिकं, पिपीलिका—पेलतेर्गतिकर्मणः"-इति (दै० १,१३)।

४ ५ १र र र र र ८
III प। यैंपारौ। ऊषुप्रधन्वावाजसातयेपरिवृत्रा-

२ १ १ १ र र
णिसक्षणिर्वा२३इषाः। ता२३रा। धियाऋणयानश्रो·

२ १ ५ ४ ५
वा३त्र्मा२३४वा॥ रा५सो६हाइ॥ १८ ॥१९६॥

हे "सोम!" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायेव "परि-प्रधन्व" परितः प्रगच्छ। [यद्वा। "वाजसातये" अन्नलाभाय(१) सङ्ग्रामं प्रगच्छ।] किञ्च। "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् "परि" गच्छ। तदेवोच्यते—"नः" अस्माकं "ऋणया"(२) "ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै"(३) तरीतुं हन्तुम् "ईरसे"(४) परिगच्छसि।

"ईरसे"—"ईयसे"-इति पाठौ॥ २॥ १९६

---

I,II,III वाक्यानि त्रीणि।

(१)—'अन्नसम्भजनाय'-इति वि०।

(२)—'ऋणया'-इति तु "सुपां सुलुगित्यादिना' (७.१.३९) सुपोऽयाचि लामितुं पङ्क सुकरं यथा कौमुद्यां दर्शितं च सम्प्रर्थेति।

(३)—'तरध्यै'-इति "तुमर्थे से सेनऽसेन्"-इत्यादिना (३,४,९) सिद्धम्।

(४)—"ईरसे'-इति, निघण्टौ (२,१४)गति-कर्मसु पठितस्य "ईर्ते"-इत्यस्य लेटि (३,४,७) अडागमे (३,४,९४) रूपसिद्धम्।

अथ द्वमौषा।

द्विपदा(°)।

१२ ३१ २३२ ३२ ३२ ३ २ ३ १र २र
पवस्वसोममहांत्समुद्रःपितादेवानांविश्वाभिधाम ॥३॥ १९७

४५ र ४ १ २र १ २ १र ५र १र
I पवस्वसोमा। माहांत्समुद्राः। पितादेवाना-

१ ३ ५र र २१र १११ १
२३म्। वा२इश्वा२३४औहोवा। भिधामा२३४५॥ १८॥

५र ५ र ५ र १ ३ ५र
II औहो३वा। औहो३वा। औहो२वा२३४औ-

५ १ २र १र २१ २१र ५र १र ५र
हो६वा। पवस्वसोम। महांत्समुद्रः। पितादेवाना-

१ २र १ र ५र ५ २र २
२म्। विश्वाभिधामा२३४। औहो६वा। औहो३वा।

र १ ३ ५र ५ २ १ ११११
औहो२वा२३४औहो६वा। ए३। धर्मा२३४५॥२०॥ १९७

---

१९७ उत्तरार्चिकस्य ५,१,१७,१ = ऋग्वेदस्य ७,५,२०,४ = ऊहे ५,१,९—२१,३,८।

I धाम साम। II धर्म साम।

(°)—द्विपदा, पङ्क्तिरिति शेषः, विंशत्यक्षरत्वात्।

अथ चतुर्थी।

१ १   २ २उ ३ २ ३ २ ३ २ ३ १र २र

पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ ४ ॥ १९८

५र ५ २र २ १र ५ १ २ र

I औहोइवा। औहोइवा। औहोइवा। पवस्वसो-

१र २र   १ २र १ २ १   ५र १र ५र ३

म। महेदक्षाय। अश्वोननिक्तः। वा२जीधना२या-

हे "सोम!" "महान्" देवेभ्यो दीयमानत्वेन महत्वयुक्तः। "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति रसास्तादृशः(१)। "पिता" सर्वेषां पालयिता(२) त्वं 'देवानां" "विश्वा"(३) विश्वानि सर्वाणि "धाम"(४) धामानि शरीराण्यभिलक्ष्य "परि पवस्व" परि-क्षर ॥ ३ ॥ १९७

---

१९८ उत्तरार्चिकस्य ५,२,१८,१ = ऋग्वेदस्य ७,५,२०, १० = जहे ६,१,४।

(१)—"समुद्रः—इत्येतत् पार्थिवेन समुद्रेण सन्दिह्यते। समुद्रः—कस्मात्? समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येनमापः, सम्मोदन्तेऽस्मिन् भूतानि, समुदको भवति समुनत्तीति वा"-इति नि० २,१०।

(२)—"पिता—पाता वा पालयिता वा"-इति नि० ४,२१।

(३)—छान्दसं रूपम् (७,१,३९)।

(४)—सुपि रूपम् (७,१;३९)।

५र　२　१र　२　र१　३　५र
२३४। औहोइवा। औहोइवा। औहोरवा२३४उहोई-
५　२　१ २२ ११११
वा। ए३। विधर्मा२३४५॥ २१॥

४५ र४　१र　२　११
II पवस्वसोमा। महेदा३क्षाया२। अश्वोननिक्तो-
र२　५रर　२　११११
२३। वाजा४। औहोवा। धना३या२३४५॥ २२॥ १९८

हे "सोम!" "अश्वोन" अश्वः(१) इव "नक्तः" वसतीवरीभि-रद्भिर्विनिर्णिक्तः। "वाजी" वेगवान्(२) त्वं "महे" महते "दक्षाय" बलाय(३) "धनाय" धनार्थञ्च "पवस्व" क्षर।

'महे'—"क्रत्वे"-इति पाठो॥ ४॥ १९८

---

I, विधर्म साम।　　II धनसाम।

(१)—"अश्वः—कस्मात्? अश्नुतेऽध्वानं महाशनो भवतीति वा"-इत्यादि ने० २,२७।

(२)—'वेगवान् अन्नवान् वा'-इति वि०।

(३)—"दक्षः"-इति बलनामसु पठितं नैघण्टुकम् (२,९)।

अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ २ र

इन्दुः पविष्टचारुर्मदायापामुपस्थेकविर्भगाय ॥ ५ ॥ १९९

४ ५ ४ १ २ २ १ १ २ १

I इन्दुः पविष्टा। चा२३रुः। मदाया। अपामुपा-

२ १ ३ ५ र २ १ १ १ १ १

२३स्थाइ। का२वा२३४औहोवा। भगा३या२३४५।

॥२३॥ १९९

"चारुः" कल्याणरूपः "कविः" क्रान्तप्रज्ञः(१) "इन्दुः" सोमः। "अपाम्" उदकानाम् "उपस्थे" उपस्थाने अन्तरिक्षे पवित्रे वा "मदाय" मदार्थम्। "भगाय" भजनीयाय(२) धनार्थञ्च "पविष्ट" पवते(३) ॥ ५ ॥ १९९

---

१९९ ऋग्वेदस्य ७,५,२१,३।

I आगम।

(१)—'कविः मेधावी'-इति वि०। "कविः"-इति निघण्टौ च मेधावि-नामसु द्वाविंशं पदम् (३,१५)। "मेधावी—कस्मात्? मेधया महान् भवति"-इति, "मेधा? मती धीयते"-इति नैरुक्तम् (३,१९)। इत्यथापि प्रतिपन्नं कविः क्रान्तप्रज्ञइति।

(२)—'भगोभजतेः'-इति नि०१,७। निघण्टौ धननामसु च दृश्यते भगइति (२,१०,१०)।

(३)—'पविष्ट जातः'-इति वि०।

अथ षष्ठी।

त्रिपदा अनुष्टुप्। पिपीलिकमध्या।

ऋषिर्देवते पूर्ववत।

३ १ २ ३ १ २ ३ १ २ ३१ २ ३ १ २
अनुह्वित्वासुतꣳसोममदाममसिमह्वेसमर्यराज्ये।

१ २ ३ १ २ ३ १ २
वाजाꣳअभिपवमानप्रगाहसे ॥ ६ ॥ २००

४ ५ ४ १ २र १ २र १ २र ३
I अनु। अनू। ह्वाइत्वासुतꣳसोममदामसि। म-

र २ १ २ २ २ ५ १ १र २र १र
दामसायि३। मह्वा३४३इ। सा३४मा। यंराज्यं। वा-

२र १ २र३ २र १ २र १ २ ४
जाꣳअभिपवमान। पवमाना। प्रागाह्वसा। औहो-

५ ४
वा। ह्वो५इ। ४ डा ॥ २४ ॥ २००

हे "सोम!" "सुतम्" अभिषुतं "त्वा" त्वां वयम् "अनुमदा-मसि(१)हि" अनुमदामः अनुक्रमेणाभिष्टुमः खलु। हे "पव-

---

२०० उत्तरार्चिकस्य ६,१,७,३ = ऋग्वेदस्य ७,५,२२,२ ऊहे ६,१,१८—१९—८,२,८ = ऊह्य ३,१,७।

I वाजिनाꣳसाम।

(१)—"इदमोमसि (७,१,४६)"-इति मस इकारागमे रूपम्।

अथ सप्तमी।

वासिष्ठी। द्विपदा। मारुती।

१ क २र ३ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २
कई व्यक्ता नरः सनीडा* रुद्रस्य मर्या अथा† स्वश्वाः ॥ ७॥ २०१

४ ५र ४ ४ २ १ १
I कई व्या५क्ताः। नरःसा३नाइडा२ः। रुद्रस्यमर्या-

१ ३ ५र र २ १ १ १ १ १
२३ः। आ२था२३४औहोवा। सुवा३श्वा२३४५ः ॥२५॥

मान" पूयमान साम! स त्वं "महे" महति "समर्थराज्ये"(१)
महत् समनुष्यं त्वदीयं राज्यमनुपालयितुं "वाजान्"(२) अन्न-
बलान्यभिलक्ष्य "प्रगाहसे" प्रगच्छसि ॥ ६ ॥ २००

---

* "सनीका"-इति, † "अधा"-इति च ऋग्वेदीय-पाठौ।

---

२०१ ऋग्वेदस्य ५,४,२३,१।

I हिकं साम।

(१)—'समर्थराज्ये विप्रराज्ये यज्ञे'-इति वि०।

(२)—'वाजान् अन्नानि'-इति वि०। वाजरत्यन्ननामसु (२,७,२) बलनामसु च पाठभेदेन (२,९,२) दृश्यते निघण्टौ।

II कई३४३वियक्ताः। नरा३४३:सनीडाः। रुद्र-
स्यमर्या२३ः। आ२था२३४औहोवा। सुवा३श्वा२३४५ः

॥२६॥

III काईम्। विया२३। औवा३। आक्ताः।
नाराः। सना२३। औवा३। आइडाः। रुद्रा। स्य
मा२३। औवा३। आर्याः। आथा। सुवा२३। औवा३।
आश्वाः। हो५इ। डा ॥२७॥ २०१

"व्यक्ताः" कान्तियुक्ताः. "नरः" नेतारः "सनीडाः" समाभ्यो-नौकसः "रुद्रस्य" रोदनशीलस्य(१) एतन्नामकस्य "मर्याः" मर्त्य-

---

II विकं साम। III निकं साम।

(१)—"रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा। यदरुदत् तद्रुद्रस्य रुद्रत्वमिति काठकम्। यदरोदीत् तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्"-इत्यादि नि० १०,५,।

अथाष्टमी ।

पदपङ्क्तिः(१) । आग्नेयी । वामदेव ऋषिः ।

३ २ ३ ३ ३ २उ ३ २ ३ २ ३ २ ३ ३ १ २
अग्नेतमद्याश्वनस्तोमैःक्रतुन्नभद्रᳬहृदिस्पृशम् ।
३ १ २ ३ १ २
ऋध्यामातओहैः ॥ ८ ॥ २०२

५ र ४ ५ १ १र १ १
I अग्नेतमाद्या । अश्वन्नस्तोमाइः । क्रतुन्नाइभा-
१ १ १ २ १ ३ ५र र
द्रारम् । हार्दिस्पृशाम् । ऋध्यार२मा२मा२३४औहोवा ।
२१र १ १ १ १ १
तओहा२३४५इः ॥ २८ ॥

नृभ्यो हिताः(२) । अथापि च "स्वश्वाः" शोभनवाहाः "इमम्" पथगाताः(३) "के" भवन्ति ? कूपातिपग्रात् ऋषिः(४) आशयें आहेति ॥ ७ ॥ २०१

---

२०२ उत्तरार्चिकस्य ८,१,५,१ = ऋग्वेदस्य ३,५,१०,१ यजुर्वेदस्य १५,४४—१७,७७ = ऊहे २१,२,७ ॥

(१)—गायत्रीपादमष्टाक्षरैरस्यास्त्रयः पादाः अयमंऽतः पदपङ्क्तौ गण्यते ।

(२)—"मर्या—इति मनुष्यनाम, मर्यादाभिधानं स्यात्"-इति नि० ४,२ ।

(३)—"मितामवरेष्वमर्यकाः कर्मभिर्हितिं"-इति (१,८) निरुक्तवचनदर्शनम् इति अमर्यकम् विवरणमतम् ।

(४)—"ऋषिर्दर्शनात्"-इति नि० २,११ ।

५ र  २  १ २ ५  २  १र
II अग्ने। होइ४३इ। तमद्य। अश्वन्नस्तोमाइः।

२  १  १ २  १  २  १
क्रतुन्नाइभाद्रा२म्। हार्दीइओइ। स्पृशम्। ऋध्यार२-

२  ५र र  १२र २ १११
मा२३४औहोवा। तओहा२३४५॥ २९॥ २०२

हे "अग्ने!" "अद्य" अस्मिन्नहनि, वयमृत्विगादयः "ओहैः"(१) इन्द्रादि-प्रापकैः "स्तोमैः" स्तोत्र-समूहैः(२) "तं" प्रसिद्धं त्वाम् "ऋध्याम"(३) समर्धयामः। कीदृशं त्वाम्? "अश्वं न" वोढारमश्वमिव तथा "हविषः" वाहकम्। "क्रतुं न" कर्त्तारमिव उपकारिणमित्यर्थः। तथा "भद्रं" भजनीयम्(४)। "हृदिस्पृशं" हृदयङ्गमम्(५) अतिशयेन प्रियमित्यर्थः॥ ८॥ २०२

---

I,II आग्नेये द्वे।

(१)—ओहैरिति मते: जहगानीयैरित्यर्थस्तु सुलभः, परं नास्य भाष्यकृत: सम्मतः, एतग्रन्थे जहगानस्य योनिगानमूलकत्वमानादिस्वाभावात्।

(२)—वहिष्यवमानादिभिरित्यर्थः।

(३)—निग्रहो परिचरण-कर्मसु पठितस्य ऋध्नोतीत्यस्य रूपम् (३,५,७)।

(४)—'भद्रं दीप्तम्'-इति वि०।

(५)—'हृदयं स्पृशति, हृदयेन वा स्पृष्टं'-इति वि०।

अथ नवमी।

पुरउष्णिक्। वाजिनां स्तुतिः।

३ १२ ३ १र १ ३ १ २ १र ३ १२ ३ २ ३२
आविर्मर्या आ वाजं वाजिनो अग्मन्देवस्य सवितुः सवम्।

३ १ २
स्वर्गं अर्वन्तो जयत ॥ ८ ॥ २०३

२र १ ५ १र र र र
I आविर्म्मा२३४र्य्याः। आवाजंवाजिनोअग्मान्।

२र १ २ २र १ ५ १ ७
देवस्यस। वितुःसा२३४वाम्। स्वर्गां अर्वा२३४५न्ता-

१ १ १ १ १
ई५६ः। जयता२३४५ ॥ ३० ॥ २०३

"मर्य्याः" मनुष्येभ्यो हिताः "आविः" प्रकाशमानाः "वाजिनः" देव-विशेषाः(१) वाजिन-भाजः(२) "सवितुः" प्रेरकस्य देवस्य(३) "सवम्" अभिषोतव्यं "वाजम्" अन्नरूपं सोमं "ग्मन्" अगमन्। ततो हे यजमानाः! "स्वर्ग" "जयत" तथा "अर्वन्तः" अर्वतोऽश्वान् जयत ॥ ८ ॥ २०३

---

I वाजिनां साम।

(१)—वाजिन इति निघण्टौ च-दैवत-विभागे चिं शत्तमो देवगणः (५, ६,) "वेजनवान्" इति च तत्रैवोक्तम् (२, २८। १०, ७१)।

(२)—तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, आमिक्षा-निःसृतं च जलं वाजिनम्।

(३)—"सविता सर्वस्य प्रसविता"-इत्यादि च नै० १०, ३१-३१।

अथ दशमी ।

ऐश्वरयोधिंष्ण्या ऋषयः । द्विपदा ॥

१२　　३ १　२ ३ २ ३ १२　　३२३　१२३२
पवस्वसोमद्युम्नीसुधारोमहाᳪअवीना*मनुपूर्व्यः ॥१०॥ २०४

॥ पञ्चम-दशति ॥†

४ ५　२ ४　　.३ २　　२ ३२ ५　　१ २२　१ २
I पवस्वसोमा । द्युम्ना३४२सुधारः । माहाᳪअवी

१　२२　　३ २
नाम् । अनुप । र्व्यियो२३४५इ । डा ॥ ३१ ॥ २०४

हे "सोम !" "द्युम्नो" [द्युम्नं द्योततेः, यशो वान्नं वेति यास्कः (नि० नै० ५,५)] अन्नवान् यशस्वी वा । "सुधारः" शोभन-धारा-युक्तः "पूर्व्यः" पुरातनः "महान्" त्वम् "अवीनां" "रोमाणां" रोमभ्यः सकाशात् "अनु" क्रमेण "पवस्व" चर ॥ १० ॥ २०४

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य नवमः खण्डः ॥ ९ ॥

---

* "महामवीना"-इति ऋग्वेदीयपाठः ।

---

२०४ ऋग्वेदस्य ७,५,२० ।

I पवित्रम् ।

---

† ॥ इति पञ्चमस्यार्द्धः प्रपाठकः ॥

अथ दशमे खण्डे—

सैषा प्रथमा।

ऐन्द्री।

१ २ ३ १ २ ३ १ १ ३ २ ३ १ २ ३ १ २
विश्वतोदावन्विश्वतोनआभरयंत्वाशविष्ठमीमहे ॥ १ ॥ २०५

I विश्वतोदाउ। दावन्विश्वतोनाः। ओ३। हा।
ओ२३४हायि। आ। भरा। भा२३रा। यंत्वाशवि-
ष्ठमायि। माहा। औहो२३४वा। ए हीयेंहीऽ१ ॥ ३२॥

II विश्वतोदावन्विश्वतोनआ। भरा। भा२३रा।
यांत्वाशविष्ठमायिम। हा। औ३होवा। होऽ५इ।
डा ॥ ३३ ॥ २०५

हे "विश्वतोदावन्" सर्वतश्छेदनवन्(१) सर्वत्र दानवन् वा(२) इन्द्र! स त्वं "विश्वतः" सर्वतः "नः" अस्मभ्यम् अभीष्टम् "आभर"

---

I,II आभरे हे।

(१)—दावन्निति 'दो अवखण्डने'-इत्यस्य रूपमिति बोध्यते इति भावः।

(२)—दावन्निति ददातेरिति बोध्यते इति भावः।

अथ द्वितीया।

ऐन्द्री।

३ १२ ३ २उ ३ १ २ ३ १ ३ १ १ ३ २ ३ २
एषब्रह्मायऋत्वियइन्द्रोनामश्रुतो गृणे ॥ २ ॥ २०६

४ ५ १ र २ २ २ ३ १
I एषाः। ब्राह्मायआ३१उवा२३। ए३। त्वियआ।

१ २ १ २ २ २ ३ १
आ२३यिद्राः। नामश्रुता३१उवा२३। ए३। गृणआ

॥ ३४ ॥

४ ५ ४ ५ १ १ २ १ २
II एषाएषाः। ब्राह्मा२ब्राह्मा२। यऋत्वियोवा।

१ २ १ १ १र २ १ २
ओवा। आयिन्द्रा२आयिन्द्रा२ः। नामश्रुतोवा। ओवा।

२ १ २ ४ ५ ४
गृणा। औ३होवा। हो५ई। डा ॥ ३५ ॥

आहर। किञ्च। "शविष्ठम्" अतिशयेन बलवन्तं "यं" त्वाम्" "ईमहे" अभीष्टं याचामहे(१) ॥ १ ॥ २०५

२०६ उत्तरार्चिकस्य ९,१,१,१ = ऊहे २१,१,८।

I,II वासुमन्दे द्वे।

(१)—"ईमहे"; इति याच्ञा-कर्मसु प्रथमं नैघण्टुकम् (३,१९)।

४५ ४ ४५ १ १र १ ७
III एषाः। ओ। ओवा। ब्रह्मायाः। क्षत्रिया२ः।

१ २ २ २ २ १ २ २ १
आयिन्द्रो३हा३यि। ना३मा। श्रू२३तो। गृणा।

२ ४ ५ ७
औ३होवा। हो५इ। डा॥ २६॥

४ २ २ ५ २र १ २ २
IV ओ३हा३४३। ओ३४हा। एषाब्राह्मा३४३। या-

५ ४ ५ २ २ ५ २१ २
३४ः। क्षत्रियाः। ओ३हा३४३। ओ३४हा। इन्द्रोनामा

२ ५८ ४ ५ २ २
३४३श्रू३४। तोगृणायि। ओ३हा३४३। ओ३४५हा६५६।

२ १ २ ३ १ १ १ १
ए३। सुवर्वर्त २३४५॥ २७॥

१८ १र १र १ १र १रर
V एषब्रह्मौहो। याक्षत्रियाः। इन्द्रोनामौहो।

१र१र २ २ २
श्रूतोगृणा३१उवा२३। ऊ३४पा॥ २८॥ * २०६

---

III,IV,V क्षावस्थानि त्रीणि।

---

*॥ इति ग्रामे गेये एकादश-प्रपाठकः॥

अथ तृतीया।

त्रसदस्युरृषिः।

३ २ ३१२ ३१२ ३१२ १२ ३१२३२३ १२
ब्रह्माणइन्द्रं महयन्तोअर्कैरवर्द्धयन्नहयेहन्तवाउ ॥३॥ २०७

५ २ ११ १
I ओम्॥ हाउस्वरता। ब्रह्माणा२ः। इन्द्रम्। आ-

१ २ १ १ २ २ २ २
महया२न्तो२३४र्कैः। अवा२र्द्धयान्। अहयेह। तवा२३-

५ १२ १ १११
४५यि। ऊ६५६। श्लोकयता२३४५॥ १ ॥

५२ ५ ११८
II हाउ। अभी। स्वरता। ब्रह्माणआयिन्द्रा२म्।

"ऋत्वियः" ऋतौ वसन्तादि-समये भवः "यः" इन्द्रः "नाम-श्रुतः" विश्रुतः "एषः" "ब्रह्मा" स्तोतृणामभीष्टस्य वर्द्धयिता(१) तमहं "गृणे" स्तौमि ॥ २ ॥ २०६

---

२०७ ऋग्वेदस्य ४,१,२८,४।

1,II श्लोके द्वे।

(१)— ब्रह्मेति हवि-ब्रह्मादित्यक्ष रूपमित्यभिप्रेतोऽयमेवम्।

अथ चतुर्थी।

ऐन्द्री।

१ २ ३ १ ३ १ २ ३ १ ३ १ २ ३ १ २

अनवस्तेरथमश्वायतक्षुस्त्वष्टावज्रम्पुरुहूतद्युमन्तम् ॥४॥ २०८

२१ ३ ५ ३१ २ ३ १

मह्या२न्तो२३४। कैः। अवर्द्धया२न्। मह्येहन्तवार-

४ ५

३४५ऊइ५६। म्ना२३४काः ॥ २ ॥ २०७

"महये" हननाय(१) [क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वात् हनन-क्रियायां हनस्य सम्प्रदानसंज्ञा] "हन्तवै" [तुमर्थे सेऽसेनिति (३,४,९) तवै(२) प्रत्ययः] हन्तुम् "अर्कैः" अर्चनीयैः स्तोत्रैः मन्त्रैः हविर्लक्षणैरन्नैर्वा "महयन्तः" पूजयन्तः(४) "ब्रह्मणः" ब्राह्मणाः "इन्द्रम्" अवर्द्धयन्" वर्द्धयन्ति प्रीतं कुर्व्वन्तीत्यर्थः ॥ ३ ॥ २०७

---

* "तक्ष त्व"-इति ऋग्वेदस्य।

---

(१)—'महये—हननाय'-इति वि०। निघण्टौ मेव नामसु अहिरिति एकविंशतितमं पदम्, हन्नइति तु चतुर्विंशतितमम् (१,१०)।

(२)—अपि "तवै', 'त'-इति छेदः।

(३)—"अर्कोदेवोभवति यदेनमर्चन्ति। अर्को मन्त्रो भवति यदनेनार्चन्ति अर्कमन्नं भवत्यर्चति भूतानि। अर्को वृक्षोभवति स इत्तः कटुकिम्ना"-इति नि० ५, ४।

(४)—"महयति"-इत्यर्चति-कर्मसु पचत्रिंशत्तमं नैघण्टुकम् (३ १४)।

५र　　२ ५ १　　२　　१ २ २
I हाउस्वरता । स्वरतस्वरा२३ता । आनवस्ते-

१ २　　२र १ २　　५र　　२५ १
रथम् । अश्वायाताऽ१त्त्२३४ः । हाउस्वरता । स्वरतस्वरा

२　　१२र १ २ १ २　　१　　५र
२३ता । त्वष्टावज्रं पुरुहू । ताद्युमान्ता२३४म् । हा-

२ ५ १　　३　　५र र　　२
उस्वरता । स्वरतस्व । रा २ता२३४अश्वोवा । स्वराऽ३ता

११११
२३४५ ॥ ३ ॥ २०८

हे इन्द्र ! "अनवः" मनुष्याः(१) "ऋभवः"(२) "ते" त्वत्सम्बन्धिने "अश्वाय" वाहनाय(३) तदर्थं "रथ"(४) "ततक्षुः" कृतवन्तः(५)

I आनुस्तोकम् ।

(१)—अनवः इति मनुष्य-नामसु नविंशतितमं नैघण्टुकम् (२,३) ।

(२)—"ऋभुर्विभ्वावाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन इति इयतयीषु सूक्तानि भवन्ति । आदित्यरश्मयोऽप्यभव उच्यन्ते"-इति नि० ११, १६ ।

(३)—"अश्वो वोढा (ऋ, ९म, ७अनु, ९मू, ४ऋक्)" इत्यादिश्रुतेरश्वस्य वाहनत्वम् ।

(४)—"रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा । स्याद्विपरीतस्य रममाणोऽस्मिंस्तिष्ठतीति वा, रपते र्वा, रसते र्वा" इति नि० ९,११ ।

(५)—"तक्षतेर्वा स्यात् करोति-कर्मणः"-इति नि० ८; १२ । मार्वकालिक-क्रियारूपम् (२,७,६) ।

अथ पञ्चमी।

ऐन्द्री।

२ ३ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ २ २
अभ्यदंमघवन्रयीषिणोनकाममव्रतोहिनोतिनस्पृश-

३ २
द्रयिम्॥ ५॥ २०९

३८ २ ३ ४ ५ २ १ २
I औहोयि। अभ्यदाम्। मघवन्रयाऽ१२३४यि।

४ १र र र २ २ ४
षिणायि। नकाममव्रतोहिनोतिनस्पृशत्। रयिमो२३४५

डा॥ ४॥ २०८

हे "पुरुहुत" बहुभिराहुतेन्द्र! "त्वष्टा" विश्वकर्मा च(१) त्वदीयं "वज्रं" "द्युमन्तं" दीप्तिमन्तमकरोत्॥ ४॥ २०८

---

I आनुस्तोकम्।

(१)—"विश्वकर्मा सर्वस्य कर्त्ता इति नि० १०,२५। तथाच ऋग्वेदीया श्रुतिः—

"य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा।
तमद्य होतरिषितोयजीयान् देवं त्वष्टारमिह यक्षि विद्वान्॥"
(१० म० १० अनु० ९सू० ९ऋक्)

अथ षष्ठी।

इयं वैश्वदेवी।

२ ३ २ ३ १ २ १ ३ १ २ ३ १ २ ३ १ २ ३ १ १
सदागावःशुचयोविश्वधायसःसदादेवाअरेपसः ॥६॥ २१०

४ ५ १र र २१र ४ ६
I सादा। गावःशुचयोविश्वधायार३साः। सार-

५ १ र २ १ ५ ६ ५
३४दा। दायिवाअरोर३४वा। पार३४साः ॥ ५ ॥ २१०

"रयीषिणः" रयिं धनं हविर्लक्षणं प्रेषयन्तो जनाः "शं" सुखं "पदं"(१) स्थानं "मघं" धनं च लभन्ते इति शेषः। "अव्रतः" इन्द्र-विषय-यागादि-कर्म-रहितः(२) पुरुषः शं सुखादिकं "न हिनोति" न प्राप्नोति, दातुं समर्थो न भवतीत्यर्थः। स्वयमपि "कामम्" अभीष्टं "रयिं" रमणीयं धनं "न स्पृशत्"(३) न स्पृशति ॥ ५ ॥ २०९

"गावः" गन्तारः स्तोतारो वा(१) "सदा" इन्द्रं पर-रणादिभि-

I, वाचः साम।

(१)—'शं सुखं, तस्य पदम्-सम्पदम्' इति वि०।

(२)—व्रतमिति कर्म-नामसु सप्तमं नैघण्टुकम् (२,१)।

(३)—स्पृशदिति लेटोरूपम्।

(१)—गच्छन्ति, 'गौतवीकारीनामकरणः'-इत्यादि द्विविध-नैरुक्त-व्युत्पादित्यभि-

अथ सप्तमी।

सम्पातऋषिः।

द्विपात्। उषस्या।

१ २ ३१२ ३१ २र ३१र २र
आयाह्विवनसासह्वगावःसचन्तवर्त्तनिंयदूधभिः ॥ ७ ॥ २११

३र २ ४ ५ १ १र
I औहोउयि। आयाह्वी। वना२सासह्वा।

१ १ १ ० १ १ ऽ १ १
गावःसच। तावर्त्तानी२म्। यात्। ऊर। धभिरो२३-

४५ई। डा ॥ ६ ॥ २११

उपगच्छन्ति ते "शुचयः" निर्मलाः "सदा" सर्वदा "विश्वधा-यसः" विश्वं धारयन्ति पुष्णन्तीति विश्वधायसः बहुन्नाः भवन्ती-त्यर्थः। "सदा" सर्वदा "देवाः" दानादि-गुण-युक्ताः "अरेपसः" पाप-रहिताश्च(१) भवन्ति ॥ ६ ॥ २१०

---

२११ ऋग्वेदस्य ८,८,३०,१।

I वाचः साम।

प्रायः २,५। अथवा गावः आदित्य-रश्मयः (नै० १, ५, ३) अमेध्येऽपि पतमानाः शुद्धाः। अथवा गावः आपः, भूमि-गताः (नै० १,१,१,) अथवा गावः वाचः (नै०१,११,४)।— 'ऋग्यजुः'सामलक्षणाः'-इति वि०।

(१)—'अरेपसः- अ-लेपिताः अ-पापाः; रेपइति पाप-नाम' इति वि०।

अथाष्टमी ।

१ २ ३ १र २र　　३ २ ३ १ २　　३ २ ३ १ १
उपप्रक्षेमधुमतिक्षियन्तःपुष्येम*रयिन्धीमहेतइन्द्र ॥८॥ २१२

४　　४ ५　४र ५　　४ ५　५　१
I औवा । उपप्रक्षेमधुमतिक्षियन्तः । औवाओयि ।

१ र　　र र २ १　　२　१　२　१
पुष्येमरयिन्धामहेतआ२३यिन्द्रा । औ । वाऔवा । औ ।

१र　　२　५
वाहा३१उवा२३ । ऊ३४पा ॥ ७ ॥ २१२

हे "उषः !" "वनसा" वननीयेन तेजसा "सह" सार्द्धम् "आयाहि" आगच्छ । उषसो वाहनभूताः "गावः"(१) "वर्त्तनीं" रथं "सचन्त" सेवन्त(२) अनश्वेन रथेनायाहीत्यर्थः । "यत्" याः गावः "ऊधभिः" उपलक्षिताः प्रभूताः पीना इत्यर्थः । ताः गावः इति सम्बन्धः ॥ ७ ॥ २११

---

* "पुष्यन्तो"-इति ऋग्वेदीयपाठः ।

---

२१२ उत्तरार्चिकस्य ४,१,२,४ ।

I माधुच्छन्दसम् ।

(१)—अत्र गावइति रश्मय इत्यर्थः (नै० १,५,२) उषसउदयासु रैव चक्षुर्ग्राह्य-त्वाद् वाहनत्वेनोपवर्ण्यते ।

(२)—"षच सेचने सेवने च (भ्वा० आ०)" ।

अथ नवमी।

१ २ ३ २ ३ १ २ ३ १र १र ३ २उ ३ १ १र
अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥८॥२१३

४ ५ ४ १ २ १ २ १ २र १
1 अर्चन्तिया। कम्मरुतःसुवा२३र्काः। आस्तोभता-

१ १र र ५ १ १ ५
यि। श्रुतोयुवासआ। येन्द्रा३उवा३। ऊ३४पा॥ ८ ॥२१३

"हे इन्द्र" परमैश्वर्ययुक्त! (१) त्वं "मधुमति" माधुर्योपेते "प्रस्वे" राज-कर्त्तृक-न्यग्रोध-चमसे "ते" त्वदीये "चीयन्तः" समीपे स्थिताः वयं "रयिं" रमणीयमन्नं "पुष्येम" पोषयेम। किञ्च। त्वां "धीमहे" वयमनुध्यायेम ॥ ८ ॥ ११२

"स्वर्काः" शोभन-स्तोत्राः(१) शोभनान्नावा(२) "मरुतः"(३)

---

२१३ उत्तरार्च्चिकस्य ४,१,२४=ऊहे ३,२,१८।

I मारुतम्।

(१)—"इन्दतेर्वैश्वर्य्यकर्म्मणः"-इत्यादि नि ४,८। "समस्ततेजः परमेश्वरत्व-निमित्तेन्द्र-शब्द-वाच्यः इति मीमांसा-भाष्ये शबरः।

(१)—"अर्को मन्त्रो भवति, यदनेनार्चन्ति" इति नि० नै० ५, ४।

(२)—"अर्कमन्नं भवति, अर्चति भूतानि" इति नि० नै० ५,४।

(३)—"अथातो मध्यस्थाना देवगणाः——तेषां मरुतः प्रथमागामिनो भवन्ति" इत्यादि नि०११,१३।

अथ दशमी ।

२ ३ १ २　२ १ २　३ १ २　३ १ २　३ २ ३ १
प्रवइन्द्रायवृत्रहन्तमायविप्रायगाथंगायतयंजुजो-

२
षते* ॥१०॥ २१४

॥ प्रथम-दशति ॥

५ ४　१　२　७　२　१
I प्रवाः । आयिन्द्रायवृत्रहान्तमा२३या । वायि-

२ २　२　२　२　१　२　२　१
प्रायगाथंगाऽ१या४ता । याञ्जजौवा३ । उप् । षाऽ२तो४५-

२
हायि ॥ ८ ॥ २१४

"अर्कम्" अर्चनीय(४)मिन्द्रम् "अर्चन्ति" स्तोत्रैर्ऋत्विभिः । "युवा" नित्य-तरुणः "श्रुतः" विख्यातः "इन्द्रः" "आस्तोभति" तेषां सम्बन्धीनि शत्रुजातान्याभिमुख्येन हिनस्ति(५) ॥ ८ ॥ २१३

---

* "जुजोषत"-इति वि० पाठः ।

---

२१४ उत्तरार्चिकस्य ४,१,२५=ऊहे ३,२,२० ।

I उद्दांशं साम ।

(४)—"अर्कोदेवोभवति यदेनमर्चन्ति" इति नि० नै० ५,४ ।

(५)—विवरणकृता तेषान्यथैव व्याख्याता । तद्यथा—"अर्चन्ति । पूजयन्ति । 'अर्कं' देवम्, 'मरुतः' ऋत्विजः, 'अर्काः' शोभनमन्त्राः । 'आस्तोभति' स्तुयते ; 'श्रुतः' आख्यातः । 'युवा' तरुणः । कोसौ ? इन्द्रः"-इति ।

अथ चतुर्थखण्डे—

सैषा प्रथमा।

१ २ ३ १ २र ३ २उ ३ १ २
अचेत्यग्निश्चिकिति*र्हव्यवाड्नसु†मद्रथः ॥१॥२१५

हे "विप्राः" मेधाविनः! (१) "वृत्रहन्तमाय" अतिशयेन वृत्रस्य हन्तमः, तस्मै इन्द्राय "तं" "गाथं" स्तोत्रं(४) "प्रगायत" प्रकर्षेण पठत। हे उद्गातारः! स इन्द्रः "यं" स्तोत्रं "जुजोषते" सेवते। १० ॥ २१४

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य दशमः खण्डः ॥ १० ॥

---

* "श्चिकितु"-इति } इति ऋग्वेदीयपाठौ।
† "हव्यवाट् स सु"-इति }

---

२१५ ऋग्वेदस्य ६,४,२७,५!

(१)—"विप्रः" इति मेधावि-नामसु प्रथमं नैघण्टुकम् (३,१५)।
(२)—"गाथा" इति वाङ्नामसु चतुर्विंशमैघण्टुकम् (१,११)।

४ ५र ४ २ १ १ २ १ २
I अचेती। अग्निः। चिका२३यितीः३ः। ह्वा२३व्या

१ ३ ५र र २ २ १११ १
३। वा२डा२३४औहोवा। सुमद्रथा२३४५ः॥ १० ॥

४५र ४ १ १र
II अचेतिया। ग्नायिश्वाइकायिती२३ः। हौ। होयि

२ ११११ १ १ २ ५र र
औ३हो२३४५। हव्या२३। वा२डा२३४औहोवा।

२ २ २ ११११
ए३। सुमद्रथा२३४५ः॥ ११ ॥ २१५

"हव्यवाट्" हविषां वोढारं "चिकितिः" विशिष्ट-प्रज्ञः(१) "सुमद्रतः" सुष्ठु-हविर्युक्त-रथोऽग्निः "अचेति" चेत्यते सर्वैर्ज्ञायते। यद्वा। [व्यत्ययेन कर्त्तरि प्रत्ययः (३,१,८५)] हविःप्रदातारं यजमानं जानाति॥ १ ॥ २१५

---

I,II आग्ने द्वे।

(१)—"चिक्यत्" इति पश्यति-कर्मसु प्रथमं नैघण्टुक, तस्य रूपं चिकितिरिति, अथवा प्रज्ञा-नामसु पठितं "केतः"-इति तस्यैवेति।

अथ द्वितीया।

वन्धुर्ऋषिः। आग्नेयी।

२ ३ २ ३ १ २ ३ १ २ १ २ १ २ १ क २र

अग्ने त्वन्नो अन्तमउतत्राताशिवोभुवो*वरूथ्यः ॥२॥ २१६

४ १ २ १ २ ५

I ओग्नायि। त्वन्नोर२३आ। ऊम्मा२३। ता२३४मा:।

२ १ २र १र २ १र २ २ २र ४ ५ ४

उतत्राताशिवोभुवः। शिवोभुवा२३:। वरोवा। थाऽ५

५

योऽ६हायि ॥ १२ ॥

४ र ५ ४र ५ २र १ २

II अग्नौ। होयि। त्वौहोयि। नोअन्तमा ३१ उवा

३ ५ १र २ ३ ५

२३। ऊ२३४ ता। त्राता ओ २३४ वा।

२ १र २ ३ १ १ १ १

शिवोभुवा २३४५ ॥ १३ ॥

---

* "भवा"-इति ऋग्वेदीयपाठः।

---

२१६ उत्तरार्चिकस्य ४,१,२२,१ = ऋग्वेदस्य ४,१,१८,१ = यजुर्वेदस्य ३,२५—१५,४८ = ऊहे ३,२,१८—१२,२,१५।

I गूदम्। II भत्यर्दः।

५ र २   ४ ५र ४   ५   २ १२र १र २१र २
III अग्ने तू ३ वन्नोअन्तमाः। उतत्राताशिवोभुवः।

१   ७र र २   ५   ४
वरा २ ३। औचौहो २ ३४ वा। था ऽ ५ यो ६

५
हायि ॥ १४ ॥

५ र   २   ४ ५र ४   ४ ५   २
IV अग्ने। होपि। त्वन्नोअ। तमाः। ऊता २।

२   ऽ २   १   १ २
हा २यि। औ३हो३१यि। त्राता२। शिवो ३४५।

२   ५
भू२३४वाः ॥ १५ ॥ २१६

हे "अग्ने !" "वरूथ्यः" वरणीयः सम्भजनीयः। यद्वा। वरूथैः यज्ञगृहैर्हितः(१) "त्वं" "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भूवः" भव। "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव(२) ॥ २ ॥ २१६

---

III गूहैः।   IV अल्पहैः।

(१) वरूथमिति गृहनामसु सप्तदश पदम् नि० ३, ४।

(२)—"शिवम्"-इति सुख-नामसष्टादशं नैघण्टुकम् (३,६,) ततो मत्वर्थी याच्-प्रत्यये रूपमिति भावः।

अथ तृतीया।

आग्नेयीयमृक्।

२ ३ २ ३ २ ३ २ १ २ ३ १ २ ३ १ २
भगोनचित्रोअग्निर्महोनान्दधातिरत्नम्॥ ३॥ २१७

४ ५ १ १ २ १
I भागाः। नचित्रः। अग्निर्म्महोर२३ना३म्। दा२-

५र र २ १ २ १ १ १ १
धार३४औहोवा। तिरत्ना२३४५म्॥ १६॥

४ ५ र ४ ५ ४ २ १ २ १ ३
II भगोनचित्राः। अग्निर्माहा२३ना३म्। दा२धा-

५र र २ २ १ ३ १ १ १ १
२३४औहोवा। ए३। तिरत्ना२३४५म्॥ १७॥ २१७

"महोनां" महताम् मध्ये "भगोन" सूर्य्यइव(१) "चित्रः" चायनीयः(२) पूजनीयः "अग्निः" यज्वनां "रत्न" रमणीयं धनं "दधाति" धारयति। प्रयच्छतीत्यर्थः(३)॥ ३॥ २१७

---

I,II सातनिके द्वे।

(१)—"भगमादित्यः"-इति नै० ७,११। "नं-शब्दस्तु उपमार्थीयउपरिष्टात्"-इति नै० १,४।

(२)—चिचम्भे वानामिति मन्त्रव्याख्यानावसरे एवमर्थो व्यवहृतो यास्केन (१२,१६)। तदेवात्र व्याख्याने मानम्।

(३)—"ददि"-इत्यस्य निघण्टौ (३,१६) याच्ञा-कर्मसु दर्शनमेवैतदर्थे मानम्।

अथ चतुर्थी।

एषा ऐन्द्री।

१ २ ३ १ २　३ २ ३ १र　२र ३ २ ३ २
विश्वस्य प्रस्तोभ पुरो वा सन्यदि वेह नूनम्॥ ४॥ २१८

I विश्वस्या। प्रस्तोभा२। पुरोवासा३न्। यदिवे-
२३४हा। नू२३। ना२मा२३४औहोवा। धा२३४-
नाम्॥ १८॥

II औहोयि। विश्वस्या। प्रस्तोभा२। पुरौहोवा३-
हायि। वासा२न्। यदिवेहा। नू२३। नी२मा२३४
औहोवा। धा२३४मा॥ १८॥१२८

"विश्वस्य" सर्व्वस्य गत्‌जातस्य "प्रस्तोभ" प्रस्तोभति स्तिन-
स्तीत्यर्थः। "यदिवा" "इह" यत्र "नूनं" "पुरा(१) वासन्"
पूर्व्वस्मिन् देशे वसन् स्थितः स इह नूनं प्रस्तोभ ऋत्विग्भिः
प्रकर्षेण स्तूयते [स्तोभतिस्त स्तुति-कर्मा(२)॥ ४॥ २१८

I धनसाम।　　II धर्म्मसाम।

(१)—'नूनमिति वितर्के'-इति वि०।
(२)—स्ता ति-कर्मस्विदं चतुर्थं नैघण्टुकम् (१,१४)।

अथ पञ्चमी।

सम्वर्त्तऋषिः। उषोदेवता। द्विपदा।

३ २उ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
उषाअपस्वसुष्टमः*संवर्त्तयतिवर्त्तनिंसुजातता॥५॥ २१९

५ र १ २ ३ ५ ७ १ ७
I उषाअपा। स्वासुष्टा२३४माः। संवा२र्त्तया। तिवा

३ ५ १ ३ ५र र २ १ ३ १ १
२र्त्ता२३४नीम्। सू२जा२३४औहोवा। ए३। तता२३-

१ १
४५॥ २०॥ २१९

इयम् "उषाः" "स्वसुः" भगिन्याः रात्रेः(१) सम्बन्धि "तमः" "अन्धकारम्" "अप संवर्त्तयति" आत्मीयेन तेजसा अपगमयति। "सुजातता" सुजातत्वं आत्मनः सुप्रकाशत्वं च "वर्त्तनिं" वर्त्तयति रथं प्रापयति(२)॥ ५॥ २१९

---

* "स्वसुस्तमः"-इति ऋग्वेदीयपाठः।

---

२१९ ऋग्वेदस्य ८,८,३०,५।

I उषसः साम।

(१)—स्वसा सु-असा, स्वेषु सीदतीति वा इति नि० ११।३१।

(२)—'स्वसुः तमः, स्वसुः स्वसा भगिनीव अपसंवर्त्तयति वर्त्तनिं रात्रिं वरणीयां अनस्य सुजातता इति विवरणकृद्व्याख्यानम्।

अथ षष्ठी।

भौवनआप्त्यऋषिः।

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ २
इमानुकम्भुवनासीषधे*मेन्द्रश्चविश्वे चदेवाः ॥ ६ ॥ २२०

५ ४र ५ ४ ४ २र १ २ २ २
I इमानुकम्भूऽ५वना। सीषधा२यिमाउवा३। ई३-
५ २ १ ३ २ २ ५ २ १
४हा। इन्द्रश्चवा२यिश्वाउवा३। ई३४हा। चदे३। वा
२ ५र र २ ५
२या२३४औहोवा। वी२३४श्वाः ॥ २१ ॥ २२०

"इमाः"(१) इमानि परिदृश्यमानानि "भुवना"(२) भुवनानि "नु" क्षिप्रं(३) "सीषधेम" साधयामः वशीकुर्मः। कमिति पूरकः(४) यद्वा। इमानि सर्व्वाणि भूतजातानि अस्मभ्यं "कं" सुखं(५) सीषधेम साधयतु (पुरुष-व्यत्ययः) "इन्द्रश्च" "विश्वे" सर्वे देवाश्च स्तुत्या प्रीता इममर्थं साधयन्तु ॥ ६ ॥ २२०

---

* "सीषधा"--इति ऋग्वेदस्य, सायणीयोत्तरभाष्य-धृतश्च।

---

२२० उत्तरस्य ४,१,२३,१ = ऋग्वेदस्य, ८,८,१५,१ आरण्यके ३,२१—२२ = ऊहे १,२०।

I भारद्वाजम्।

(१), (२)—सुपांसुलुगित्याल्वं रूपम् (७, १, ३९)।
(३)—"नु"-इति क्षिप्र-नामसु प्रथमं नैघण्टुकम् (२, १५)।
(४)—"मिताक्षरेष्वनर्थकाः कमीमिद्विति"-इति नि० १, ९।
(५)—"कम्"-इति सुख-नामसु अष्टमं नैघण्टुकम् (३, ६)।

अथ सप्तमी ।

कवषऐलूषऋषिः ।

इयं वैश्वदेवी ।

१ २ ३ १ २ ३ १ २ ३ २ ३ ३ १ ३ २ ३ १ २ ३ १ २
वितुतयोयथापथाद्यइन्द्रत्वन्तुरातयः ॥ ७ ॥ २२१

४ ५ ४ ५ १ १ २ र १
I वित्तूवित्तू । ताया२स्ताया२ः । यथापथाः ।

१ १ २ १ ५ ४
आयिन्द्रा२ त्वाद्या २ ३ । तुरा २ ३ ४ वाः । ता ऽ ५ये-

५
ई ह्यायि ॥ २२ ॥ २२१

हे "इन्द्र!" "त्वत्" त्वत्तः सकाशात् "रातयः" दानानि "वि यन्तु" विविधं गच्छन्तु । तत्र दृष्टान्तः—"पथः" राजमार्गात् क्षुद्रमार्गा यन्ति तद्वत्(१) ॥ ७ ॥ २२१

---

२२१ उत्तरार्च्चिकस्य ९,१,२,२—ऊहे २१,८ ।

I रातिसाम ।

(१)—"वियुतय," विविधाः ऋतवः सरणाः मार्गाः "इन्द्र!" "त्वत्" त्वत्समीपं "यन्त"; "रातयः" दानानि धनविशेषाणि 'अथवा'-इत्यादि वि० ।

चचाष्टमो ।

भरद्वाजऋषिः । द्विपदा ।

३ १र ३ २र ३ १ २　　२
अयावाजन्देवहितꣳसनेम

१ २　३ १ २　३ १ २
मदेमशतहिमाःसुवीराः॥८॥ २२२

५ र र　　१　　२ ३ र ५　　१र
I अयावाजाम् । दायिवहि । तꣳसनेमा । मदे-

१र　　२ १　　१　२　र र
मशाइताहिमा २ः । शतार३ । हा शयिमा२३४औहोवा ।

२　१ ११११
सुवीइरा२३४५ः ॥२३ ॥२२२

"अया" अनया स्तुत्या "देवहितं" देवेन द्योतमानेनेन्द्रेण दत्तम्(१) "वाजम्" अन्नं "सनेम" वयं सम्भजेम । अपिच "सुवीराः" शोभन-पुत्रोपेता वयं "शतहिमाः" शतं हेमन्तान् "मदेम" हृष्याम ॥ ८ ॥ २२२

---

२२२ ऋग्वेदस्य ४,६,३,५ ।

I भारद्वाजम् ।

(१)—हितमिति "धोञाक् त्यागे"-इत्यस्य रूपमिति मत्वैव व्याख्यातम् इत्यमिति ।

अथ नवमी।

आत्रेयऋषिः। इयं वैश्वदेवी।

२ २ ३ १र २र ३ २ ३
ऊर्जामित्रोवरुणःपिन्वतेडाः

१ २ ३ १ २ ३ १ २
पीवरीमिषङ्कृणुहीनइन्द्र॥ ८॥ २२३

४ ५ १ र २ १ १ १र र
I ऊर्ज्जा। मित्रोवरुणःपिन्वता२३यिडाः। पीवरी-

र ऽ १ २ ५
मिषङ्कृणुहीनआयिन्द्रा२३उवा३। ऊ२३४पा॥ २४॥ २२३

हे "इन्द्र!" "मित्रः", "वरुणः", त्वञ्च सर्वे यूयं "ऊर्जा" रसेन बलेन वा(१) सहिताः "इडः" अन्नानि(२) "पिन्वत" अस्मभ्यं सिञ्चत प्रयच्छतेत्यर्थः। [पिन्व सेचने (भ्वा० प०) धातूनामनेकार्थत्वादत्र प्रयच्छतेत्यर्थः] किञ्च। "पीवरी" प्रवृद्धम्(३) "इषम्" अन्नं (४) "नः" अस्माकं "कृणुहि(५)" कुरु देहीत्यर्थः(६) ॥८॥ २२३

---

I ऐषम्।

(१)—'ऊर्जा। अन्नं हविर्वा'-इति वि०।

(२)—"इरा, इला, इडा वा"-इति पाठभेदेनान्न-नामसु द्वादशतमं नैघण्टु-कम् (२, ७।)

(३)—पीवरीं -प्रवृद्धाम्'-इति वि०।

(४)—इषमिति अन्न-नामसु चतुर्दशं नैघण्टुकम् (२, ७)।

(५)—"बाच्छन्दसि (३, ४, ८८)"-इति हेरपित्व-वैकल्पिकम्।

(६)—"कृणुहि कुरु"-इत्येव वि०।

अथ दशमी ।

इयमेकपदाष्टाक्षरा गायत्री । वसिष्ठऋषिः ।

२ १ २
इन्द्रोविश्वस्यराजति ॥ १० ॥ २२४

॥ इति द्वितीय-दशति ॥

१ २ १४ ५२ २ ३
I इन्द्रो३४ । विश्वस्यरा । जतिवो२३४५इ । डा ॥२५॥

१ १ २ १ २
II इन्द्रा२वोऽ१यि । वा२यिश्वा । स्यरा२जति ।

६ १
वोवा२३वो२३४५इ । डा ॥ २६ ॥ २२४

यतः कारणात् "इन्द्रः" "विश्वस्य" भुवनस्य "राजति" ईश्वरो भवति, अतः कारणात् इन्द्रं प्राधान्येनाभिमुखीक्रियो- च्यते-इति पूर्वेणान्वयः(१) ॥१०॥ २२४

इति श्रीसायणाचार्य्यविरचिते सामवेदार्थप्रकाशे छन्दोआर्चिके चतुर्थस्याध्यायस्यैकादशः खण्डः ।

॥ इति द्वैपदमैन्द्रं समाप्तम् ॥

---

I,II वैराज द्वे ।

(१)-"इन्द्रः" परमेश्वरः "विश्वस्य" सर्वस्य "राजति" दीप्यते"-इत्येव वि० ।

त्रिकद्रुकेषु मुख्याः स्युरत्यष्टिरादिमा ।
जगत्ययंसहस्रेत्यथैन्द्रयाह्युपनस्तथा ॥
अग्निंहोतारमित्येषा अस्तुश्रौषडयारुचा ।
चतस्रोऽत्यष्टयोऽभित्यं तवत्यन्नर्यमित्यृचौ ॥
इमे द्वे अतिशक्कर्यौ विष्टौ इत्येकऊचिरे ।
प्रवोमहेऽतिजगती तमिन्द्रमिति तादृशी(क) ॥
सौरी ह्ययंसहस्रेति पावमानी त्वयारुचा ।
अस्तुश्रौषड्वैश्वदेवी मारुती तु प्रवोमहे ॥
अभित्यमिति सावित्री स्यादाग्नेय्यग्निमित्यसौ ।
ऐन्द्रोऽवशिष्टाइत्येवं छन्दोदैवतनिर्णयः(ख) ॥

---

(क)—'त्रिकद्रुकेषु'-इति मुख्या प्रथमा यासु, तासु ऋक्षु, अत्र—आदिमा ऋक् 'त्रिकद्रुकेषु'-इति अष्टिः अष्टिच्छन्दस्का। 'अयंसहस्र'-इति द्वितीया ऋक् तु जगती। अथ अनन्तरम्; 'एन्द्रयाह्युपनः'-इति तृतीया ऋक् तथा 'अग्निंहोतारम्'-इति एषा नवमी ऋक्, 'अस्तुश्रौषट्' इति पञ्चमी ऋक्, 'अयारुचा'-इति सप्तमी ऋक्,-इति चतस्रः ऋचः अत्यष्टयः अत्यष्टिच्छन्दस्काः। 'अभित्यम्'-इति अष्टमी, 'तवत्यं नर्यम्'-इति दशमी च ऋचाविमे द्वे अतिशक्वर्यौ अतिशक्वरीच्छन्दस्के; एके आचार्यास्तु अष्टी अष्टिच्छन्दस्के एव इमे इत्यूचिरे। 'प्रवोमहे'-इति षष्ठी ऋक् अतिजगती अतिजगतीच्छन्दस्का; 'तमिन्द्रम्'-इति चतुर्थी ऋक् इयमपि तादृशी अतिजगत्येवेत्यर्थः।

(ख)—'अयंसहस्र'-इति द्वितीया ऋक्, सौरी सूर्य-देवताका। 'अयारुचा'-इति सप्तमी ऋक्, इयन्तु पावमानी पवमान-देवताका। "अस्तुश्रौषट्"-इति पञ्चमी ऋक्, वैश्वदेवी विश्वेदेवाः अस्याः देवताः। 'प्रवोमहे'-इति तु षष्ठी ऋक्, मारुती मरुतोऽस्याः देवताः। 'अभित्यम्'-इति अष्टमी ऋक्, सावित्री सवितृ-देवताका। 'अग्निम्'-इति नवमी ऋक्, असौ आग्नेयी अग्नि-देवताका। स्यादिति सर्व्वत्र सम्बन्धः ॥

अथ द्वादशखण्डे—

तत्र प्रथमा।

गृत्समद ऋषिः।

१ २ ३ १२ ३२ ३ २
त्रिकद्रुकेषु महिषो यवाशिरन्तुविशुष्म*

३ १२ ३२ ३ १ २ ३१ ३ १ २
स्तृम्पत्†सोमम पिबद्विष्णुना सुतं यथावशम‡।

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १२
सईम्ममाद महिकर्मकर्त्तवे महामुरुꣳ

२१ ३ २ ३ १२ ३२ ३ १२ १
सैनꣳसश्चद्देवो देवꣳ सत्य इन्दुः सत्यमिन्द्रम¶ ॥१॥२२५

I ओयित्रिक। द्रुकाथि। षूइमहिषा। यवाशिरम्।

तुविशुष्मः। ओयितृम्पा२३४यात्। सोमाम्। अपिबाꣳ

---

* "तुविशुष्म"-इति ऋग्वेदीय-स्वर-पाठः।

† "तृम्प"-इति ऋग्वेदीयः सायणीयोत्तरभाष्यधृतश्च।

‡ "यथावशत्"-इति ऋग्वेदीय-त्र चिह्नित-पाठः।

¶ "सत्यमिन्द्रं सत्य इन्दुः"-इति ऋग्वेदीयपाठः।

---

२२५ उत्तरार्चिकस्य ६,३,१८,१=ऋग्वेदस्य २,६,२८,१ ॥
—अग्नौ २,२,१२—५,१,५—५,२,५।

I वाजजित्।

१   १२२   २५   ३२२३५   २   २   ५
ह्वि। ष्णुनासुतम्। यथावशम्। वोयिसा२३४ईम्।
१   २   १   २   १   १२३५२   १२२३५   २   २
ममा। दा३मह्विक। मकर्त्तवे।,महामुरुम्। वोयिसा
५   १   २२१२१२१   ४
२३४यिनाम्। सस्वात्ं देवोदेवाम्। सत्यइन्दुःसत्याऽ-
५
पुमिन्द्राउ। वा॥२७॥२२५

"महिषः" महान्(१) पूज्यः "तुविशुष्मः" बहु-बलः(२) "तृम्पत्(३)" तृप्यन्निन्द्रः "त्रिकद्रुकेषु" ज्योतिर्गौरायुरित्येतन्नामकेषु अभिप्लविकेष्वहःसु(४) "सुतम्" अभिषुतं "यवाशिरं" यवमयैः सक्तुभिर्मिश्रितम्,[आङ्-पूर्व्वस्य श्रीञ् धातोः क्विपि "आसूर्वेयामित्यादिना(५) श्रियः शिरइत्यादेशः] तं सोमं "विष्णुना" सह(६) "अपिबत्"। "यथावशं(७)" पूर्व्वं यथा तं सोम मकामयत तथा अपिबत्[वश कान्तौ (अ०, प०)। "बहुलं छन्दसीति (२,४,७३) शपोलुगभावः] "सः" पीतः सोमः "महाम्" महान्तम् "उरुम्"

---

(१)—"महिषः"-इति महन्नामसु अष्टमं नैघण्टुकम (३,२)।

(२)—तुवीति बहु-नामसु द्वितीयं नैघण्टुकम्(२,१,)। शुष्ममिति बल-नामसु एकादशतमं नैघण्टुकम् (२,९।

(३)—विकरण-व्यत्यये रूपम्। 'तृम्पत् तृप्तवान्'-इति वि०।

(४)—अहःस्विति पृष्ठ्यस्य-पञ्चमी ङीप्यमी दृष्टव्या (७८पृ० ५टी०)।

(५)—"अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्त्ताः (६,१,३६)"-इति पा०।

(६)—विवरणे तु "विष्णुना" अध्वर्युणा अभिषुतमित्यन्वयः।

(७)—'यथावशं यथोत्साहम्'-इति वि०।

अथ द्वितीया ।

गौराङ्गिरसऋषिः ।

२१ ३१२३१२ ३१ २३२ ३१२ २ १२

अयꣳसहस्रमानवोदृशः कवीनाम्मतिर्ज्योतिर्विधर्म ।

३१ ३१ २३२३ १२ ३२३ १२ ३

ब्रध्नःसमीचीरुषसःसमैरयदरेपसःसचेतसः

१२ ३१२ ३१

स्वसरेमन्युमन्तश्चितागोः ॥ २ ॥ २२६

विस्तीर्णम् "ईम्" एनम् "इन्द्रम्" "ममाद" अमादयत्(८)। किमर्थम्? "महि" महत् वृत्र-हननादि लक्षणम् "कर्म" "कर्त्तवे" कर्त्तुम्(९)। "सत्यः" "इन्दुः"(१०) स्रवन्। "देवः" दीप्यमानः "सः" सोमः "सत्य" यथार्थभूत "देव" सोमं कामय-मानम् "एनम्" "इन्द्रं" "सश्चत्" [ सश्चतिर्व्याप्ति-कर्मा(११) ] व्याप्नोतु ॥ १ ॥ २२५

---

(८)—"छन्दसि लिट् (३,२,१०५)"-इति भूतसामान्ये लिटि ममादेति भावः ।

(९)—"तुमर्थे सेऽसेन् असेन् क्से (३,४,९)"-इत्यादिना सिद्धम् ।

(१०)—इन्दुः सोमः ।

(११)—'उक्थान दानवः ; सः इन्द्रः, एनं दानवं सश्चत् । सश्चतिः हिंसार्थः, दानवं हिंसितवान् ।—अथवा सश्चतिः सेवार्थः सेवते'-इति वि० । निघण्टौ तु सश्चतिर्व्याप्ति-कर्मसु दृश्यते (२,१४) न तु व्याप्ति-कर्मसु परं सतिरेव व्याप्तिमेव पर्यवस्यतीत्यभिप्राये-णोक्तमित्यनुमीयते ।

५ ४ ५ ११ २ ५ २ १ २
I अयꣳसहोचायि। समानाꣳ२३४वाः। हग्राःक-

२१२ २ २ ३ ५ ११ ११ १२
वीनामतिर्ज्यो। तिर्विधार२३४म्मा। अध्राःसमायि। चो-

१ २ २१ २ ११ १ २ ४
हषसः। समायिराऽ१ंयार२त्। घराइ। होवाइ। पा।

५ ४ ५२ ११ १ १२ २१ २ ३२
सःसचे। तसाइः। स्वासरे। मन्युमार२३न्ताः। चिते।

३ ५२ ३ १११
या२३४औहोवा। गोर२३४५ः॥ २८॥

५ २ ५ ११ १२१ २
II अयꣳसहसमानाई२वाः। हग्राःकवीनाम्मतिर्ज्यो।

२ ११ ११ १२ १२ ११ २
तिर्विधार३र्मा। अध्राःसमायिचोहषसः। समायिराऽ१-

ऽ २ १२११ ११२ १ १२ २
यार३त्। घोइवा। अरेपसःसचेतसः। स्वासरे। म-

१ २ ऽ २ ३१ १ ३ ५२ २
न्युमार३न्ताः। ओइवा। चिताइ। गोरा२३४औहो-

३११११
वा। वा२३४५॥ २९॥ २२६

---

I,II गोराङ्गिरसस्य सामनी द्वे।

"सहस्रमानवः" सहस्र-सङ्ख्याका मनुष्याः(१) यस्य सः, सहस्र-सङ्ख्याकैर्मनुष्यैरिवावस्थितैरश्मिभियुक्तः "दृशः" सर्वेषां दर्शनीयः(२) "कवीनां" मेधाविनां सर्वेषां "मतिः" स्तुत्यः मननीयोवा "विधर्म्म" विधाहृ "ज्योतिः" तेजः "अयं" "ब्रध्नः" सूर्य्यः(३) "समीचीः" शुद्धाः निर्म्मलाः(४) "अरेपसः" तमः-पाप-रहिताः। "सचेतसः" समान-चित्ताः इमाः "उषसः" "समैरयत्" सम्यक् प्रेरयति। ततः "स्वसरे" [दिवसनामैतत् (नि, नै०१,९)] दिवसे "मन्युमन्तः" मन्युः प्रकाश(५)स्तद्वन्तः तेजस्विनश्चन्द्रमः-"प्रभृतयः"गोः आदित्यस्य तेजसा "चिताः" अपचिताः भवन्तिति विगत-तेजस्का भवन्तीत्यर्थः। ["आदित्योऽपि गौरुच्यते (२,६)" -इति निरुक्तम्॥ २॥ २२६

---

(१)—"मानवः" इति मनुष्यनामसु ऊनविंशं नैघण्टुकम् (२,३)।

(२)—'दृशः द्रष्टा'-इति वि०।

(३)—'ब्रध्नः महान् ब्रह्म सविता'-इति वि०। "ब्रध्नः" इति निघण्टौ अश्वनामसु (१,१४) महन्नामसु च (३,३) दृश्यते। 'ब्रध्नः' ब्रह्म, सविता वा महान् वा इत्यत्रैवोपरि-ष्टाद् (६,१,१,९) व्याख्यास्यते। 'ब्रध्नम् इन्द्रम्, आदित्यरूपिणावस्थितम्'-इति चोत्तरा-र्चिकेऽनेनैवाचार्य्येण व्याख्यातम् (६.२, १२,१)।

(४)—'सम्यक् आता' इति वि०।

(५)—'कान्ति कर्मसु दृष्टस्य (नि०२,६) "मन्यते"-इत्यस्य रूपं मन्युरित्यभिप्रायः; मन्युमन्तः दीप्तिमन्तः, अथवा क्रोधो मन्युः तद्वन्तः,-इति वि०।

अथ तृतीया।

परुच्छेपऋषिः।

१ २३ १ २ ३ २३ १२ २२ ३ १ २ ३ १ २ ३
एन्द्र याह्युपनःपरावतोनायमच्छाविदथानीवसत्पति-

२ ३ १ २ ३ १ २
रस्ता*राजेवसत्पतिः।

३ १२ ३ १ २ ३ २उ ३ २ ३ २ ३ १ २ ३ १ २ ३
हवामहेत्वाप्रयस्वन्तःसुतेष्वापुत्रासोनपितरंवाजसातये

१ २ ३ १ २
मंहिष्ठंवाजसातये॥ ३ ॥२२७

४२ ५ २ ४ ५ ४ १ २ ५ १ २
I एन्द्र याह्युपनाः। पारा२वा२३४ताः। नायमच्छा।

२ र १ २ ५ १ २ २ १ २
विदथानायि। वासत्या२३४तीः। अस्तारा३जे३। वास-

३ ५ ४ ५ २ २ २ ४ ५ ४ २ १ १ २
त्या२३४तीः। हवामहेत्वाप्रयस्वन्ताः। सुतायिषू३वा।

२ १ २ २ २ १ १ २ २ ५ १ २
पुत्रासोनापितरंवा। जासाता२३४यायि। मंहायिष्ठा-

२ १ ४ २ ५
३०वा३। जा२३सा३। ता३४५योई३हायि॥ ३० ॥२२७

* "रस्तं"—इति ऋग्वेदीयः पाठः।

२२७ ऋग्वेदस्य २,१,१८,१।

I ।।२(।

हे "इन्द्र!" "परावतः" दूरदेशात् स्वर्ग-लक्षणात्(१) "नः" अस्मान् "उपायाहि" अस्मत्समीपं प्रत्यागच्छ। तत्र दृष्टान्तः— "नायम्" अयं न पुरोवर्त्ती अग्निः "अभिषुतः" सोमोवा [प्रस्तुतत्वान्निर्दिश्यते] सइव [यद्यपि पुरस्तादुपचाराविषेधार्थीयो नकारः सर्व्वत्र, तथाप्यत्रौचित्येनोपमार्थीयो गृह्यते]। यद्वा। "परावतः न" दूरदेशादिव। [यद्यपि यज्ञे सर्व्वदा सन्निहितः, तथापि स्वर्गाख्याद् दूरदेशादिव। अस्मिन् पक्षे अयमिति विभक्ति-व्यत्ययः।] "अयम्" इमं देवयजनदेशं "अच्छ" अभि प्राप्तुम्(२) आयाहीति शेषः(३)। तत्र दृष्टान्तः—"सत्पतिं" सतां सर्व्वदा वर्त्तमानानामृत्विजाम्पालको यजमानइव ["पत्यावैश्वर्य्ये(६,२,१८)"-इति पूर्व्वपदप्रकृतिस्वरत्वम्] त्वमपि यज्ञ-गृहाण्यागच्छ। यद्वा। सतां नक्षत्राणाम्पतिः चन्द्रमाः, स यथा स्व-धाम स्थानमागच्छति तद्वत्। "अस्ता" [अस्तं सुपआकारः (७,१,३९) अतएव बह्वृचा अस्तंराजेत्यामनन्ति] अस्तं गृहं(४) "राजेव" राजा यथा आगच्छति तद्वत्। किञ्च। "प्रयस्वन्तः" हविर्लक्षणान्नवन्तः यजमाना वयं "त्वा" त्वां "सुतेषु" अभिषुतेषु सोमेषु "आहवामहे" आभिमुख्येनाह्वयामहे। आह्वाने दृष्टान्तः—

---

(१)—'परावतः'-इति दूर-नामस्वन्तिमं नैघण्टुकम् (३,२६)।

(२)—"अच्छाभेराप्तुमिति शाकपूणिः" इति (नि०५,२२)।

(३)—'अच्छ आप्तुं' विद्यामि व्याप्नोति यज्ञ-कर्म्माणि'-इति वि०।

(४)—'सुपांसुलुगित्यनेति (पै०,७,३९) भावः।

(५)—'अस्तम्'-इति गृह नामसु दशमं नैघण्टुकम् ३,४)।

अथ चतुर्थी।

रेभाऋषिः।

१र २र ३१२ ३२
तमिन्द्रञ्जोहवीमिमघवानमुग्रᳬ
३१र २र३१२ ३ १२ ३ १२
सत्राढ्धानमप्रतिष्कतᳬश्रवाᳬसि भूरि।
१ २ ३१र २र३१२ ३२
मᳬहिष्ठोगीर्भिराचयज्ञियाववर्त्तंराये*
३ १ २३१२ ३२
नोविश्वासुपथाकृणोतुवज्री॥ ४ ॥२२८

४ ५ र ४५र४ २ ५ २
I तमिन्द्रञ्जोहवीमिमघवानाम्। ऊ२३४ग्राम्। स-

"पुत्रासः" पुत्राः "पितरं न" पालकं जनकमिव तं यथा "वाजसातये" सङ्ग्राम-प्राप्तये तज्जयाय हविःस्वीकरणाय वा(१) आह्वयामः॥ २ ॥२२७

---

* "ववर्त्तद्राये"-इति ऋग्वेदीयः पाठः।

---

२२८ ऋग्वेदस्य ६,६,२८,२।

I अथर्यम्।

(१)—'वाजः'-इति अन्न-नामसु द्वितीयं नैघण्टुकम् (२,७)—'वाजे' इति सङ्ग्राम-नामसु च द्वाचत्वारिंशत्तमं नैघण्टुकम (२,१७)। सातिश्च लाभः। तथाच अन्नस्य लाभाय, सङ्ग्रामस्य वा लाभायेति वा इत्यर्थः फलितः। 'वाजसातिः'—इति समुदितपदमपि सङ्ग्रामार्थो दृश्यते निघण्टौ तत्रैव।

१र १र १ ५ १ २
त्वाहोयि। दधानमप्रतार२यिष्कू२३४ताम्। श्रवा२३९सायि।

२ ५ १ र र ७ २ ५ १र
भू२३४री। मंऽहिष्ठोगीर्भिरा। चया२ज्ञा२३४याः। वा

१ २र १र १र र २ ५ २ १
वार्त्ता२। रायेहोयि। नोविश्वासुपा२३४र्था। कृणो३।

१ २ ५र र २ ५
तू२वा२३४औहोवा। ऊ२३४पा॥ ३१ ॥२२८

"तम्" पूर्वोक्तगुणोपेतम् "इन्द्र" "जोहवीमि" यष्टाहं पुनः पुनराह्वयामि [ह्वयतेरभ्यस्तस्य चेति सम्प्रसारणम्] कीदृशं? "मघवानं" मंहनीय-धनवन्तम्(१) "उग्रम्" उद्गूर्णबलं "सत्रा" सत्यं(२) यथार्थमेव "शवांसि" बलानि(३) "भूरि" भूरीणि "दधानम्" अतएव "अप्रतिष्कुतं" शत्रुभिरप्रतिरोधनीयम् आह्वयामि। किञ्च "मंहिष्ठः" पूज्यतमो दातृतमो वा "यज्ञियः" यज्ञार्हः इन्द्रः "गीर्भिः" अस्मदीयाभिः स्तुतिभिः "आ ववर्त्त" यज्ञेष्वाभिमुख्येन वर्त्तते [वर्त्ततेर्लिटि(४) रूपम्] ततो "वज्री" वज्रवन् इन्द्रः "राये" धनार्थं "विश्वा" सर्वाण्येव "सुपथा" सुमार्गाणि "कृणोतु" करोतु। धनं सर्वदिग्जमस्मान् प्राप्नोत्वित्यर्थः ॥४॥२२८

(१)—'मघमिति धन-नामधेयम्, मंहते र्दानकर्मणः' इति नि० १,७।

(२)—'सत्रा'-इति सत्य-नामसु तृतीयं नैघण्टुकम् (३,१०)।

(३)—'शवांसि यशांसि बलानि'-इति वि०।

(४)—'छन्दसि लुङ् लङ् लिटः'-इति पा० ३,४,६।

अथ पञ्चमी ।

पुरुच्छेप ऋषिः ।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १२ ३२ ३ १
अस्तुश्रौषट्पुरोअग्निंधियादधआनुत्यच्छर्धो*दिव्यं

२ ३ १२
वृणीमहइन्द्रवायूवृणीमहे ।

१२ ३ २ ३१ २ ३ १ २ ३२ ३ १ २
यद्धक्राणाविवस्वते†नाभासंन्दायनव्यसे‡ ।

२ ३ २ ३१२ ३२ ३ १ २ ३ २३ ३ २ ३ १ २
अधप्रनूनमुपयन्ति¶धीतयोदेवाँ अच्छा§यनधीतयः॥५॥२२९

५ र २१र २१र २र १ २
I अस्तुश्रौषाट् । पुरोअग्निंधियादधे । हा । औ३हो

५ १र २र ५ ० १ २
२३४वा । आनुत्यच्छर्द्धौदि । व्याम् । वृणा२३हायि । मा-

* "तच्छर्धो"-इति,
† "विवस्वति"-इति,
‡ "सन्दायिनव्यसी"-इति,
¶ "प्रसूनुउपयन्तु"-इति च
} ऋग्वेदीयपाठाः ।

§ "अच्छ"-इति जर्मन्मुद्रित-पाठः ।

२२९ ऋग्वेदस्य २,२,३,१ ।

I याज्ञतुरम् ।

५　१　२　२　१　३　४　१

२३४वे। इन्द्रावा३यू३। बृहो२मा२३४वायि। यज्ञा-

२　१　२　२　२१२र　२　२　४　५

णाविवाऽ१स्वा३तायि। नाभासन्दायना३। व्यामायि।

१　र　१　र१　१　२

अधप्रनूनमुपया। तिधीतायार३ः। वा। औ३वो२३४-

५　१　२　१　२　५

वा। दायिवा६ऽ१अच्छार३। वा। औ३वो२३४वा।

२१　५　४　५

नधो२३४वा। ताऽ५योई्वायि॥ ३२ ॥२२९

अहं "पुरः" पुरतः उत्तरवेद्याम् "अग्निम्" आहवनीया-ख्यं(१) "धिया" प्रणयनादि कर्मणा(२) "दधे" धारितवानस्मि। "त्यत्" तत् "शर्द्धः" तादृशं बलं(३) बलवन्तं वाऽग्निम्। यद्वा।

---

(१)—अयमत्र विवेकः—ऋत्विक्शालातः पश्चिम-विभागीय-'प्राचीनवंश'-नाम-यज्ञीय-वेद्याः दक्षिणस्यां दिशि धनुराकारो योऽग्निकुण्डः तत्र स्थितोऽग्निर्दक्षिणा-ग्निरुच्यते, उत्तरस्यां कुण्डो न विद्यते; पश्चिमस्यां वृत्ताकारः कुण्डो भवति, तत्र योऽग्नि स गार्हपत्य इत्युच्यते; पूर्वस्यां चतुष्कोण कुण्डः, तत्र योऽग्निः सएव आहवनीय इत्यु-च्यते। अस्ति चापरा वेदी ऋत्विक्शालातः पूर्वस्यां दिशि उत्तरवेदी = परवेदी = द्वितीयवेदीत्यर्थः। तस्याएव मध्य-भूमिर्नाभिरित्युच्यते, तत्राध्वर्युप्रतिवादिनोः कार्य्य-कलापाः, न तु होतुर्हाम-सम्बन्धोऽग्नि-सम्बन्धो वा। तदेवं 'पुरः' पश्चिमवेदीतः'पुरस्तात्, 'उत्तरवेद्यां' व्यवस्थित-पर-कुण्डे चतुष्कोणात्मके अग्निम् आहवनीयाख्यमित्यर्थः।

(२)—'धीः' इति कर्म-नामसु एकविंशतितमं नैघण्टुकम् (२,१)। 'धिया बुध्या' -इति वि०।

(३)—'शर्द्धः'-इति बल-नामसु सप्तमं नैघण्टुकम् (२,९)।

तच्छर्द्दिः तादृशं मरुतां सद्रूपं बलं "दिव्यं" दिविभवं "नु" क्षिप्रम् "आ वृणीमहे" आभिमुख्येन सम्भजामहे किञ्च "इन्द्र-वायू" "वृणीमहे" "प्रार्थयामहे।" "यद्व" [सुपोलुक् (७,१,३९)] यः "विवस्वते" विवो हवीरूपं धनं तद्वते(४)। "नव्यसे" नवतराय यजमानाय "नाभा" नाभौ भूम्यानाभिस्थाने देवयजने। यद्वा। वेदिरूपे(५)। अथवा नाभौ सर्वस्य फलस्य सम्बन्धके यज्ञे ["यज्ञ-माहुर्भुवनस्य नाभिः" इतिश्रुतेः] "सन्दाय" सम्यक् बध्वा मिथः संयुज्य "क्षाणा"(६) धनादिकं कुर्वाणौ भवतः। तौ वृणीमहे इति समन्वयः। यस्मादेवं तस्मात् "अस्तु" "श्रौषट्"(७) अस्याः; स्तुतेः श्रवणं भवतु। [श्रोता भवतु वा मरुतां गणोऽग्निर्वा; इन्द्रवायु-पक्षे प्रत्येकापेक्षयैकवचनम्] "अध" अनन्तरं "नः" "धीतयः" अस्मदीयानि कर्माणि स्तुत्यादि-रूपाणि(८) "प्रननम्" "उपयन्ति" प्रकर्षेण युष्मानुपेत्य गच्छन्ति। किञ्च, "देवानच्छान"

(४)—'विवस्वते विवासनवते'-इति वि०। विवस्वन्त इति निघण्टौ मनुष्य-नामसु च दृश्यते (२,३)।

(५)—उत्तरवेदी-नामक-वेद्याः मध्ये भू-भागे इत्यर्थः।

(६)—"क्षाणाः कुर्वाणाः"-इति नि ४,१९।

(७)—'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम् येयजामहइति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशाक्षरश्छन्दस्यः'-इति शि० कौ० वै० ४, ४, १४०।

(८)—"धीतयः"-इति निघण्टौ अङ्गुलि-नामसु दृश्यते (२,५)। "अङ्गुलयः कस्मात्? अग्रगामिन्यो भवन्तीति वाग्रकारिण्यो भवन्तीति वाग्रसारिण्यो भवन्तीति वाङ्कना भवन्तीति वाञ्चना भवन्तीति वापि वाभ्यञ्चनादेव स्युः"-इति नि० ३, ८।

अथ षष्ठी।

एवयामरुदृषिः।

१२ ३१ ३१२ ३ १ १ ३१२
प्रवोमहेमतयोयन्तुविष्णवेमरुत्वते
३ १ २३१२
गिरिजाएवयामरुत्।
१२ ३२ ३ १२३२ ३ १ २३१२ ३ २ ३
प्रशर्द्धायप्रयज्यवे*सुखादयेतवसेभन्ददिष्टये-
१ २ ३ १ २
धुनिव्रतायशवसे॥६॥२३०

१ ५२ ५ ४२ ५ ४ ५२ ४ ५ ४ ४
I प्रा३४। वोमहेमतयोयन्तुविष्णवो। हायि।
१ १ १ १२ १२१
मरुत्वता३यि। गिरिजा३४ः। हाहोयि। एवाया२।

अग्न्यादि-देवान् आभिमुख्येन पात्रमिव "धीतयः" अस्मदीयानि कर्माणि "उपयन्ति" तेषां समीपं प्रापयन्ति।

"आनुत्यत", "आनुतद्"-इति—"नव्यसे", "नवसि" -इति, "प्रनूनं" "प्रसूनम्"-इति च क्रमेण साम्नायचय पाठः॥ ५॥ २२९

---

* "प्रयज्यवे"-इति ऋग्वेदीय-स्वर-पाठः।

---

२३०. ऋग्वेदस्य ४,४,२३,१।

I एवयामरुतः साम।

२ ५ १ ० १ ७ १ २ २
मा२३४हुत । प्राग्रद्धीया२ । प्रायज्ज्ञावा२३यि । सुखादा

५ १ २र १ २र १ २ २ १
२३४यायि । तवसेभन्ददिष्टये । धुनायित्रा३ता३ । या२-

१ र २र र १ ५
आ२३४औहोवा । वा२३४से ॥ २१ ॥२३०

"प्रयन्तु" प्रगच्छन्तु" "गिरिजाः" गिरौ वाचि(१) निष्पन्नाः "मतयः" स्तुतयः। "मह" महते "वः" तुभ्य [वचन-व्यत्ययः (३,१,८५)] "विष्णवे" व्याप्तायाम्(२) इन्द्राय विष्णवे वा(३) "मरुत्वते" मरुद्भिस्सहते। कस्य स्तुतयः? इत्युच्यते—"एवया-मरुत्" एतन्नामकस्य ऋषेः [षष्ठ्यालुक् (७,१,३९) अथवाऽयमृषिः गिरिजाः स्तुतेर्जनयिता भवति]। किञ्च, "प्रयन्तु" स्तुतयः। कस्मै? "शर्धाय" बलाय मारुताय (इतरत्सर्व बल-विशेषणम्) "प्रयज्यवे" प्रकर्षेण यष्टव्याय। "सुखादये" शोभनाभरणाय(४)

(१)—"गीः"-इति निघण्टौ वाङ्नामसु (१,११) दृश्यते; तस्य सप्तम्यां "गिरि"-इत्येव सम्यग् न तु गिराविति, तदन्यपाठो लिपिकरप्रमादएव लक्ष्यते। विवरणकृता तु 'गिरिजा—हृदये जाता, पर्वजाता वा'-इत्युक्तम्।

(२)—"यत् यद् विषितो भवति तद् विष्णुर्भवति। विष्णुर्विशते र्वा व्यश्नोते र्वा"-इत्यादि नि० १२,१८। विषॢ व्याप्ताविल्यस्येदं पदं विष्णुरिति, तत उच्यते—विष्णवे व्याप्तायेति।

(३)—विष्णु-नामकेन्द्राय-इति वेत्यर्थः; इन्द्रः विष्णुरिति पर्यायेति भावः। इद च मानं निघण्टौ विष्णुपुराणादौ च द्वादशादित्येषु उभयोरेव परिगणनम्।

(४)—'सुखादये सुखदाय सुखप्रदाय'-इति वि०।

अथ सप्तमी।

आनानतः पारुच्छेपिर्ऋषिः।

१ २ ३ १र २र १ २ ३ ३ १ २
अयारुचाहरिण्यापुनानोविश्वाद्वेषांऽसि

२ १ १ ३ २ ३ २ ३ १ २
तरतिसयुग्वभिः*सूरोनसयुग्वभिः।

१ २ ३ १ २ ३ १ २ ३ १र २र
धारापृष्ठस्य†रोचतेपुनानोअरुषोहरिः।

२ १ ३ १ २ ३ १र २र ३ १ २ ३ १ २
विश्वायद्रूपापरियास्यृक्व‡भिःसप्तास्येभिर्ऋक्वभिः॥८॥२३१

[खादिराभरण-विशेषः। "हस्तेषु खादिश्च क्वतश्च सन्दधे"-इति, "अंसेषु च ऋषयः पत्सु खादय"-इति च श्रुतेः]। "तवसे" बलवते। "भन्ददिष्टये" स्तुतिरूपा(५) इष्टिर्यस्य तत् भन्ददिष्टिः, तस्मै। "धुनिव्रताय" मेघानां चालनं कर्म्म यस्य, तादृशाय(६) "शवसे" गमनवते॥६॥२३०

---

* "स्वयुग्वभिः"-इति,
† "सुतस्य"-इति,
‡ "यात्यृक्व"-इति च,
ऋग्वेदीय-पाठाः।

---

२३१ उत्तरार्च्चिकस्य ७,३,१०,१ = ऋग्वेदस्य ७,५,२४,१ आरण्यके २,२०—६,२ = ऊहे १०,२,३ = ऊह्ये ३,१२।

(५)—"भन्दते"-इत्यस्य निघण्टौ स्तुतिकर्मसु (३,१४) दर्शनादित्यभिप्रायः।
(६)—'कम्पितकर्मायम्'-इति वि०। "धुनि ● ● मेघम्"-इति वि० दे० ४,११

